

श्रीः

# ऋक्संहिता

## सायणाचार्यविरचितभाष्यसहिता

### पदपाठयुताच.

इयंच

तत्त्वविवेचकग्रंथप्रसारकसमित्याप्रेरितः तुकारामतात्याभिख्यः,

गणपतकृष्णाजीमुद्रायंत्रालयाधिपतिः आत्मारामकान्होबाभिख्यः;

इत्येताभ्यां

बोडसोपाह्वमहामहोपाध्यायराजारामशास्त्रि,

गोरेइत्युपाभिधशिवरामशास्त्रिभ्यांशोधयित्वा

मुंबय्यां

गणपतकृष्णाजीमुद्रायंत्रालयेमुद्रयित्वा

प्रकाशिता.

## तस्याअयमष्टमोऽष्टकः

शकाब्दाः १८१२.

## ॥ श्रीगणेशाय नमः ॥



वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तन्नमामि गजाननम् ॥ १ ॥

यस्य निःश्वसितं वेदा योवेदेभ्योखिलं जगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥२॥

सप्तमेष्टममध्यायं व्याख्यायाचार्यवंशजः । अष्टमे सायणाचार्यआदिमं व्याकरोत्यथ ॥ ३ ॥

अच्छामइति चतुर्थेनुवाकेअष्टादश सूक्तानि तत्र प्रहोतेति दशर्चं चतुर्थं सूक्तं । प्रहोता दशेत्यनुक्रांतं । अनुवर्तनाद्भालंदनस्य वत्सप्रेरार्षं अनादेशपरिभाषया त्रैष्टुभं आग्नेयं पूर्वेणैव सूक्तेन सहोक्तोविनियोगः ।

तत्र प्रथमा--

ॐम् प्रहोताजातोमहान्नंभोविन्नृषद्वासीददपामुपस्थे । दधिर्योधायिसतेवयांसियन्तावसूनिविधतेतनूपाः ॥ १ ॥

प्र । होता । जातः । महान् । नभःऽवित् । नृऽसद्वा । सीदत् । अपाम् । उपऽस्थे । दधिः । यः । धायि । सः । ते । वयांसि । यन्ता । वसूनि । विधते । तनूऽपाः ॥ १ ॥

योनृषद्वाग्निरपां अंतरिक्षनामैतत् अंतरिक्षस्योपस्थे उत्संगे वैद्युतरूपेण सीदत् निषण्णोभूत् सइदानीं होता यजमानानां होमनिष्पादकोजातः प्रादुर्भूतः महान् गुणैः पूज्यः नभोवित् अंतरिक्षस्य वेत्ता यतस्तत्रोत्पन्नः अतस्तस्य ज्ञाता नृषद्वा नृषुसीदन् सदेः क्वनिप् कृत्स्वरः प्रसीदत् । वेद्यां प्रसीदति अपामुपस्थे महिषाअगृभ्णतेतिनिगमः । अपसामित्यर्थः कर्मणामुपस्थे उपस्थाने समीपे वेद्यां उक्तलक्षणः सन् अथवा अपामुदकानामुपस्थेमध्ये योग्निर्हविर्वोढुमसहमानोनिगूढः सदेवैः पुनः प्रार्थितः उक्तविधः सन् वेद्यां प्रसीदति योग्निर्दधिर्धाता यज्ञधारकः सन् धायि वेद्यां निहितोभूत् सोग्निर्हेवत्सप्रे विधते परिचरते ते तुभ्यं वयांस्यन्नानि वसूनि धनानि च यंता नियमिता भवतु । किंच तनूनपाः ते तन्वः पाता च भवत्विति शेषः ॥ १ ॥



अथ द्वितीया—

इमंविधन्तोअपांसधस्थेपशुंननष्टंपदैरनुग्मन्।
गुहाचतन्तमुशिजोनमोभिरिच्छन्तोधीराभृगवोविन्दन् ॥ २ ॥

इमम्। विधन्तः। अपाम्। सधऽस्थे। पशुम्। न। नष्टम्।
पदैः। अनु। ग्मन्। गुहा। चतन्तम्। उशिजः। नमःऽभिः।
इच्छन्तः। धीराः। भृगवः। अविन्दन् ॥ २ ॥

इममग्निं अपामुदकानां मध्ये निगूढं विधंतः परिचरंतः उपचारं वदंतोवा ऋषयश्च पदैः पलायनमार्गव्यंजकैर्नष्टचोरादिभिरपहृतं पशुमिवानुग्मन् अनुजग्मुः गमेर्लुङि मंत्रेघसेति च्लेर्लुक् तेषु मध्ये गुहायां चततं चततिर्गतिकर्मा अप्सु विलीनमित्यर्थः उशिजः कामयमानाः नमोभिर्नमस्कारैः स्तोत्रैर्वा इच्छंतः आत्मनइच्छंतोधीराधीमंतोभृगवोविंदन् लब्धवंतः अग्नेर्हविर्वोढुमसहमानस्य पलाय्याप्सुप्रवेशाद्देवानामन्वेषणं वाग्नेस्त्रयोज्यायांसइत्यत्र स्पष्टमाम्नातं। अन्वेषणं कुर्वतां मध्ये भृगूणामग्निलाभः। इमंविधंतोअपांसधस्थेद्वितादधुर्भृगवइत्यत्रोक्तं ॥ २ ॥

अथ तृतीया—

इमंत्रितोभूर्यविन्ददिच्छन्वैभूवसोमूर्धन्यघ्न्यायाः।
सशेवृधोजातआहर्म्येषुनाभिर्युवाभवतिरोचनस्य ॥ ३ ॥

इमम्। त्रितः। भूरि। अविन्दत्। इच्छन्। वैभुऽवसः।
मूर्धनि। अघ्न्यायाः। सः। शेऽवृधः। जातः। आ। हर्म्येषु।
नाभिः। युवा। भवति। रोचनस्य ॥ ३ ॥

इमं भूरि महांतं अग्निं वैभूवसोविभुवसः पुत्रः त्रितऋषिः इच्छन् लब्धुमिच्छन् अघ्न्यायाः अहंतव्यायाभूम्यामूर्धनि भूम्यामित्यर्थः तत्राविंदत् लब्धवान् सोग्निः शेवृधः सुखस्य वर्धयिता सन् हर्म्येषु यजमानगृहेषु आ सर्वतोजातः प्रादुर्भूतः सन् रोचनस्य रोचमानस्य स्वर्गाख्यस्य फलस्य उक्तलक्षणस्य यज्ञस्यादित्यस्य वा नाभिर्बंधकोभवति ॥ ३ ॥

---

१ तै० सं० २. ६. ६। २ ऋ० सं० २। ५। २४।

अथ चतुर्थी—

मन्द्रंहोतारमुशिजोनमोभिःप्राञ्चंयज्ञंनेतारमध्वराणाम् ।
विशामकृण्वन्नरतिंपावकंहव्यवाहंदधतोमानुषेषु ॥ ४ ॥

मन्द्रम् । होतारम् । उशिजः । नमःऽभिः । प्राञ्चम् । यज्ञम् ।
नेतारम् । अध्वराणाम् । विशाम् । अकृण्वन् । अरतिम् ।
पावकम् । हव्यऽवाहम् । दधतः । मानुषेषु ॥ ४ ॥

उशिजः कामयमानाः ऋत्विजोमंद्रं मादनीयं होतारं होमनिष्पादकं प्रांचं गार्हपत्यादाहवनीयं प्रति प्रागंचंतं यज्ञं यजनीयं अध्वराणां यागानां नेतारं प्रापयितारं अरतिं गन्तारं सर्वदायागगृहे वर्तमानं पावकं शोधकं हव्यवाहं हविषोवोढारं मानुषेषु मनुष्येषु मध्ये दधतोदधानाऋत्विजोविशांयजमानानामर्थाय यद्वा विशां प्रजानामरतिं अर्यं स्वामिनमित्यर्थः नमोभिर्नमस्कारैः स्तुतिभिरित्यर्थः अकृण्वन् अकुर्वन् प्रीतं कृतवंतः ॥ ४ ॥

अथ पंचमी—

प्रभूर्जयन्तंमहांविपोधांमूराअमूरंपुरांदर्माणम् ।
नयन्तोगर्भंवनांधियंधुर्हिरिश्मश्रुंनावार्णंधनर्चम् ॥ ५ ॥ १ ॥

प्र । भूः । जयन्तम् । महाम् । विपःऽधाम् । मूराः । अमूरम् ।
पुराम् । दर्माणम् । नयन्तः । गर्भम् । वनाम् । धियम् । धुः ।
हरिऽश्मश्रुम् । न । अर्वाणम् । धनऽअर्चम् ॥ ५ ॥ १ ॥

हे स्तोतस्त्वं जयंतं जेतव्यान् महां महांतं विपोधां मेधाविनोधर्तारमग्निं प्रभुः प्रभवः समर्थोभव स्तोतुमितिशेषः । उद्गीथस्तु भूर्जयंतमित्येकपदंमत्वा भूरादीन् लोकान् जयंतमिति व्याचकार।न केवलं त्वमेकएव अपितु मूरामूढाः सर्वेपि पुरुषाः अमूरं अमूढं पुरां दर्माणं दारकं औणादिकोमनिः प्रत्ययस्वरः गर्भं अरण्योर्गर्भभूतं वनां वननीयं वाछंदसीनिवचनादमिपूर्व-

रूपाभावः हिरिश्मश्रुं नार्वाणं नेत्युपमार्थीयः श्मश्रुशब्दोत्र शोभनत्वेन लोमसामान्यवचनः हरितरोमोपेतं अर्वाणं अरणशीलं अश्वमिव उक्तलक्षणाश्ववद्धरितकेशस्थानीयज्वालोपेतं धनर्चं प्रीणनस्तुतिं शकंध्वादित्वात्पररूपं ईदृशमग्निं नयंतोहविर्भिः प्रापयंतः धियं कर्म स्तोत्रं वा धुः प्रापयंति गातिस्थेति सिचोलुक् ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे प्रथमोवर्गः ॥१ ॥

अथ षष्ठी—

निपस्त्यासुत्रितस्तंभूयन्परिवीतोयोनौसीददुन्तः ।
अतःसङ्गृभ्याविशांदमूनाविधर्मणायन्त्रैरीयतेनॄन् ॥ ६ ॥

नि । पस्त्यासु । त्रितः । स्तभुऽयन् । परिऽवीतः । योनौ ।
सीदत् । अन्तरिति । अतः । सम्ऽगृभ्य । विशाम् । दमूनाः ।
विऽधर्मणा । अयन्त्रैः । ईयते । नॄन् ॥ ६ ॥

त्रितः त्रिषुस्थानेषु गार्हपत्यादिषु तायमानः स्तभूयन् यजमानगृहान् स्तंभितुमिच्छन् इच्छार्थे क्यचि तदंताच्छतरि रूपं परिवीतः परितोज्वालाभिर्व्याप्तः सन् पस्त्यासु यागगृहेषु योनावंतः स्वीये वेद्यात्मके स्थाने निसीदत् निषीदति अतोस्मात् स्थानात् विशां यजमानरूपाणां प्रजानां संबंधीनि हवींषिसंगृभ्य संगृह्य इंद्रादीनुद्दिश्य प्रत्तानि चरुपुरोडाशादीनि स्वीकृत्य दमूनाः देवेभ्योदानमनाः यजमानाय वाभिमतप्रदानमना विधर्मणा तासां विधेयेन कर्मणा निमित्तेन दानमनाः देवेभ्योदानपक्षे विविधगमनरूपेण कर्मणा यंत्रैः शत्रूणां नियमनैः सह नॄन् नेतॄन् देवानीयते गच्छति ॥ ६ ॥

अथ सप्तमी—

अस्याजरासोदमामरित्राअर्चद्धूमासोअग्नयःपावकाः ।
श्वितीचयःश्वात्रासोभुरण्यवोवनर्षदोवायवोनसोमाः ॥ ७ ॥

अस्य । अजरासः । दमाम् । अरित्राः । अर्चत्ऽधूमासः ।
अग्नयः । पावकाः । श्वितीचयः । श्वात्रासः ।
भुरण्यवः । वनऽसदः । वायवः । न । सोमाः ॥ ७ ॥

अत्र बहुत्वेन स्तूयते अस्य यजमानस्य संबंधिनःअजरासोजरारहिताः दमां दमनीयानां रक्षःप्रभृतीनां दमेः क्विपि सावेकाचइति विभक्तेरुदात्तत्वं तेषामरित्राः तारकाः अर्चद्धूमासः अर्चतः अर्चनीयाधूमाः धूमोपलक्षिताज्वालावायेषां ते तथोक्ताः पावकाः शोधकाः श्वितीचयः श्वेतिमानमंचंतः श्वितिः श्वेतं औणादिकइः श्वात्रासः क्षिप्रनामैतत् क्षिप्रधर्मकाः भुरण्यवोभरणशीलाः वनर्षदः वनेषु सीदंतः संहितायां छांदसं रुत्वं वायवोन सोमाः गंतारः सोमाइव हविर्दातुं यजमानस्य शीघ्राभवंतीति ॥ ७ ॥

अथाष्टमी—

प्रजिह्वयाभरतेवेपोअग्निःप्रवयुनानिचेतसापृथिव्याः ।
तमायवःशुचयन्तंपावकंमन्द्रंहोतारंदधिरेयजिष्ठम् ॥८ ॥

प्र । जिह्वया । भरते । वेपः । अग्निः । प्र । वयुनानि । चेतसा ।
पृथिव्याः । तम् । आयवः । शुचयन्तम् । पावकम् । मन्द्रम् ।
होतारम् । दधिरे । यजिष्ठम् ॥ ८ ॥

योग्निर्जिह्वया ज्वालया वेपः कर्मनामैतत् कर्म प्रभरते तथा योग्निर्वयुनानि प्रज्ञानानि स्तोत्राणिपृथिव्याःरक्षणाय चेतसानुग्रहयुक्तेनमनसा प्रभरते तमग्निमायवः गंतारोमनुष्याः शुचयंतं दीप्यमानं पावकं शोधकं मंद्रं स्तुत्यं होतारं आह्वातारं होमनिष्पादकं वा यजिष्ठं अतिशयेन यष्टव्यं यष्टृतमंवा दधिरे धारयंति ॥ ८ ॥

अथ नवमी—

द्यावायमग्निंपृथिवीजनिष्टामापस्त्वष्टाभृगवोयंसहोभिः ।
ईळेन्यंप्रथमंमातरिश्वादेवास्ततक्षुर्मनवेयजत्रम् ॥ ९ ॥

द्यावा । यम् । अ॒ग्निम् । पृ॒थि॒वी इति॑ । जनि॑ष्टाम् । आपः॑ ।
त्वष्टा॑ । भृग॑वः । यम् । सहः॑ऽभिः । ई॒ळेन्य॑म् । प्र॒थ॒मम् ।
मा॒त॒रिश्वा॑ । दे॒वाः । त॒त॒क्षुः । मन॑वे । यज॑त्रम् ॥ ९ ॥

यमग्निं द्यावापृथिवी द्यावापृथिव्यौ जनिष्टां अजनिषातां जनेर्लुङि व्यत्ययेन परस्मैपदं आपश्च यमुदपादयन् वैद्युतरूपेण त्वष्टा च यमजनयत् भृगवश्च यं सहोभिर्बलैः स्तोत्रादिसाधनैः लब्धवंतः । भृगवोविंदन्निितिह्युक्तं । किंच ईळेन्यं स्तुत्यं यं प्रथमं मातरिश्वा वायुरुदपादयत् अन्येदेवाश्च मनवे राज्ञे मनोरर्थाय यजत्रं यष्टव्यं यमग्निं ततक्षुः निष्पादितवंतः ॥ ९ ॥

अथ दशमी—

यंत्वा॑दे॒वाद॑धि॒रे॑ह॑व्य॒वाहं॑पु॒रु॒स्पृहो॒मानु॑षासो॒यज॑त्रम् ।
सयाम॑न्नग्ने॒स्तु॒व॒तेवयो॑धाः॒प्रदे॑व॒यन्य॒शस॒ःसंहिपू॒र्वीः ॥ १० ॥ २ ॥

यम् । त्वा॒ । दे॒वाः । द॒धि॒रे । ह॒व्य॒ऽवाह॑म् । पु॒रु॒ऽस्पृह॑ः ।
मानु॑षासः । यज॑त्रम् । सः । याम॑न् । अ॒ग्ने॒ । स्तु॒व॒ते । वय॑ः । धा॒ः ।
प्र । दे॒व॒ऽयन् । य॒शस॑ः । सम् । हि । पू॒र्वीः ॥ १० ॥ २ ॥

हे अग्ने हव्यवाहं यं त्वात्वां देवादधिरे धारितवंतः मानुषासोमनुष्याश्च पुरुस्पृहोबहुकामान् स्पृहयंतोयजत्रं यष्टव्यं दधिरे धारितवंतः । हे अग्ने सत्वं यामन् यामनि यज्ञे स्तुवते मह्यं त्वं वयोन्नं धाः देहि । हे अग्ने त्वत्तः देवयन् देवकामोयजमानः पूर्वीर्बह्वीः बहूनि यशसोयशांसि सं हि इति उपसर्गश्रुतेर्योग्यक्रियाध्याहारः संप्राप्नोति खलु ॥ १० ॥

॥ इत्यष्टमस्य प्रथमे द्वितीयोवर्गः ॥ २ ॥

जगृभ्माते इत्यष्टर्चं पंचमं सूक्तं आंगिरसस्य सप्तगुनाम्नः आर्षं त्रैष्टुभं विकुंठानामासुरस्त्री साचेंद्रसदृशं पुत्रं कामयमाना कृच्छ्रचांद्रायणादिकं तपस्तेपे मत्सदृशोन्यः कश्चिन्माजनिष्टेति बुध्वेन्द्रएव तस्याः पुत्रोजातः तादृशोवैकुंठइंद्रोदेवता । तथाचानुक्रांतं—जगृभ्माष्टौ सप्तगुर्वैकुंठमिंद्रं तुष्टावेत्यादि । गतोविनियोगः ।

तत्र प्रथमा—

जगृभ्माते दक्षिणमिन्द्रहस्तंवसूयवोवसुपतेवसूनाम् ।
विद्माहित्वागोपतिंशूरगोनामस्मभ्यंचित्रंवृषणंरयिंदाः ॥ १ ॥

जगृभ्म । ते । दक्षिणम् । इन्द्र । हस्तम् । वसुऽयवः । वसुऽपते ।
वसूनाम् । विद्म । हि । त्वा । गोऽपतिम् । शूर । गोनाम् ।
अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ १ ॥

वसूनां वसुपते बहूनां धनानां स्वामिन् हे इंद्र ते तव दक्षिणं हस्तं वसूयवोवसुकामाः वयं जगृभ्म गृह्णीमः । यथा बहुप्रदस्यार्थिनोमह्यमदत्वा नगंतव्यमिति हस्तं गृह्णंति तद्वत् । हे शूर विक्रांतेंद्र त्वा त्वां गोनां गोपतिं अत्र वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते बह्वीनां गवां पतिं विद्म जानीमः अतोस्मभ्यं चित्रं चायनीयं वृषणं वर्षकं रयिं धनं दाः देहि ॥ १ ॥

अथ द्वितीया—

स्वायुधंस्ववसंसुनीथंचतुःसमुद्रंधरुणंरयीणाम् ।
चर्कृत्यंशंस्यंभूरिवारमस्मभ्यंचित्रंवृषणंरयिंदाः ॥ २ ॥

सुऽआयुधम् । सुऽअवसम् । सुऽनीथम् । चतुःऽसमुद्रम् ।
धरुणम् । रयीणाम् । चर्कृत्यम् । शंस्यम् । भूरिऽवारम् ।
अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ २ ॥

स्वायुधं शोभनवज्राद्यायुधं स्ववसं शोभनरक्षणं सुगमनंवा सुनीथं सुनयनं चतुःसमुद्रं चतुरः समुद्रान् योपयसाव्याप्नोति तं धरुणं धारकं तेषां रयीणां धनानां चर्कृत्यं पुनःपुनः कर्तव्यं शंस्यं स्तुत्यं भूरिवारं भूरीणां दुःखानां वारकं बहुभिर्वरणीयं वा त्वां विद्मेति शेषः । तादृशोस्मभ्यमित्यादिपूर्ववत् । यद्वा हे इंद्र ईदृग्गुणविशिष्टं पुत्राख्यं रयिं दाः देहि ॥ २ ॥

अथ तृतीया–

सुब्रह्माणंदेववन्तंबृहन्तमुरुंगभीरंपृथुबुध्नमिन्द्र ।
श्रुतऋषिमुग्रमभिमातिषाहमस्मभ्यंचित्रंवृषणंरयिंदाः ॥ ३ ॥

सुऽब्रह्माणम् । देवऽवन्तम् । बृहन्तम् । उरुम् । गभीरम् ।
पृथुऽबुध्नम् । इन्द्र । श्रुतऽऋषिम् । उग्रम् । अभिमातिऽसहम् ।
अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ३ ॥

हे इंद्र त्वं सुब्रह्माणं ब्रह्मपरिवृढं स्तुतिलक्षणं कर्म शोभनस्तुतिकमित्यर्थः देववंतं बृहंतं महांतं उरुं विस्तीर्णं गभीरं असुरादिभिरगम्यं पृथुबुध्नं विततमूलं श्रुतऋषिं श्रुताऋषयोयेन तादृशंऋषीणां ख्यापयितारं प्रथितज्ञानं वा उग्रमुद्गूर्णबलं अतएवाभिमातिषाहं अभिमातीनां शत्रूणां अभिभवितारं हंतारं अस्मभ्यं चित्रं पूज्यं वृषणं वर्षकं पुत्रं रयिं धनं च दाः देहि। अथवा विशेष्यविशेषणभावः उक्तलक्षणं पुत्राख्यं रयिं दाः ॥ ३ ॥

अथ चतुर्थी–

सनद्वाजंविप्रवीरंतरुत्रंधनस्पृतंशूशुवांसंसुदक्षम् ।
दस्युहनंपूर्भिदमिन्द्रसत्यमस्मभ्यंचित्रंवृषणंरयिंदाः ॥ ४ ॥

सनत्ऽवाजम् । विप्रऽवीरम् । तरुत्रम् । धनऽस्पृतम् । शूशुऽवांसम् ।
सुऽदक्षम् । दस्युऽहनम् । पूःऽभिदम् । इन्द्र । सत्यम् ।
अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ४ ॥

हे इंद्र सनद्वाजं लब्धान्नं विप्रवीरं मेधाविनं पुत्रं तरुत्रं तारकं धनस्पृतं धनानां पूरकं स्पष्टारं वा स्पृणोतेः स्पृशतेर्वोत्तरं पदं शूशुवांसं वर्धमानं सुदक्षं शोभनबलं दस्युहनं शत्रूणां हंतारं पूर्भिदं शत्रूणां पुरां भेत्तारं सत्यं सत्यकर्माणं शिष्टमुक्तं ॥ ४ ॥

अथ पञ्चमी—

अश्वावन्तंरथिनंवीरवन्तंसहस्रिणंशतिनंवाजमिन्द्र ।
भद्रव्रातंविप्रवीरंस्वर्षामस्मभ्यंचित्रंवृषणंरयिंदाः ॥ ५ ॥ ३ ॥

अश्वऽवन्तम् । रथिनम् । वीरऽवन्तम् । सहस्रिणम् । शतिनम् । वाजम् । इन्द्र । भद्रऽव्रातम् । विप्रऽवीरम् । स्वःऽसाम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ५ ॥ ३ ॥

हेइन्द्र अश्वावंतं बहुभिरश्वैरुपेतं रथिनं रथवंतं वीरवंतं वीरैः पुरुषैरुपेतं सहस्रिणं सहस्रवंतं शतिनं शतवंतं असंख्यातगवादियुक्तमित्यर्थः वाजं वाजोन्नं तद्वंतं अर्शआदिभ्यो-च् भद्रव्रातं भद्रगणं कल्याणसेवकैः परिवृतं विप्रवीरं विप्रैर्वीरैश्चोपेतं स्वर्षां सर्वस्य संभ-क्तारं शिष्टमुक्तं ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे तृतीयोवर्गः ॥ ३ ॥

अथ षष्ठी—

प्रसप्तगुंमृतधीतिंसुमेधांबृहस्पतिंमतिरच्छाजिगाति ।
यआंङ्गिरसोनमसोपसद्योस्मभ्यंचित्रंवृषणंरयिंदाः ॥ ६ ॥

प्र । सप्तऽगुम् । ऋतऽधीतिम् । सुऽमेधाम् । बृहस्पतिम् । मतिः । अच्छ । जिगाति । यः । आङ्गिरसः । नमसा । उपऽसद्यः । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ६ ॥

सप्तगुं मां मतिः स्तुतिर्देवविषया अच्छ जिगाति अभिगच्छति । कीदृशं सप्तगुं ऋतधी-तिं सत्यकर्माणं सुमेधसं शोभनप्रज्ञं बृहस्पतिं बृहतोमंत्रस्य स्वामिनं यः सप्तगुरांगिरसोंगिरो-गोत्रोत्पन्नोहं नमस्कारेण देवानुपसद्यः उपगंतव्यः यद्वा नमसान्नेनोपसद्यः उपसदनीयोदेवैरनु-ग्राह्यइत्यर्थः तादृशाय अस्मभ्यं मह्यं चित्रं वृषणं रयिं दाः ॥ ६ ॥

अथ सप्तमी–

वनीवानोममदूतासइन्द्रंस्तोमाश्चरंतिसुमतीरियानाः ।
हृदिस्पृशोमनसावच्यमानाअस्मभ्यंचित्रंवृषणंरयिंदाः ॥ ७ ॥

वनीवानः । मम । दूतासः । इन्द्रम् । स्तोमाः । चरन्ति । सुऽमतीः ।
इयानाः । हृदिऽस्पृशः । मनसा । वच्यमानाः ।
अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ७ ॥

वनीवानोवननवतः वननं संभजनं तद्वतः वनेश्छन्दसीवनिपौचेतिमत्वर्थीयोवनिप् मम सप्तगोः दूतासोदूतसदृशाः दूतायथा भर्तुरभिमतार्थं प्रापणीयं प्रापयंति तद्वत्स्तुत्यान् गुणेन प्रापयंतः स्तोमाः स्तवाः सुमतीः तस्यैंद्रस्यास्मद्विषयाअनुकूलाबुद्धीरियानाः याचमानाः इंद्रं चरंति प्राप्नुवंतु । पुनश्च तएव विशेष्यंते–हृदिस्पृशः हृदये स्पृशंतः स्तुत्यस्य प्रियभूताइत्यर्थः हृद्युभ्यांङेरुपसंख्यानमिति सप्तम्यालुक् मनसा सत्वोद्रिक्तेन वच्यमानाः उच्यमानाः । अस्मभ्यमित्यादिगतं ॥ ७ ॥

अथाष्टमी–

यत्त्वायामिदद्धितन्नइन्द्रबृहन्तंक्षयमसमंजनानाम् ।
अभितद्यावापृथिवीगृणीतामस्मभ्यंचित्रंवृषणंरयिंदाः ॥ ८॥४॥

यत् । त्वा । यामि । दद्धि । तत् । नः । इन्द्र । बृहन्तम् । क्षयम् ।
असमम् । जनानाम् । अभि । तत् । द्यावापृथिवी इति । गृणीताम् ।
अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ८ ॥ ४ ॥

हे इंद्र त्वा त्वां यद्वक्ष्यमाणं यामि याचामि वर्णलोपश्छांदसः तत् याच्यमानं नोस्मभ्यं दद्धि देहि दददाने लोटि व्यत्ययेन परस्मैपदं बहुलंछंदसीति शपोलुक् । तदिति सामान्येन निर्दिष्टं विशेषयति बृहंतं महांतं क्षयं निवासं जनानां यजमानानामन्येषां असमं असाधारणं देहि । त्वया दातव्यं द्यावापृथिवी अभिगृणीतां अभिमन्येतां ॥ ८ ॥

॥ इत्यष्टमस्य प्रथमे चतुर्थोवर्गः ॥ ४ ॥

अहंभुवमित्येकादशर्चं षष्ठं सूक्तं पूर्वसूक्तेन सप्तगुनास्तुतोहृष्टः सन्निदमादिसूक्तत्रयेण स्वयमात्मानमस्तौत् । तस्माद्वैकुंठाख्यस्यैंद्रस्यवाक्यत्वात् यस्यवाक्यंसऋषिरिति परिभाषया इंद्रऋषिः वैकुंठस्यैंद्रस्यैव स्तूयमानत्वात् यातेनोच्यतइतिपरिभाषया इंद्रएवदेवता दशम्येकाशीसप्तम्यस्त्रिष्टुभः शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः । तथाचानुक्रांतं—सप्तगुस्तुतिसंहृष्टआत्मानमुत्तरैस्त्रिभिस्तुष्टावाहंभुवमेकादशांत्येत्रिष्टुभौ सप्तमीचेति । अतिरात्रे द्वितीयपर्याये होतुः शस्त्रे एतत्सूक्तं । सूत्रितंच—अहंभुवमपाय्यस्यांधसोमदायेति याज्येति । समूह्ळस्यदशरात्रस्य तृतीयेछंदोमे निष्केवल्येप्येतत्सूक्तं । अहंभुवंतत्तइंद्रियमितिनिष्केवल्यमिति हि सूत्रितं ।

तत्र प्रथमा—

अ॒हंभुवं॒वसु॑नः पू॒र्व्यस्पति॑र॒हंधना॑नि॒संज॑यामि॒शश्व॑तः ।
मांह॑वन्ते पि॒तरं॒नज॒न्तवो॒ऽहंदा॒शुषे॒विभ॑जामि॒भोज॑नम् ॥ १ ॥

अ॒हम् । भु॒व॒म् । वसु॑नः । पू॒र्व्यः । पति॑ः । अ॒हम् । धना॑नि । सम् । ज॒या॒मि॒ । शश्व॑तः । माम् । ह॒व॒न्ते॒ । पि॒तर॑म् । न । ज॒न्तव॑ः । अ॒हम् । दा॒शुषे॑ । वि । भ॒जा॒मि॒ । भोज॑नम् ॥ १ ॥

अहमिंद्रोवसुनोधनस्य पूर्व्यः मुख्यः असाधारणः पतिः स्वामी भुवं अभवं भवतेर्लङि बहुलंछंदसीति शपोलुक् अचिश्नुधात्वित्यादिनोवङादेशः अडभावश्छांदसः । तथाहं शश्वतः बहुनामैतत् बहोः शत्रोः संबंधीनि धनानि समित्येकीभावे सह जयामि । किंच मामेव जंतवः प्राणिनोयजमानाहवंते आह्वयंति पितरंन पितरमिव पुत्राः अहं दाशुषे हविषोदात्रे यजमानाय भोजनमन्नं विभजामि ददामि ॥ १ ॥

अथ द्वितीया—

अ॒हमिन्द्रो॒रोधो॒वक्षो॒अथ॑र्वणस्त्रि॒ताय॒गाअ॑जनय॒महे॒रधि॑ ।
अ॒हंदस्यु॑भ्यः॒परि॑नृ॒म्णमाद॑देगो॒त्रा शिक्ष॒न्दधी॒चेमा॑त॒रिश्व॑ने ॥ २ ॥

अहम् । इन्द्रः । रोधः । वक्षः । अथर्वणः । त्रितार्य । गाः ।
अजनयम् । अहेः । अधि । अहम् । दस्युऽभ्यः । परि । नृम्णम् ।
आ । ददे । गोत्रा । शिक्षन् । दधीचे । मातरिश्वने ॥ २ ॥

आद्यपादस्येतिहासमाहुः आथर्वणं दध्यंचं मधुविद्यावंतं इंद्रआगत्य मधुविद्यां कस्यचिन्न ब्रूयाइति नियमितवान्। यदि ब्रूयास्ते शिरश्छेत्स्यामीत्युक्तवान् सचाथर्वणोश्विभ्यामुवाच इदंहैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाच । अश्वस्यशीर्ष्णाप्रयदीमुवाचेतिहिश्रुती । सचेंद्रआगत्य दधीचः शिरोहरदिति । तदत्रोच्यते—इंद्रोहं अथर्वणोथर्वणः पुत्रस्य दधीचोवक्षस्तदुपलक्षितं शिरइत्यर्थः तस्य रोधोरोधकोहर्तास्मि तथा त्रितायैतन्नामकायाप्त्याय कूपपतिताय तदुद्धरणार्थमहेर्मेघस्याधि उपरिगाउदकानि अजनयं उदपादयं त्रितस्य कूपपतितस्येंद्रं प्रति उद्धरणप्रार्थनं । संमातपंत्यभितेइत्यत्रप्रतिपादितं। तथाहं दस्युभ्यउपक्षपयितृभ्यः शत्रुभ्यः सकाशान्नृम्णं धनमाददे आदत्तवानस्मि । किंकुर्वन् गोत्रा गवां उदकानां पालकान् मेघान् शिक्षन् हिंसन् किमर्थं मातरिश्वने मातरिश्वनः पुत्राय दधीचे एतन्नामकाय ऋषये वर्षकामनया पृवृद्धं वार्षितुमिच्छन् ॥ २ ॥

अथ तृतीया—

मह्यंत्वष्टावज्रमतक्षदायसंमयिदेवासोवृजन्नपिक्रतुम् ।
ममानीकंसूर्यस्येवदुष्टरंमामार्यन्तिकृतेनकर्त्वेनच ॥ ३ ॥

मह्यम् । त्वष्टा । वज्रम् । अतक्षत् । आयसम् । मयि । देवासः ।
अवृजन् । अपि । क्रतुम् । मम । अनीकम् । सूर्यस्यऽइव ।
दुस्तरम् । माम् । आर्यन्ति । कृतेन । कर्त्वेन । च । ३ ॥

मह्यं मदर्थं त्वष्टा देवः आयसमयोमयं वज्रं आयुधं अतक्षत् संपादितवान्। अपिच देवाः मयि विषये क्रतुं यज्ञं अवृजन् कुर्वंति मम अनीकं अश्वादि सूर्यस्येव रवेरिव दुस्तरं दुरवगाहं। किंच कृतेन निष्पादितेन कर्त्वेन वृत्रवधादिरूपेण कर्मणा उपलक्षितं मां सर्वे आर्यंति गच्छंति ॥ ३ ॥

---

१ ऋ० सं० १. ८. १० । २ ऋ० सं० १. ७. २० ।

अथ चतुर्थी–

**अहमेतंगव्ययमश्व्यंपशुंपुरीषिणंसायकेनाहिरण्ययम् ।**
**पुरूसहस्रानिशिशामिदाशुषेयन्मासोमासउक्थिनोअमन्दिषुः ॥ ४ ॥**

अहम् । एतम् । गव्ययम् । अश्व्यम् । पशुम् । पुरीषिणम् ।
सायकेन । हिरण्ययम् । पुरु । सहस्रा । नि । शिशामि । दाशुषे ।
यत् । मा । सोमासः । उक्थिनः । अमन्दिषुः ॥ ४ ॥

अहं एतं गव्ययं गोमयं अश्व्यं अश्वमयं हिरण्ययं हिरणमयं हिरण्यालंकारोपेतं पुरीषिणं पुरीषमुदकं क्षीररूपं तद्वंतं पशुं शत्रुसंबंधिनं जात्यैकवचनं पशुसंघमित्यर्थः । तं सायकेनायुधेनाजयं । तथा पुरु पुरूणि सहस्रा सहस्राणि शस्त्राणिनिशिशामि संस्करोमि दाशुषे दत्तवते यजमानाय वैरिविनाशायेत्यर्थः । कदेति उच्यते–यद्यदा मा मां सोमासः सोमाः उक्थिनः शस्त्रोपेताः संतः अथवा सोमेन शस्त्रैश्चोपेतायजमानाअमंदिषुस्तर्पयंति ॥ ४ ॥

अथ पंचमी–

**अहमिन्द्रोनपराजिग्यइद्धनंनमृत्यवेवतस्थेकदाचन ।**
**सोममिन्मासुन्वन्तोयाचतावसुनमेपूरवःसख्येरिषाथन ॥ ५ ॥ ५ ॥**

अहम् । इन्द्रः । न । परा । जिग्ये । इत् । धनम् । न ।
मृत्यवे । अव । तस्थे । कदा । चन । सोमम् । इत् । मा । सुन्वन्तः ।
याचत । वसु । न । मे । पूरवः । सख्ये । रिषाथन ॥ ५ ॥ ५ ॥

इंद्रः सर्वस्य धनस्य स्वाम्यहं धनं आत्मीयं न पराजिग्ये इत् नैव पराभावयामि मदीयं धनं न पराभूयतइत्यर्थः । किंचाहं मृत्यवे सर्वेषां मारकाय कदाचन कदापि नावतस्थे नावस्थितोभवामि इंद्रभक्तान मृत्युभाजोभवंति किल किमु वक्तव्यंइंद्रस्य मृत्युविरहे । यस्मादेवं तस्मात्सोमं सुन्वंतोहे यजमानाः वसु युष्मदपेक्षितं धनं मेत् मामेव याचत हे पूरवः मनुष्याः मे सख्ये नरिषाथन मारिष्टाभवथ मत्सख्यं माविनाशयत ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे पञ्चमोवर्गः ॥ ५ ॥

अथ षष्ठी—

अ॒हमे॒ताञ्छाश्व॑सतो॒ द्वाद्वेन्द्रं॒ ये वज्रं॑ यु॒धये॒ऽकृ॑ण्वत ।
आ॒ह्वय॑माना॒ँ अव॒ हन्म॑ना॒हनं॑ दृ॒ळ्हा वद॒न्नन॑मस्युर्न॒म॒स्विनः॑ ॥ ६ ॥

अ॒हम् । ए॒तान् । शाश्व॑सतः । द्वाऽद्वा॑ । इन्द्र॑म् । ये । वज्र॑म् ।
यु॒धये॑ । अकृ॑ण्वत । आ॒ऽह्वय॑मानान् । अव॑ । हन्म॑ना । अ॒ह॒न॒म् ।
दृ॒ळ्हा । वद॑न् । अन॑मस्युः । न॒म॒स्विनः॑ ॥ ६ ॥

अहमिंद्र एतान् वक्ष्यमाणान् शाश्वसतः भृशं प्राणतः प्रवृद्धबलान् शत्रून् द्वाद्वा द्वौद्वौ युग्मभूतावित्यर्थः तानेतानिति संबंधः । एतानित्युक्तं कानित्याह ये च इंद्रं शत्रूणां दारकं इन्छत्रूणां दारयितेति निरुक्तं[1] । ईदृशं वज्रं बलिनं यद्वा वज्रवंतं युधये युद्धायाकृण्वताकुर्वन् तानेतानित्यर्थः । पुनः कीदृशान् आह्वयमानान् एहि युध्यस्वेत्याह्वयतः शत्रून् नमस्विनः नमनवतोबलान्नामयित्वा अनमस्युः अप्रणतिशीलः सन् दृळ्हा दृढानि भयजनकानि स्थिराणि वचनानि वदन् हन्मना हननसाधनेन वज्रेण अवाहनं हतवानस्मि ॥ ६ ॥

अथ सप्तमी—

अ॒भी३॒॑दमेक॒मेको॑ अस्मि नि॒ष्षाळ॒भी द्वा किमु॒ त्रयः॑ करन्ति ।
खले॒ न प॒र्षान्प्रति॑ हन्मि॒ भूरि॒ किं मा॑ निन्दन्ति॒ शत्र॑वोऽनि॒न्द्राः ॥ ७ ॥

अ॒भि । इ॒दम् । एक॑म् । एकः॑ । अ॒स्मि॒ । नि॒ष्षाट् । अ॒भि ।
द्वा । किम् । ऊँ॒ इति॑ । त्रयः॑ । क॒र॒न्ति॒ । खले॑ । न । प॒र्षान् ।
प्रति॑ । ह॒न्मि॒ । भूरि॑ । किम् । मा॒ । नि॒न्द॒न्ति॒ । शत्र॑वः ।
अ॒नि॒न्द्राः ॥ ७ ॥

अहं इदं इदानीमेकं शत्रुमेकोसहायएव सन्नभ्यस्मि अभिभवामि । किंच निःषाट् सपत्नान्निःषहमाणोहं द्वाद्वावप्यसह्यशत्रू अभ्यस्मि किमु किंवा त्रयः शत्रवः करंति कुर्वंति तान-

---

[1] नि० १०. ८ ।

प्यभिभवामीत्यर्थः । किं बहुना खले न खले यथा निष्पावजीर्णंव्रीह्यादिस्तंबान् अनायासेन प्रतिहंति कर्षकः तद्वत्पर्षान् परुषान्निष्ठुरान् भूरि बहून् शत्रून् प्रतिहन्मि मा मां अनिंद्राः इंद्र-रहिताः इंद्रमजानंतः इंद्रविरोधिनः शत्रवोमामिंद्रं किं निंदंति निंदितुमशक्ताइत्यर्थः । अत्रा-भिभवामीदमेकमेकोस्मि निःषहमाणः सपत्नानभिभवामि द्वौ किंमात्रयः कुर्वंत्येकइतासंख्या-द्वौ द्रुततरासंख्यात्रयस्तीर्णतमासंख्या चत्वारश्चलिततमासंख्येत्यादिनिरुक्तं द्रष्टव्यं ॥ ७ ॥

अथाष्टमी–

अहंगुङ्गुभ्योअतिथिग्वमिष्करमिषंनवृत्रतुरंविक्षुधारयम् ।
यत्पर्णयघ्नउतवाकरंजहेप्राहंमहेवृत्रहत्येअशुश्रवि ॥ ८ ॥

अहम् । गुङ्गुऽभ्यः । अतिथिऽग्वम् । इष्करम् । इषम् । न ।
वृत्रऽतुरम् । विक्षु । धारयम् । यत् । पर्णयऽघ्ने । उत । वा ।
करञ्जऽहे । प्र । अहम् । महे । वृत्रऽहत्ये । अशुश्रवि ॥ ८ ॥

अहमिंद्रोगुंगुभ्यः एतन्नामकेभ्योजनपदेभ्यः रक्षणायातिथिग्वं अतिथिगोः पुत्रं दिवो-दासमृषिमिष्करं निष्कर्तारं वृत्रतुरं शत्रूणां हिंसकं विक्षु प्रजासु मध्ये इषंन अन्नमिव तासा-मन्नं यथा भोगाय भवति तद्वत् अन्नस्थानीयं धारयं धारितवानस्मि । कदेति उच्यते यद्य-दा पर्णयघ्ने पर्णयनामकस्यासुरस्य हननवति उतवा अपिच करंजहे एतन्नामकस्य हननोपेते महे महति वृत्रहत्ये संग्रामे अहं प्र प्रकर्षेण अशुश्रवि विश्रुतोभवं ॥ ८ ॥

अथ नवमी–

प्रमेनमीसाप्यइषेभुजेभूद्गवामेषेसख्याकृणुतद्विता ।
दिद्युंयदस्यसमिथेषुमंहयमादिदेनंशंस्यमुक्थ्यंकरम् ॥ ९ ॥

प्र । मे । नमी । साप्यः । इषे । भुजे । भूत् । गवाम् । एषे ।
सख्या । कृणुत । द्विता । दिद्युम् । यत् । अस्य । समऽइथेषु ।
मंहयम् । आत् । इत् । एनम् । शंस्यम् । उक्थ्यम् । करम् ॥ ९ ॥

---

१ नि० ३. १० ।

मे मम मत्संबंधी नमी नामकत्वान्नमः स्तोत्रं तदस्यास्तीति नमी स्तोता साप्यः सर्वैरा-श्रयणीयः सन्निषेऽन्नाय भुजे भोगाय प्रभूत् प्रभवति तं मत्स्तोतारं मनुष्यागवामेषे अन्वेषणाय सख्या सख्याय च द्विता द्विविधं द्विप्रकाराय कृणुत कृण्वंति गवां दातारं सखायं च कुर्वंती-त्यर्थः । यद्वा गवामेषे एषणे द्विता द्वेधा सख्याय शरीराय सैनिकाय च सख्याय कृण्वंति । कदेति तदुच्यते यद्यदास्य मत्संबंधिनः स्तोतुर्जयार्थं समिथेषु संग्रामेषु दिद्युं आयुधं मंहयं स्वीकुर्यामित्यर्थः आदिदनंतरमेवैनं स्तोतारं शंस्यं स्तुत्यमुक्थ्यं उक्थार्हं करं अकरं करोमि ॥९॥

अथ दशमी—

प्रनेमंस्मिन्ददृशेसोमोअन्तर्गोपानेमंमाविरस्थाकृणोति ।
सतिग्मशृङ्गंवृषभंयुयुत्सन्द्रुहस्तंस्थौबहुलेबद्धोअन्तः ॥ १० ॥

प्र । नेमंस्मिन् । ददृशे । सोमः । अन्तः । गोपाः । नेमम् । आविः । अस्था । कृणोति । सः । तिग्मऽशृङ्गम् । वृषभम् । युयुत्सन् । द्रुहः । तस्थौ । बहुले । बद्धः । अन्तरिति ॥ १० ॥

नेमस्मिन्नेमशब्दोर्धपर्यायः यष्टा अयष्टा च द्वौ पुरुषौ युध्यंतौ तयोरेकस्मिन्यष्टरीत्यर्थः तस्मिन्नन्तः सोमो ददृशे दृश्यते तं नेमं अर्धमेकं गोपाः गोपायितेंद्रः अस्थाक्षेणसाधनेनेंद्रेण आविष्कृणोति प्रकटयति शत्रुभिरनभिभूतं करोतीत्यर्थः सः यत्र सोमो न दृश्यते सः तिग्म-शृंगं तीक्ष्णायुधं वृषभं बाणान् वर्षंतयं इंद्रेणानुगृहीतं प्रतियुयुत्सन् योद्धुमिच्छन् द्रुहो-द्रोग्धा बद्धः सन् बहुले अंधकारे अंतस्तस्य मध्ये तस्थौ तिष्ठति यद्वैवं व्याख्येयं नेमस्मि-न्निंद्रभक्ते अंतः सोमोददृशे नेममन्यं गोपाःस्वभक्तरक्षकइंद्रः अस्था वज्रेणाविष्कृणोति आ-विष्करोति वज्रेण प्रकटयतीत्यर्थः सनेमोद्रुहस्तिग्मशृंगं.वृषभमिंद्रंयुयुत्सन् शिष्टं समानं ॥१०॥

अथैकादशी—

आदित्यानांवसूनांरुद्रियाणांदेवोदेवानांनमिनामिधाम ।
तेमांभद्रायशवसेततक्षुरपराजितमस्तृतमषाळ्हम् ॥ ११ ॥ ६ ॥

आदित्यानाम् । वसूनाम् । रुद्रियाणाम् । देवः । देवानाम् ।
न । मिनामि । धाम । ते । मा । भद्राय । शवसे । ततक्षुः ।
अपराऽजितम् । अस्तृतम् । अषाळ्हम् ॥ ११ ॥ ६ ॥

आदित्यानां वसूनां रुद्रियाणां रुद्राणां यद्वा रुद्रपुत्राणां मरुतां च देवानां धाम स्थानं देवइंद्रो न मिनाति न हिनस्ति ते आदित्यादयोमा मां भद्राय शवसे ततक्षुः अनुगृह्णंतु अपराजितमस्तृतमाहिंसितमषाळ्हं अनभिभूतं ॥ ११ ॥

॥ इत्यष्टमस्य प्रथमे षष्ठोवर्गः ॥ ६ ॥

अहंदामित्येकादशर्चं सप्तमं सूक्तं वैकुंठइंद्रएव ऋषिः देवता च । द्वितीयैकादश्यौ त्रिष्टुभौ शिष्टाजगत्यः । अनुक्रांतंच—अहंदामंत्योपाद्ये च त्रिष्टुभाविति । द्वितीये पर्याये मैत्रावरुणस्येदं सूक्तं । सूत्रितंच—अहंदांपातासुतमिंद्रोअस्तुसोममिति ।

तत्र प्रथमा—

अहंदांगृणतेपूर्व्यंवस्वहंब्रह्मंकृणवंमह्यंवर्धनम् ।
अहंभुवंयजमानस्यचोदितायज्वनःसाक्षिविश्वस्मिन्भरे ॥ १ ॥

अहम् । दाम् । गृणते । पूर्व्यम् । वसु । अहम् । ब्रह्म । कृणवम् ।
मह्यम् । वर्धनम् । अहम् । भुवम् । यजमानस्य । चोदिता ।
अयज्वनः । साक्षि । विश्वस्मिन् । भरे ॥ १ ॥

अहमिंद्रोगृणते स्तुवते पूर्व्यं मुख्यं वसु धनं दां अदां अहमेव ब्रह्म परिवृढं कर्म स्तुतिलक्षणं मह्यं वर्धनं कृणवं करोमि स्तोतुः संबंधि स्तोत्रं तस्मै धनं प्रयच्छन् मह्यमेव वर्धनं करोमीत्यर्थः । तथाहं यजमानस्य मामुद्दिश्य यष्टुर्धनस्य चोदिता प्रेरकोभुवं भवामि अयज्वनोऽयष्टुः अयष्टारमित्यर्थः तं विश्वस्मिन् भरे सर्वस्मिन्नपिसंग्रामे साक्षि अभिभवामि ॥ १ ॥

अथ द्वितीया—

मांधुरिन्द्रंनामदेवतादिवश्चग्मश्चापांचजन्तवः ।
अहंहरीवृषणाविव्रतारघूअहंवज्रंशवसेधृष्ण्वाददे ॥ २ ॥

माम् । धुः । इन्द्रम् । नाम । देवता । दिवः । च । ग्मः । च ।
अपाम् । च । जन्तवः । अहम् । हरी इति । वृषणा । विऽव्रता ।
रघू इति । अहम् । वज्रम् । शवसे । धृष्णु । आ । ददे ॥ २ ॥

इंद्रं नाम इंद्रनामानं मां देवता देवानां मध्ये दिवोद्युलोकस्य ग्मा पृथिवी आपोंतरिक्षं एतेषु लोकेषु जंतवोजातामामेव धुः अधुर्धारयंति हविर्भिः स्तुतिभिश्च अहं यज्ञगमनाय संग्रामगमनाय वा हरी हरितवर्णौ वृषणा पुंस्त्वोपेतौ विव्रता विविधकर्माणौ रघु लघुगामिनौ अश्वौ न योजयामि रथे । तथाहं धृष्णु धर्षकं वज्रमायुधं शवसे बलायाददे स्वीकरोमि ॥ २ ॥

अथ तृतीया—

अहमत्कंकवयेशिश्नथंहथैरहंकुत्समावमाभिरूतिभिः ।
अहंशुष्णस्यश्नथितावधर्यमन्नयोररआर्यन्नामदस्यवे ॥ ३ ॥

अहम् । अत्कम् । कवये । शिश्नथम् । हथैः । अहम् । कुत्सम् ।
आवम् । आभिः । ऊतिऽभिः । अहम् । शुष्णस्य । श्नथिता ।
वधः । यमम् । न । यः । ररे । आर्यम् । नाम । दस्यवे ॥ ३ ॥

अहमिन्द्रोत्कमाच्छादकं शत्रुपुत्रं कवये उशनसे ऋषये तस्य सुखवासाय हथैर्बहुप्रकारैः प्रहारैस्तत्साधनैरायुधैर्वा शिश्नथं ताडितवानस्मि श्नथतिर्वधकर्मा । किंचाहं कुत्समेतन्नामकं ऋषिं आभिरूतिभिः शुष्णवधादिरूपैः कुत्सायशुष्णमशुषंनिबर्हीरित्यादिमंत्रांतरस्थरक्षणैराव-मरक्षं । पूर्वमेव कृतान्यपि रक्षणानीदानीमेव कृतानीत्यनु वदति कुत्सार्थं शुष्णस्य एन्नामक-स्यासुरस्य श्नथिता हिंसिता तस्य हननायेत्यर्थः वधः वज्रं यमं प्रहरणाय नियमितवानस्मि योहं आर्यं अर्यसंबंधि आर्याणां देयमित्यर्थः तादृशं नाम उदकनामैतत् नामकमुदकं दस्यवे शत्रवे उपक्षपयित्रे न ररे नदत्तवानस्मि यद्वा आर्यं पूज्यमित्यसाधारणं नाम दस्यवे न दत्तवा-नस्मि अत्रेन्द्रस्यात्मस्तुतौ कुत्सरक्षणशुष्णवधादिकं आवःकुत्समिन्द्रयस्मिन्चाकन् शुष्णंपिपुं-कुयवंवृत्रमिन्द्रेत्यादिषु बहुधा प्रपञ्चितं । अतोग्रन्थविस्तरभयान्नात्र वक्ष्यते ॥ ३ ॥

१ ऋ० सं० ३. ५. १९. । २ ऋ० सं० १. ३. ३. । ३ ऋ० सं० १. ७. १७. ।

अथ चतुर्थी–

अहंपितेववेतसूँरभिष्टयेतुग्रंकुत्सायस्मादिभंचरन्धयम् ।
अहंभुवंयजमानस्यराजनिप्रयद्भरेतुजयेनप्रियाधृषे ॥ ४ ॥

अहम् । पिताऽइव । वेतसून् । अभिष्टये । तुग्रम् । कुत्साय ।
स्मत्ऽइभम् । च । रन्धयम् । अहम् । भुवम् । यजमानस्य ।
राजनि । प्र । यत् । भरे । तुजये । न । प्रिया । आऽधृषे ॥ ४ ॥

अहं इन्द्रः पितेव पिता पुत्रायेव सयथा तस्मै निर्वाहार्थं अभिमतंदेशं प्रसाधयति तद्वत् वेतसूनेतन्नामकान् जनपदानभिष्टयेभीच्छते कुत्साय महर्षये तुग्रं स्मदिभंच रन्धयं वशमनयं अहं यजमानस्य राजनि राजनार्थं भुवं अभवं समर्थइतिशेषः । यत् यस्मात् तुजये न पुत्रायेव पिता तस्मै यजमानाय धृषे शत्रूणांधर्षणाय प्रिया प्रियाणि प्रभरे प्रभरामि तस्माद्यजमानस्य राजनि भुवमिति संबन्धः ॥ ४ ॥

अथ पञ्चमी–

अहंरन्धयंमृगयंश्रुतर्वणेयन्माजिहीतवयुनाचनानुषक् ।
अहंवेशंनम्रमायवेकरमहंसव्यायपड्गृभिमरन्धयम् ॥ ५ ॥ ७ ॥

अहम् । रन्धयम् । मृगयम् । श्रुतर्वणे । यत् । मा । अजिहीत ।
वयुना । चन । आनुषक् । अहम् । वेशम् । नम्रम् । आयवे ।
अकरम् । अहम् । सव्याय । पट्ऽगृभिम् । अरन्धयम् ॥ ५ ॥ ७ ॥

अहमिन्द्रोमृगयं एतन्नामकमसुरं श्रुतर्वणे एतन्नामकाय महर्षये रन्धयं रध्यतिर्वशगमने वशमनयं यद्यस्माच्छ्रुतर्वा मा मामजिहीत ओहाङ् गतौ अगच्छत् । तदेवोच्यते वयुना प्रज्ञानेन स्तोत्रेण आनुषक् अनुषक्तोभूत् चनेतिपूरणः । अहं वेशं एतन्नामानं नम्रं प्रह्वं आयवे एतन्नामकाय अकरं अकार्षं करोतेर्लुङि कृमृदृरुहिभ्यइतिच्लेरङ् अडभावश्छान्दसः । अहं सव्याय एतन्नामकाय पड्गृभिं एतन्नामकमरन्धयं वशमनयं ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे सप्तमोवर्गः ॥ ७ ॥

अथ षष्ठी—

**अहंसयोनववास्त्वंबृहद्रथंसंवृत्रेवदासंवृत्रहारुजम् ।**
**यद्वर्धयन्तंप्रथयन्तमानुषग्दूरेपारेरजसोरोचनाकरम् ॥ ६ ॥**

अहम् । सः । यः । नवऽवास्त्वम् । बृहत्ऽरथम् । सम् । वृत्राऽइव ।
दासम् । वृत्रऽहा । अरुजम् । यत् । वर्धयन्तम् । प्रथयन्तम् ।
आनुषक् । दूरे । पारे । रजसः । रोचना । अकरम् ॥ ६ ॥

सः प्रसिद्धः यः अहमिन्द्रः नववास्त्वं बृहद्रथं च वृत्रेव वृत्रमिव दासं उपक्षपयितारमिव नववास्त्वं बृहद्रथं च समरुजं सम्यक् भग्नमकरवं । रुजोभंगे । यद्यदा वर्धयन्तं वर्धमानं प्रथयन्तं प्रथमानं चोभौ शत्रू आनुषक् अनुषक्तः सन् रोचना रोचनस्य रजसो लोकस्य दूरे पारे अकरं कृतवानस्मि ॥ ६ ॥

अथ सप्तमी—

**अहंसूर्यस्यपरियाम्याशुभिःप्रैतशेभिर्वहमानओजसा ।**
**यन्मासावोमनुषआहनिर्णिजऋधक्कृषेदासंकृत्व्यंहथैः ॥ ७ ॥**

अहम् । सूर्यस्य । परि । यामि । आशुऽभिः । प्र । एतशेभिः ।
वहमानः । ओजसा । यत् । मा । सावः । मनुषः । आह ।
निःऽनिजे । ऋधक् । कृषे । दासम् । कृत्व्यम् । हथैः ॥ ७ ॥

अहं सूर्यस्य देवस्य आशुभिः शीघ्रगामिभिः एतशेभिरेतशवर्णैरश्वैर्वहमानः उह्यमानः ओजसात्मीयेन बलेन प्रकर्षेण परियामि परिगच्छामि सूर्यात्मना । किंच यद्यदा मा मां मनुषोमनुष्यस्य सावः सोमाभिषवः आह ब्रूते आह्वयतीत्यर्थः किमर्थमाह निर्निजे निर्निगिति रूपं यज्ञस्वरूपायेत्यर्थः तदानींकृत्व्यंकर्तव्यंहन्तव्यमित्यर्थः दासं उपक्षपयितारं शत्रुं हथैः हननसाधनैः ऋधककृषे पृथक्करोमि ऋधगित्यव्ययं पृथगर्थे ॥ ७ ॥

अथाष्टमी—

अहं सप्तहा नहुषो नहुष्टरः प्राश्रावयं शवसा तुर्वशं यदुम् ।
अहं न्य१न्यं सहसा सहस्करं नव व्राधतो नवतिं च वक्षयम् ॥ ८ ॥

अहम् । सप्तऽहा । नहुषः । नहुःऽतरः । प्र । अश्रवयम् । शवसा । तुर्वशम् । यदुम् । अहम् । नि । अन्यम् । सहसा । सहः । करम् । नव । व्राधतः । नवतिम् । च । वक्षयम् ॥ ८ ॥

अहं सप्तहा सप्तसंख्याकानां शत्रुपुरां हन्ता । सप्तयत्पुरःशर्मशारदीरित्युक्तं । यद्वा सप्त नमुच्यादीन् हतवान् । किंच नहुषोबंधकस्यापि नहुष्टरः बंधकतरोहं शवसाबलेन तुर्वशं यदुं च प्राश्रावयं शत्रुसंबंधि गवादिप्रदानेन श्रावितवानस्मि तौ यथा लोके श्रुतौ भवतः तथाकार्षमित्यर्थः । किंचाहं अन्यं अस्मत्स्तोतारं सहसा बलेनसहः बलिनं निकरं नितरां अकार्षं करोतेर्लुङि कृमृदृरुहीति च्लेरङ् अडभावः किंच नव नवसंख्याकाः नवतिं च नवतिसंख्याकाश्च नवोत्तरनवतिमित्यर्थः कथंभूताः व्राधतोवर्धमानाः वक्षयं अवाहनमनाशयमित्यर्थः ॥ ८ ॥

अथ नवमी—

अहं सप्त स्रवतो धारयं वृषा द्रवित्न्वः पृथिव्यां सीरा अधि ।
अहमर्णांसि वि तिरामि सुक्रतुर्युधा विदं मनवे गातुमिष्टये ॥ ९ ॥

अहम् । सप्त । स्रवतः । धारयम् । वृषा । द्रवित्न्वः । पृथिव्याम् । सीराः । अधि । अहम् । अर्णांसि । वि । तिरामि । सुऽक्रतुः । युधा । विदम् । मनवे । गातुम् । इष्टये ॥ ९ ॥

वृषा वर्षकोहं सप्तस्रवतः स्रवंतीर्नदीर्धारयं अधारयं कीदृश्यस्ताः द्रवित्न्वः द्रवन्तीः वाछन्दसीति पूर्वसवर्णदीर्घाभावः सीराः सरणशीलाः । कुत्र पृथिव्यां सुक्रतुः शोभनकर्माहं अर्णांस्युदकानि वितिरामि प्रयच्छामि किंच मनवे मनुष्याय इष्टये तस्य गमनाय गातुं मार्गं युधा संप्रहारेण तिरोधानपरिहारेणेत्यर्थः विदं अलंभयं प्रायच्छमित्यर्थः विदेर्लाभार्थस्य पुषादीत्यादिना च्लेरङ् ॥ ९ ॥

---

१ ऋ० सं० २. ४. १६. ।

अथ दशमी–

अहंतदा॑सुधारयंयदा॑सुनदेवश्चनत्वष्टाधा॑रयद्रुशंत् ।
स्पार्हंगवामूधःसुवक्षणास्वामधोर्मधुश्वात्र्यंसोमंमा॑शिरम् ॥ १०॥

अहम् । तत् । आसु । धारयम् । यत् । आसु । न । देवः । चन ।
त्वष्टा । अधारयत् । रुशत् । स्पार्हम् । गवाम् । ऊधःऽसु । वक्षणासु ।
आ । मधोः । मधु । श्वात्र्यम् । सोमम् । आऽशिरम् ॥ १० ॥

अहं तत्प्रसिद्धं पयः आसु गोषु धारयं धृतवानस्मि धृ धारणे ण्यंतस्यलङि रूपं यत्पयः आसु गोषु देवश्चन त्वष्टा देवशिल्पी सूर्योवा देवोनाधारयत् धर्तुंनाशक्नोत् कीदृशं पयोधारितमिति चेत् उच्यते रुशत् दीप्तं स्पार्हं स्पृहणीयं केषु प्रदेशेष्विति उच्यते–गवामूधःसु उद्धततरेषु गवां पयोधारणप्रदेशेषु किंच । मधु मधुरमुदकं वक्षणासु नदीनामैतत् वहनशीलासु नदीषु धारयमित्यनुषज्यते नद्युदकधारणस्यावधिरुच्यते आमधोरोदकोत्पत्तेः आगामिवर्षासमयपर्यन्तमित्यर्थः कीदृशं मध्विति तदुच्यते श्वात्र्यं श्वात्रमिति क्षिप्रनाम क्षिप्रगमनार्हं यद्वा श्वात्र्यमित्युत्तरत्रसंबध्यते श्वात्र्यं सुखावहं सोमं प्रति आशिरं आश्रयणार्हं धारयं ॥१०॥

अथैकादशी–

एवादेवाँइन्द्रोविव्येनॄन्प्रच्यौत्नेनंमघवासत्यराधाः ।
विश्वेत्तातेहरिवःशचीवोभितुरासःस्वयशोगृणन्ति ॥ ११ ॥ ८ ॥

एव । देवान् । इन्द्रः । विव्ये । नॄन् । प्र । च्यौत्नेन । मघऽवा ।
सत्यऽराधाः । विश्वा । इत् । ता । ते । हरिऽवः । शचीऽवः ।
अभि । तुरासः । स्वऽयशः । गृणन्ति ॥ ११ ॥ ८ ॥

अथानयेन्द्रभावं परित्यज्य ऋषिभावेनाह एवं उक्तप्रकारेण देवान्नॄंश्चेन्द्रोदेवान्प्रविव्ये प्रकर्षेण गमयति तस्मात्पराचीः प्रजाः प्रवीयन्ते प्रतीचीर्जायन्तइति ब्राह्मणं[1] । किमन्येन सहायेन नेत्याह च्यौत्नेन स्वीयेन बलेन कीदृशइन्द्रः मघवा धनवान् सत्यराधाः सत्यधनः अथ प्रत्यक्षेणाह हे हरिवः हरिभ्यां तद्वन् शचीवः कर्मवन् स्वयशः स्वायत्तकीर्ते इन्द्र ता तानि

१ तै० सं० ६. ३. १.।

विश्वा सर्वाणि कर्माणि ते तव संबंधीनि येषु कर्मसु तुरासस्त्वरमाणा ऋत्विजोभिगृणंति अभिष्टुवंति ॥ ११ ॥

॥ इत्यष्टमस्य प्रथमेष्टमोवर्गः ॥ ८॥

प्रवोमहइति सप्तर्चं अष्टमं सूक्तं आदितोद्वे जगत्यौ केतनरइत्यादिके द्वे अभिसारिण्यौ आदितोद्वौ दशाक्षरौ ततोद्वौ द्वादशकौ चाभिसारिणीति। तदुक्तं—वैराजौ जागतौ चाभिसारिणोति। ततस्त्रिष्टुबेका ततोद्वे जगत्यौ पूर्ववदृषिदेवते। तथाचानुक्रान्तं—प्रवोमहेसप्तद्विजगत्याद्यन्तं केतेभिसारिण्याविति। महाव्रते निष्केवल्ये एतत्सूक्तं निविद्धानं। सूत्रितंच—प्रवोमहेमंदमानायान्धसइति निविद्धानमिति।

तत्र प्रथमा—

**प्रवोमहेमन्दमानायान्धसोर्चाविश्वानरायविश्वाभुवे ।**
**इन्द्रस्ययस्यसुमखंसहोमहिश्रवोनृम्णंचरोदसीसपर्यतः ॥ १ ॥**

**प्र । वः । महे । मन्दमानाय । अन्धसः । अर्च । विश्वानराय । विश्वऽभुवे । इन्द्रस्य । यस्य । सुऽमखम् । सहः । महि । श्रवः । नृम्णम् । च । रोदसी इति । सपर्यतः ॥ १ ॥**

हे स्तोतः वः त्वमित्यर्थः पूजार्थं बहुवचनं महे महते अन्धसः अन्धसेत्यर्थः सोमेन मंदमानाय मोदमानाय विश्वानराय सर्वस्य नेत्रे नरेसंज्ञायामिति सांहितिकोदीर्घः विश्वाभुवे सर्वस्य भावयित्रे मह्यमिन्द्राय प्रार्च अर्चतिः स्तुतिकर्मा प्रोच्चारय यस्य मम इन्द्रस्य सुमखं सुष्ठुमंहनीयं सहोबलं महि महत् श्रवोन्नं नृम्णं धनं च रोदसी द्यावापृथिव्यौ सपर्यतः पूजयतः तस्माइन्द्राय प्रार्चेति समन्वयः ॥ १ ॥

अथ द्वितीया—

**सोचिन्नुसख्यानर्यइनःस्तुतश्चर्कृत्यइन्द्रोमावतेनरे ।**
**विश्वासुधूर्षुवाजकृत्येषुसत्पतेवृत्रेवाप्स्व१भिशूरमन्दसे ॥ २ ॥**

सः । चित् । नु । सख्या । नर्यः । इनः । स्तुतः । चर्कृत्यः । इन्द्रः । माऽवते । नरे । विश्वासु । धूःऽसु । वाजऽकृत्येषु । सत्ऽपते । वृत्रे । वा । अप्ऽसु । अभि । शूर । मन्दसे ॥ २ ॥

सोचिन्नु सखल्विन्द्रः सख्या सखिभूतेन निमित्तेन नर्योनरेभ्योहितः इनः सर्वस्येश्वरः स्तुतः सर्वैरभिष्टुतः सख्या स्तुतइतिवा संबंधः मावते मत्सदृशाय नरे जनाय चर्कृत्यः कर्तव्यैः पुनःपुनः कर्तव्यः परिचरणीयइत्यर्थः । अथ प्रत्यक्षवादः हे सत्पते सतां पालक इन्द्र सत्वं विश्वासु सर्वासु धूर्षु वोढव्येषु कार्यभारेषु वाजकृत्येषु बलकृत्येषु च वृत्रे वाप्सु मेघे वर्तमानेषूदकेषु च निमित्तेषु हे शूरत्वमभिमंदसे अभिष्टूयसे ॥ २ ॥

अथ तृतीया–

**केतेनरइन्द्रयेतइषेयेतेसुम्नंसधन्य१मियक्षान् । केतेवाजायासुर्यायहिन्विरेकेअप्सुस्वासूर्वरासुपौंस्ये ॥ ३ ॥**

के । ते । नरः । इन्द्र । ये । ते । इषे । ये । ते । सुम्नम् । सऽधन्यम् । इयक्षान् । के । ते । वाजाय । असुर्याय । हिन्विरे । के । अप्ऽसु । स्वासु । उर्वरासु । पौंस्ये ॥ ३ ॥

हे इन्द्र के ते नरः के मनुष्याः इति प्रश्नः ते महान्तोमया ज्ञातव्याइत्यभिप्रायः प्रष्टव्यामाह ये नरास्ते तव इषे अन्नाय प्रभवंतीतिशेषः ये च ते सुम्नं सुखं त्वदीयं सधन्यं धनयुक्तं इयक्षान् गच्छंति इयक्षतिर्गतिकर्मा इतियास्कः । त्वदीयमन्नं सुखं धनं च ये लभन्ते ते के महात्मानइति । किंच ते तवासुर्याय असुरसंसंबंधिने तेषां वधनिमित्ताय वाजाय बलाय के हिन्विरे प्रेरयन्ति सोमादिहविः के वा स्वासु अप्सु स्वापेक्षितेषूदकेषु उर्वरासु सर्वसस्याढ्यासु भूमिषु पौंस्ये पुंस्त्वे चैतेषु निमित्तेषु हविः प्रेरयंतीत्यनुवर्तते । उक्तविधामहांतो दुर्लभाइतिभावः ॥ ३ ॥

भुवस्त्वमित्येषा चतुर्थी दर्शपूर्णमासयोर्माहेन्द्रस्य हविषोयाज्या । सूत्रितंच—महाँइन्द्रोयओजसा भुवस्त्वमिन्द्रब्रह्मणामहानिति । देवसुवां हविःष्विन्द्रस्य ज्येष्ठस्यैषैव याज्या । भुवस्त्वमिंद्रब्रह्मणा महाननमीवासइळयेति ही सूत्रितं । एषैव भूनाम्न्येकाहे निष्केवल्ये सूक्तमुखीया । सूत्रितंच—शस्यमुक्तं बृहस्पतिसवेन त्वंभुवःप्रतिमानंपृथिव्या भुवस्त्वमिन्द्रब्रह्मणामहानिति ।

अस्याः पाठस्तु—

भुवस्त्वमिन्द्रब्रह्मणामहान्भुवोविश्वेषुसवनेषुयज्ञियः ।
भुवोनॄंश्च्यौत्नोविश्वस्मिन्भरेज्येष्ठश्चमन्त्रोविश्वचर्षणे ॥ ४ ॥

भुवः । त्वम् । इन्द्र । ब्रह्मणा । महान् । भुवः । विश्वेषु । सवनेषु । यज्ञियः । भुवः । नॄन् । च्यौत्नः । विश्वस्मिन् । भरे । ज्येष्ठः । च । मन्त्रः । विश्वऽचर्षणे ॥ ४ ॥

हे इन्द्र त्वं ब्रह्मणास्मत्कृतेन परिवृढेन स्तोत्रेण महान् भुवः अभवः । भवतेर्लेटि भूसुवोस्तिङीति गुणप्रतिषेधः उवङादेशः । तथा विश्वेषु सर्वेषु सवनेषु यज्ञियोयष्टव्योभुवः अभवः तथा विश्वस्मिन् सर्वस्मिन् भरे संग्रामे नॄन् नेतॄणां शत्रूणां च्यौत्नः च्यावयिता भुवः हे विश्वचर्षणे सर्वस्य द्रष्टरिन्द्र मन्त्रोमन्त्रयितव्यस्त्वं ज्येष्ठः अभवः सर्वेषां मध्ये ॥ ४ ॥

अथ पंचमी—

अवानुकंज्यायान्यज्ञवनसोमहींतओमात्रांकृष्टयोविदुः ।
असोनुकमजरोवर्धाश्चविश्वेदेतासवनातूतुमाकृषे ॥ ५ ॥

अव । नु । कम् । ज्यायान् । यज्ञऽवनसः । महीम् । ते । ओमात्राम् । कृष्टयः । विदुः । असः । नु । कम् । अजरः । वर्धाः । च । विश्वा । इत् । एता । सवना । तूतुमा । कृषे ॥ ५ ॥

हे इन्द्र ज्यायान् प्रशस्यतरस्त्वं यज्ञवनसः संभक्तयज्ञान् स्तोतॄन् नु क्षिप्रं अव रक्ष। अध्येतारो नु कमिति पदद्वयं कुर्वन्ति तथापि हिकं नुकमित्यादीनि नवोत्तराणि पदानीत्युक्तवान् यास्काचार्यः। अतः केवलानां हि नु सु इत्येवमादीनां यावानर्थः सएव विशिष्टानामपि। तैत्तिरीयाअप्येकमेवपदंकुर्वन्ति। अवेत्युक्तं इन्द्रस्यावनप्रसिद्धिंदर्शयति हे इन्द्र ते तव ओमात्रां रक्षणं महीं महत् विदुः कृष्टयोमनुष्याः ऋषयः। अमगत्यादिषु औणादिकःअत्रन् प्रत्ययः छांदसऊमादेशः। किंच त्वं अजरोजरारहितःअसः भव नुकं क्षिप्रं वर्धाश्च वर्धस्व च हविरादिना। किंच विश्वेत् सर्वाण्यपि एता एतानि सवना सवनानि तूतुमा तूर्णानि कृषे करोषि कृषेश्छांदसेलिटि छंदसिवेति वचनाद्विर्वचनाभावः॥ ५॥

अथ षष्ठी—

एताविश्वासवनातूतुमाकृषेस्वयंसूनोसहसोयानिदधिषे।
वरायतेपात्रंधर्मणेतनायज्ञोमन्त्रोब्रह्मोद्यतंवचः॥ ६॥

एता। विश्वा। सवना। तूतुमा। कृषे। स्वयम्। सूनो इति। सहसः। यानि। दधिषे। वराय। ते। पात्रम्। धर्मणे। तना। यज्ञः। मन्त्रः। ब्रह्म। उत्ऽयतम्। वचः॥ ६॥

हे इन्द्रएता एतानि विश्वा सर्वाणि सवना सवनानि तूतुमा तूर्णानि कृषे करोषि एतानीत्युक्तं कानीति तत्राह हे सहसः बलस्य सूनो पुत्र बलवन्नित्यर्थः स्वयं यानि सवनानि दधिषे धारयसि हे इन्द्र वराय शत्रूणां वारणाय ते तव स्वभूतं पात्रं रक्षणं भवत्वस्माकं। किंच धर्मणे धारणाय तना धनं च भवत्विति शेषः। किंच तुभ्यं यज्ञोमंत्रः इज्यतेनेनेति यज्ञकरणसाधनभूतोमंत्रः यजुरित्यर्थः ब्रह्मपरिवृढं शस्त्रमित्यर्थः तदुभयात्मकं वचउद्यतं भवतीति शेषः॥ ६॥

अथ सप्तमी—

येतेविप्रब्रह्मकृतःसुतेसचावसूनांचवसुनश्चदावने।
प्रतेसुम्नस्यमनसापथाभुवन्मदेसुतस्यसोम्यस्यान्धसः॥ ७॥ १॥

ये । ते । विप्र । ब्रह्मऽकृतः । सुते । सचा । वसूनाम् । च ।
वसुनः । च । दावने । प्र । ते । सुम्नस्य । मनसा । पथा । भुवन् ।
मदे । सुतस्य । सोम्यस्य । अन्धसः ॥ ७ ॥ ९ ॥

हे विप्र मेधाविन्निन्द्र ते तुभ्यं ये ब्रह्मकृतः स्तोत्रकर्तारोहविष्कर्तारोवास्तोतारः सचा संघीभूताः सुतेषु सोमेषु अभिषुतेषु वसूनां धनानांवसुनश्चैकस्य निवासयोग्यस्य धनस्य च दावने दानाय परिचरंतीतिशेषः अत्र वसूनामिति बहुवचनेनैहिकभोगसाधनधनान्यभिप्रेतानि एकवचनान्तेन च निवासयोग्यं स्वर्गाख्यंधनमभिप्रेतमित्यवगंतव्यं । ते अनुष्ठातारः सुम्नस्य सुखस्य लाभाय मनसा पथा मनोमार्गेण स्तोत्रेण वर्त्मनेत्यर्थः प्रभुवन् भवन्तु उक्तवसुदानाय योग्याभवन्त्वित्यर्थः । कदेत्युच्यते सुतस्याभिषुतस्य सोमस्य सोमसंबन्धिनोन्धसोन्नस्य मदे सति ॥ ७ ॥

॥ इत्यष्टमस्य प्रथमे नवमोवर्गः ॥ ९ ॥

महत्तदिति नवर्चं नवमं सूक्तं वज्रभूतेन वषट्कारेण देवानां हविर्वहनेन च हतेषु भ्रातृषु कनिष्ठः सौचीकोनामाग्निर्वषट्कारहविर्वहनाभ्यां भीतोदेवेभ्योनिर्गत्यापः प्राविशत् सच मत्स्यैः प्रदर्शितः सन् अन्वेष्टुमागतैर्देवैः सहेदमादिसूक्तत्रयेण संवादं कृतवान् अस्य सूक्तस्य द्वितीयादियुजश्चतस्रः ।विश्वेदेवाःशास्तनेतिषड्ऋचं उत्तरसूक्तं चेति दशर्चोग्निवाक्यं । अयुजःप्रथमाद्याः पंचर्चो यमैच्छाममनसेत्येकादशर्चमुत्तरसूक्तं च देवानां वाक्यं । तत्र तदद्यवाचःप्रथमंमसीयेति द्वृचस्त्वग्नेर्वाक्यं अतोग्निवाक्येषु देवादेवता अग्निर्ऋषिः देवोक्तेष्वग्निर्देवता देवाऋषयः अनादेशपरिभाषयेदमुत्तरं चद्वे त्रैष्टुभे विशेषानभिधानात् तथाचानुक्रान्तं—वषट्कारेण वृक्णेषु भ्रातृषु सौचीकोग्निरपः प्रविश्य देवैः समवददुत्तरैस्त्रिभिर्महत्तंनवात्रयुजोग्निवाक्यं विश्वइत्युत्तरं च षट्कमयुजोदेवानां यमैच्छामेत्युत्तरं चैकादशकंतदद्येति तु द्वृचोग्नेरिति । गतोविनियोगः । सूक्तत्रयोक्तार्थे तैत्तिरीयं ब्राह्मणं—अग्नेस्त्रयोज्यायाःसोभ्रातरआसन् ।तेदेवेभ्योहव्यंवहंतःप्रामीयंन्त । सोग्निरबिभेदित्थंवावस्याआर्तिमारिष्यतीति । सनिलायत । सोपःप्राविशत् । तंदेवाःप्रैषमैच्छन्नित्यादि । तत्राद्ययादेवाअग्निमाहुः ।

---

१ तै॰ सं॰ २. ६. ६ ।

तत्र प्रथमा—

महत्तदुल्बंस्थविरंतदासीद्येनाविष्टितःप्रविवेशिथापः ।
विश्वाअपश्यद्बहुधातेअग्नेजातवेदस्तन्वोदेवएकः ॥ १ ॥

महत् । तत् । उल्बम् । स्थविरम् । तत् । आसीत् । येन ।
आऽविष्टितः । प्रऽविवेशिथ । अपः । विश्वाः । अपश्यत् ।
बहुधा । ते । अग्ने । जातऽवेदः । तन्वः । देवः । एकः ॥ १ ॥

तदुल्बं वक्ष्यमाणं तत्प्रावरणं महत् स्थविरं अत्यन्तं स्थूलं च तत् तदासीत् येनोल्बेनाविष्टितः आवेष्टितः सन् हे अग्ने प्रविवेशिथापः उदकानि प्रविष्टवानसि हे अग्ने जातवेदः जातप्रज्ञ ते विश्वाः सर्वास्तन्वः तनूः सर्वाण्यंगानि बहुधा बहुप्रकारमेकोदेवोऽपश्यत् दृष्टवान् ॥ १ ॥

अथ द्वितीया—

कोमाददर्शकतमःसदेवोयोमेतन्वोबहुधापर्यपश्यत् ।
क्वाहमित्रावरुणाक्षियन्त्यग्नेर्विश्वाःसमिधोदेवयानीः ॥ २ ॥

कः । मा । ददर्श । कतमः । सः । देवः । यः । मे । तन्वः ।
बहुधा । परिऽअपश्यत् । क्व । अह । मित्रावरुणा । क्षियन्ति ।
अग्नेः । विश्वाः । सम्ऽइधः । देवऽयानीः ॥ २ ॥

इदमग्नेर्वाक्यं एकोदेवोपश्यत् इत्युक्ते तत्पृच्छति कोमा मां ददर्श दृष्टवान् सदेवः कतमः योमे मम तन्वस्तनूर्बहुधा बहुप्रकारं स्थिताः पर्यपश्यत् परिदृष्टवान् हे मित्रावरुणा मित्रावरुणौ अग्नेर्मम विश्वाः सर्वाः समिधोदीप्ताः देवयानीः देवयानसाधनभूतास्तन्वः दृष्टाइत्युक्तं यदि दृष्टाश्चेत्तर्हि क्व क्षियंति क्व निवसंतीत्येवं देवानां पुरतोवर्तमानौ मित्रावरुणावाहाग्निः ॥ २ ॥

अथ तृतीया—

ऐच्छामत्वाबहुधाजातवेदःप्रविष्टमग्नेअप्स्वोषधीषु ।
तंत्वायमोअचिकेच्चित्रभानोदशान्तरुष्यादतिरोचमानम् ॥ ३ ॥

ऐच्छाम । त्वा । बहुधा । जातऽवेदः । प्रऽविष्टम् । अग्ने ।
अप्ऽसु । ओषधीषु । तम् । त्वा । यमः । अचिकेत् । चित्रऽभानो
इति चित्रऽभानो । दशऽअन्तरुष्यात् । अतिऽरोचमानम् ॥ ३ ॥

एवमग्निनापृष्टादेवाअग्निं ब्रुवंति हे जातवेदः जातप्रज्ञाग्ने त्वा त्वां अन्वैच्छामः कीदृशं त्वां अप्सूदकेषु ओषधीषु च बहुधा प्रविष्टं अन्विष्य च तं तादृशं प्रविष्टं त्वा त्वां यमोदेवः अचिकेत् ज्ञातवान् । हे चित्रभानो वननीयरश्मे कुत्र स्थितं ज्ञातवानिति तदुच्यते दशान्तरुष्यात् अंतरुष्यं गूढमावासस्थानं तच्च दशसंख्योपेतं तादृशात्स्थानाद्तिरोचमानं अतीत्य प्रकाशमानं अग्नेर्हि गूढानि दशस्थानानि भवन्ति पृथिव्यादयस्त्रयोलोकाः अग्निवाय्वादित्यास्त्रयोदेवाः आपओषधयोवनस्पतयः प्राणिशरीरमिति दशस्थानानि ॥ ३॥

अथ चतुर्थी—

होत्रादहंवरुणबिभ्यदायन्नेदेवमायुनजन्नत्रदेवाः ।
तस्यमेतन्वोबहुधानिविष्टाएतमर्थंनचिकेताहमग्निः ॥ ४ ॥

होत्रात् । अहम् । वरुण । बिभ्यत् । आयम् । न । इत् । एव । मा ।
युनजन् । अत्र । देवाः । तस्य । मे । तन्वः । बहुधा । निऽविष्टाः ।
एतम् । अर्थम् । न । चिकेत । अहम् । अग्निः ॥ ४ ॥

अनया देवामां ज्ञातवंतइति निश्चित्य गूहनस्य प्रयोजनमाह हे वरुण देव होत्रात् होतव्यात् हविर्वहनादित्यर्थः तस्माद्बिभ्यदहमायं आगतवानस्मि अतोमा मां एवएवं पूर्वप्रकारेणात्रास्मिन् हविर्वहनप्रयोजनेनेत् युनजन् नैव योजयन्तु देवाः यस्य तादृशस्य बिभ्यतोमे तन्वोबहुधा निविष्टा अप्सु एतमर्थं एतद्धविर्वहनकार्यं अग्निरहं न चिकेत न बुध्ये नांगीकरोमि ॥ ४ ॥

अथ पंचमी—

एहिमनुर्देवयुर्यज्ञकामोरङ्कृत्यातमसिक्षेष्यग्ने ।
सुगान्पथःकृणुहिदेवयानान्वहहव्यानिसुमनस्यमानः ॥ ५ ॥१०॥

आ । इहि । मनुः । देवऽयुः । यज्ञऽकामः । अरम्ऽकृत्य । तमसि ।
क्षेषि । अग्ने । सुऽगान् । पथः । कृणुहि । देवऽयानान् ।
वह । हव्यानि । सुऽमनस्यमानः ॥ ५ ॥ १० ॥

अग्निनैवमुक्तादेवाः पुनरग्निमाह्वयंति हे अग्ने एहि आगच्छ मनुर्मनुष्योयष्टा मननीयो-मनूराजा वा देवयुर्देवान्यष्टुमिच्छन् यज्ञकामश्च भवति अतएहि किंकुर्वन्यज्ञकामोभवतीति चेत् उच्यते—अरंकृत्य केवलं तेजःपुंजमेवालंकुर्वन् यद्वेदमुत्तरत्र संबध्यते त्वं तु अलंकृत्य आ-त्मानमलंकुर्वन् तमसि अन्यैर्ज्ञातुमशक्येन्धकारे क्षेषि निवससि हे अग्ने आगत्य च देवया-नान् देवान्प्रति यैर्मनुष्याआगच्छंति तान्पथोमार्गान् सुगान् कृणुहि कृणु । कृविर्हिंसाकरण-योश्च धिन्विकृण्व्योरचेत्युप्रत्ययः । समित्यनोयज्ञनिष्पत्तेर्देवयानाः सुपथाभवन्ति वह च ह-व्यान्यस्मदीयानि सुमनस्यमानः सौमनस्यमाचरंस्त्वं ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे दशमोवर्गः ॥ १० ॥

अथ षष्ठी--

**अग्नेःपूर्वेभ्रातरोअर्थमेतंरथीवाध्वानमन्वावरीवुः ।**
**तस्माद्भियावरुणदूरमायंगौरोनक्षेप्नोरविजेज्यायाः ॥ ६ ॥**

अग्नेः । पूर्वे । भ्रातरः । अर्थम् । एतम् । रथीऽइव । अध्वानम् ।
अनु । आ । अवरीवुरिति । तस्मात् । भिया । वरुण । दूरम् ।
आयम् । गौरः । न । क्षेप्नोः । अविजे । ज्यायाः ॥ ६ ॥

अनयाग्निः स्वपलायननिमित्तमाह हे देवाः अग्नेर्मम पूर्वे पूर्वमुत्पन्नाभ्रातरोभूपतिर्भुवनपतिर्भूता नांपतिरिति त्रयोऽग्रजाः एतमर्थं हविर्वहनाख्यं अर्थं अन्वावरीवुः अनुक्रमेण वृतवंतः तत्र वृणोतेर्यङ्लुगंतात् लुङि चेुश्छांदसोलुक् बहुलंछन्दसीत्युत्वं । आवरणे दृष्टांतः—रथीवाध्वानं अध्वानं यथा रथी वृणोति तद्वत् ते भ्रातरः तथा कुर्वंतोमृताः तस्मान्मरणात् भिया हे वरुण दूरं देशमायं क्षेप्नोः इषुक्षेप्तुर्धनुषोज्यायाः सकाशात् गौरोन गौरमृगइव सयथा बिभेति चलति वा तद्वदविजे अकंपे ओविजीभयचलनयोः अनुदात्तेत् तौदादिकः तस्य लङ्युत्तमेरूपं ॥ ६ ॥

अथ सप्तमी—

कुर्मस्तआयुरजरंयदग्नेयथायुक्तोजातवेदोनरिष्याः ।
अथावहासिसुमनस्यमानोभागंदेवेभ्योहविषःसुजात ॥ ७ ॥

कुर्मः । ते । आयुः । अजरम् । यत् । अग्ने । यथा । युक्तः ।
जातऽवेदः । न । रिष्याः । अथ । वहासि । सुऽमनस्यमानः ।
भागम् । देवेभ्यः । हविषः । सुऽजात ॥ ७ ॥

इदंदेवानां वाक्यं हे अग्ने यदायुरायुष्यं अजरं जरारहितमस्ति तत्ते कुर्मः युञ्मः तेनायुषा संयुक्तस्त्वं हे जातवेदो जातप्रज्ञ यथा न रिष्याः नम्रियसे तथा कुर्मः । अथ वहासि वह सुमनस्यमानः सौमनस्यं कुर्वन् वोढव्यंवहन् । तदेवदर्शयति हविषः यजमानप्रत्तस्य भागं केभ्योदेवेभ्यः हे सुजात शोभनजन्माग्ने ॥ ७ ॥

अथाष्टमी—

प्रयाजान्मेअनुयाजांश्चकेवलानूर्जस्वन्तंहविषोदत्तभागम् ।
घृतंचापांपुरुषंचौषधीनामग्नेश्चदीर्घमायुरस्तुदेवाः ॥ ८ ॥

प्रऽयाजान् । मे । अनुऽयाजान् । च । केवलान् । ऊर्जस्वन्तम् ।
हविषः । दत्त । भागम् । घृतम् । च । अपाम् । पुरुषम् । च ।
ओषधीनाम् । अग्नेः । च । दीर्घम् । आयुः । अस्तु । देवाः ॥ ८ ॥

अनेनाग्निर्हविर्वहनेदातव्यान्युक्तोचानि प्रतिजानाति हे देवाः मे मह्यं प्रयाजान् प्रधानस्य प्रमुखे यष्टव्यानेतन्नामकान् हविर्भागान् तथा अनुयाजान् अनुप्रधानान् पश्चाद्यष्टव्यान् एतन्नामकान् केवलान् असाधारणान् दत्त प्रयच्छत तथा ऊर्जस्वन्तं प्रत्यभिघारणात्सारवन्तं हविषः सर्वस्यापि चरुपुरोडाशादेर्भागं स्विष्टकृदाख्यं भागं दत्त । अथवोर्जस्वन्तं हविषोभागं प्रयाजानुयाजाख्यं । किंच अपां सारभूतं ताभ्यउत्पन्नं वा घृतं आज्यभा-

गादिसाधनं ओषधीनां ओषधीभ्यउत्पन्नं पुरुषं च भागं दत्त। किंच अग्नेर्मम दीर्घमायुश्चास्तु वषट्कारकृतवधभयं माभूदित्यर्थः। अमुमितिहासं प्रस्तुत्य कौषीतकिब्राह्मणं—तस्मादाग्नेयाः प्रयाजाआग्नेयाअनुयाजाआग्नेयमाज्यमाग्नेयःपुरोडाशइति। शरीरदायाहवाअग्नयोभवन्तीति च ब्राह्मणं। पुरुषाहुतिर्यस्यप्रयतमेतीति च ॥ ८ ॥

अथ नवमी—

तवंप्रयाजाअनुयाजाश्चकेवलऊर्जस्वन्तोहविषःसन्तुभागाः।
तवाग्नेयज्ञो३ऽयमस्तुसर्वस्तुभ्यंनमन्तांप्रदिशश्चतस्रः ॥ ९ ॥११॥

तव। प्रऽयाजाः। अनुऽयाजाः। च। केवले। ऊर्जस्वन्तः।
हविषः। सन्तु। भागाः। तव। अग्ने। यज्ञः। अयम्। अस्तु।
सर्वः। तुभ्यम्। नमन्ताम्। प्रऽदिशः। चतस्रः ॥ ९ ॥ ११ ॥

एवमग्निनायाच्यमानादेवाः प्रतिब्रुवते। हे अग्ने तव प्रयाजाअनुयाजाश्च केवले असाधारणाऊर्जस्वंतोबलवन्तोहविषोभागाः सन्तु। हे अग्ने अयं सर्वोयज्ञश्च तवास्तु तथा प्रदिशः प्रकृष्टामुख्याश्चतस्रोदिशस्तुभ्यं नमन्तां अतएहि हविर्वहेति शेषः ॥ ९ ॥

॥ इत्यष्टमस्य प्रथमे एकादशोवर्गः ॥ ११ ॥

विश्वेदेवाः षळृचं दशमं सूक्तं सौचीकस्याग्नेरार्षं वैश्वदेवं। गतः सूक्तविनियोगः। स्रुगादापनात्पूर्वभागे विनियुक्ताविश्वदेवाःशास्तनेत्येष्वा। सूत्रितंच—विश्वेदेवाःशास्तनमायथेहाराधिहोतानिषदायजीयानिति।

सैषा प्रथमा—

विश्वेदेवाःशास्तनमायथेहहोतावृतोमनवैयन्निषद्य।
प्रमेब्रूतभागधेयंयथावोयेनपथाहव्यमावोवहानि ॥ १ ॥

विश्वे। देवाः। शास्तन। मा। यथा। इह। होता। वृतः।
मनवै। यत्। निऽसद्य। प्र। मे। ब्रूत। भागऽधेयम्। यथा।
वः। येन। पथा। हव्यम्। आ। वः। वहानि ॥ १ ॥

एतत्सूक्तं कृत्स्नमाग्नेयं हे विश्वेदेवाः यूयं मा मां शास्तन अनुज्ञां दत्त यथेह यज्ञे होता देवानामाह्वाता सन् वृतोहोतृत्वेन वृतोहं मनवै स्तौमि भवतः । यद्यस्मात् निषद्य स्तौमि तस्मात् शास्तन मे मम भागधेयं प्रब्रूत यथावोयूयं भागं कल्पितवंतः तथा तं भागं प्रब्रूत पथा वोहव्यं आवहानि वहनं करोमि ॥ १ ॥

अथ द्वितीया—

अहंहोतान्यंसीदंयजीयान्विश्वेदेवामरुतोमाजुनन्ति ।
अहरहरश्विनाध्वर्यवंवांब्रह्मासमिद्भवतिसाहुतिर्वाम् ॥ २ ॥

अहम् । होता । नि । असीदम् । यजीयान् । विश्वे । देवाः ।
मरुतः । मा । जुनन्ति । अहःऽअहः । अश्विना । आध्वर्यवम् ।
वाम् । ब्रह्मा । सम्ऽइत् । भवति । सा । आऽहुतिः । वाम् ॥ २ ॥

यजीयान् यष्टृतमोहं होता सन् न्यसीदं निषण्णोस्मि निषदने तं निषण्णं मा मां विश्वे व्याप्तामरुतोदेवाजुनन्ति प्रेरयन्ति हविर्वहनाय । हे अश्विना अश्विनौ वां युवयोराध्वर्यवं अहरहः प्रतिदिनं कर्तव्यमिति शेषः । आध्वर्यवं भवद्भ्यामनुज्ञातव्यमित्यर्थः । ब्रह्मा भवति भवतु कः समित् समिद्धश्चन्द्रमाः चन्द्रमा ब्रह्मा भवतु । किंच सासोम इत्यर्थः सचा समित् समिद्धश्चन्द्रमाः वां युवयोर्होमार्थंवांयुवाभ्यां क्रियमाणायाध्वर्यवकर्मणे आहुतिर्भवति भवत्वित्यर्थः । सोमात्मकोहि चन्द्रमाहूयते । एषवैसोमराजेत्युपक्रम्य तदेवोभयन्तीति हिच्छन्दोगब्राह्मणं । अथवैवंयोजना या आहुतिराध्वर्यवमनुष्ठितवद्भ्यां होतव्या सां वां युवयोर्युवाभ्यां भवति भवतु आध्वर्यवंवामित्यस्यैवविवरणमेतत् ॥ २ ॥

अथ तृतीया—

अयंयोहोताकिरुसयमस्यकमप्यूहेयत्समञ्जन्तिदेवाः ।
अहरहर्जायतेमासिमास्यथादेवादधिरेहव्यवाहम् ॥ ३ ॥

अयम् । यः । होता । किः । ऊँ इति । सः । यमस्य । कम् ।
अपि । ऊहे । यत् । सम्ऽअञ्जन्ति । देवाः । अहःऽअहः । जायते ।
मासिऽमासि । अथ । देवाः । दधिरे । हव्यऽवाहम् ॥ ३ ॥

योयं होता सकिः कोभवति । कीदृशोभवति तस्य कोव्यापारइत्यर्थः तस्योत्तरमुच्यते-यमस्य मृत्तेर्भीतः सन्निति शेषः कमपि हुतं ऊहे वहति यद्वा सर्वमृत्विग्जातं नियमयतीति यमोयजमानः तस्य कमपि हुतमूहे वहति देवान् प्रति यत्समञ्जन्ति यद्धविः प्राप्नुवंति देवाः । किंचाग्निरहरहः प्रतिदिनमग्निहोत्रार्थं जायते प्रादुर्भवति तथा मासिमासि प्रतिमासं जायते पितृयज्ञार्थं एतत्कालद्वयमुपलक्षणं पक्षचतुर्मासषण्मासंवत्सरादीनां । अपरेतु पुनरेवमाहुः अहरहः सूर्यात्मना जायते मासिमासि चन्द्रात्मनेति । अथ तमिममग्निं देवा दधिरे हव्यवाहं हविषां वोढारं एवमग्निः स्वात्मानं स्वयमेवोक्तवान् ॥ ३ ॥

अथ चतुर्थी—

मांदेवादधिरेहव्यवाहमपम्लुक्तंबहुकृच्छ्राचरन्तम् ।
अग्निर्विद्वान्यज्ञंनःकल्पयातिपञ्चयामंत्रिवृतंसप्ततन्तुम् ॥ ४ ॥

माम् । देवाः । दधिरे । हव्यऽवाहम् । अपऽम्लुक्तम् । बहु ।
कृच्छ्रा । चरन्तम् । अग्निः । विद्वान् । यज्ञम् । नः । कल्पयाति ।
पञ्चऽयामम् । त्रिऽवृतम् । सप्तऽतन्तुम् ॥ ४ ॥

मामग्निं देवाहव्यवाहं हविर्वोढारं दधिरे । कृतवंतः कीदृशं मां अपम्लुक्तं अपक्रम्यागतं बहुकृच्छ्रा बहूनि कृच्छ्राणि स्थानानि चरन्तं गच्छन्तं कया मनीषया दधिरे इत्युच्यते अयमग्निर्विद्वान् सर्वं जानन् नोस्माकं यज्ञं कल्पयाति कल्पयति । कीदृशं यज्ञं पंचयामं पंचविधगमनं पांक्तोहियज्ञः त्रिवृतं सवनत्रयभेदेन त्रिप्रकारं सप्ततन्तुं सप्तभिः छंदोमयैः स्तुतिभिर्विस्तृतं ॥ ४ ॥

अथ पंचमी—

आवोयक्ष्यमृतत्वंसुवीरंयथावोदेवावरिवःकराणि ।
आबाह्वोर्वज्रमिन्द्रस्यधेयामथेमाविश्वाःपृतनाजयाति ॥ ५ ॥

आ । वः । यक्षि । अमृतऽत्वम् । सुऽवीरम् । यथा । वः । देवाः । वरिवः । कराणि । आ । बाह्वोः । वज्रम् । इन्द्रस्य । धेयाम् । अथ । इमाः । विश्वाः । पृतनाः । जयाति ॥ ५ ॥

हे देवावोयुष्मानायक्षि आयाचे किं अमृतत्वं अविनाशित्वं सुवीरं सुपुत्रं च हे देवावोयुष्माकं वरिवः परिचर्यां हवीरूपधनं वा यथा कराणि करवाणि तदर्थमित्यर्थः । किंचेन्द्रस्य बाह्वोर्वज्रं आधेयां ग्राहयामीत्यर्थः अग्नेर्होतृत्वाभावे इंद्रस्य सोमाद्यभावाद्दुर्बलत्वेन वज्रधारणं नोपपद्यते अतस्तत्कृत्वा वज्रं ग्राहयामीत्यर्थः । अथैवं सतीमाविश्वाः सर्वाःपृतनाः शत्रुसेनाः जयाति जयति जयतु वा ॥ ५ ॥

अथ षष्ठी—

त्रीणिशतात्रीसहस्राण्यग्निंत्रिंशच्चदेवानवचासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्माआदिद्धोतारंन्यसादयन्त ॥ ६॥१२॥

त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च । देवाः । नव । च । असपर्यन् । औक्षन् । घृतैः । अस्तृणन् । बर्हिः । अस्मै । आत् । इत् । होतारम् । नि । असादयन्त ॥ ६ ॥ १२ ॥

त्रीणि शता शतानि त्री सहस्रा त्रीणि सहस्राणि त्रिंशच्च नव च एतत्संख्याकादेवाअग्निं मां सपर्यन् पर्यचरन् । परिचारप्रकारउच्यते—घृतैः क्षरद्भिराज्यैः औक्षन् सिक्तवंतः अस्मै अग्नये मह्यं च बर्हिरस्तृणन् आस्तृतवन्तः । आदित् आस्तरणानन्तरं होतारं आह्वातारं न्यसादयन्त नियमेनासादितवन्तः ॥ ६ ॥

॥ इत्यष्टमस्य प्रथमे द्वादशोवर्गः ॥ १२ ॥

यमैच्छामेत्येकादशर्चमेकादशं सूक्तं देवानां वाक्यत्वाद्देवाऋषयः तदद्येति द्वृचस्य सौचीकोग्निर्ऋषिः तन्तुंतन्वन्नित्याद्याः अष्टमीवर्जिताजगत्यः अष्टमीशिष्टाश्च त्रिष्टुभः । तथाचानुक्रान्तं—तंतुमाद्याजगत्योष्टमीवर्जमिति । शिष्टमुक्तं । गतःसूक्तविनियोगः ।

तत्र प्रथमा—

यमैच्छा॑म॒मन॑सा॒सो॒३॑ऽयमागा॑द्य॒ज्ञस्य॑वि॒द्वान्परु॑षश्चिकि॒त्वान् ।
सनो॑यक्षद्दे॒वता॑ता॒यजी॑या॒न्निहि॒षत्स॒दन्त॑रः॒पूर्वो॑अ॒स्मत् ॥ १ ॥

यम् । ऐच्छा॑म । मन॑सा । सः । अ॒यम् । आ । अ॒गा॒त् । य॒ज्ञस्य॑ ।
वि॒द्वान् । परु॑षः । चि॒कि॒त्वान् । सः । न॒ः । य॒क्ष॒त् । दे॒वऽता॑ता ।
यजी॑यान् । नि । हि । सत्स॑त् । अन्त॑रः । पूर्वः॑ । अ॒स्मत् ॥ १ ॥

यमग्निं ऐच्छाम अन्विष्टवन्तोवयं मनसा हविः प्रापणबुद्ध्या मह्यं हविः प्रापयत्विति बुद्ध्येत्यर्थः सोयमग्निरागात् आजगाम कीदृशोग्निः यज्ञस्य यज्ञं विद्वान् जानन् तथा परुषः परूंषि सन्धातव्यान्यंगानि चिकित्वान् अभिगच्छन् सोग्निर्यजीयान् यष्टृतमः नोस्मान्देवताता देवतातौ यज्ञे यक्षत् यजतु निषत्सद्धि न्यसीदत् खलु वेद्यामितिशेषः । कीदृशः सन् अन्तरः ऋत्विजां यष्टव्यानां देवानां च मध्ये संचरन् अस्मत्पूर्वः अस्मत्तोदेवेभ्यः पूर्वभावी सन् अग्निं समिध्य पश्चाद्धि देवाआहूयंते ॥ १ ॥

दर्शपूर्णमासयोः पुरा अराधीत्येषा जप्या । सूत्रमुदाहृतं ।

सैषा द्वितीया—

अरा॑धि॒होता॑नि॒षदा॒यजी॑यान॒भिप्रया॑ंसि॒सुधि॑ता॒नि॒हिख्यत् ।
यजा॑महै॒य॒ज्ञिया॒न्हन्त॑दे॒वाँईळा॑महा॒ईड्याँ॒आज्ये॑न ॥ २ ॥

अरा॑धि । होता॑ । नि॒ऽसदा॑ । यजी॑यान् । अ॒भि । प्रया॑ंसि ।
सु॒ऽधि॑तानि । हि । ख्यत् । यजा॑महै । य॒ज्ञिया॑न् । हन्त॑ ।
दे॒वान् । ईळा॑महै । ईड्या॑न् । आज्ये॑न ॥ २ ॥

अयमग्निः होता होमनिष्पादकोयजीयान् यष्टृतमश्च सन् निषदा वेद्यां निषदनेन अराधि सिद्धोभूत् आहुतियोग्योभूदित्यर्थः तथाभूतोयं सुधितानि सुष्ठुनिहितानि प्रयांसि चरुपुरोडाशाद्यन्नानि अभिहिख्यत् अभिचष्टे सर्वतः पश्यति हीतिपूरणः कया बुद्ध्येति यज्ञियान् यष्टव्यान् आहुतिभाजोदेवान् हन्त शीघ्रं आज्येन यजामहै इति तथा ईड्यांश्च स्तुतिभाजोदेवान् स्तुत्याईळामहाइति बुद्ध्येतिशेषः ॥ २ ॥

यस्मिन्यजमाने जीवति सति मृतशब्दोजायते तस्य सुरभिमतीष्टिः कर्तव्या साध्वीमकरित्येषा तत्रयाज्या । सूत्रितंच—अग्निर्होतान्यसीदद्यजीयान् साध्वीमकर्देववीतिंनोअद्येति ।

सैषा तृतीया—

साध्वीमंकर्देववीतिंनोअद्ययज्ञस्यंजिह्वामंविदामगुह्याम् ।
सआयुरागात्सुरभिर्वसानोभद्रामंकर्देवहूतिंनोअद्य ॥ ३ ॥

साध्वीम् । अकः । देवऽवीतिम् । नः । अद्य । यज्ञस्य । जिह्वाम् । अविदाम । गुह्याम् । सः । आयुः । आ । अगात् । सुरभिः । वसानः । भद्राम् । अकः । देवऽहूतिम् । नः । अद्य ॥ ३ ॥

अयमग्निरद्य नोस्माकं देववीतिं देवानामागमनवन्तं देवानां हविर्भक्षणोपेतं वा यज्ञं साध्वीमकः साधुमकरोत् वयं च यज्ञस्य गुह्यां गूढतरां जिह्वां अविदाम लब्धवन्तः अग्निर्हि यज्ञस्य जिह्वा तेन देवानां पानात् जिह्वात्वोपचारः । सतादृशोग्निः सुरभिः सुगन्धः आयुर्देवैर्दत्तमायुष्यं वसानआच्छादयन् आगादागच्छति । आगत्य च नोस्मदर्थं देवहूतिं देवानामाह्वानवन्तं यज्ञं भद्रामकः कल्याणं कृतवान् अद्येदानीं ॥ ३ ॥

दर्शपूर्णमासयोः सामिधेन्यर्थं प्रेषितेन होत्रा तदद्यवाचइत्येषा जप्या स्रुगादापनात्पूर्वमपि जप्या । सूत्रितंच—तदद्यवाचःप्रथमंमसीयेति समाप्येति ।

सैषा चतुर्थी—

तदद्यवाचःप्रथमंमसीययेनासुराँअभिदेवाअसाम ।
ऊर्जादउतयंज्ञियासःपञ्चंजनाममहोत्रंजुषध्वम् ॥ ४ ॥

तत् । अद्य । वाचः । प्रथमम् । मसीय । येन॑ । असु॑रान् ।
अभि । दे॒वाः । असा॑म । ऊर्जऽअदः । उत । यज्ञियासः ।
पञ्च॑ । जनाः । मम॑ । होत्रम् । जुषध्वम् ॥ ४ ॥

इदमुत्तरं चाग्नेर्वाक्यमित्युक्तं अद्येदानीं प्रथमं मुख्यनामैतत् वाचां मुख्यं तद्वाचोवचोवचनं मसीय उच्चारयामि येन वचसा अहं देवाश्च वयं असुरानभ्यसाम अभिभवेम किं तत् प्रथमं वचनमित्युच्यते हे ऊर्जादः अन्नादः उतापिच यज्ञियासः यज्ञार्हाः हे पंचजनाः देवमनुष्यादयः यूयं मम होत्रं हवमाह्वानं जुषध्वं सेवध्वमिति एवंबहूच्यमाने अग्निमनूद्यन्ति सर्वेदेवाइत्यभिप्रायः । अत्र तदद्यवाचःपरमंमसीयेत्यादिकं निरुक्तं[1] द्रष्टव्यं ॥ ४ ॥

अथ पंचमी—

पञ्चजनाममहोत्रंजुषन्तांगोजाताउतयेयज्ञियासः ।
पृथिवीनःपार्थिवात्पात्वंहसोन्तरिक्षंदिव्यात्पात्वस्मान् ॥५॥१३॥

पञ्च॑ । जनाः । मम॑ । होत्रम् । जुषन्ताम् । गोऽजा॑ताः । उत ।
ये । यज्ञियासः । पृथिवी । नः । पार्थिवात् । पातु । अंहसः ।
अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥ ५॥ १३ ॥

पंचजनादेवादयः मम होत्रं हवमाह्वानं जुषन्तां सेवन्तां । अपिच गोजाताः भूम्यामुत्पन्नाः यद्वा गोशब्देन तज्जं पयआदिकमुच्यते हविरर्थं प्रादुर्भूताइत्यर्थः । तादृशाये सन्ति उतापिच येयज्ञियासोयज्ञार्हादेवाः सन्ति ते मम होत्रं जुषन्तां । किंच पृथिवी देवता पार्थिवात् पृथिवीसंबद्धात् नोस्मान् अंहसः पापात्पातु रक्षतु । तथा अन्तरिक्षं अन्तरिक्षदेवता दिव्यात् आन्तरिक्ष्यात् अंहसः पापात् सकाशात् अस्मान्पातु ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे त्रयोदशोवर्गः ॥ १३ ॥

गार्हपत्यादारभ्य आहवनीयाद्वेदिं वेदतृणैरास्तृणाति तन्तुमित्यनया । सूत्रितंच—अविधून्वन्सन्ततंस्तृणन्तस्त्र्येन गार्हपत्यादाहवनीयमेति तन्तुंतन्वन्नजसोभानुमन्विहीति । अग्नि-

[1] नि० ३. ८ ।

होत्रहोमेप्यनया उदकधारास्रावणीया । सूत्रितंच—गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्रजसोभानुमन्विहीति । अग्न्यन्तराले श्वातिक्रमणे अनया गार्हपत्याहवनीययोर्मध्यं उदकेन भस्मना च पूरयेत् । सूत्रितंच—गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्याच सन्तनुयादिति । आग्निमारुतेप्येषा धाय्या । सूत्रितंच—तन्तुंतन्वन्रजसोभानुमन्विह्येवानइन्द्रोमघवाविरप्शीति ।

अथ षष्ठी—

तन्तुंतन्वन्रजंसोभानुमन्विंहिज्योतिंष्मतःपथोरंक्षधियाकृतान् ।
अनुल्बणंवंयतजोगुंवामपोमनुंर्भवजनयादैव्यंजनंम् ॥ ६ ॥

तन्तुंम् । तन्वन् । रजंसः । भानुम् । अनुं । इहि । ज्योतिंष्मतः । पथः । रक्ष । धिया । कृतान् । अनुल्बणम् । वयत । जोगुंवाम् । अपंः । मनुंः । भव । जनयं । दैव्यंम् । जनंम् ॥ ६ ॥

हे अग्ने तन्तुं यज्ञं तन्वन् विस्तारयन् रजसः रञ्जनात्मकस्य लोकस्य भानुं भासकमादित्यं अन्विहि अनुगच्छ रश्मिद्वारा सूर्यमंडलं प्रविशेत्यर्थः किंच ज्योतिष्मतः प्रकाशवतोयज्ञस्य पथोगमनमार्गान् अथवा ज्योतिष्मतोदीप्तिमतः स्वर्गस्य पथोमार्गान् देवयानान् रक्ष पालय । कीदृशान् मार्गान् धिया कर्मणा कृतान् संपादितान् । किंच सोग्निः जोगुवां स्तोतॄणां अपः कर्मनामैतत् क्रियया व्याप्यं कर्म अनुल्बणं अनतिरिक्तं वयत करोतु । देवयज्ञउल्वणं क्रियते तस्यैवैषा शान्तिरिति हिब्राह्मणं । सत्वं मनुर्भव मन्तव्योभव स्तुत्योभवेत्यर्थः किंच दैव्यं जनं देवसंघं जनय उत्पादय यज्ञाभिगमनवन्तं कुर्वित्यर्थः ॥ ६ ॥

अथ सप्तमी—

अक्षानहोंनह्यतनोतसोंम्याइष्कृंणुध्वंरशनाओतपिंशत ।
अष्टावंन्धुरंवहताभितोरथंयेनंदेवासोअनंयन्नभिप्रियम् ॥ ७ ॥

---

१ तै० सं० ७. ४. ५. ।

अक्षऽनहः । नह्यतन । उत । सोम्याः । इष्कृणुध्वम् । रशनाः ।
आ । उत । पिंशत । अष्टाऽवंन्धुरम् । वहत । अभितः । रथम् ।
येन । देवासः । अनयन् । अभि । प्रियम् ॥ ७ ॥

अत्र यज्ञे जिगमिषवोदेवाः परस्परं ब्रुवते हे सोम्याः सोमार्हादेवाः यूयं अक्षानहः अक्षेषु नह्यान् बन्धनीयान् अश्वान् नह्यतन नह्यत बध्नीत रथे । उतापिच रशनाः अश्वबन्धनप्रग्रहान् इष्कृणुध्वं निष्कुरुत सम्यक् संस्कुरुत नकारलोपश्छान्दसः । उतापिच आपिंशत पिशअवयवे अश्वानलंकुरुतेत्यर्थः । अष्टावन्धुरं वन्धुरं सारथिनिवासस्थानं अष्टसंख्याकवंधुरोपेतं रथं सूर्यसंबन्धिनं अभितः सर्वतोवहत सूर्यरथेन साकं युष्मदीयान् रथान् यज्ञं प्रतिगमयतेत्यर्थः येन देवासोदेवाः प्रियं आत्मानं अनयन् अभिगमयन्ति तं रथमभितोवहतेति संबन्धः । यद्वा तं यज्ञं प्रति वहतेति योज्यं ॥ ७ ॥

वैवाहिके प्रयाणे यदि नावा तार्या नदी स्यात् तदानीमश्मन्वतीत्यर्धर्चेन वधूं नावमारोहयेत् उत्तरेणार्धर्चेन नदीमुत्क्रामयेत् । सूत्रितंच—अश्मन्वतीरीयतेसंरभध्वमित्यर्धर्चेन नावमारोहयेदुत्तरेणोत्क्रमयेदिति ।

सैषा अष्टमी—

अश्मन्वतीरीयतेसंरभध्वमुत्तिष्ठतप्रतरतासखायः ।
अत्राजहामयेअसन्नशेवाःशिवान्वयमुत्तरेमाभिवाजान् ॥ ८ ॥

अश्मन्ऽवती । रीयते । सम् । रभध्वम् । उत् । तिष्ठत । प्र ।
तरत । सखायः । अत्र । जहाम । ये । असन् । अशेवाः ।
शिवान् । वयम् । उत् । तरेम । अभि । वाजान् ॥ ८ ॥

अनयापि देवायज्ञजिगमिषवः परस्परं ब्रुवते अश्मन्वती नाम नदी रीयते गच्छति री गतिरेषणयोः तां यज्ञगमनायोत्तरीतुं उत्तिष्ठत उद्गच्छत तथाकृत्वा प्रतरत तां नदीमुल्लंघयत हे सखायोयजमानस्य सखिभूताइतिदेवानां संबोधनं अत्र अस्यां नद्यां जहाम परित्यजाम का-

निति उच्यते ये अशेवाः शेवमिति सुखनाम ये असुखभूवाः असन्नभूवन् अस्मानाश्रित्यवर्तन्ते तान्जहाम । तथाकृत्वा शिवान् सुखकरान् वाजान् अन्नानि हवींषि अभि प्रातुमुत्तरेम उत्तीर्णाभवेम वयं ॥ ८ ॥

अथ नवमी–

त्वष्टा॑माया॒वे॑द॒पसा॑म॒पस्त॑मो॒बि॒भ्र॒त्पात्रा॑दे॒व॒पाना॑नि॒शंत॑मा ।
शिशी॑ते॒नू॒नं॒पर॒शुं॒स्वा॒य॒सं॒ये॒नं॒वृ॒श्चादे॒त॒शो॒ब्रह्म॒ण॒स्पति॑ः ॥ ९ ॥

त्वष्टा॑ । मा॒याः । वे॒त् । अ॒प॒साम् । अ॒पः॒ऽतमः । बिभ्र॑त् । पात्रा॑ ।
दे॒व॒ऽपाना॑नि । शम्ऽत॑मा । शिशी॑ते । नू॒नम् । प॒र॒शुम् । सु॒ऽआ॒य॒सम् ।
येन॑ । वृ॒श्चात् । ए॒त॑शः । ब्रह्म॑णः । पति॑ः ॥ ९ ॥

अयं त्वष्टा देवशिल्पी मायाः कर्मनामैतत् कर्माणि पात्रनिर्माणविषयाणि वेत् वेत्ति जानाति सच त्वष्टा अपसां शोभनकर्मवतां मध्ये अपस्तमः अतिशयेन शोभनकर्मा देवपानानि देवाः पिबन्ति येषु तानि पात्रा सोमपात्राणि बिभ्रत् धारयन् वर्तते इति शेषः सत्वष्टा नूनमिदानीं अग्नौ हविर्वहनायांगीकृते सति स्वायसं शोभनायःसारभूतं परशुं शिशीते तीक्ष्णयति त्वष्टा पात्रसंपादनार्थं येन परशुना एतशः एतवर्णः ब्रह्मणस्पतिः ब्रह्मणोमन्त्रस्य पात्रादिसंपादनरूपस्य कर्मणः पतिः स्वामी वृश्चात् वृश्चति पात्राणि ॥ ९ ॥

अथ दशमी–

स॒तोनू॒नं॒क॒व॒यः॒सं॒शि॑शीत॒वाशी॑भि॒र्याभि॑र॒मृता॑य॒तक्ष॑थ ।
वि॒द्वांसः॒प॒दागुह्या॑नि॒कर्त॑न॒येन॑दे॒वासो॑अ॒मृ॒त॒त्वमा॑न॒शुः ॥ १० ॥

स॒तः । नू॒नम् । क॒व॒यः । सम् । शि॒शी॒त॒ । वाशी॑भिः । याभि॑ः ।
अ॒मृता॑य । तक्ष॑थ । वि॒द्वांसः॑ । प॒दा । गुह्या॑नि । क॒र्त॒न॒ । येन॑ ।
दे॒वास॑ः । अ॒मृ॒त॒ऽत्वम् । आ॒न॒शुः ॥ १० ॥

हे कवयोमेधाविनः त्वष्टुर्मम शिष्याः ऋभवः सतः सन्तइत्यर्थः प्रशस्तायूयं नूनमिदानीं संशिशीत अत्यर्थं तीक्ष्णीकुरुत वाशीः याभिर्वाशीभिः पात्राण्यमृताय सोमाय तत्पानायेत्यर्थः यद्वा युष्माकममृतत्वाय तदर्थं तक्षथ संपादयथ हे कवयोविद्वांसोयूयं गुह्यानि गोपनीयानि पदा पदानि वासस्थानानि कर्तन कुरुत । येन स्थानकरणेन देवासोदेवायूयममृतत्वं आनशुः प्राप्ताः । एवं स्वशिष्यानाह ॥ १० ॥

अथैकादशी—

गर्भेयोषामदधुर्वत्समासन्यपीच्येनमनसोतजिह्वया ।
सविश्वाहासुमनायोग्याअभिसिषासनिर्वनतेकारइज्जितिम् ॥ ११ ॥ १४ ॥

गर्भे । योषाम् । अदधुः । वत्सम् । आसनि । अपीच्येन । मनसा ।
उत । जिह्वया । सः । विश्वाहा । सुऽमनाः । योग्याः । अभि ।
सिसासनिः । वनते । कारः । इत् । जितिम् ॥ ११ ॥ १४ ॥

ते ऋभवोगर्भे मृतायागोर्मध्ये ग्राहके चर्मणि वा मृतायागोः संबन्धिनि योषां कांचिद्गां अदधुः धारितवन्तः । निश्चर्मणोगामरिणीतधीतिभिरितिउक्तं । तथा आसनि मृतायाआस्ये वत्समदधुः । केन साधनेन अपीच्येन मनसा देवत्वमाकांक्षता । उतापिच जिह्वया सादृश्यप्रधानोयं निर्देशः जिह्वावदायतया वाश्येत्यर्थः यद्वा मनसापिच जिह्वया युक्तां योषामिति संबन्धः सिषासनिः संभजनशीलः सऋभुसन्घः विश्वाहा सर्वेष्वप्यहःसु सर्वदा योग्याः स्वोचिताः सुमनाः । स्तुतीरभिवनते आभिमुख्येन संभजते । सच संघोजितिं शत्रुजयं कारइव कर्तैव शत्रुजयकर्तैव ॥ ११ ॥

॥ इत्यष्टमस्य प्रथमे चतुर्दशोवर्गः ॥ १४ ॥

तांसुतइति षळृचं द्वादशं सूक्तं वामदेवगोत्रस्य बृहदुक्थस्यार्षं त्रैष्टुभमैन्द्रं । तथाचानुक्रान्तं—तांसुषड्बृहदुक्थोवामदेव्यइति । समूळ्हस्य दशरात्रस्य द्वितीये छन्दोमे एतत्सूक्तं सूत्रितंच—अपूर्व्यापुरुतमानि तांसुतेकीर्तिमहांइन्द्रेति । महाव्रते निष्केवल्ये एतत्सूक्तं । सूत्रितंच—तांसुतेकीर्तिमघवन्महित्वाभूयइद्वावृधेवीर्यायेति ।

---

१ ऋ० सं० २. ३. ५.

तत्र प्रथमा—

तांसुतेंकीर्तिंमंघवन्महित्वायत्त्वांभीतेरोदंसीअह्वंयेताम् ।
प्रावोंदेवाँआतिंरोदासमोजःप्रजायैत्वस्यैयदशिंक्षइन्द्र ॥ १ ॥

ताम् । सु । ते । कीर्तिम् । मघऽवन् । महिऽत्वा । यत् । त्वा ।
भीते इतिं । रोदंसी इतिं । अह्वंयेताम् । प्र । आवः । देवान् ।
आ । अतिरः । दासम् । ओजः । प्रऽजायै । त्वस्यै । यत् ।
अशिक्षः । इन्द्र ॥ १ ॥

हे इन्द्र मघवन् धनवन् ते तव संबन्धिनीं महित्वा महत्वेनागतां कीर्तिं सुसुष्ठु कीर्तयामी-ति शेषः । किंच यद्यदा त्वा त्वां प्रति भीते असुरैर्भयं प्राप्ते रोदसी द्यावापृथिव्यौ अह्वयेतां आगच्छेत्यब्रूतां तदानीं देवान् प्रावः प्रारक्षः । तथा दासं देवानामुपक्षयकर्तारं असुरं आतिरः व्यनाशयः असुरान् हत्वा देवानां रक्षणेन द्यावापृथिव्योर्भारं पर्यहरः इति यदस्ति किंचित् त्वस्यै एकस्यै प्रजायै यजमानरूपायै ओजः तद्बलं अशिक्षः प्रायच्छः तांतां कीर्तिं कीर्तयामी-त्यर्थः ॥ १ ॥

अथ द्वितीया—

यदचंरस्तन्वांवावृधानोबलांनीन्द्रप्रब्रुवाणोजनेंषु ।
मायेत्सातेयानिंयुद्धान्याहुर्नाद्यशत्रुंनुनुपुराविंवित्से ॥ २ ॥

यत् । अचंरः । तन्वा । वृवृधानः । बलांनि । इन्द्र । प्रऽब्रुवाणः ।
जनेंषु । माया । इत् । सा । ते । यानि । युद्धानि । आहुः ।
न । अद्य । शत्रुम् । ननु । पुरा । विविसे ॥ २ ॥

हे इन्द्र तन्वा शरीरेण स्तोत्रेण वा वावृधानोवर्धमानोजनेषुप्राणिषु बलानि प्रब्रुवाणः वृत्रवधादिरूपाणि सामर्थ्यानि प्रकर्षेण कथयन् अचरः संग्रामं कृतवानिति यदस्ति ते तव

सागतिः मायेव मायैव वृथेत्यर्थः।किंच यानि युद्धानि शत्रुविषयाणि आहुः ब्रुवते पुराविद ऋषयः तान्यपि मायैव । कुतइत्याह अद्य इदानीं शत्रुं हन्तव्यं न विवित्से न लभसे अद्यमाभूत्पूर्वं हतवानस्मीति ब्रूषे तदपि नेत्याह नन्विति प्रश्ने । किं पुरा शत्रुं अलभथाः तदपि नेत्यर्थः ॥२॥

अथ तृतीया—

कउनुतेमहिमनःसमस्यास्मत्पूर्वऋषयोन्तमापुः ।
यन्मातरंचपितरंचसाकमजनयथास्तन्वः[1]स्वायाः ॥ ३ ॥

के । ऊँ इति । नु । ते । महिमनः । समस्य । अस्मत् । पूर्वे ।
ऋषयः । अन्तम् । आपुः । यत् । मातरम् । च । पितरम् ।
च । साकम् । अजनयथाः । तन्वः । स्वायाः ॥ ३ ॥

हेइन्द्र ते तव महिमनः महिम्नः समस्य सर्वस्यापि अन्तं पारं अस्मत् अस्मत्तः पूर्वे ऋषयः के आपुः प्राप्नुवन् न केपीत्यर्थः। यद्यपि महत्वं प्रख्यापयन्ति तथापि न कार्त्स्न्येनेति । तत्र कारणमाह—यत् यस्मात् मातरं च पितरं च ।द्यौर्वः पितापृथ्वीमातेतिहिश्रुतं । अतोद्यावापृथिव्यावित्यर्थः ते उभे अपि साकं सहैवस्वायास्तन्वः स्वकीयाच्छरीरात् अजनयथाः उदपादयः अतोनापुरितिसंबन्धः ॥ ३ ॥

अथ चतुर्थी—

चत्वारितेअसुर्याणिनामादाभ्यानिमहिषस्यसन्ति ।
त्वमङ्गतानिविश्वानिवित्सेयेभिःकर्माणिमघवञ्चकर्थ ॥ ४ ॥

चत्वारि । ते । असुर्याणि । नाम । अदाभ्यानि । महिषस्य ।
सन्ति । त्वम् । अङ्ग । तानि । विश्वानि । वित्से । येभिः ।
कर्माणि । मघऽवन् । चकर्थ ॥ ४ ॥

---

1 ऋ० सं० २. ५. १५ ।

हे इन्द्र महिषस्य महतः पूज्यस्य ते तव चत्वारि असुर्याणि असुरविघातीनि अदाभ्यानि अन्यैरहिंस्यानि उत्तरसूक्तेऽपान्त्यवर्जितेषु दूरेतन्नामेत्यादिषु चतुर्मंत्रेषु प्रतिपादितानि यानि नाम नामकानि शरीराणि सन्ति हे अंग सखे त्वं तानि विश्वानि सर्वाणि वित्से वेत्सि जानासि येभिर्नामभिः कर्माणि वृत्रवधादिरूपाणि चकर्थ कुरुषे हे मघवन् तानि वेत्सीति ॥ ४ ॥

अथ पञ्चमी—

त्वंविश्वांदधिषेकेवंलानियान्याविर्याचगुहावसूंनि ।
काममिन्मेंमघवन्माविताऱीस्त्वमांज्ञातात्वमिंन्द्रासिदाता ॥ ५ ॥

त्वम् । विश्वा । दधिषे । केवंलानि । यानिं । आविः । या । च ।
गुहां । वसूंनि । कामंम् । इत् । मे । मघऽवन् । मा । वि ।
तारीः । त्वम् । आऽज्ञाता । त्वम् । इन्द्र । असि । दाता ॥ ५ ॥

हे इन्द्र त्वं विश्वा सर्वाणि केवलानि अन्येषामसाधारणानि वसूनि धनानि दधिषे धारयसि । विश्वानीत्युक्तं कथं विश्वत्वमित्यतआह यान्याविः आविर्भूतानि सर्वैः प्रसिद्धानि वसूनि निवासयोग्यानि धनानि सन्ति या च गुहा गुहायां निगूढप्रदेशे वर्तमानानि वसूनि सन्ति तानि विश्वानि दधिषइति । यस्मादेवं तस्मात् मे मम कामं कांक्षितं हे मघवन् धनवन्निन्द्र मावितारीः माहिंसीः इत् पूरणे । अपितु वर्धयेति शेषः । हे इन्द्र त्वं आज्ञातासि प्रापयितास्य-भिलषितं धनं । तथा हे इन्द्र त्वं दातासि ॥ ५ ॥

अथ षष्ठी—

योअदंधाज्ज्योतिंषिज्योतिरन्तर्योअसृंजन्मधुंनासंमधूंनि ।
अधंप्रियंशूषमिन्द्रांयमन्मंब्रह्मकृतोंबृहदुंक्थादवाचि ॥ ६ ॥ १५ ॥

यः । अदंधात् । ज्योतिंषि । ज्योतिंः । अन्तः । यः । असृंजत् ।
मधुंना । सम् । मधूंनि । अधं । प्रियम् । शूषम् । इन्द्रांय ।
मन्मं । ब्रह्मऽकृतः । बृहत्ऽउंक्थात् । अवाचि ॥ ६ ॥ १५ ॥

यइन्द्रोज्योतिषि ज्योतिष्मति आदित्यादिके तेजस्यन्तः ज्योतिस्तेजः अदधाद्धारितवान् यदादित्यादिषु तेजोस्ति तदिन्द्रकृतमित्यर्थः यश्च मधुना मधुरेण रसेन निमित्तेन मधूनि सोमानि मधुरद्रव्याणि समसृजत् समयोजयत्। यद्वा मधुनाअत्र मधुशब्देन सर्वैः सेव्यमानआदित्यउच्यते तेन सह मधून्युदकानि समसृजत्। अध संप्रति तस्माइन्द्राय प्रियं प्रियजनकं शूषं बलं शत्रूणां शोषकत्वात् बलकरं मन्म मननीयं स्तोत्रं ब्रह्मकृतोमन्त्रकृतोबृहदुक्थात् प्रभूतशस्त्रयुक्तादेतन्नामकादृषेर्मत्तोवाचि उक्तमभूत् ॥ ६ ॥

॥ इत्यष्टमस्य प्रथमे पंचदशोवर्गः ॥ १५ ॥

दूरेतदित्यष्टर्चं त्रयोदशं सूक्तं ऋष्याद्याः पूर्ववत्। दूरइत्यनुक्रान्तं। गतः सूक्तविनियोगः।

तत्र प्रथमा--

दूरेतन्नामगुह्यंपराचैर्यत्त्वाभीतेअह्वयेतांवयोधै।
उदस्तभ्नाःपृथिवींद्यामभीकेभ्रातुःपुत्रान्मघवन्तित्विषाणः ॥ १॥

दूरे। तत्। नाम। गुह्यम्। पराचैः। यत्। त्वा। भीते इति। अह्वयेताम्। वयःऽधै। उत्। अस्तभ्नाः। पृथिवीम्। द्याम्। अभीके। भ्रातुः। पुत्रान्। मघऽवन्। तित्विषाणः ॥ १ ॥

अनया चत्वारितेअसुर्याणि नामेत्युक्तस्य आद्यंनाम स्तूयते हे इन्द्र ते तव तद्वक्ष्यमाणं नाम सर्वेषां नामकं शरीरं पराचैः पराङ्मुखैर्मनुष्याणामित्यर्थः गुह्यं गोपनीयं अप्रकाशितं सत् दूरे इतोविप्रकृष्टे दूरदेशे वर्तते इतिशेषः यद्यदा त्वा त्वां रोदसी द्यावापृथिव्यौ भीते सत्यौ अह्वयेतां। किमर्थं वयोधै अन्नस्य निधानार्थं जगतोन्नसाधनायेत्यर्थः तदानीं तेन शरीरेण अभीके अन्तिकनामैतत् तव समीपएव पृथिवीं द्यां च उत् ऊर्ध्वं परस्परवियुक्तं यथा भवति तथा अस्तभ्नाः स्तंभितवानसि। किं कुर्वन् हे मघवन् इन्द्र भ्रातुः पर्जन्यस्य पुत्रान् पुत्रस्थानीयान् उदकसंस्त्यायान् तित्विषाणः दीपयन्निति विद्युद्रूपमिन्द्रमाह विद्युद्रूपेन्द्रइतिवाजसनेयकं। यद्वा पर्जन्यरूपमाह तदानीं वायुरस्येन्द्रस्य भ्रातावगंतव्यः ॥ १ ॥

अथ द्वितीया—

महत्तन्नामगुह्यंपुरुस्पृग्येनंभूतंजनयोयेनभव्यंम् ।
प्रत्नंजातंज्योतिर्यदंस्यप्रियंप्रियाःसमंविशन्तपञ्च ॥ २ ॥

महत् । तत् । नामं । गुह्यम् । पुरुऽस्पृक् । येनं । भूतम् । जनयः ।
येनं । भव्यम् । प्रत्नम् । जातम् । ज्योतिः । यत् । अस्य ।
प्रियम् । प्रियाः । सम् । अविशन्त । पञ्च ॥ २ ॥

हे इन्द्र तव तद्गुह्यं गोपनीयं अन्यैरविज्ञातं पुरुस्पृक् बहुभिर्वृष्ट्यार्थिभिः स्पृहणीयं आकाशात्मकं नाम शरीरं महत् अत्यंतं प्रवृद्धं येन नाम्ना भूतं भव्यं च सर्वं जनयः उत्पादितवानसि भूतभव्योभयान्वयाय येनेत्यस्यावृत्तिः आकाशात्मकाद्धि परमेश्वरस्वरूपात् भूतभव्यात्मकंजगदुत्पद्यते । आकाशाद्वायुरित्यादिश्रुतेः । किंच प्रत्नं पुराणं पूर्वकालीनं यज्ज्योतिः द्योतमानं आदित्याख्यमुदकाख्यं वा अस्येन्द्रस्य प्रियं प्रियभूतं तत्वं जातमुत्पन्नं तत्तत्वं प्रियाः प्रीयमाणाः पञ्च पञ्चजनाइतिशेषः भीमइति वदेकदेशलक्षणा । निषादपंचमाश्चत्वारोवर्णाः समविशन्त संविशन्ते स्वनिर्वाहार्थं भजन्तइत्यर्थः ॥ २ ॥

अथ तृतीया—

आरोदंसीअपृणादोतमध्यंपञ्चदेवाँऋतुशःसप्तसप्त ।
चतुंस्त्रिंशतापुरुधाविचंष्टेसरूपेणज्योतिषाविव्रतेन ॥ ३ ॥

आ । रोदंसी इतिं । अपृणात् । आ । उत । मध्यम् । पञ्च । देवान् ।
ऋतुऽशः । सप्तऽसप्त । चतुःऽत्रिंशता । पुरुधा । वि ।
चष्टे । सऽरूपेण । ज्योतिषा । विऽव्रतेन ॥ ३ ॥

अयमिन्द्रःसूर्यात्मकः आत्मीयेन शरीरेण तेजसा वा रोदसी द्यावापृथिव्यौ आ सर्वतः अपृणात् पूरयति उतापिच मध्यं द्युभूम्यपेक्षया मध्यमभूतं अन्तरिक्षं आअपृणादिति वर्तते तदपि स्वशरीरेण तेजसा वा पूरयति । किंच पंचदेवान् देवमनुष्यपित्रसुररक्षःसंज्ञकान्

तथासप्त द्विरुक्त्या सप्तसंख्याकानि तत्वानि लोके यानि सन्ति तानि परिगृह्यन्ते कानि तानीति सप्तमरुद्गणान् सप्तादित्यरश्मीन् सप्तलोकान् अन्यानपि सप्तसंख्योपेतान् ऋतुशः कालेकाले चतुस्त्रिंशता चतुस्त्रिंशत्संख्याकदेवगणेन पुरुधा बहुप्रकारं विचष्टे विपश्यति सर्वंदेक्षते अष्टौवसवएकादशरुद्राद्वादशादित्याः प्रजापतिश्चवषट्कारश्च विराट्चेति चतुस्त्रिंशद्देवाः। केनेति तदुच्यते—सरूपेण समानरूपेण ज्योतिषा प्रकाशकेन विव्रतेन विविधेन कर्मणा ॥ ३ ॥

अथ चतुर्थी—

यदुषऔच्छःप्रथमाविभानामजनयोयेनपुष्टस्यपुष्टम्।
यत्तेजामित्वमवरंपरस्यामहन्महत्याअसुरत्वमेकम् ॥ ४ ॥

यत्। उषः। औच्छः। प्रथमा। विऽभानाम्। अजनयः। येन। पुष्टस्य। पुष्टम्। यत्। ते। जामिऽत्वम्। अवरम्। परस्याः। महत्। महत्याः। असुरऽत्वम्। एकम् ॥ ४ ॥

अत्रप्रसंगात् सूर्यात्मकेन्द्रसंबधिनी उषाःस्तूयते हे उषः उषोदेवते विभानां विभासकानां ग्रहनक्षत्रादीनां प्रथमा प्रथमभूता सती औच्छः विभातमकरोः अग्रेह्युषसः प्रादुर्भवन्ति पश्चात् अन्यानि तेजांसि येन च तेजसा पुष्टस्य पोषयुक्तस्यापि पदार्थस्य मध्ये पुष्टं अतिशयेन पोषयुक्तमादित्यं अजनयः उदपादयः। यत् यच्च ते तव जामित्वं बान्धवं अवरं अवाङ्मुखं अस्मदभिमुखमित्यर्थः कीदृश्यास्ते तवेतिपरस्याः उपरि स्थितायाइत्यर्थः तदिदं महत्यास्तव महत् अतिप्रवृद्धं एकं असाधारणं एकमेव वा असुरत्वं प्रकृष्टबलवत्वं तव बलेन कृतमित्यर्थः ॥ ४ ॥

महाव्रते निष्केवल्ये विधुंदद्राणमित्येषा। सूत्रितंच—आयाह्यर्वाङुपबन्धुरेष्ठाविधुंदद्राणमिति।

सैषा पञ्चमी—

विधुंदद्राणंसमनेबहूनांयुवानंसन्तंपलितोजगार।
देवस्यपश्यकाव्यंमहित्वाद्यामममारसह्यःसमान ॥ ५ ॥ १६ ॥

वि॒ऽधुम् । द॒द्राणम् । सम॑ने । ब॒हूनाम् । युवा॑नम् । सन्त॑म् ।
प॒लि॒तः । ज॒गा॒र॒ । दे॒वस्य॑ । प॒श्य॒ । काव्य॑म् । म॒हि॒ऽत्वा ।
अ॒द्य । म॒मार॑ । सः । ह्यः । सम् । आ॒न॒ ॥ ५ ॥ १६ ॥

अनया कालात्मकइन्द्रः स्तूयते—विधुं विधातारं सर्वस्य युद्धादेः कर्तारं विपूर्वोदधातिः करोत्यर्थे । तथा समने अननमनः प्राणनं सम्यगननोपेतं संग्रामेबहूनां शत्रूणांदद्राणं द्रावकं ईदृक्सामर्थ्योपेतं युवानं सन्तं पुरुषं पलितोजरावशाच्छुक्लकेशः पुमान् जगार निगिरतीन्द्राज्ञया एवमुक्तलक्षणं देवस्य कालात्मकस्येन्द्रस्य महित्वा महत्वेनोपेतं काव्यं सामर्थ्यं पश्य पश्यत हे जनाः । तथा जरसा प्राप्तोद्यममार म्रियते सह्यः परेद्युः समान सम्यक् चेष्टते पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः । तदेवं चत्वारिनामानि शरीराण्युक्तानि ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे षोडशोवर्गः ॥ १६ ॥

अथ षष्ठी—

शा॒क्म॑नाशा॒कोअ॑रु॒णःसु॑प॒र्णआयोम॒हःशूरः॑स॒नादनी॑ळः ।
यच्चि॒केत॑स॒त्यमित्तन्नमोघं॑वसु॒स्पा॒र्हमु॒तजेतो॒तदाता॑ ॥ ६ ॥

शा॒क्म॑ना । शा॒कः । अ॒रु॒णः । सु॒ऽप॒र्णः । आ । यः । म॒हः ।
शूरः॑ । स॒नात् । अनी॑ळः । यत् । चि॒केत॑ । स॒त्यम् । इत् । तत् ।
न । मोघ॑म् । वसु॑ । स्पा॒र्हम् । उ॒त । जेता॑ । उ॒त । दाता॑ ॥ ६ ॥

शाक्मना शक्मैव शाक्म शाक्मना बलेन शाकः शक्तः स्वशक्त्यैव सर्वं कर्तुं शक्तइत्यर्थः नहीन्द्रस्य सहायान्तरापेक्षास्तीन्द्रत्वादेव अरुणः अरुणवर्णः सुपर्णः कश्चित् शोभनपर्णः पक्षी आगच्छतीत्यध्याहारः उपसर्गश्रुतेर्योग्यक्रियाध्याहारः योमहोमहान् शूरोविक्रान्तः सनात् पुराणः अनीळः अनीडः नीडस्याकर्ता नहीन्द्रोग्निवत् कुत्रचिदपि यज्ञेनिकेतनं करोति एवं सुपर्णरूपकेणेन्द्रमाह सपक्षीन्द्रोयच्चिकेत कर्तव्यत्वेन जानाति ततसत्यमित् सत्यमेव नतु मोघं व्यर्थं भवति । सस्पार्हं स्पृहणीयं वसु उत जेता जयति शत्रुभ्यः सकाशात् । उतापिच दाता प्रयच्छति च स्तोतृभ्यः । नलोकाव्ययेत्यादिना षष्ठीप्रतिषेधः ॥ ६ ॥

अथ सप्तमी—

**ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद्वृत्रहत्याय वज्री ।**
**ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायन्त देवाः ॥ ७ ॥**

आ । एभिः । ददे । वृष्ण्या । पौंस्यानि । येभिः । औक्षत् ।
वृत्रऽहत्याय । वज्री । ये । कर्मणः । क्रियमाणस्य ।
मह्ना । ऋतेऽकर्मम् । उत्ऽअजायन्त । देवाः ॥ ७ ॥

इन्द्रएभिर्मरुद्भिः सह वृष्ण्या वृष्ण्यानि वर्षकाणि पौंस्यानि बलानि आददे आदत्ते । येभिर्मरुद्भिः सहितोवृत्रहत्याय प्राण्युपकारकवृष्ट्यावरकत्वाद्वृत्रः पापं तस्य हत्याय हननाय मनुष्याणामुपद्रवशमनायेत्यर्थः । तदर्थं वज्री वज्रवनिन्द्रः औक्षत् वर्षति ये च मरुतोदेवाः मह्ना महतेन्द्रेण क्रियमाणस्य कर्मणः वृष्टिप्रदानलक्षणस्य साहाय्यार्थं ऋतेकर्मं वृष्टिप्रदानकर्म प्रति उदजायन्त उन्मुखाजायन्ते स्वयमेव तैरेभिराददइति समन्वयः ॥ ७ ॥

अथाष्टमी—

**युजा कर्माणि जनयन्विश्वौजा अशस्तिहा विश्वमनास्तुराषाट् ।**
**पीत्वी सोमस्य दिव आ वृधानः शूरो निर्युधाधमद्दस्यून् ॥ ८ ॥ १७ ॥**

युजा । कर्माणि । जनयन् । विश्वऽओजाः । अशस्तिऽहा ।
विश्वऽमनाः । तुराषाट् । पीत्वी । सोमस्य । दिवः । आ ।
वृधानः । शूरः । निः । युधा । अधमत् । दस्यून् ॥ ८ ॥ १७ ॥

सइन्द्रोयुजा मरुतां सहायेन कर्माणि प्रवर्षणादीनि जनयन् उत्पादयन् विश्वौजाः व्याप्तबलः अशस्तिहा रक्षोहा विश्वमनाव्याप्तमनाः अत्यन्तं मनस्वी तुराषाट् तूर्णमभिभविता शत्रूणां एवं महानुभावइन्द्रः दिवःद्युलोकादागत्य सोमस्य सोमं पीत्वी पीत्वा वृधानोवर्धमानः शूरः सन् युधा आयुधेन प्रहारेण वा दस्यून् शत्रून् निरधमत् निर्धमति आयुधेनासुरानपबाधतइत्यर्थः ॥ ८ ॥

॥ इत्यष्टमस्य प्रथमे सप्तदशोवर्गः ॥ १७ ॥

इदन्तइति सप्तर्चं चतुर्दशं सूक्तं वामदेवपुत्रोबृहदुक्थऋषिः चतुर्थीपंचमीषष्ठ्योजगत्यः आदितस्तिस्रः सप्तमी च त्रिष्टुभः विश्वेदेवादेवता । तथाचानुक्रान्तं—इदंते सप्त वैश्वदेवं चतुर्थ्याद्यास्तिस्रोजगत्यइति । गतः सूक्तविनियोगः । आहवनीये वाय्वादिकारणेनायतनान्निष्क्रम्य शम्यापरासादर्वाचीने देशे दीप्यमाने सति तमग्निमनया पुनरायतने संवपेत् । सूत्रितंच—आहवनीयमवदीप्यमानमर्वाक् शम्यापरासादिदन्तएकंपरऊतएकमिति संवपेदिति ।

सैषा सूक्ते प्रथमा—

इदंतएकंपरऊंतएकंतृतीयेनज्योतिषासंविशस्व ।
संवेशनेतन्व१श्चारुरेधिप्रियोदेवानांपरमेजनित्रे ॥ १ ॥

इदम् । ते । एकम् । परः । ऊँ इति । ते । एकम् । तृतीयेन ।
ज्योतिषा । सम् । विशस्व । सम्ऽवेशने । तन्वः । चारुः ।
एधि । प्रियः । देवानाम् । परमे । जनित्रे ॥ १ ॥

एतदादिभिः बृहदुक्थोवाजिनं नाम स्वपुत्रं मृतं वदति हे मृतपुत्र ते तव इदं उपरि ज्योतिषेतिवक्ष्यमाणत्वादत्रेदं शब्देन ज्योतिरभिधीयते इदं ज्योतिरग्न्याख्यमेकं एकोंशः अतस्तमग्निं तव देहगताग्न्यंशेन बाह्यमग्निं संविशस्व । संगच्छस्व । तथा परउ अन्योपि ते तव एकं वाय्वंशः तं तव प्राणवाय्वाख्येनांशेन संविशस्व शरीराग्निप्राणवाय्वोर्बाह्याग्निवाय्वोश्चैकत्वादंशत्वमिति भावः । तथा तृतीयेन ज्योतिषा आदित्याख्येन तेजसा तवात्मना संविशस्व सूर्यगतात्मचैतन्यदेहगतात्मचैतन्ययोरभेदादंशत्वं । योहं सोसौ योसौ सोहं । सूर्यआत्माजगतइत्यादिश्रुतेरात्मनः सूर्यप्रवेशोयुक्तः तन्वः संवेशने तस्मिन् सूर्ये संविश्यचारुरेधि कल्याणोभव कीदृशस्त्वं प्रियः तेन सह प्रीयमाणः कीदृशि तस्मिन् देवानां परमे उत्तमे जनित्रे जनके । देवानां ह्येतत्परमं जनित्रं यत्सूर्यइति हि श्रुतिः ॥ १ ॥

---

१ ऋ० सं० १. ८. ७. ।

अथ द्वितीया—

तनूष्टेवाजिन्तन्वं१नयंन्तीवाममस्मभ्यंधातुशर्मंतुभ्यंम् ।
अह्रुतोमहोधरुणांयदेवान्दिवींवज्योतिःस्वमामिमीयाः ॥ २ ॥

तनूः । ते । वाजिन् । तन्वंम् । नयंन्ती । वामम् । अस्मभ्यंम् ।
धातुं । शर्मं । तुभ्यंम् । अह्रुतः । महः । धरुणांय । देवान् ।
दिविऽईंव । ज्योतिः । स्वम् । आ । मिमीयाः ॥ २ ॥

हेवाजिन् एतन्नामक पुत्र ते तव तन्वं शरीरं नयन्ती स्वशरीरं प्रापयन्ती तनूरियं पृथिवी उभयोरपिपार्थिवत्वात् तवशरीरस्य पृथिवीप्राप्तौ सत्यां तस्यास्तव शरीरनयनं युक्तं तादृशी पृथिवी वामं वननीयं धनं अस्मभ्यं धातु दधातु शर्म च सुखं तुभ्यं धातु दधातु सत्वं अह्रुतः अनवपतितः सन् महोमहतोदेवान् तव कारणभूतान् दिवीव ज्योतिः द्युलोके वर्तमानं सूर्यं च इवश्चार्थोनिपातानामनेकार्थत्वात् तं च स्वं तव स्वभूतं आमिमीयाःआविश ॥ २ ॥

अथ तृतीया—

वाज्यंसिवाजिंनेनासुवेनीःसुवितःस्तोमंसुवितोदिवंगाः ।
सुवितोधर्मंप्रथमानुंसत्यासुवितोदेवान्त्सुवितोनुपत्मं ॥ ३ ॥

वाजी । असि । वाजिंनेन । सुऽवेनीः । सुवितः । स्तोमंम् । सुवितः ।
दिवंम् । गाः । सुवितः । धर्मं । प्रथमा । अनुं । सत्या ।
सुवितः । देवान् । सुवितः । अनुं । पत्मं ॥ ३ ॥

हेपुत्र त्वं वाजिनेनान्नरसेन बलेन वा वाज्यसि तद्वान् भवसि कीदृशस्त्वं सुवेनीःसुष्टु कान्तः वीगत्यादिषु । तादृशस्त्वं सुवितः सुष्टु प्रेरितः स्तोमं पूर्वं त्वया कृतं स्तोत्रं तदभिमानि देवं अनुगाः अन्वगाः गच्छ तथासुवितोदिवंगाः तथासुवितोधर्मः त्वया संपादितानि धर्माण्यनु गच्छ । कीदृशानि प्रथमा मुख्यानि सत्या सत्यफलानि तथा सुवितोदेवान् इन्द्रादीन् तथा सुवितः पत्म पतत् ज्योरादित्याख्यमनुगाः ॥३ ॥

अथ चतुर्थी—

महिम्नएंषांपितरंश्चनेशिरेदेवादेवेष्वंदधुरपिक्रतुंम् ।
समंविव्यचुरुतयान्यात्विषुरैषांतनूषुनिविविशुःपुनंः ॥ ४ ॥

महिम्नः । एषाम् । पितरंः । चन । ईशिरे । देवाः । देवेषुं ।
अदधुः । अपि । क्रतुंम् । सम् । अविव्यचुः । उत । यानि ।
अत्विषुः । आ । एषाम् । तनूषुं । नि । विविशुः । पुनरितिं ॥ ४ ॥

पितरश्चन अस्मत्पितरोप्यंगिरसः एषां देवानां महिम्नोमहत्त्वस्य ईशिरे ईश्वराअभवन् ते देवाअपि देवत्वं प्राप्ताअंगिरसोदेवेष्विन्द्रादिषु क्रतुं संकल्पमदधुः धृतवन्तः उतापिच यानि तेजांसि अत्विषुः दीप्यन्ते तानि समविव्यचुः संगतानिआसन् एषां देवानां तनूषु शरीरेषु पुनर्निर्विविशुः निविशन्ति पितरोंगिरसः अतस्त्वमपि तथा कुर्वित्यर्थः ॥ ४ ॥

अथ पञ्चमी—

सहोभिर्विश्वंपरिचक्रमूरजःपूर्वाधामान्यमितामिमानाः ।
तनूषुविश्वाभुवनानियेमिरेप्रासारयन्तपुरुधप्रजाअनुं ॥ ५ ॥

सहःऽभिः । विश्वम् । परिं । चक्रमुः । रजंः । पूर्वा । धामानि ।
अमिताः । मिमानाः । तनूषुं । विश्वा । भुवना । नि । येमिरे ।
प्र । असारयन्त । पुरुध । प्रऽजाः । अनुं ॥ ५ ॥

मदीयाः पितरः सहोभिर्बलैः स्वीयैः विश्वं सर्वं रजोलोकं लोकारजांस्युच्यन्तइतिनिरुक्तं पूर्वा पूर्वाणि धामानि स्थानानि अमिता अन्यैरमितानि मिमानाः परिच्छिन्दन्तः परिचक्रमुः पर्यक्रामन् किं तथाकुर्वन्तोविश्वा सर्वाणि भुवना भूतजातानि येमिरे नियमितवन्तः किंच पुरुध पुरुधा बहुप्रकारं प्रजाअनुज्योतींष्युदकानि वा प्रासारयन्त प्रसारितवन्तः अस्मत्पितरः पूर्वेंगिरसः स्वसामर्थ्येन सर्वं लोकं व्याप्य पुरातनानि ग्रहनक्षत्रादीनि परिच्छिद्य सर्वभूतानि नियम्य प्रजाअनूदकानि तेजांसि वा प्रसारितवन्तइत्यर्थः अतस्त्वमप्येवं कुर्वितिभावः ॥ ५ ॥

अथ षष्ठी—

द्विधासूनवोसुरंस्वर्विदमास्थापयन्ततृतीयेनकर्मणा ।
स्वांप्रजांपितरःपित्र्यंसहआवरेष्वदधुस्तन्तुमाततम् ॥ ६ ॥

द्विधा । सूनवः । असुरम् । स्वःऽविदम् । आ । अस्थापयन्त ।
तृतीयेन । कर्मणा । स्वाम् । प्रऽजाम् । पितरः । पित्र्यम् । सहः ।
आ । अवरेषु । अदधुः । तन्तुम् । आऽततम् ॥ ६ ॥

सूनवआदित्यस्य पुत्रादेवाअंगिरसः देवानां ह्येतत्परमंजनित्रं यत्सूर्यइति प्रदर्शितत्वादादित्यसूनवइति गम्यते । असुरं बलवन्तं स्वर्विदं सर्वज्ञं स्वर्गस्य लंभकं वा आदित्यं तृतीयेन कर्मणा प्रजोत्पादनाख्येन । ब्रह्मचर्येणर्षिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यइति[1]श्रुतेः । प्रजोत्पादनस्य तृतीयकर्मत्वं । तेनादित्यं द्विधा आस्थापयन्त द्विप्रकरमास्थापयन्ति उदितं चास्तमितं च कुर्वन्ति । उद्ध्राभं चनिग्राभंचब्रह्मदेवाअवीवृधन्नितिमन्त्रस्य[2]ब्राह्मणे असौवाआदित्यउद्यन्नुद्ध्राभएषनिम्रोचन्निग्राभइति[3]श्रुतत्वाद्देवानामादित्यस्य द्विस्थापनमुदयास्तमयकरणमितिगम्यते । किंच पितरोमदीयाअंगिरसः स्वां प्रजामुत्पाद्येतिशेषः पित्र्यं सहः पितुरादित्यस्यसंबंधिनं अपराभिभवक्षमं बलं अवरेष्वादधुः निकृष्टेषु स्वप्रजाभूतेषु मनुष्येषु स्थापितवन्तः यथा पित्र्यं धनं सम्यक् परिरक्ष्य स्वपुत्रेभ्यः प्रयच्छन्ति तद्वत् पितुरादित्यस्य प्रकाशादिबलं मनुष्येषुन्यदधुरित्यर्थः । किंच तन्तुं प्रजां आततं विततं कृतवंतइतिशेषः पुत्रपौत्रादिरूपेणानवच्छिन्नां प्रजामित्यर्थः अयं ह्याततंतन्तुर्यत्प्रजेतिब्राह्मणं । प्रजातन्तुंमा[4]व्यवच्छेत्सीरितिच । तन्तुंतन्वन्नित्यस्यब्राह्मणं प्रजावैतन्तुरि[5]ति ॥ ६ ॥

अथ सप्तमी—

नावानक्षोदःप्रदिशःपृथिव्याःस्वस्तिभिरतिदुर्गाणिविश्वा ।
स्वांप्रजांबृहदुक्थोमहित्वावरेष्वदधादापरेषु ॥ ७ ॥ १८ ॥

---

१ तै० सं० ६. ३. १०. । २ तै० सं० १. १. १३. । ३ तै० सं० ५. ४. ६. ।
४ शिक्षोपनिषत् । ५ ऐ० ब्रा० ३. ११. ।

नावा । न । क्षोदः । प्रऽदिशः । पृथिव्याः । स्वस्तिऽभिः । अति । दुःऽगानि । विश्वा । स्वाम् । प्रऽजाम् । बृहत्ऽउक्थः । महिऽत्वा । आ । अवरेषु । अदधात् । आ । परेषु ७ ॥ १८ ॥

नावा न उदकोत्तरणसाधनेनेव क्षोदः उदकं यथा मनुष्यानावोदकं अतितरन्ति यथा वा स्वस्तिभिःक्षेमैः विश्वा सर्वाणि दुर्गाणि दुःखेनगन्तव्यानि अतितरन्ति तद्वद्बृहदुक्थः स्वां प्रजां वाजिनं मृतं पुत्रं महित्वा स्वमहत्वेन अवरेषु अग्न्यादिषु आदधात् कृतवान् तथा परेषु दिव्येषुसूर्यादिषु आ अदधात् एवमृषिर्ब्रूते स्वयमेव वा स्वात्मानं परोक्षेणाह ॥ ७ ॥

॥ इत्यष्टमस्य प्रथमेष्टादशोवर्गः ॥ १८ ॥

माप्रगामेति षळृचं पंचदशं सूक्तं गायत्रं वैश्वदेवं ऐक्ष्वाकोऽसमातिर्नाम राजा तस्य बन्धुः सुबन्धुः श्रुतबन्धुः विप्रबन्धुश्चेति चत्वारः पुरोहिताआसन् तेच गौपायनाः । सच राजा तांस्त्यक्त्वा अन्यौ मायाविनावृषी पुरोहितत्वेनावृणोत ततो बन्ध्वादयः क्रुद्धाः सन्तः इमं राजानमभिचरितवन्तः एतत् ज्ञात्वा मायाविनौ पुरोहितौ एषामन्यतमं सुबन्धुं प्राणैर्वियोजितवन्तौ मृतस्यास्य भ्रातरोबन्धुः श्रुतबन्धुर्विप्रबन्धुरित्येते अविनाशप्राप्तिहेतुभूतमिदंदृष्ट्वा जपन्तिस्म । अतस्तेस्य सूक्तस्य ऋषयः प्रतिपाद्यत्वादावर्तमानं मनोदेवता । तथाचानुक्रान्तं—अथ हैक्ष्वाकोराजाऽसमातिर्गौपायनान् बन्ध्वादीन् पुरोहितांस्त्यक्त्वान्यौ मायाविनौ श्रेष्ठतमौ मत्वा पुरोदधे तमितरे क्रुद्धाअभिचेरुरथतौ मायाविनौ सुबन्धोः प्राणानाचिक्षिपतुरथाहास्य भ्रातरस्त्रयोमाप्रगामेतिषट्कं गायत्रं स्वस्त्ययनं जप्त्वेति । अग्निसमीपाद्देशान्तरगमनसमये इदं सूक्तं जप्यं । सूत्रितंच—प्रव्रजेदनवेक्षमाणोमाप्रगामेति सूक्तं जपन्निति । महापितृयज्ञेप्येतदृत्विग्भिर्जप्यं । सूत्रितंच—माप्रगामाग्नेत्वंनइति जपन्तइति । निविदः स्थानातिपत्ताविदं सूक्तं शस्त्वासूक्तान्तरे निवित् प्रक्षेप्या । सूत्रितंच—स्थाने चेन्निविदोतिहरेन्माप्रगामेति पुरस्तात्सूक्तं शस्त्वेति ।

तत्र प्रथमा—

**माप्रगा॑मप॒थोव॒यंमाय॒ज्ञादिन्द्रसो॒मिनः॑ । मांत॑स्थु॒र्नो॒अरा॑तयः ॥ १ ॥**

मा । प्र । गाम् । पथः । वयम् । मा । यज्ञात् । इन्द्र ।
सोमिनः । मा । अन्तरिति । स्थुः । नः । अरातयः ॥ १ ॥

अत्रोक्ताख्याने शाट्यायनकं असमातिं राथप्रौष्ठं गौपायनाअभ्यगामंस्ते खांडवे सत्र मासताथ हासमातौ राथप्रौष्ठे किलाताकुली ऊषतुः समायौ तं हस्मानग्नौ निधायौदनं पचतो- ग्नौ मांसमथासुराअन्नं दग्ध्वेक्ष्वाकवः पराबभूवुः तमसमातिं राथप्रौष्ठं गौपायनानामाहुतयो- भ्यतपन् सोब्रवीदिमौ किलाताकुली इमे वै मागौपायनामाहुतयोभितपन्तीति तावब्रूतां तस्य वाआवामेव भिषजौ स्वः आवां प्रायश्चित्तिरावां तथा करिष्यावोयथा त्वैतानाभितपन्ती ति तौ परेत्यसुबन्धोर्गौपायनस्य स्वपतः प्रमत्तस्यासुमाहृत्यान्तःपरिधिंन्यधत्तमित्यादि ॥ तं सुबन्धोरसुमादातुं खांडवादसमातिं प्रतिगच्छन्तोगौपायनावदन्ति हे इन्द्र वयं गौपायनाः पथः समीचीनान्मार्गान् माप्रगाम मापरागच्छाम असमातिगृहमेव गच्छाम माच सोमिनोऽस- मातेर्यज्ञात्प्रगाम मास्थुः मातिष्ठन्तु नोस्माकमन्तर्मार्गमध्ये अरातयः शत्रवः यद्वा सोमिनः सोमवतोयागान्माप्रगाम ॥ १ ॥

अथ द्वितीया—

योयज्ञस्यंप्रसाधंनस्तन्तुर्देवेष्वातंतः । तमाहुंतंनशीमहि ॥ २ ॥

यः । यज्ञस्यं । प्रऽसाधंनः । तन्तुंः । देवेषु । आऽतंतः ।
तम् । आऽहुंतम् । नशीमहि ॥ २ ॥

योयमग्न्याख्यस्तन्तुराहवनीयादिरूपेण विस्तृतः यज्ञस्य प्रसाधनः प्रकर्षेण साधयिता देवेष्वाततः देवैः स्तोतृभिर्ऋत्विग्भिः विस्तारितोवर्तते वेद्यांतमाहुतंसर्वतोहूयमानं नशीमहि व्याप्नुयाम नशतिर्व्याप्तिकर्मा ॥ २ ॥

पिंडपितृयज्ञे मनोन्वाहुवामहे इति तृचेन पिंडाभिमानिनः पितरउपस्थेयाः । सूत्रितंच— मनोन्वाहुवामहइति च तिसृभिरथैनान्प्रवाहयेदिति ।

सैषा तृतीया–

मनोन्वाहुवामहेनाराशंसेनसोमेन । पितॄणांचमन्मभिः ॥ ३ ॥

मनः । नु । आ । हुवामहे । नाराशंसेन । सोमेन ।
पितॄणाम् । च । मन्मऽभिः ॥ ३ ॥

वयं बन्धुश्रुतबन्धादयः मनः सुबन्धोः संबन्धि मायाविभिरपहृतं नु क्षिप्रं आहुवामहे आह्वयामहे । केन साधनेनेति तदुच्यते नाराशंसेन नराशंसचमसगतेन सोमेन नरैः शस्यन्त-इति नराशंसाः पितरः तेषां चमसानां कंपनमेवाह्वानं । तथाविधेन पितॄणां अंगिरसां मन्म-भिश्च मननीयैः स्तोत्रैश्च ॥ ३ ॥

अथ चतुर्थी–

आतंएतुमनःपुनःक्रत्वेदक्षायजीवसे । ज्योक्चसूर्यंदृशे ॥ ४ ॥

आ । ते । एतु । मनः । पुनरिति । क्रत्वे । दक्षाय । जीवसे ।
ज्योक् । च । सूर्यम् । दृशे ॥ ४ ॥

हे सुबन्धो ते मनः पुनरैतु अभिचरतः सकाशात् पुनरागच्छतु । किमर्थमिति उच्यते– क्रत्वे कर्मणे लौकिकवैदिकविषयाय दक्षाय बलाय च । यद्वा क्रत्वे अपाननाय दक्षाय प्राण-नाय । प्राणोवैदक्षोपानःक्रतुरितिहिश्रुतिः[1] । जीवसे जीवनाय च ज्योक् चिरकालं सूर्यं च दृशे सूर्यं द्रष्टुं अत्यन्तं चिरजीवनायेत्यर्थः ॥ ४ ॥

अथ पंचमी–

पुनर्नःपितरोमनोददातुदैव्योजनः । जीवंव्रातंसचेमहि ॥ ५ ॥

---

१ तै० सं० २. ५. २. ।

पुनः । नः । पितरः । मनः । ददातु । दैव्यः । जनः ।
जीवम् । व्रातम् । सचेमहि ॥ ५ ॥

नोस्माकं पितरः पितृभूताः अंगिरसोजनः तेषां संघइत्यर्थः सच जीवं व्रातं च प्राणादीन्द्रियसंघातं पुनर्ददातु तथा दैव्योजनः जनशब्दः संघवचनः देवानां संघोपि जीवं व्रातं च ददातु वयं च तदुभयं सचेमहि प्राप्नुयामः ॥ ५ ॥

अथ षष्ठी—

वयंसोमव्रतेतवमनस्तनूषुबिभ्रतः । प्रजावन्तःसचेमहि॥६॥१९॥

वयम् । सोम । व्रते । तव । मनः । तनूषु । बिभ्रतः ।
प्रजाऽवन्तः । सचेमहि ॥ ६ ॥ १९ ॥

हे सोम देव वयं बन्ध्वादयः तव व्रते त्वदीये कर्मणि व्रतमिति कर्मनाम तव तनूषु त्वदीयेष्वंगेषु च मनः मनोबिभ्रतः तात्पर्ययुक्तां बुद्धिं धारयन्तः प्रजावन्तः प्रजाभिः पुत्रपौत्रादिभिर्युक्ताः सन्तः सचेमहि संगच्छेमहि जीवं व्रातं चेति शेषः ॥ ६ ॥

॥ इत्यष्टमस्य प्रथमे एकोनविंशोवर्गः ॥ १९ ॥

यत्तेयममिति द्वादशर्चं षोडशं सूक्तं आनुष्टुभं बन्ध्वादयऋषयः सुबन्धुर्देहान्निर्गतस्येन्द्रियवर्गसहितस्य मनसःपुनस्तस्मिन्प्रवेशनार्थमिदं सूक्तं दृष्ट्वाऽजपन् अतस्तेस्य ऋषयः प्रतिपाद्यत्वादावर्तमानं मनोदेवता । तथाचानुक्रान्तं—यत्तइति द्वादशर्चमानुष्टुभं मनआवर्तमानं जेपुरिति । गतोविनियोगः ।

तत्र प्रथमा—

यत्तेयमंवैवस्वतंमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ १ ॥

यत् । ते । यमम् । वैवस्वतम् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ १ ॥

पुरुषस्य म्रियमाणस्य मनोनाम महद्भूतं बहुधा विशीर्णं भवति तस्य पुनः संभरणमत्रोच्यते—हेम्रियमाणपुरुष ते तव मनोवैवस्वतं विवस्वतः पुत्रं यमं दूरकं अत्यन्तं दूरं यथा भवतितथा जगाम ते तव तन्मनआवर्तयामसि आवर्तयामः किमर्थं इह क्षयाय इह लोके निवासाय जीवसे चिरकालजीवनाय ॥ १ ॥

अथ द्वितीया—

यत्तेदिवंयत्पृथिवींमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ २ ॥

यत् । ते । दिवम् । यत् । पृथिवीम् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ २ ॥

हे सुबन्धो यन्मनोदिवं जगाम यच्च पृथिवीं दूरकं दूरकमितिक्रियाविशेषणं तदिह निवासाय जीवनाय चावर्तयामः ॥ २ ॥

अथ तृतीया—

यत्तेभूमिंचतुर्भृष्टिमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ३ ॥

यत् । ते । भूमिम् । चतुःऽभृष्टिम् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ३ ॥

हे सुबन्धो यन्मनोभूमिं चतुर्भृष्टिं चतुर्दिक्षु भ्रंशोयस्याः सा तां जगाम तदावर्तयामः॥३॥

अथ चतुर्थी—

यत्तेचतस्रःप्रदिशोमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ४ ॥

यत् । ते । चतस्रः । प्रऽदिशः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ४ ॥

हे सुबन्धो यत्ते मनः प्रदिशः प्रकृष्टामहादिशः चतस्रोजगाम तदावर्तयामः ॥ ४ ॥

अथ पञ्चमी—

यत्तेसमुद्रमर्णवंमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ५ ॥

यत् । ते । समुद्रम् । अर्णवम् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ५ ॥

हे सुबन्धो यत्ते मनः अर्णवंउदकं तद्वन्तं समुद्रं मेघं वा जगाम तदिति गतं ॥ ५॥

अथ षष्ठी—

यत्तेमरीचीःप्रवतोमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ६ ॥ २० ॥

यत् । ते । मरीचीः । प्रऽवतः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ६ ॥ २० ॥

हे सुबन्धो यत्ते मनः प्रवतः प्रगच्छन्तीर्मरीचीर्दीप्तीर्जगाम तदिति गतं ॥ ६ ॥

॥ इत्यष्टमस्य प्रथमे विंशोवर्गः ॥ २० ॥

अथ सप्तमी–

यत्तेअपोयदोषधीर्मनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ७ ॥

यत् । ते । अपः । यत् । ओषधीः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ७ ॥

अथाष्टमी–

यत्तेसूर्यंयदुषसंमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ८ ॥

यत् । ते । सूर्यम् । यत् । उषसम् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ८

अथ नवमी–

यत्तेपर्वतान्बृहतोमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ९ ॥

यत् । ते । पर्वतान् । बृहतः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ९ ॥

अथ दशमी–

यत्तेविश्वमिदंजगन्मनोजगामदूरकम् ।
तत्तआवर्तयमसीहक्षयायजीवसे ॥ १० ॥

यत् । ते । विश्वम् । इदम् । जगत् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ १० ॥

इति चतस्रऋचोनिगदसिद्धाः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

अथैकादशी—

यत्तेपराःपरावतोमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ ११ ॥

यत् । ते । पराः । पराऽवतः । मनः । जगाम । दूरकम् । तत् ।
ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ११ ॥

हे सुबन्धो यत्ते मनः पराः परावतः अत्यन्तं दूरदेशान् जगाम तदिति गतं ॥ ११ ॥

अथ द्वादशी—

यत्तेभूतंचभव्यंचमनोजगामदूरकम् ।
तत्तआवर्तयामसीहक्षयायजीवसे ॥ १२ ॥ २१ ॥

यत् । ते । भूतम् । च । भव्यम् । च । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ १२॥२१॥

हे सुबन्धो यत्ते मनोभूतं च भव्यं चेत्यनेन भूतभव्यात्मकव्यतिरेकेण कस्य चिदभावाद्व-र्तमानस्य पृथगेवाभिधानात् कृत्स्नंप्रपंचमुक्तं भवति तत्र सर्वत्र गतं मनोजीवनाय निवासाय चावर्तयामः ॥ १२ ॥

॥ इत्यष्टमस्य प्रथमे एकविंशोवर्गः ॥ २१ ॥

प्रतारीति दशर्चं सप्तदशं सूक्तं बन्ध्वादीनां त्रयाणां गौपायननानामार्षं आदितः सप्त त्रिष्टुभः अष्टमी पंचाष्टकापंक्तिः नवमी षडष्टका महापंक्तिः दशमी पंक्त्युत्तरा आद्यौ दशकावष्टकास्त्रयइत्युक्तलक्षणसद्भावात् एकाक्षराधिक्याद्भुरिग्विशेषणावेदितव्या । सूक्तस्यादितश्चतस्रोदेहात्प्राणान्निर्गमयित्र्यानिर्ऋतेर्निवृत्त्यर्थं बन्ध्वादयोजपन् मोषुणः सोमेति चतुर्थ्यामेव मृत्युनिवृत्त्यर्थं सोममस्तुवन् अतश्चतसृणां निर्ऋतिर्देवता चतुर्थ्याः सोमश्च असुनीतेमनइति द्वाभ्यां असुनीतिनाम्नीं देवीमस्तुवन् अतस्तयोः सा देवता पुनर्नोअसुमित्यस्य पृथिव्याद्यालिंगोक्तदेवताः । ततस्तिसृभिः शिष्टाभिर्द्यावापृथिव्यौ समिन्द्रेत्यर्धर्चेनेन्द्रं च । तथाचानुक्रान्तं—प्रतारीति दशर्चे चतस्रोनिर्ऋत्यपनोदार्थं जेपुश्चतुर्थ्यां सोमं चास्तुवन् मृत्योरपगमायोत्तराभ्यां देवीमसुनीतिं सप्तम्यां लिंगोक्तदेवताः शिष्टाभिः पंक्तिमहापंक्तिपंक्त्युत्तराभिः द्यावापृथिव्यौ समिन्द्रेतींद्रंचार्धर्चेनेति । गतोविनियोगः ।

तत्र प्रथमा—

प्रतार्यायुः प्रतरंनवीयः स्थातारेवक्रतुमतारथस्य ।
अधच्यवानउत्तवीत्यर्थंपरातरंसुनिर्ऋतिर्जिहीताम् ॥ १ ॥

प्र । तारि । आयुः । प्रऽतरम् । नवीयः । स्थातारा॑ऽइव ।
क्रतुऽमता । रथस्य । अध । च्यवानः । उत् । तवीति । अर्थम् ।
पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ १ ॥

सुबन्धोरायुष्यं प्रतारि प्रवर्धतां प्रपूर्वस्तिरतिर्वर्धनार्थः कथं प्रवर्धतामित्युच्यते प्रतरं प्रवृद्धतरं नवीयोनवतरं यौवनोपेतमित्यर्थः निर्ऋत्यनुग्रहादेवमायुर्वर्धतां । तत्र दृष्टान्तः—क्रतुमता कर्मवता सारथिना रथस्य स्थातारेव रथेस्थिता यथावर्धते तद्वत् अधाथ च्यवानोजीविताच्च्यवमानः अर्थं स्वाभिलषितमायुर्लक्षणमुत्तवीति वर्धयतु सुबन्धुप्राणापहर्त्रीनिर्ऋतिः पापदेवता परातरं अत्यन्तं दूरतरं जिहीतां परित्यजतु गच्छतु ॥ १ ॥

अथ द्वितीया—

सामन्नुरायेनिधिमन्वन्नंकरामहेसुपुरुधश्रवांसि ।
तानोविश्वानिजरितामंमत्तुपरातरंसुनिर्ऋतिर्जिहीताम् ॥ २ ॥

सामन् । नु । राये । निधिऽमत् । नु । अन्नम् । करामहे ।
सु । पुरुध । श्रवांसि । ता । नः । विश्वानि । जरिता । ममत्तु ।
पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ २ ॥

सामन् साम्नि गीयमाने सति नुचार्थे राये जीवायूरूपधनार्थं निधिमत् निधानवदन्नं हविश्चकरामहे कुर्मः निर्ऋत्यै । अत्रापि न्विति चार्थे स्तुतिर्हविश्चोभयं कुर्मइत्यर्थः । तदेवाह सु सुष्ठु पुरुध पुरुधा बहुप्रकारं श्रवांस्यन्नानि हवींषि करामहे ता तानि नोस्माकं संबन्धीनि विश्वानि सर्वाणि जरिता जीर्णा स्तुता जरा स्तुतिः ममत्तु स्वदतां आस्वाद्य च निर्ऋतिः परातरमत्यन्तं दूरदेशं जिहीतां गच्छतु ॥ २ ॥

अथ तृतीया—

अभीष्वं१र्यःपौंस्यैर्भवेमद्यौर्नभूमिंगिरयोनाज्रान् ।
तानोविश्वानिजरिताचिकेतपरातरंसुनिर्ऋतिर्जिहीताम् ॥ ३ ॥

अभि । सु । अर्यः । पौंस्यैः । भवेम । द्यौः । न । भूमिम् ।
गिरयः । न । अज्रान् । ता । नः । विश्वानि । जरिता । चिकेत ।
पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ ३ ॥

वयं अर्यः अरीन् शत्रून् पौंस्यैः पुंस्त्वैर्बलैः सु सुष्ठु अभिभवेम द्यौर्न भूमिं सूर्योयथा स्वरश्मिभिर्भूमिमभिभवति तद्वत् गिरयोनाज्रान् गिरिर्वज्रः ते यथा अजनशीलान् मेघानभिभवन्ति तद्वत् । तानि नोस्माभिः कृतानि स्तोत्राणि तानि विश्वानि सर्वाणि जरिता स्तुता सती निर्ऋतिः चिकेत जानातु । शिष्टमुक्तं ॥ ३ ॥

अथ चतुर्थी—

मोषुणःसोममृत्यवेपरादाःपश्येमनुसूर्यमुच्चरन्तम् ।
द्युभिर्हितोजरिमासूनोअस्तुपरातरंसुनिर्ऋतिर्जिहीताम् ॥ ४ ॥

मो इति॑ । सु । नः॒ । सो॒म॒ । मृ॒त्यवे॑ । परा॑ । दाः॒ । पश्ये॑म । नु ।
सूर्य॑म् । उ॒त्ऽचर॑न्तम् । द्युऽभिः॑ । हि॒तः । ज॒रि॒मा । सु । नः॒ ।
अ॒स्तु॒ । प॒रा॒ऽत॒रम् । सु । निःऽऋ॑तिः । जि॒ही॒ता॒म् ॥ ४ ॥

हे सोम नोस्मान् सु सुष्ठु मृत्यवे मो परादाः मैव परादानं कुरु मृत्यवधीनान् माकार्षीः किन्तु नु इदानीं उच्चरन्तं ऊर्ध्वं गच्छन्तं उदयन्तं सूर्यं पश्येम पश्यामः चिरकालं जीवेमेत्यर्थः। जीवनाभावे सूर्यदर्शनासंभवादित्यभिप्रायः। किंच द्युभिः अहर्नामैतत् अहोभिर्दिवसैः हितः प्रेरितः जरिमा जराभावः नोस्माकं सु सुखं अस्तु करोतु ॥ ४ ॥

अथ पंचमी—

असु॑नीते॒मनो॑अ॒स्मासु॑धारयजी॒वात॑वे॒सुप्रति॑रान॒आयुः॑ ।
रा॒र॒न्धि॒नः॒सूर्य॑स्यसं॒दृशि॑घृ॒तेन॒त्वंत॒न्वं॑वर्धयस्व ॥ ५ ॥ २२ ॥

असु॑ऽनीते । मनः॑ । अ॒स्मासु॑ । धा॒र॒य॒ । जी॒वात॑वे । सु । प्र ।
ति॒र॒ । नः॒ । आयुः॑ । र॒र॒न्धि । नः॒ । सूर्य॑स्य । स॒म्ऽदृशि॑ ।
घृ॒तेन॑ । त्वम् । त॒न्व॑म् । व॒र्ध॒य॒स्व॒ ॥ ५ ॥ २२ ॥

हे असुनीते मनुष्याणामसूनां नेत्रि देवि अस्मासु मनः पुनर्धारय। किंच जीवातवे जीवितुं सुप्रतिर सुष्ठु वर्धय नोस्माकमायुः। किंच ररन्धि साधय नोस्मान् सूर्यस्य संदृशि चिरसन्दर्शने। त्वं च घृतेनास्माभिर्दत्तेन तन्वं स्वशरीरं वर्धयस्व वर्धय ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे द्वाविंशोवर्गः ॥ २२ ॥

अथ षष्ठी—

असु॑नीते॒पुन॑र॒स्मासु॒चक्षुः॒पुनः॑प्रा॒णमि॒ह नो॑धेहि॒भोग॑म् ।
ज्योक्प॑श्येम॒सूर्य॑मु॒च्चर॑न्त॒मनु॑मते मृ॒ळया॑नः स्व॒स्ति ॥ ६ ॥

असुंऽनीते । पुनः । अस्मासु । चक्षुः । पुनरिति । प्राणम् ।
इह । नः । धेहि । भोगम् । ज्योक् । पश्येम । सूर्यम् ।
उत्ऽचरन्तम् । अनुंऽमते । मृळय । नः । स्वस्ति ॥ ६ ॥

हे असुनीते प्राणप्रदायिनि देवि अस्मासु अस्मदीये सुबन्धावित्यर्थः पुनश्चक्षुः प्रकाशकं नयनमीक्षणसामर्थ्यमित्यर्थः । किंच प्राणं पुनरस्मासु धेहि स्थापय वयं च ज्योक् चिरं उच्चरन्तं उद्गच्छन्तं सूर्यं देवं पश्येम । हे अनुमते देवि स्वस्ति अविनाशं यथा तथा नोस्मान् मृळय सुखय ॥ ६ ॥

अथ सप्तमी—

पुनर्नोअसुंपृथिवीददातुपुनर्द्यौर्देवीपुनरन्तरिक्षम् ।
पुनर्नःसोमस्तन्वंददातुपुनःपूषापथ्यां३यास्वस्तिः ॥ ७ ॥

पुनः । नः । असुम् । पृथिवी । ददातु । पुनः । द्यौः । देवी ।
पुनः । अन्तरिक्षम् । पुनः । नः । सोमः । तन्वम् । ददातु ।
पुनरिति । पूषा । पथ्याम् । या । स्वस्तिः ॥ ७ ॥

पुनःपृथिवी देवी नोस्मभ्यमसुं प्राणं ददातु पुनर्द्यौर्देवता असुं ददातु तथान्तरिक्षमन्तरिक्षदेवताअसुंददातु तथा सोमोनस्तन्वं शरीरं पुनर्ददातु तथा पूषा पोषाभिमानिनीदेवता पथ्यां पंथा अन्तरिक्षं तत्र भवां वाचं वागात्मकः शब्दोह्याकाशादुत्पद्यते तां पुनर्ददातु किंच या स्वस्तिः या लोके वेदे च स्वस्तिरुच्यते तामपि पूषा प्रयच्छतु यद्वा पूषा पोषं प्रयच्छतु या स्वस्तिः वाङ्नाम्नीदेव्यस्ति सा पथ्यां वाचं प्रयच्छतु वाग्वैपथ्यास्वस्तिरितिब्राह्मणं ॥ ७ ॥

अथाष्टमी—

शंरोदसीसुबन्धवेयह्वीऋतस्यमातरा ।
भरतामपयद्रपोद्यौःपृथिविक्षमारपोमोषुतेकिंचनाममत् ॥ ८ ॥

शम् । रोदसी इति । सुऽबन्धवे । यह्वी इति । ऋतस्य । मातरा ।
भरताम् । अप । यत् । रपः । द्यौः । पृथिवि । क्षमा । रपः ।
मो इति । सु । ते । किम् । चन । आममत् ॥ ८ ॥

इदमादिभिस्त्रिभिर्द्यावापृथिव्योः स्तुतिः रोदसी द्यावापृथिव्यौ सुबन्धवे शं सुखं प्रयच्छतां कीदृशौ ते यह्वी महत्यौ ऋतस्य यज्ञस्योदकस्य वा मातरानिर्मात्र्यौ यद्रपः पापं कृच्छ्रं चास्ति तदपभरतां अपहरतां अपनयतां हे द्यौः हे पृथिवि क्षमा क्षमायां सत्यां यद्वा क्षमा पृथगप्युच्यते क्षमाप्यपहरतु एवमुक्त्वा सुबन्धुं बन्ध्वादयोऽब्रुवते हे सुबन्धो ते त्वां मोषु मैव सुसुष्ठु किंचन रपः कृच्छ्रं अममत् हिनस्तु ॥ ८ ॥

अथ नवमी—

अवद्वके अवत्रिका दिवश्चरन्ति भेषजा । क्षमाचरिष्ण्वेककं भरं
तामपयद्रपो द्यौःपृथिविक्षमारपो मोषुते किंचनाममत् ॥ ९ ॥

अव । द्वके इति । अव । त्रिका । दिवः । चरन्ति । भेषजा ।
क्षमा । चरिष्णु । एककम् । भरताम् । अप । यत् । रपः । द्यौः ।
पृथिवि । क्षमा । रपः । मो इति । सु । ते । किम् ।
चन । आममत् ॥ ९ ॥

दिवोद्युलोकात् भेषजा भेषजानि द्वके द्विकं त्रिका त्रिकं चावचरन्ति तत्राश्विनौ द्विकमवचरतः इळासरस्वतीभारतीत्रिकमवचरति क्षमा क्षमायां एककं चरिष्णु चरति एकमेव भेषजमित्यभिप्रायः तानि सर्वाणि सुबन्धोः प्राणंपरिरक्षन्त्वितिशेषः भरतामित्यादि-पूर्ववत् ॥ ९ ॥

अथ दशमी—

समिन्द्रेरय गामनड्वाहं य आवहदुशीनराण्या अनः ।
भरतामपयद्रपो द्यौःपृथिविक्षमारपो मोषुते किंचनाममत् ॥ १० ॥ २३ ॥

सम् । इन्द्र । ईरय । गाम् । अनड्वाहम् । यः । आ । अवहत् । उशीनराण्याः । अनः । भरताम् । अप । यत् । रपः । द्यौः । पृथिवि । क्षमा । रपः । मो इति । सु । ते । किम् । चन । आममत् ॥ १० ॥ २३ ॥

हे इन्द्र समीरय संप्रेरय किं गां गंतारं अनड्वाहं अनोवहनसमर्थंगां योनड्वानावहत् आ-हवति अस्मान् प्रति किं अनः शकटं कस्य उशीनराण्याः एतन्नामिकायाओषधेः ययार्त-मनुलिंपन्ति सोशीनराणी । भरतामित्यादिपूर्ववत् ॥ १० ॥

॥ इत्यष्टमस्य प्रथमे त्रयोविंशोवर्गः ॥ २३ ॥

आजनमिति द्वादशर्चमष्टादशं सूक्तं गौपायनाबन्ध्वादयऋषयः षष्ठ्यास्त्वगस्त्यस्यस्वसा एषां माता ऋषिका आदितः पंच गायत्र्यः अष्टमीनवम्यौ पंक्ती शिष्टाअनुष्टुभः आदितश्च-तसृणां असमातिनाम्नोराज्ञः स्तूयमानत्वात् सएव देवता पंचम्याइन्द्रः षष्ठ्याअप्यसमातिः ततः पंचानां सुबन्धोर्जीविताह्वानरूपोर्थोदेवता अयं मेहस्तइत्यस्याः लब्धसंज्ञस्यसुबन्धोः स्पर्शन-हेतुभूतादेवता । तथाचानुक्रमणिका—आजनमिति द्वादशर्चमानुष्टुभं चतसृभिरसमातिमस्तुवन् पंचम्येन्द्रं षष्ठ्यागस्त्यस्वसा मातैषां राजानमस्तौत् पराभिः सुबन्धोर्जीवमाह्वयन्त्यंत्यया ल-ब्धसंज्ञमस्पृशन् पंचाद्यागायत्र्योष्टम्याद्येपंक्तीइति ।

तत्र प्रथमा—

आजनंत्वेषसंदृशंमाहीनानामुपस्तुतम् । अगन्मबिभ्रतोनमः ॥ १ ॥

आ । जनम् । त्वेषऽसंन्दृशम् । माहीनानाम् । उपऽस्तुतम् । अगन्म । बिभ्रतः । नमः ॥ १ ॥

इदमादिभिस्तिसृभिः राजानं स्तुवन्ति वयं बन्ध्वादयोजनं जनपदं असुनीतिस्वभूतं आगन्म अभिगताः गमेर्लुङि मंत्रेघसेति च्लेर्लुक् म्वोश्चेति मकारस्यनकारः कीदृशं जनं त्वेष-संदृशं दीप्तदर्शनं माहीनानां महतां उपस्तुतं उपगतस्तुतिं तादौचेति गतेः प्रकृतिस्वरः कीदृशा-वयं नमोनमस्कारं बिभ्रतोधारयन्तः कुर्वन्तइत्यर्थः यद्वा जनं असमातिमित्यर्थः । शिष्टं समा-नं नमोबिभ्रतइति राजकृतं नमस्कारं धारयन्तइत्यर्थः ॥ १ ॥

अथ द्वितीया—

**असमातिंनितोशनंत्वेषंनियर्यिनंरथम् । भजेरथस्यसत्पतिम् ॥ २ ॥**

असमातिम् । निऽतोशनम् । त्वेषम् । निऽययिनम् । रथम् ।
भजेऽरथस्य । सत्ऽपतिम् ॥ २ ॥

असमातिं राजानं नितोशनं शत्रूणां हन्तारं नितोशतिर्वधकर्मा त्वेषं दीप्तं नियर्यिनं रथमित्युपमाप्रधानोनिर्देशः रथवत्सर्वाभिमतप्राप्तिसाधनं भजेरथस्य एतन्नामकस्य राज्ञोवंशे जातं यद्वा एतन्नामा कश्चिदस्य शत्रुः तस्य नियर्यिनं हलदन्तादिति सप्तम्याअलुक् सत्पतिं सतां पालकं ॥ २ ॥

अथ तृतीया—

**योजनान्महिषाँइवातितस्थौपवीरवान् । उतापवीरवान्युधा ॥ ३ ॥**

यः । जनान् । महिषान्ऽइव । अतिऽतस्थौ । पवीरवान् ।
उत । अपवीरवान् । युधा ॥ ३ ॥

योसमातिर्जनान् स्वविरोधिभूतान् अतितस्थौ अतिक्रम्य तिष्ठति पराभवतीत्यर्थः किमिव महिषान् सिंहइव । कीदृशः सन् पवीरवान् पवीरः पविः खड्गवान् उतापिवा अपवीरवान् अपगतखड्गः सन् शस्त्रसहायमपि कदाचिन्नापेक्षतइत्यर्थः । किंकुर्वन् युधा योधनेन युध्वेत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

**यस्येक्ष्वाकुरुपव्रतेरेवान्मराय्येधते । दिवीवपंचकृष्टयः ॥ ४ ॥**

यस्य । इक्ष्वाकुः । उप । व्रते । रेवान् । मरायी । एधते ।
दिविऽइव । पञ्च । कृष्टयः ॥ ४ ॥

यस्य जनपदस्य इक्ष्वाकूराजा व्रते कर्मणि रक्षणरूपे उपैधते प्रवर्धते कीदृशः सन् रेवान् रयिवान् मरायी शत्रूणां मारकश्च सन् विशेषणद्वयेन जनानां दानादिरूपेण धनलाभःपररा

जोपद्रवाभावश्चोक्तोभवति एवं सति तद्विषयस्थाः पंचकृष्टयोनिषादपंचमाश्चत्वारोवर्णादिवीव द्युलोके यथा संकल्पसिद्धाः सन्तः सुखिनोभवन्ति तद्वत् सुखिनोभवन्तीति शेषः ॥ ४ ॥

अथ पंचमी—

इन्द्रंक्षत्रासंमातिषुरथंप्रोष्ठेषुधारय । दिवींवसूर्यंदृशे ॥ ५ ॥

इन्द्रं । क्षत्रा । असंमातिषु । रथंऽप्रोष्ठेषु । धारय ।
दिविऽइंव । सूर्यम् । दृशे ॥ ५ ॥

अनयेन्द्रमाशासते असमात्यर्थं हेइन्द्र क्षत्रा क्षत्राणि बलानि रथप्रोष्ठेषु असमातिषु एकस्मिन्बहुवचनं पूजार्थं रथप्रोष्ठे असमातौ धारय । तत्र दृष्टान्तः—दिवीव सूर्यं दृशे सर्वेषां दर्शनाय स्थापितवानसि तद्वदत्र बलं धारय ॥ ५ ॥

अथ षष्ठी—

अगस्त्यस्यनद्भ्यःसप्तीयुनक्षिरोहिता ।
पणीन्न्यक्रमीरभिविश्वान्राजन्नराधसः ॥ ६ ॥ २४ ॥

अगस्त्यस्य । नत्ऽभ्यः सप्ती इति । युनक्षि । रोहिता । पणीन् ।
नि । अक्रमीः । अभि । विश्वान् । राजन् । अराधसः ॥ ६ ॥ २४ ॥

अनयागस्त्यस्य स्वसा बन्ध्वादीनां माता राजानं स्तौति हेराजन्नसमाते त्वं अगस्त्यस्य ऋषेर्नद्भ्योनंदयितृभ्योबन्ध्वादिभ्योनिमित्तभूतेभ्यः तेषां धनप्राप्तये सप्ती सर्पणस्वभावौ अश्वौ रोहिता लोहितवर्णौ युनक्षि योजय रथे तथाकृत्वा विश्वान् सर्वान् अराधसःअनाराधयतः अयजमानान् पणीन् वणिजोलुब्धकान् नि निकृष्टं नितरां वा अभ्यक्रमीः अभिभव ॥ ६ ॥

॥ इत्यष्टमस्य प्रथमे चतुर्विंशोवर्गः ॥ २४ ॥

अथ सप्तमी—

अयंमातायंपितायंजीवातुरागमत् ।
इदंतवप्रसर्पणंसुबन्धवेहिनिरिहि ॥ ७ ॥

अयम् । माता । अयम् । पिता । अयम् । जीवातुः । आ ।
अगमत् । इदम् । तव । प्रऽसर्पणम् । सुबन्धो इति
सुऽबन्धो । आ । इहि । निः । इहि ॥ ७ ॥

अत्र सूक्तशेषे शाट्यायनकं—अथाग्निं द्विपदेन सूक्तेनास्तुवन् अग्निः स्तुतआजगाम आगत्य चाह किंकामामागच्छतेति सुबन्धोरेवासुं पुनर्नेतुमित्यब्रुवन् एषोन्तः परिधीत्यब्रवीत् तमादध्वमिति तंनिराहरन्नयंमातायंपितेति । शौनकश्च—स्तुतःसराजासुप्रीतस्तस्थौगौपायनानिति । सूक्तेनतेस्तुवन्नग्निंद्विपदेनयथात्रिषु ॥ १ ॥ अथाग्निरब्रवीदेतानयमन्तःपरिध्यसुः । सुबन्धोरस्यचेक्ष्वाकोर्मयागुप्तोहितार्थिना ॥ २ ॥ सुबन्धवेप्रदायासुंजीवेत्युक्त्वाचपावकः । स्तुतोगौपायनैःप्रीतोजगामत्रिदिवंप्रति ॥ ३ ॥ अयंमातेतिहृष्टास्तेसुबन्धोरसुमाह्वयन् । शरीरमभिनिर्दिश्यसुबन्धोःपतितंभुवि ॥ ४ ॥ सूक्तशेषंजगुश्चास्यचेतसोधारणायतेइति ॥ ५ ॥ अयमग्निर्माता अयमेव पिता अयं जीवातुर्जीवयिता आगमदाजगाम अतोहे सुबन्धोर्जीव परिधौ वर्तमान यस्मादिदं शरीरं तव प्रसर्पणं प्रकर्षेण गतिसाधनं अतइदं प्रत्येहि आगच्छ निरिहि निर्गच्छ परिधेः सकाशात् । अन्ये एवं व्याचक्षते—हे निर्गतप्राण सुबन्धोः संबन्धिन् अयं विभक्तिव्यत्ययः इयं माता अयं पिता अयं जीवातुर्जीवनफलभूतः पुत्रश्चागमदिति संबध्यते सर्वे त्वामागताः दुःखिताः सन्तः । शिष्टं समानं ॥ ७ ॥

अथाष्टमी—

यथायुगंवरत्रयानह्यन्तिधरुणायकम् ।
एवादाधारतेमनोजीवातवेनमृत्यवेथोअरिष्टतातये ॥ ८ ॥

यथा । युगम् । वरत्रया । नह्यन्ति । धरुणाय । कम् । एव ।
दाधार । ते । मनः । जीवातवे । न । मृत्यवे ।
अथो इति । अरिष्टऽतातये ॥ ८ ॥

यथा युगं वरत्रया पाशेन नह्यन्ति बध्नन्ति धरुणाय रथादिधारणाय कमितिपदपूरणः एव एवं ते मनोदाधार परिधावग्निः किमर्थं जीवातवे जीवनाय मृत्यवे मरणाय न अथो अपिच अरिष्टतातये अविनाशाय स्वार्थिकस्तातिः ॥ ८ ॥

अथ नवमी—

यथेयंपृथिवीमहीदाधारेमान्वनस्पतीन् ।
एवादाधारतेमनोजीवातवेनमृत्यवेथोअरिष्टतातये ॥ ९॥

यथा । इयम् । पृथिवी । मही । दाधार । इमान् ।
वनस्पतीन् । एव । दाधार । ते । मनः । जीवातवे ।
न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ ९ ॥

यथेयं पृथिवी मही महती इमान् वनस्पतीन् वृक्षादीन् दाधार धारयति शिष्टमुक्तं॥९॥

अथ दशमी—

यमादहंवैवस्वतात्सुबन्धोर्मनआभरम् ।
जीवातवेनमृत्यवेथोअरिष्टतातये ॥ १० ॥

यमात् । अहम् । वैवस्वतात् । सुऽबन्धोः । मनः । आ । अभरम् ।
जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ १० ॥

इयंनिगदसिद्धा ॥ १० ॥

अथैकादशी—

न्यं१ग्वातोववातिन्यंक्तपतिसूर्यः ।
नीचीनमघ्न्यादुहेन्यंग्भवतुतेरपः ॥ ११ ॥

न्यक् । वातः । अव । वाति । न्यक् । तपति । सूर्यः । नीचीनम् ।
अघ्न्या । दुहे । न्यक् । भवतु । ते । रपः ॥ ११ ॥

वातोवायुर्द्युलोकात् न्यक् नीचीनं अववाति गच्छति सूर्यश्च न्यक् तपति अघ्न्या अहननीया गौर्नीचीनं दुहे दुग्धे एवं ते रपः पापं न्यक् नीचीनं भवतु ॥ ११ ॥

अथ द्वादशी—

अयंमेहस्तोभगवानयंमेभगवत्तरः ।
अयंमेविश्वभेषजोयंशिवाभिमर्शनः ॥ १२ ॥ २५ ॥

अयम् । मे । हस्तः । भगऽवान् । अयम् । मे । भगवत्ऽतरः ।
अयम् । मे । विश्वऽभेषजः । अयम् । शिवऽअभिमर्शनः॥१२॥२५॥

अनया बन्ध्वादयोलब्धजीवं सुबन्धुं पाणिभिरस्पृशन् अयं मे हस्तोभगवान् भाग्यवान् यस्मात् सजीवं सुबन्धुं स्पृशति तस्मात् तथाऽयं मे हस्तोभगवत्तरः अतिशयेन भगवान् तथायं मे हस्तोविश्वभेषजः जीवचिकित्सासाधनसर्वौषधवान् तत्स्थानीयोवा अयं शिवाभिमर्शनः मंगलस्पर्शनः यतोजीवन्तं स्पृशति अतइत्यर्थः ॥ १२ ॥

॥ इत्यष्टमस्य प्रथमे पंचविंशोवर्गः ॥ २५ ॥

॥ इति दशमे मण्डले चतुर्थोनुवाकः ॥ ४ ॥

पंचमेनुवाकेष्टौ सूक्तानि तत्रेदमित्थेति सप्तविंशत्यृचं प्रथमं सूक्तं मानवस्य नाभानेदिष्ठस्यार्षं त्रैष्टुभं इदमादीनि षट्सूक्तानि वैश्वदेवानि । तथाचानुक्रान्तं—इदमित्थासप्ताधिकानाभानेदिष्ठोमानवो वैश्वदेवं तदिति । पृष्ठ्यस्य षष्ठेहनि वैश्वदेवशस्त्रे आभिप्लविकातिदेशप्राप्तस्योषासानक्तेत्यस्य स्थाने इदं सूक्तं । सूत्रितंच—उद्धृत्यचोत्तमं सूक्तं त्रीणीदमित्थारौद्रमिति । अत्रैतरेयब्राह्मणं[1]—नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्त्सोब्रवीदेत्य किं मह्यमभाक्तेत्येतमेव निष्ठावमववदितारमित्यब्रुवन्नित्यादि । तत्रनाभानेदिष्ठो भ्रातृभिर्भागेनिराकृतःपितृसामीप्यमागम्य किं मह्यं भागं न कल्पितवानसीत्यपृच्छत् । सचकिमनेन भागेनांगिरसः स्वर्गार्थं सत्रमासीनाः षष्ठाहःसपर्यंतमनुष्ठाय मुह्यन्ति तानिदमित्थेति सूक्ते संयच्छ ते स्वर्गंयंतोवशिष्टाः सहस्रसंख्याकागादास्यन्तीति पित्राप्रेरितोंगिरसांसमीपमागत्य तेभ्यः सत्रपरिवेषणं गोसहस्रमुत्कोचं परिकल्प्य तानेते सूक्ते षष्ठेहन्यशंसयत्ते चैतत्सूक्तसामर्थ्याद्यज्ञं परं पारं प्रापय्य स्वर्जिगमिषवोस्मै गोसहस्रं प्रादुः तं च तद्गोसहस्रं स्वीकुर्वाणं कश्चन

१ ऐ० ब्रा० ५. १४.।

कृष्णशवासीपुरुषउत्तरतउत्थाय ब्राह्मणास्मदीयं यज्ञशेषभागं मास्वीकुर्वित्यब्रवीत्। सच मह्यमंगिरसः प्रादुरिति प्रत्यब्रवीत् तर्हिब्राह्मण तव पितरमेव पृच्छ कस्मै भागः प्राप्नुयादित्युक्तः पितृसमीपमागत्यपित्रा रुद्रायायं न्याय्यइति तेनोक्तस्तवैवायं भागइति मम पिताब्रवीदितिप्रत्युवाच । ततोयथार्थकथनेन तुष्टः पुरुषोनाभानेदिष्ठायैव स्वभागं प्रादादित्युक्तं । तथाध्वर्युब्राह्मणेपि—मनुःपुत्रेभ्यो दायं व्यभजत् । सनाभानेदिष्ठं वैमानवमित्यादिनायमर्थउक्तः । तत्सर्वंमत्रानुसन्धेयं ।

तत्र सूक्ते प्रथमा—

**इ॒दमि॒त्थारौद्रं॑गू॒र्तव॑चा॒ब्रह्म॒क्रत्वा॒शच्या॑म॒न्तरा॒जौ ।**
**क्रा॒णायद॑स्यपि॒तरा॑मंह॒ने॒ष्ठाः पर्ष॑त्प॒क्थेअह॒न्नास॒प्तहोतॄ॑न् ॥ १ ॥**

इ॒दम् । इ॒त्था । रौद्र॑म् । गू॒र्तऽव॑चाः । ब्रह्म॑ । क्रत्वा॑ । शच्या॑म् ।
अ॒न्तः । आ॒जौ । क्रा॒णा । यत् । अ॒स्य॒ । पि॒तरा॑ । मं॒ह॒ने॒ऽस्थाः ।
पर्ष॑त् । प॒क्थे । अह॑न् । आ । स॒प्त । होतॄ॑न् ॥ १ ॥

गूर्तवचाः उद्यतवचनोनाभानेदिष्ठइदं ब्रह्म स्तोत्रं रौद्रं रुद्रप्रीणनं इत्था इत्थमिदानीं क्रियमाणप्रकारं क्रत्वा प्रज्ञानेन निष्पाद्यं स्तोत्रं शच्यामन्तःकर्मणिमध्ये सत्रमध्ये आजौ अंगिरसां संघे करोतीतिशेषः यत्स्तोत्रं क्राणा भागं कुर्वाणौ अस्य पितरा पितरौ अन्ये च मंहनेष्ठाः भागप्रदाने वर्तमानाभ्रातरश्च गोलाभसाधनत्वेनाकल्पयन्नितिशेषः तेन नाभानेदिष्ठः पक्थे पक्तव्ये अहन् अहनि षष्ठेहनीत्यर्थः ते षष्ठमेवाहरागत्य मुह्यंति तानेते सूक्ते षष्ठेहनि शंसयेत्युक्तत्वात् सप्तहोतॄन् होतृप्रशास्तृब्राह्मणाच्छंस्यादिकान् आपर्षत् सर्वतोऽपूरयत् इदमित्थेति सूक्ताभ्यां यज्ञपारं प्रापयामासेत्यर्थः ॥ १ ॥

अथ द्वितीया—

**सइद्दा॒नाय॒दभ्या॑यव॒न्वञ्च्यवा॑नः॒सूदै॑रमिमीत॒वेदि॑म् ।**
**तूर्व॑याणोगू॒र्तव॑चस्तमः॒क्षोदो॒नरेत॑इ॒तऊ॑तिसिंचत् ॥ २ ॥**

---

१ तै० सं० ३. १. ९. ।

सः । इत् । दानाय॑ । दभ्या॑य । वन्वन् । च्यवा॑नः । सूदैः॑ ।
अमिमीत । वेदि॑म् । तूर्व॑याणः । गूर्तव॑चःऽतमः । क्षोदः॑ ।
न । रेतः॑ । इतःऽऊ॑ति । सिञ्चत् ॥ २ ॥

सइत् सकृष्णशवासीपुरुषोरुद्राख्योदानाय स्तोतॄणांधनप्रदानाय दभ्याय शत्रूणां वधाय च वन्वन् स्तोतॄन् संभजन् सूदैः हिंसकैः शस्त्रैः च्यवानोरक्षांसि च्यावयन् वेदिममिमीत परिमितवान् यज्ञवास्त्वधिष्ठितवानित्यर्थः । तं कृष्णशवास्युत्तरतउपोत्थायाब्रवीन्मम वांइदंममवैवास्तुहमितीतिब्राह्मणं । तदेवाह—तूर्वयाणस्तूर्णंगमनोगूर्तवचस्तमः अत्यन्तमुद्यतवचाः रुद्रः क्षोदोन उदकमिव उदकं यथा घनः सिंचति तद्वद्रेतः स्वसामर्थ्यमितऊति इतोगमनवत् यथा भव तितथासिंचत् प्रेरितवानित्यर्थः । यद्वा अनेनोत्तरार्धेनोत्तराभ्यां चप्रासंगिकी अश्विनोः स्तुतिः क्रियते । तूर्वयाणः तूर्णगमनोतिशयेनोद्यतवचनोरुद्रः क्षोदोन उदकमिव रेतः उत्पादनसामर्थ्योपेतं इतऊति सिंचत् जनयामासाश्विनौ अन्यत्र इतऊती इत्यश्विनोरभिधानात् अन्यत्र तयोरुद्रपुत्रत्वप्रसिद्धेश्चायमर्थोलभ्यते ॥ २ ॥

अथ तृतीया—

मनो॒नये॑षु॒हव॑नेषु॒ति॒ग्मंविपः॒शच्या॑वनु॒थोद्रव॑न्ता ।
आयःशर्या॑भिस्तुविनृ॒म्णोअ॒स्याश्री॑णीता॒दिशं॒गभ॑स्तौ ॥ ३ ॥

मनः॑ । न । येषु॑ । हव॑नेषु । ति॒ग्मम् । विपः॑ । शच्या॑ ।
व॒नु॒थः । द्रव॑न्ता । आ । यः । शर्या॑भिः । तु॒वि॒ऽनृ॒म्णः ।
अ॒स्य । अश्री॑णीत । आ॒ऽदिश॑म् । गभ॑स्तौ ॥ ३ ॥

हे अश्विनौ युवां मनोन मनइव यथा मनस्तिग्मं तीक्ष्णमाशु धावति एवं येषु हवनेषु आह्वानेषु विपः स्तोतुः शच्या प्रज्ञानेन गन्तव्यमिति बुध्या द्रवन्ता द्रवन्तौ गच्छन्तौ वनुथः अध्वर्युं संभजथः योध्वर्युः आआभिमुख्येन तुविनृम्णः प्रभूतहविर्लक्षणधनः सन् अस्य कर्मणि प्रवृत्तस्य मम संबन्धी शर्याभिरंगुलीभिः अश्रीणीत श्रीणाति किं कृत्वा गभस्तौ हस्ते

१ ऐ० ब्रा० ५. १४.

भूत्वा आदिशं आदिश्य इदमश्विभ्यामिति निर्दिश्येत्यर्थः । तादृशं मदीयमध्वर्युं येषु हवनेषु वनुथः तौ युवां हुवइत्युत्तरत्र संबन्धः ॥ ३ ॥

अथ चतुर्थी—

कृष्णायद्गोष्वरुणीषुसीदद्दिवोनपाताश्विनाहुवेवाम् ।
वीतंमेयज्ञमागतंमेअन्नंववन्वांसानेषमस्मृतध्रू ॥ ४ ॥

कृष्णा । यत् । गोषु । अरुणीषु । सीदत् । दिवः । नपाता ।
अश्विना । हुवे । वाम् । वीतम् । मे । यज्ञम् । आ । गतम् । मे ।
अन्नम् । ववन्वांसा । न । इषम् । अस्मृतध्रू इत्यस्मृतऽध्रू ॥ ४ ॥

कृष्णा रात्रिर्यद्यदा अरुणीषु अरुणवर्णासु गोषु सीदत् निवसति उषाः विभानाय रथमधितिष्ठतीत्यर्थः । अरुण्योगावउषसामितिनिरुक्तं । तदा उषःकाले हे दिवोनपाता दीप्यमानस्य स्वर्गस्य प्रकाशात्मकस्य वा न पातयितारौ हे अश्विनौ वां हुवे आह्वये वीतं कामयेथां मे अन्नं हविर्लक्षणं तदर्थं मे यज्ञमागतं आगच्छतं इषमन्नं ववन्वांसा न संभजमानावश्वाविव तद्वदागतं । कीदृशौ युवां अस्मृतध्रू अस्मृतद्रोहौ मयिद्रोहं न स्मरन्तौ ॥ ४ ॥

अथ पंचमी—

प्रथिष्टयस्यवीरकर्ममिष्णदनुष्ठितंनुनर्योअपौहत् ।
पुनस्तदावृहतियत्कनायादुहितुराअनुभृतमनर्वा ॥ ५ ॥ २६ ॥

प्रथिष्ट । यस्य । वीरऽकर्मम् । इष्णत् । अनुऽस्थितम् । नु । नर्यः ।
अप । औहत् । पुनरिति । तत् । आ । वृहति । यत् । कनायाः ।
दुहितुः । आः । अनुऽभृतम् । अनर्वा ॥ ५ ॥ २६ ॥

स्वांशेन भगवान् रुद्रः प्रजापतिर्वास्तोष्पतिं रुद्रमसृजत् इत्येतदादिभिस्तिसृभिर्वदति यस्य प्रजापतेः इष्णत् इषणवत् वीरकर्म लिंगव्यत्ययः वीरकर्म रेतइत्यर्थः येन रेतसोत्पन्नावीराभवन्ति तादृग्रेतः प्रथिष्ट प्रथितमासीत् तद्रेतोऽनुष्ठितं प्रजापतिना अपत्यार्थं निषिक्तं नर्यो नरेभ्योदेवेभ्योहितोरुद्रः अपौहत् अपोहति । तदेवाह—पुनस्तद्रेतआवृहति सर्वतउद्यच्छति उ-

द्रमयति पुरुषाकारेण स्वयमुत्पन्नः सन् । कीदृशं रेतः यद्रेतः कनायाः कान्तायाः दुहितुः स्वपुत्र्याः तस्यामित्यर्थः तत्र प्रजापतिना अनुभूतं आः आसीत् अस्तेः सिपि रूपं । कीदृशोरुद्रः अनर्वा अन्यस्मिन्नप्रत्यृतः प्रजापतिर्वैस्वांदुहितरमभ्यध्यायद्दिवमित्यन्यआहुरुषसमित्यन्यइति ब्राह्मणं ॥ ५ ॥

॥ इत्यष्टमस्य प्रथमे षड्विंशोवर्गः ॥ २६ ॥

अथ षष्ठी--

मध्यायत्कर्त्वमभवदभीकेकामंकृण्वानेपितरियुवत्याम् ।
मनानग्रेतोजहतुर्वियन्तासानौनिषिक्तंसुकृतस्ययोनौ ॥ ६ ॥

मध्या । यत् । कर्त्वम् । अभवत् । अभीके । कामम् । कृण्वाने ।
पितरि । युवत्याम् । मनानक् । रेतः । जहतुः । विऽयन्ता ।
सानौ । निऽसिक्तम् । सुऽकृतस्य । योनौ ॥ ६ ॥

कामं यथेच्छं कृण्वाने कुर्वाणे पितरि प्रजापतौ युवत्यां दुहितरि उषसि दिवि वा दिवमित्यन्यइतिहिब्राह्मणं प्रदर्शितं । मध्या तयोर्मध्ये अन्तरिक्षमध्ये वा अभीके प्राप्ते समीपे यत्कर्त्वं कर्माभवत् मिथुनीभावाख्यं तदानीं मनानक् अल्पं रेतोजहतुः त्यक्तवन्तौ किंकुर्वाणाविति तत्राह वियन्तौ परस्परमभिगच्छन्तौ प्रजापतिना सानौ समुच्छ्रिते स्थाने सुकृतस्य यज्ञस्य योनौ निषिक्तमासीदित्यर्थः । ततोरुद्रउत्पन्नइत्यर्थः ॥ ६ ॥

अथ सप्तमी--

पितायत्स्वांदुहितरमधिष्कन्क्ष्मयारेतःसंजग्मानोनिषिञ्चत् ।
स्वाध्योजनयन्ब्रह्मदेवावास्तोष्पतिंव्रतपांनिरतक्षन् ॥ ७ ॥

पिता । यत् । स्वाम् । दुहितरम् । अधिऽस्कन् । क्ष्मया । रेतः ।
सम्ऽजग्मानः । नि । सिञ्चत् । सुऽआध्यः । अजनयन् । ब्रह्म ।
देवाः । वास्तोः । पतिम् । व्रतऽपाम् । निः । अतक्षन् ॥ ७ ॥

---

१ ऐ० ब्रा० ३. ३३ ।    २ ऐ० ब्रा० ३. ३३ ।

पिता प्रजापतिर्यद्यदा स्वां दुहितरं दिवमुषसं वा अधिष्कन् अध्यस्कंदत् तदानीमेव क्ष्मया पृथिव्या सह संजग्मानः संगच्छमानः प्रजापतिः अस्मिन्लोके रोहितंभूताम्ृश्योभूत्वा रेतोनिषिंचत् निषेकमकरोत्। ताम्ृश्योभूत्वा रोहितं भूतामभ्यैदिति ब्राह्मणं[1]। तदानीं स्वाध्यः सुध्यानाः सुकर्माणोवा देवाब्रह्माजनयन्नुदपादयन्। किं तद्ब्रह्मेति तदाह—वास्तोष्पतिं यज्ञवास्तुस्वामिनं व्रतपां व्रतस्य कर्मणोरक्षःप्रभृतिभ्यः पालकं निरतक्षन् समपादयन् यज्ञवास्तुस्वामित्वं दत्वा कर्मरक्षकत्वेन निर्मितवन्तइत्यर्थः॥ ७॥

अथाष्टमी—

सईंवृषानफेनंमस्यदाजौस्मदापरैदपंदभ्रचेताः।
सरत्पदानदक्षिणापराङ्क्नतानुमेपृशन्योजगृभ्रे॥ ८॥

सः। ईम्। वृषा। न। फेनम्। अस्यत्। आजौ। स्मत्। आ।
परा। ऐत्। अप। दभ्रऽचेताः। सरत्। पदा। न। दक्षिणा।
पराऽवृक्। न। ताः। नु। मे। पृशन्यः। जगृभ्रे॥ ८॥

अंगिरसां सत्रांते नाभानेदिष्ठोगोनिरोधायागच्छन्तं वास्तोष्पतिं पुरतः पश्यन् वदति स ईं सोयं वृषान वर्षकइन्द्रइव सयथा नमुचिवधार्थं आजौसंग्रामे फेनमस्यत् क्षिप्तवान् तद्वत् क्षेपमनावास्तोष्पतिः तदानीं तवैव वास्तुभागोयुक्तइति यथार्थकथनानन्तरं स्मत् अस्मत्तः आ पपरैत् अपपरागच्छेदिति दभ्रचेताः अल्पमनस्कः दक्षिणा दक्षिणार्थानां गवां परावृक् परावर्जयिता सन् पदा पदानि नसरत् नसरति अस्मदभिमुखं नागच्छति मे मम संबन्धिन्यस्तागाः अंगिरोभिर्दत्ताः पृशन्यः पथिकानामभिस्पर्शनकुशलोरुद्रोन जगृभ्रे नगृह्णातीत्येवमाशास्ते॥ ८॥

अथ नवमी—

मक्षूनवह्निःप्रजायाउपब्दिरग्निंनन्नग्नउपसीददूधः।
सनितेध्मंसनितोतवाजंसधर्ताजज्ञेसहसायवीयुत्॥ ९॥

---

1 ऐ० ब्रा० ३. ३३.।

मक्षु । न । वह्निः । प्रऽजायाः । उपब्दिः । अग्निम् । न । नग्नः ।
उप । सीदत् । ऊधः । सनिता । इध्मम् । सनिता । उत ।
वाजम् । सः । धर्ता । जज्ञे । सहसा । यविऽयुत् ॥ ९ ॥

वास्तोष्पतिनारुद्रेण गोप्यमानेस्मिन्यज्ञे वह्निर्वह्निवद्दाहकोराक्षसादिर्मक्षु शीघ्रं नोपसीदत् नागच्छति । योवह्निः प्रजायाउपब्दिः उपपीडकोभवति यज्ञविघातार्थमागच्छन् ऋत्विगादिरूपायाः प्रजायाः पीडांकरोत्यहनि तथा ऊधः रात्रिनामैतत् रात्रावपि अग्निं ज्वलन्तं नग्नोविवसनः राक्षसादिर्नोपसीदत् एवं रुद्रे रक्षितरि सति सोग्निरिध्मं सनिता संभक्ता जज्ञे उत्पन्नः उतापिच वाजं हविर्लक्षणमन्नं सनिता जज्ञे धर्ता जगद्धारकश्चजज्ञे उत्पन्नः सोग्निः सहसा यज्ञस्य बलेन यवीयुत् यज्ञमिश्रयितॄणां रक्षःप्रभृतीनां योद्धा जज्ञे ॥ ९ ॥

अथ दशमी—

**मक्षूकनायाःसख्यंनवग्वाऋतंवदन्तऋतयुंक्तिमग्मन् ।**
**द्विबर्हसोयउपगोपमागुरदक्षिणासोअच्युतादुधुक्षन् ॥१०॥२७॥**

मक्षु । कनायाः । सख्यम् । नवऽग्वाः । ऋतम् । वदन्तः ।
ऋतऽयुक्तिम् । अग्मन् । द्विऽबर्हसः । ये । उप । गोपम् । आ ।
अगुः । अदक्षिणासः । अच्युता । दुधुक्षन् ॥ १० ॥ २७ ॥

नवग्वा अंगिरसः गवामयनाख्यं सत्रमनुतिष्ठतामंगिरसां मध्ये ये नवसु मासेषु लब्धगावः संतः उत्थितास्ते नवग्वाः ते ऋतं वदन्तोंगिरसः मक्षु शीघ्रं कनायाः कमनीयायाः श्रुतेः नाभानेदिष्ठप्रेरितायाः सकाशात् ऋतयुक्तिंउक्तयागपरिसमाप्तिं अग्मन् प्राप्ताः । यद्वा ऋतयुक्तिं यज्ञयोगोपेतं ऋतं शब्दं स्तुतिं वदन्तोंगिरसः कनायाः पृश्न्याः सख्यमग्मन्नितियोजना । द्विबर्हसोद्वयोः स्थानयोः द्यावापृथिव्योः परिवृढायेंगिरसोगोपं गोपायितारं नाभानेदिष्ठमिन्द्रं वा उपागुरुपगतास्ते अदक्षिणासोदक्षिणारहिताः अदक्षिणानि सत्राणीत्याहुरितिहि वचनं ये य-

जमानास्तऋत्विजइति च । ते चअच्युताउदकानि अक्षीणानि फलानि वा दुधुक्षन् दुग्धवन्तः ॥ १० ॥

॥ इत्यष्टमस्य प्रथमे सप्तविंशोवर्गः ॥ २७ ॥

अथैकादशी–

मक्षूकनायाःसख्यंनवीयोराधोनरेतंऋतमित्तुरण्यन् ।
शुचियत्तेरेक्णआयंजन्तसबर्दुघायाःपयंउस्रियायाः ॥ ११ ॥

मक्षु । कनायाः । सख्यम् । नवीयः । ऋतम् । वदन्तः ।
ऋतऽयुक्तिम् । अग्मन् । शुचि । यत् । ते । रेक्णः । आ ।
अयजन्त । सबःऽदुघायाः । पयः । उस्रियायाः ॥ ११ ॥

मक्षु शीघ्रं कनायाः कमनीयायाः पृश्न्याः घर्मदोग्ध्याः नवीयोनवतरं सख्यं प्राप्येति शेषः । अथवा नवीयइति राधोविशेषणं नवतरं राधोधनमिव रेतः सिच्यमानं ऋतमुदकं तुरण्यन् दिवः सकाशात् प्रेरितवन्तः । हे इन्द्र ते तुभ्यं यद्यदा रेक्णः पाथोलक्षणं धनंआ अभिमुखं अयजन्त अपूजयन् । कीदृशं रेक्णः सबर्दुघायाः सबरित्यमृतनाम अमृतदोग्ध्या उस्रियायाः गोः पयः पानयोग्यं रसं अयजन्त तदोदकं तुरण्यन्निति । अत्राध्वर्युब्राह्मणं–अंगिरसोवैसत्रमासत तेषांपृश्निर्घर्मदुघासीत् सर्जीषेणाजीवत् तेब्रुवन् कस्मैनुसत्रमास्महे येस्याओषधीर्नजनयामइति । तेदिवोवृष्टिमसृजन्तेति ॥ ११ ॥

अथ द्वादशी–

पृश्वायत्पृश्वावियुताबुधन्तेतिब्रवीतिवक्तरीररांणः ।
वसोर्वसुत्वाकारवोनेहाविश्वंविवेष्टिद्रविणमुपक्षु ॥ १२ ॥

पृश्वा । यत् । पृश्वा । विऽयुता । बुधन्त । इति । ब्रवीति ।
वक्तरि । ररांणः । वसोः । वसुऽत्वा । कारवः । अनेहा ।
विश्वम् । विवेष्टि । द्रविणम् । उप । क्षु ॥ १२ ॥

---

१ तै० सं० ७. १. ४. ।

यद्यदा स्तोतारः पश्वा पशुना गोसमूहेनेत्यर्थः तेन वियुता वियुक्तानि स्वकीयानि गोस्थानानि पश्चा पश्चात् बुधन्त अजानन् तदानीं कारवः कारुरित्यर्थः इति ब्रवीतीत्थं ब्रूते। किमिति वक्तरि स्तोतरि रराणोरममाणोवसोर्वासकात्सकाशात् वसुत्वा अतिशयेन वासयिता यद्वा वसुत्वेति समूहार्थे त्वोनामकरणः गोरूपधनवतोतिशयेन गोसमूहवानित्यर्थः। अनेहाअपापइन्द्रोविश्वं द्रविणं गोरूपं पणिभिरपहृतं धनं क्षु मक्षिवत्यर्थः शीघ्रं उपविवेष्टि उपव्याप्नोति पुनरादातुं। अयमर्थः यदेन्द्रस्यस्तोतारोसुरैरपहृतमात्मीयं गोधनं नजानन्ति ततः प्रागेवागत्येन्द्रः तन्न्यरुधदिति ॥ १२ ॥

अथ त्रयोदशी–

तदिन्न्वस्यपरिषद्वानोअग्मन्पुरूसदन्तोनार्षदंबिभित्सन्।
विशुष्णस्यसंग्रथितमनर्वाविदत्पुरुप्रजातस्यगुहायत् ॥ १३ ॥

तत्। इत्। नु। अस्य। परिऽसद्वानः। अग्मन्। पुरु। सदन्तः।
नार्सदम्। बिभित्सन्। वि। शुष्णस्य। सम्ऽग्रथितम्।
अनर्वा। विदत्। पुरुऽप्रजातस्य। गुहा। यत् ॥ १३ ॥

तदित् तत्रैव नु क्षिप्रमस्येन्द्रस्य परिषद्वानः परितोवर्तमानाः परिचारकारश्मयः अग्मन् प्रकाशनार्थमगच्छन् पुरु पुरूणि कृत्रिमाणि सदन्तः सीदन्तोसुराः नार्षदं नृषदः पुत्रं बिभित्सन् भेत्तुमैच्छन् किंचायं शुष्णस्यैतन्नामस्यासुरस्य पुरुप्रजातस्य बहुप्रादुर्भावस्य संग्रथितं मर्म विदत् वेत्त्ययमिन्द्रः। यदसुरस्य दुर्ज्ञेयं मर्म गुहा गुहायां गोपितं तद्विदत् ॥ १३ ॥

अथ चतुर्दशी–

भर्गोहनामोतयस्यदेवाःस्व१र्णयेत्रिषधस्थेनिषेदुः।
अग्निर्हनामोतजातवेदाःश्रुधीनोहोतऋतस्यहोताध्रुक् ॥ १४ ॥

भर्गः। ह। नाम। उत। यस्य। देवाः। स्वः। न। ये। त्रिऽसधस्थे।
निऽसेदुः। अग्निः। ह। नाम। उत। जातऽवेदाः। श्रुधि।
नः। होतः। ऋतस्य। होता। अध्रुक् ॥ १४ ॥

उतापिच भर्गोहनाम तत्तेजः किल प्रसिद्धं यस्य तेजसः आग्नेयस्य संबन्धिनि त्रिषधस्थे बर्हिषि ये देवाः सन्ति ते सर्वे स्वनं स्वर्गे यथा तथैव निषेदुः निषीदन्ति। उतापिच तत्तेजोग्निर्हनाम अग्निः किल नाम उतापिच जातवेदाः जातप्रज्ञः जातानां वेदिता एतदपि तस्य तेजसोनाम अग्नेर्भर्गइति अग्निरितिजातवेदाइति च त्रीणिनामानीत्यर्थः। अथ प्रत्यक्षकृतः हे होतर्होमनिष्पादकोक्तनामाग्ने ऋतस्य होता यज्ञसंबन्धिनां देवानामाह्वाता अध्रुक् द्रोहरहितस्त्वं नोस्माकमाह्वानं श्रुधि शृणु ॥ १४ ॥

अथ पंचदशी—

उतत्यामेरौद्रावर्चिमन्तानासत्याविन्द्रगूर्तयेयजध्यै ।
मनुष्वद्वृक्तबर्हिषेरराणामन्दूहितप्रयसाविक्षुयज्यू ॥ १५ ॥ २८ ॥

उत । त्या । मे । रौद्रौ । अर्चिऽमन्ता । नासत्यौ । इन्द्र । गूर्तये ।
यजध्यै । मनुष्वत् । वृक्तऽबर्हिषे । रराणा । मन्दू इति ।
हितऽप्रयसा । विक्षु । यज्यू इति ॥ १५ ॥ २८ ॥

उतापिच हे इन्द्र त्या तौ प्रसिद्धौ रुद्रपुत्रौ। क्षोदोनरेतइतऊतिसिंचदितिहि रुद्रपुत्रत्वमुक्तं। अर्चिमन्ता दीप्तिमन्तौ नासत्यावश्विनौ मे गूर्तये स्तुतये यजध्यै यागाय च भवेतामितिशेषः। किंच मनुष्वत् मम पितुर्मनोरिव तस्य यज्ञे यथा तथैव वृक्तबर्हिषे मह्यं रराणा रममाणौ मंदू मदिष्णू हितप्रयसा प्रेरितधनौ विक्षु अस्मदीयेषु पुत्रादिषु तौ यज्यू यष्टव्यौ भवेतामिति शेषः ॥ १५ ॥

॥ इत्यष्टमस्य प्रथमेष्टाविंशोवर्गः ॥ २८ ॥

अथ षोडशी—

अयंस्तुतोराजावन्दिवेधाअपश्चविप्रस्तरतिस्वसेतुः ।
सकक्षीवन्तंरेजयत्सोअग्निंनेमिंनचक्रमर्वतोरघुद्रु ॥ १६ ॥

अयम् । स्तुतः । राजा । वन्दि । वेधाः । अपः । च । विप्रः ।
तरति । स्वऽसेतुः । सः । कक्षीवन्तम् । रेजयत् । सः । अग्निम् ।
नेमिम् । न । चक्रम् । अर्वतः । रघुऽद्रु ॥ १६ ॥

---

१ ऋ० सं० ८. १. २६.।

अयं वेधाः सर्वस्य विधाता राजा सोमः स्तुतः सर्वैः वन्दि स्तूयतेऽस्माभिः। किंच विप्रः विशेषेण पूरकः विप्रवच्छुद्धोवा स्वसेतुः यस्य स्वभूतारश्मयोजगद्बन्धकाः सन्ति ससोमः अपश्चान्तरिक्षं तरति लंघयति प्रतिदिनं ससोमः कक्षीवन्तमृषिं पर्वतमध्ये सोमार्थं गतं रेजयत् अकंपयत् सोसएवाग्निं हविर्वोढुमशक्तंसन्तं पलाय्याप्सु प्रविष्टं रेजयत्। कंपने दृष्टान्तः—नेमिं नमनशीलं रघुद्रु लघुद्रु लघुगमनं चक्रं अर्वतोन अश्वाइव ते यथा रेजयन्ति तद्वत् नुमभावश्छान्दसः ॥ १६ ॥

अथ सप्तदशी—

**सद्विबन्धुर्वैतरणोयष्टांसबर्धुंधेनुमस्वंदुहध्यै।**
**संयन्मित्रावरुणावृञ्जउक्थैर्ज्येष्ठेभिरर्यमणंवरूथैः ॥ १७ ॥**

**सः। द्विऽबन्धुः। वैतरणः। यष्टा। सबःऽधुम्। धेनुम्। अस्वम्। दुहध्यै। सम्। यत्। मित्रावरुणा। वृञ्जे। उक्थैः। ज्येष्ठेभिः। अर्यमणम्। वरूथैः ॥ १७ ॥**

सोग्निर्द्विबन्धुः द्वयोर्लोकयोर्बन्धुभूतः वैतरणः सर्वस्य विशेषेण तारयिता यद्वा वितरणार्हः हविःप्रदानार्हः यष्टा देवानां याजकोग्निः सबर्धुं अमृतोपमपयोदोग्ध्रीं धेनुं अस्वं अप्रसूतां निवृत्तप्रसवां शयवे दुहध्यै दोहायाकरोत् यद्यदा सशयुः मित्रावरुणौ अर्यमणं च ज्येष्ठेभिः ज्येष्ठैः प्रशस्तैः वरूथैः वरणीयैरुक्थैःशस्त्रैः संवृंजे सम्यक्स्तौति यदा शयुर्मित्रावरुणार्यम्णां स्तुतिं करोति तदा तेषामाज्ञयाग्निर्निवृत्तप्रसवां पयोदोग्ध्रीमकरोदिति ॥ १७ ॥

अथाष्टादशी—

**तद्बन्धुःसूरिर्दिवितेधियन्धानाभानेदिष्ठोरपतिप्रवेनन्।**
**सानोनाभिःपरमास्यवाघाहंतत्पश्चाकतिथश्चिदास ॥ १८ ॥**

**तत्ऽबन्धुः। सूरिः। दिवि। ते। धियम्ऽधाः। नाभानेदिष्ठः। रपति। प्र। वेनन्। सा। नः। नाभिः। परमा। अस्य। वा। घ। अहम्। तत्। पश्चा। कतिथः। चित्। आस ॥ १८ ॥**

तद्बन्धुः सैव पृथिवीबन्धिका उत्पत्त्यधिष्ठानत्वेन यस्यासौ तद्बन्धुः तन्मातृकइत्यर्थः। सूरिः स्तुतेः प्रेरकः दिविवर्तमानस्य ते तव स्वभूतइतिशेषः। त्वदपत्यभूतइति यावत्। षष्ठीसामर्थ्यात् संबन्धसामान्यं प्रतीयते तच्चादित्यस्य पुत्रोमनुः मनोः पुत्रोनाभानेदिष्ठइत्येवं सूर्यापत्यत्वेपि पर्यवस्यति। सूर्यनाभानेदिष्ठयोः संबन्धश्चरमपादे उत्तरमन्त्रे च वक्ष्यते सच धियन्धाः कर्मणां धारकोनाभानेदिष्ठोवेनन् अंगिरोदत्तंगोसहस्रं कामयमानः प्ररपति प्रलपति स्तौतीत्यर्थः। वा अपिचेत्यर्थः सा द्यौर्नोस्माकं परमा उत्कृष्टा नाभिः बन्धिका याऽस्यादित्यस्याधिष्ठानभूतास्ति घेतिपूरणः। अहं तत्तस्यादित्यस्य पश्चा पश्चादनन्तरं कतिथः कतिपयानां पूरणः आसाभवं अनेन ममादित्येन जन्यजनकभावः संबन्धः सन्निकृष्टइत्युक्तं भवति ॥१८॥

अथैकोनविंशी—

इयंमेनाभिरिहमेंसधस्थंमिमेमेंदेवाअयमंस्मिसर्वः।
द्विजाअहंप्रथमजाऋतस्येदंधेनुरंदुहज्जायमाना ॥ १९ ॥

इयम्। मे। नाभिः। इह। मे। सधऽस्थम्। इमे। मे।
देवाः। अयम्। अस्मि। सर्वः। द्विऽजाः। अहं। प्रथमऽजाः।
ऋतस्य। इदम्। धेनुः। अदुहत्। जायमाना ॥ १९ ॥

इयं माध्यमिका वाक् मे नाभिः सन्नाहनी आदित्यस्य तस्याश्चाभेदादस्यर्षेर्माध्यमिका वाक् बन्धिका भवति। तथाचब्राह्मणं—सायावागसौसआदित्यइति। इहास्मिन्मंडले मे मम सधस्थं स्थानं इमे देवाद्योतमानारश्मयोमे मम स्वभूताः अयमहमस्मि सर्वः सूर्यस्य स्वस्य चोक्तेन प्रकारेणाभेदात् तद्द्वारा सर्वात्मकत्वं अह किञ्चेत्यर्थः द्विजाब्रह्मांडजाऋतस्य सत्यभूतस्य ब्रह्मणः प्रथमोत्पन्नाधेनुः पृश्निदेवता माध्यमिका वाक् जायमानाइदं सर्वमदुहत् दुदोह उदपादयदित्यर्थः ॥ १९ ॥

अथ विंशी—

अधांसुमन्द्रोअरतिर्विभावावंस्यतिद्विवर्तनिर्वनेषाट्।
ऊर्ध्वायच्छ्रेणिर्नशिशुर्दन्मक्षूस्थिरंशेवृधंसूतमाता ॥ २० ॥ २१ ॥

अर्ध । आसु । मन्द्रः । अरतिः । विभाऽवा । अर्व । स्यति ।
द्विऽवर्तनिः । वनेषाट् । ऊर्ध्वा । यत् । श्रेणिः । न । शिशुः । दन् ।
मक्षु । स्थिरम् । शेऽवृधम् । सूत । माता ॥ २० ॥ २९ ॥

अधाथ आसु चतसृषु दिक्षु मन्द्रोमोदमानः अरतिः गन्ता विभावा दीप्तिमान् द्विवर्तनिः द्वयोर्लोकयोर्गन्ता वनेषाट् वनेकाष्ठानामभिभविताग्निरवस्यति अवसन्नोभवति यागार्थं । यच्च योग्निः ऊर्ध्वा उन्मुखा श्रेणिर्न पिपीलिकापंक्तिरिवाहिं शिशुः शंसनीयः मक्षु क्षिप्रं दन् शत्रून् दमयति तमिमं स्थिरं निश्चलं शेवृधं सुखस्य वर्धकं माता अरणिः सूत यज्ञे जनयामास॥२०॥

॥ इत्यष्टमस्य प्रथमे एकोनत्रिंशोवर्गः ॥२९॥

अथैकविंशी—

अधागावउपमातिंकनायाअनुंश्वान्तस्यकस्यचित्परेयुः ।
श्रुधित्वंसुद्रविणोनस्त्वंयाळाश्वघ्नस्यवावृधेसूनृताभिः ॥ २१ ॥

अर्ध । गावः । उपऽमातिम् । कनायाः । अनु । श्वान्तस्य ।
कस्य । चित् । परा । ईयुः । श्रुधि । त्वम् । सुऽद्रविणः । नः ।
त्वम् । याट् । आश्वऽघ्नस्य । ववृधे । सूनृताभिः ॥ २१ ॥

अध संप्रति कस्य चित् श्वान्तस्य प्रवृद्धस्य श्रान्तस्य वेत्यात्मनोनिर्देशः ईदृशस्य नाभानेदिष्ठस्य कनायाः कमनीयायाः स्तुतेर्गावोवाचः यद्वा वाचः स्तुतयः कनायाः कमनीयायाः स्तुतेरुपमातिं उपमानभूतमिन्द्रमनुपरेयुः अनुपरागच्छन्ति हे सुद्रविणः सुधनाग्ने त्वं श्रुधि शृणु नोमम संबन्धिनमिन्द्रं याट् याजय त्वं चाश्वघ्नस्याश्वघ्नोश्वमेधयाजी मनुः तस्य पुत्रस्य मम सूनृताभिः स्तुतिभिः ववृधे वर्धसे पुरुषव्यत्ययः अथवायं वर्धतइति परोक्षेण निर्देशः ॥२१॥

अथ द्वाविंशी—

अधत्वमिन्द्रविद्ध्य१स्मान्महोरायेनृपतेवज्रबाहुः ।
रक्षाचनोमघोनःपाहिसूरीननेहसंस्तेहरिवोअभिष्टौ ॥ २२ ॥

अर्ध । त्वम् । इन्द्र । विद्धि । अस्मान् । महः । राये । नृऽपते ।
वज्रऽबाहुः । रक्ष । च । नः । मघोनः । पाहि । सूरीन् ।
अनेहसः । ते । हरिऽवः । अभिष्टौ ॥ २२ ॥

हे इन्द्र अध अधुना वज्रबाहुस्त्वमस्मान् महोमहते राये धनाय विद्धि जानीहि हे इन्द्र मघोनोहविष्मतोनोस्मान् रक्ष पालय शत्रुभ्यः सकाशात् । किंच सूरीन् स्तुतिप्रेरकानस्मान्पाहि अन्नादिदानेन रक्ष हे हरिवः हरिभ्यां तद्वन्निन्द्र ते तवाभीष्टौ अभिगमने अनेहसः अपापाः स्यामेति शेषः ॥ २२ ॥

अथ त्रयोविंशी—

अधयद्राजानागविष्टौसरत्सरण्युःकारवेजरण्युः ।
विप्रःप्रेष्ठःसह्येषांबभूवपराचवक्षदुतपर्षदेनान् ॥ २३ ॥

अर्ध । यत् । राजाना । गोऽइष्टौ । सरत् । सरण्युः । कारवे ।
जरण्युः । विप्रः । प्रेष्ठः । सः । हि । एषाम् । बभूव । परा । च ।
वक्षत् । उत । पर्षत् । एनान् ॥ २३ ॥

हे राजाना राजमानौ मित्रावरुणौ अध अधुना सत्रसमाप्तौ यद्यस्मात् गविष्टौ गवामेषणायां सत्यां सरण्युः सरणशीलोयः सरत् गच्छति । किंकुर्वन् कारवे कर्म कुर्वते अंगिरसां गणाय जरण्युः स्तुतिमिच्छन् तस्मात् सविप्रोनाभानेदिष्ठः एषामंगिरसां प्रेष्ठः प्रियतमोबभूव भवतु । हीतिपूरणः तेषां कर्तव्यं पराच वक्षत् परावहतु उतापिच एनानंगिरसः पर्षत् पारयति इत्यात्मनएवमाशास्ते ॥ २३ ॥

अथ चतुर्विंशी—

अधान्वस्यजेन्यस्यपुष्टौवृथारेभन्तईमहेतदूनु ।
सरण्युरस्यसूनुरश्वोविप्रश्चासिश्रवसश्चसातौ ॥ २४ ॥

अर्ध । नु । अस्य । जेन्यस्य । पुष्टौ । वृथा । रेभन्तः । ईमहे ।
तत् । ऊँ इति । नु । सरण्युः । अस्य । सूनुः । अश्वः । विप्रः ।
च । असि । श्रवसः । च । सातौ ॥ २४ ॥

अनया वरुणं पृथक् स्तौति अध अथ नु क्षिप्रमस्य जेन्यस्य जयशीलस्य स्तुत्या जेतव्यस्य वा स्वभूतं गवादि धनं पुष्टौ पोषेनिमित्ते सति तस्य पुष्ट्यर्थं वा वृथा अनायासेन रेभन्तः स्तुवन्तोनु क्षिप्रं ईमहे याचामहे सरण्युः शीघ्रसरणशीलोऽश्वोऽस्य वरुणस्य सूनुः पुत्रः वरुणाद्ध्यश्वउत्पन्नः । अथ प्रत्यक्षकृतः हे वरुण त्वं विप्रश्चासि विप्रवत्पूज्यः शुद्धोवा भवसि श्रवसश्चान्नस्य सातौ लाभे अस्माकमन्नलाभाय प्रवृत्तश्च भवसि ॥ २४ ॥

अथ पञ्चविंशी—

युवोर्यदिंसख्यायास्मेशर्धायस्तोमंजुजुषेनमंस्वान् ।
विश्वत्रयस्मिन्नागिरंःसमीचीःपूर्वीवंगातुर्दाशंत्सूनृतांयै ॥ २५ ॥

युवोः । यदि । सख्याय । अस्मे इति । शर्धाय । स्तोमम् ।
जुजुषे । नमस्वान् । विश्वत्रं । यस्मिन् । आ । गिरंः । सम्ऽईचीः ।
पूर्वीःऽईव । गातुः । दाशत् । सूनृतायै ॥ २५ ॥

हे मित्रावरुणौ युवोर्युवयोः शर्धाय बलवतेस्मे अस्माकं सख्याय यद्वा युवयोः सख्याय अस्मे अस्माकं शर्धाय बलाय च यदि नमस्वानन्नवान् अध्वर्युः स्तोत्रवान् होता वा स्तोमं जुजुषे सेवते यस्मिन् सख्ये सिद्धे सति विश्वत्र विश्वस्मिन् जनपदेगिरः अंगिरसां संबन्धिन्यः समीचीः समीच्यआगच्छन्तीति शेषः उदाराणां गृहे इदं गृहाणेदंगृहाणेत्येवं रूपाः श्रूयन्तइत्यर्थः । यद्वा यागानुष्ठातॄणां स्तुतिगिरः आगच्छन्ति पूर्वीवगातुः प्राची दिगिव सा यथा गच्छतां सुखं प्रयच्छति तद्वत् यद्वा पूर्वी प्रवृद्धा पुरातनीवा गातुः सरणिरिव सा यया गच्छतां सुखं प्रयच्छति तद्वत् सूनृतायै प्रियसत्यरूपायै स्तुतिवाचे दाशत् सुखं प्रयच्छतु ॥ २५ ॥

अथ षड्विंशी—

सगृंणानोअद्भिर्देववानितिसुबन्धुर्नमंसासूक्तैः ।
वर्धदुक्थैर्वचोभिराहिनूनंव्यध्वैतिपयंसउस्रियांयाः ॥ २६ ॥

सः । गृणानः । अत्ऽभिः । देवऽवान् । इति । सुऽबन्धुः । नमसा ।
सुऽउक्तैः । वर्धत् । उक्थैः । वचःऽभिः । आ । हि । नूनम् ।
वि । अध्वा । एति । पयसः । उस्रियायाः ॥ २६ ॥

अद्भिर्देवताभिर्देववान् सुबन्धुः शोभनबन्धनः सवरुणः इतीत्थं कृतप्रकारेण नमसा नमस्कारेण सूक्तैश्चगृणानः स्तूयमानः सन् वर्धत् वर्धतां उक्थैर्वचोभिः उच्यमानैः प्रशस्तैर्वा स्तुतिवचोभिर्नूनमिदानीं आगच्छत्वितिशेषः । हीतिपूरणः । तस्य यागार्थं उस्रियायाः गोः पयसःअध्वा मार्गोव्येति स्तनाग्राणि क्षरन्तीत्यर्थः ॥ २६ ॥

अथ सप्तविंशी—

तऊषुणोमहोयंजत्राभूतदेवासऊतयेसजोषाः ।
येवाजाँअनयताविय॑न्तोयेस्थानिचेतारोअमूराः ॥ २७ ॥ ३० ॥

ते । ऊँ इति । सु । नः । महः । यजत्राः । भूत । देवासः । ऊतये ।
सऽजोषाः । ये । वाजान् । अनयत । विऽयन्तः ।
ये । स्थ । निऽचेतारः । अमूराः ॥ २७ ॥ ३० ॥

अनया ऋषिरंगिरसः आशास्ते हे यजत्रायष्टव्यादेवासोदेवाः ते यूयं उइति पूरणः महोमहते नोस्माकमूतये रक्षणाय सजोषाः संगताः भूत भवत ये च यूयं अंगिरसोमह्यं वाजानन्नानि अनयत प्रापयथ वियन्तः उत्थाय विविधं गच्छन्तः सन्तः ये च यूयं अमूराः अमूढाः षष्ठाहःप्रयोगमौढ्यरहिताइत्यर्थः तादृशा निचेतारोगवां विवेक्तारः स्थ भवथ ते सजोषा भूतेति समन्वयः ॥ २७ ॥

॥ इत्यष्टमस्य प्रथमे त्रिंशोवर्गः ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येणविरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये अष्टमाष्टके प्रथमोध्यायः ॥ १ ॥

## ॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदायोवेदेभ्योऽखिलं जगत्। निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥ १ ॥
व्याख्याय प्रथमं विद्वानष्टमस्याष्टकस्य सः । अध्यायं सायणामात्योद्वितीयं व्याचिकीर्षति ॥२॥

तत्र येयज्ञेनेत्येकादशर्चं अनुवाकापेक्षया द्वितीयं सूक्तं मानवस्य नाभानेदिष्ठस्यार्षं आदितश्चतस्रोजगत्यः पञ्चम्यनुष्टुप् षष्ठी बृहती सप्तमी सतोबृहती अष्टमीनवम्यावनुष्टुभौ दशमी गायत्री एकादशी त्रिष्टुप् आदितः षण्णां विश्वेदेवाअङ्गिरसोवा देवता सप्तमी वैश्वदेवी अष्टम्याद्यासु चतसृषु सावर्णेर्महाराजस्य दानं स्तूयते अतस्तास्तद्देवताकाः। तथाचानुक्रम्यते—येयज्ञेनैकादशाद्याः षळङ्गिरसां स्तुतिर्वान्त्यात्रिष्टुप्पञ्चम्यनुष्टुप् प्रगाथोनुष्टुभौ गायत्री चतस्रोन्त्याः सावर्णेर्दानस्तुतिरिति । षष्ठेहनि वैश्वदेवशस्त्रे एतत्सूक्तं । सूत्रितंच—इदमित्थारौद्रमितिप्रागुपोत्तमाया येयज्ञेनेत्यावपतइति ।

तत्र प्रथमा—

**ॐम् येयज्ञेनदक्षिणयासमक्ताइन्द्रस्यसख्यममृतत्वमानश ।**
**तेभ्योभद्रमङ्गिरसोवोअस्तुप्रतिगृभ्णीतमानवंसुमेधसः ॥ १ ॥**

**ये । यज्ञेन । दक्षिणया । सम्ऽअक्ताः । इन्द्रस्य । सख्यम् ।**
**अमृतऽत्वम् । आनश । तेभ्यः । भद्रम् । अङ्गिरसः । वः ।**
**अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ १ ॥**

नाभानेदिष्ठः स्वपित्रा मनुनाभ्यनुज्ञातः सत्रमासीनानंगिरसोभ्येत्य मांप्रतिगृह्णीत युष्मभ्यं यज्ञं प्रज्ञापयामीति यदुक्तवान् तदुच्यते । इतिहासस्तु इदमित्थेति पूर्वसूक्ते नाभानेदिष्ठं शंसति नाभानेदिष्ठं वै मानवमिति ब्राह्मणानुसारेण ।मनुः पुत्रेभ्योदायं व्यभजत् । इतितैत्तिरीयब्राह्मणानुसारेण च सप्रपंचमभिहितः । तथाचास्याऋचोयमर्थः यज्ञेन यजनीयेन हविषा द-

क्षिणया ऋत्विग्भ्योदेयया समक्ताः संगताः ये अहीनैकाहसहस्राणि कुर्वन्तोयूयमिन्द्रस्य सख्यं सखिकर्म अत एवामृतत्वं अमरणधर्मं देवत्वं आनश आनशिध्वे प्राप्ताःस्थ अश्नोतेर्लिटि मध्यमे व्यत्ययेन बहुवचनत्वं अश्नोतेश्चेति नुडागमः यद्वृत्तयोगादनिघातः । हे अङ्गिरसः तेभ्योवो-युष्मभ्यं भद्रं कल्याणं कर्मास्तु हे सुमेधसः सुप्रज्ञाः हे अङ्गिरसः ते यूयं इदानीं मानवं मनोः पुत्रं मां प्रतिगृभ्णीत प्रतिगृह्णीत मयि प्रतिगृहीते सति यज्ञं साधु करिष्यामीति तदर्थं प्रतिगृह्णीत ॥ १ ॥

अथ द्वितीया—

**यउदाजंन्पितरोंगोमयंवस्वृतेनाभिन्दन्परिवत्सरेवलम् ।**
**दीर्घायुत्वमङ्गिरसोवोअस्तुप्रतिंगृभ्णीतमानवंसुमेधसः ॥ २ ॥**

ये । उत्ऽआर्जन् । पितरः । गोऽमयम् । वसु । ऋतेन । अभिन्दन् ।
परिऽवत्सरे । वलम् । दीर्घायुऽत्वम् । अङ्गिरसः । वः ।
अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ २ ॥

हे अङ्गिरसः पितरः अस्माकं पूर्वजत्वेन पितृभूताये यूयं गोमयं गवात्मकं पणिभिरपहृतं वसु धनं उदाजन् तैरधिष्ठितात्पर्वतात् उदगमयन् । किञ्च ऋतेन सत्यभूतेन यज्ञेन प्रतिवत्सरे पर्यागते वत्सरे संपूर्णसत्रांतइत्यर्थः तत्र बलं बलनामानं गवामपहर्तारमसुरं अभिंदन् व्यनाशयन् तेभ्योवोयुष्मभ्यं दीर्घायुत्वं प्रभूतजीवनमस्तु । शेषं पूर्ववत् ॥ २ ॥

अथ तृतीया—

**यऋतेनसूर्यमारोहयन्दिव्यप्रथयन्पृथिवींमातरंवि ।**
**सुप्रजास्त्वमङ्गिरसोवोअस्तुप्रतिंगृभ्णीतमानवंसुमेधसः ॥ ३ ॥**

ये । ऋतेन । सूर्यम् । आ । अरोहयन् । दिवि । अप्रथयन् ।
पृथिवीम् । मातरम् । वि । सुप्रजाःऽत्वम् । अङ्गिरसः । वः ।
अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ ३ ॥

हे अङ्गिरसः ये भवन्तः ऋतेन सत्यभूतेन यज्ञेन दिवि द्युलोके सूर्यं सुष्ठु सर्वस्य प्रेरक मादित्यं आरोहयन् अस्थापयन् किञ्च मातरं सर्वेषां निर्मात्रीं पृथिवीं व्यप्रथयन् प्रसिद्धामकुर्वन् सत्रादिकर्मकरणेन । तेभ्योयुष्मभ्यं सुप्रजास्त्वं सुपुत्रत्वमस्तु नित्यमसिच्प्रजामेधयोरित्यसिच् समासान्तः तस्माद्भावप्रत्ययः ॥ ३ ॥

अथ चतुर्थी–

अयंनाभावदतिवल्गुवोगृहेदेवपुत्राऋषयस्तच्छृणोतन ।
सुब्रह्मण्यमङ्गिरसोवोअस्तुप्रतिगृभ्णीतमानवंसुमेधसः ॥ ४ ॥

अयम् । नाभा । वदति । वल्गु । वः । गृहे । देवऽपुत्राः । ऋषयः ।
तत् । शृणोतन । सुऽब्रह्मण्यम् । अङ्गिरसः । वः ।
अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ ४ ॥

हे देवपुत्राः देवानां पुत्राः अग्नेः पुत्राः ऋषयः अतीन्द्रियार्थस्य द्रष्टारोहे अङ्गिरसः अयं नाभानेदिष्ठः पुरोवर्ती जनः वोयुष्माकं गृहे गृहभूते यज्ञे वल्गु कल्याणं वचोवदति तद्वाक्यं यूयं शृणोतन महतादरेण शृणुत श्रुश्रवणे तप्तनप्तनथनाश्चेति तनबादेशः तेभ्योयुष्मभ्यं सुब्रह्मण्यं शोभनब्रह्मवर्चसं अस्तु इदानीमागतं मानवं मां प्रतिगृह्णीत ॥ ४ ॥

अथ पंचमी–

विरूपासइदृषयस्तइद्गम्भीरवेपसः ।
तेअङ्गिरसःसूनवस्तेअग्नेःपरिजज्ञिरे ॥ ५ ॥ १ ॥

विऽरूपासः । इत् । ऋषयः । ते । इत् । गम्भीरऽवेपसः । ते ।
अङ्गिरसः । सूनवः । ते । अग्नेः । परि । जज्ञिरे ॥ ५ ॥ १ ॥

परोक्षतया ऋषिराह–ऋषयः कर्मणांद्रष्टारएते ऋषयः विरूपासइत् अन्योन्यं वर्णतोरूपतश्च नानारूपाभवन्ति तइत् तएवामी अङ्गिरसः गंभीरवेपसः वेपइति कर्मनाम गंभीरकर्मा-

णोभवन्ति तइमे अङ्गिरसः सूनवः पुत्राः खलु । तदेवाह ते तइमे अङ्गिरसोग्नेः परिजज्ञिरे सर्वतोजाताः प्रादुर्भूताः । येंगाराआसंस्तेंगिरसोभवन्नितिब्राह्मणं । अत्र निरुक्तंचद्रष्टव्यं ॥ ५ ॥

॥ इत्यष्टमस्य द्वितीये प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

येअ॒ग्नेःपरि॑जज्ञि॒रेविरू॑पासोदि॒वस्परि॑ ।
नवं॑ग्वो॒नुदश॑ग्वो॒अङ्गि॑रस्तम॒ःसचा॑दे॒वेषु॒मंह॑ते ॥ ६ ॥ ॥

ये । अ॒ग्नेः । परि॑ । ज॒ज्ञि॒रे । वि॒ऽरू॑पासः । दि॒वः । परि॑ । नव॑ऽग्वः ।
नु । दश॑ऽग्वः । अङ्गि॑रःऽतमः । सचा॑ । दे॒वेषु॑ । मंह॑ते ॥ ६ ॥

विरूपासः विविधरूपाये अङ्गिरसः दिवस्परि द्युलोकात् अग्नेः परि जज्ञिरे परितोजाताः यद्वा दिवस्परि परिः पञ्चम्यर्थद्योतकः स्वतेजसा दीप्यमानादग्नेर्जाताः तेषां मध्ये नवग्वोदशग्वश्च अङ्गिरस्तमः अङ्गिरसां वरिष्ठःसत्रमासीनानामङ्गिरसां मध्ये केचन नवसु मासु कर्म कृत्वोदतिष्ठन् केचन दशसु मास्स्विति एवमङ्गिरसामयनमुक्तं तेषामग्निर्नवग्वश्चदशग्वश्चोक्तः तादृशः देवेषु सचा सहावस्थितः सोग्निः मंहते मह्यं धनं प्रयच्छति मंहतिर्दानकर्मा ॥ ६ ॥

अथ सप्तमी—

इन्द्रे॑णयु॒जानिःसृ॒जन्त॑वा॒घतो॑व्र॒जंगोम॑न्तम॒श्विन॑म् ।
स॒हस्रं॑मे॒दद॑तोअष्टक॒र्ण्य१॒ःश्रवो॑दे॒वेष्व॑क्रत ॥ ७ ॥

इन्द्रे॑ण । यु॒जा । निः । सृ॒ज॒न्त॒ । वा॒घतः॑ । व्र॒जम् । गोऽम॑न्तम् ।
अ॒श्विन॑म् । स॒हस्र॑म् । मे॒ । दद॑तः । अ॒ष्ट॒ऽक॒र्ण्यः॑ ।
श्रवः॑ । दे॒वेषु॑ । अ॒क्र॒त॒ ॥ ७ ॥

वाघतः कर्मणां वोढारोविश्वेदेवाअङ्गिरसोवा इन्द्रेण युजा सहायेन निःसृजन्त निरगमयन् किंगोमन्तं गोयुक्तं अश्विनमश्ववन्तं पणिभिरवरुद्धं व्रजं ते मे मां प्रति सहस्रं सहस्रसंख्याकंधनं सत्रपरिवेषणं अष्टकर्ण्यः अष्टइति अशून्याप्तौ निष्ठायां रूपं विस्तृतकर्णाः उपलक्षणमे-

---

१ ऐ० ब्रा० ३. ३४ । नि० ११. १६ ।

तत् व्याप्तसर्वावयवाः गाश्च ददतः मह्यं प्रयच्छन्तः देवेषु इन्द्रादिषु श्रवोहविर्लक्षणमन्नं कीर्तिं वा अक्रत अकुर्वत । करोतेर्लुङिमन्त्रेघसेतिच्लेर्लुक् एवं नाभानेदिष्ठेनाङ्गिरसः स्तुताः तस्मै धनं प्रादुः । तदुक्तंशौनकेन—ऋषयोङ्गिरसस्तुष्टायद्ददुर्मानवायतु । तत्पुण्यायचकर्माणियेयज्ञेनेतिकीर्तयेत् ॥१॥ उत्तराभिश्चतसृभिरस्मैमानवाय ऋषये सावर्णिनायद्दत्तं तत्प्रशस्यते । तदप्युक्तं शौनकेन—सावर्णिनाचयद्दत्तंमानवायमहद्वसु । तदुक्तंसूक्तशेषेणप्रनूनंजायतामिति ॥ ७ ॥

अथाष्टमी—

प्रनूनंजायतामयंमनुस्तोक्मेवरोहतु ।
यःसहस्रंशताश्वंसद्योदानायमंहते ॥ ८ ॥

प्र । नूनम् । जायताम् । अयम् । मनुः । तोक्मंऽइव । रोहतु ।
यः । सहस्रम् । शतऽअश्वम् । सद्यः । दानाय । मंहते ॥ ८॥

अयं सावर्णिर्मनुःनूनंक्षिप्रं प्रजायतां प्रजातोभवतु धनादिभिः पुत्रादिभिश्च रोहतु प्रादुर्भवतु । तत्र दृष्टान्तः—तोक्मेव यथा जलक्लिन्नं बीजं प्रादुर्भवति एवं कर्मफलसंयुक्तः समनुः पुत्रादिभीरोहतु । योयं मनुः शताश्वं बह्वश्वसंयुक्तं सहस्रं गवां सद्यस्तदानीमेव दानाय मंहते अस्मै ऋषये दातुं प्रेरयति ॥ ८ ॥



अथ नवमी—

नतमंश्नोतिकश्चनदिवइवसान्वारभम् ।
सावर्ण्यस्यदक्षिणाविसिन्धुरिवपप्रथे ॥ ९ ॥

न । तम् । अश्नोति । कः । चन । दिवःऽइव । सानु । आऽरभम् ।
सावर्ण्यस्य । दक्षिणा । वि । सिन्धुःऽइव । पप्रथे ॥ ९ ॥

तं सावर्णिमनुं कश्चनकश्चिदप्यारभमारब्धुंस्वकर्मणानाश्नोतिनव्याप्नोतियथामनुःप्रयच्छति तथान्योदातुंन शक्नोतीत्यर्थः । कथं स्थितं दिवइव द्युलोकस्य सानु समुच्छ्रितं तेजसा कैश्चिदपि अप्रधृष्यं आदित्यमवस्थितं आभरं । शकिणमुल्कमुलावितिकमुल् । तस्यसावर्ण्यस्यमनोः इयं गवादिदक्षिणा सिंधुरिव स्यन्दमाना नदीव पृथिव्यां पप्रथे विप्रथते विस्तीर्णा भवति ॥ ९ ॥

अथ दशमी—

उतदासापरिविषेस्मद्दिष्टीगोपरीणसा। यदुस्तुर्वश्चमामहे ॥ १० ॥

उत। दासा। परिऽविषे। स्मद्दिष्टी इति स्मत्ऽदिष्टी।
गोऽपरीणसा। यदुः। तुर्वः। च। ममहे ॥ १० ॥

उतापिच स्मद्दिष्टी कल्याणादेशिनौ गोपरीणसा गोपरिणसौ परिणद्धपशू गोभिः परिवृतौ बहुगवादियुक्तौ दासा दासवत्प्रेष्यवत्स्थितौ तेनाधिष्ठितौ यदुश्च तुर्वश्च एतन्नामकौराजर्षी परिविषे अस्य सावर्णेर्मनोर्भोजनाय ममहे पशून्प्रयच्छतः प्रत्येकमन्वयादेकवचनं ॥ १० ॥

अथैकादशी—

सहस्रदाग्रामणीर्मारिषन्मनुःसूर्येणास्ययतमानैतुदक्षिणा।
सावर्णेर्देवाःप्रतिरन्त्वायुर्यस्मिन्नश्रान्ताअसनामवाजम्॥ ११॥२॥

सहस्रऽदाः। ग्रामऽनीः। मा। रिषत्। मनुः। सूर्येण। अस्य।
यतमाना। एतु। दक्षिणा। सावर्णेः। देवाः। प्र। तिरन्तु। आयुः।
यस्मिन्। अश्रान्ताः। असनाम। वाजम् ॥ ११ ॥ २ ॥

गवादीनां सहस्रस्य दाता ग्रामणीः ग्रामाणां नेता कर्ता जनपदानां अयं मनुः मारिषत् नकैश्चिदपि रिष्टोहिंसितोभवतु यद्वा कर्मनेतृनस्मान्माहिनस्तु किंतु धनादिदानेन पूजयतु अस्य यतमाना गच्छन्ती दक्षिणा सूर्येण सह एतु संगच्छतां त्रिषुलोकेषु प्रसिद्धाभवत्वित्यर्थः। तस्यास्य सावर्णेः सवर्णपुत्रस्य मनोः देवाइन्द्रादयः आयुर्जीवनं प्रतिरंतुप्रवर्धयन्तु अश्रान्ताः कर्मस्वनलसाः सर्वकर्मकुर्वन्तः वयं अस्मिन्मनौवाजं गोलक्षणमन्नं असनाम संभजेमहि नाभानेदिष्ठोहमलभइत्याशास्ते ॥ ११ ॥

॥ इत्यष्टमस्य द्वितीये द्वितीयोवर्गः ॥ २ ॥

परावतोयइति सप्तदशर्चं तृतीयं सूक्तं प्लतेः पुत्रस्य गयस्यार्षं षोडशीसप्तदश्यौ त्रिष्टुभौ पञ्चदशी त्रिष्टुप् जगती वा शिष्टाश्चतुर्दश जगत्यः स्वस्तिनःपथ्यास्विति द्वे पथ्यास्वस्तिदेव-

ताके शिष्टावैश्वदेव्यः। तथाचानुक्रांतं—परावतस्यूना गयः प्लातोद्वित्रिष्टुबंतं तु स्वस्तिनस्त्रिष्टुब्वा सहचोत्तरया पथ्यास्वस्तिदेवत्येति। पृष्ठ्याभिप्लवषडहयोस्तृतीयेहनि वैश्वदेवशस्त्रे एतत्सूक्तं वैश्वदेवनिविद्धानं। सूत्रितञ्च—अनश्वोजातः परावतोयइतिवैश्वदेवमिति।

तत्र प्रथमा—

परावतोयेदिधिषन्तआप्यंमनुप्रीतासोजनिमाविवस्वतः।
ययातेर्येनहुष्यस्यबर्हिषिदेवाआसंतेतेअधिब्रुवन्तुनः॥ १॥

परा॑ऽवतः। ये। दिधिषन्ते। आप्यम्। मनु॑ऽप्रीतासः। जनिम।
विवस्वतः। ययातेः। ये। नहुष्यस्य। बर्हिषि। देवाः।
आसते। ते। अधि। ब्रुवन्तु। नः॥ १॥

ये देवाःपरावतोदूरदेशादागत्याप्यं ज्ञातेयं मनुष्यैः सह बंधुत्वं दिधिषन्त धारयन्ति यद्वा हविषां प्रदातृभिः मनुष्यैः सह सख्यं कुर्मइति परस्परं शब्दायन्ते धिषशब्दे जौहोत्यादिकः छान्दसोझस्यान्तोदशः धिष धारण इति कैश्चिदप्युपगम्यते। उक्तार्थमेव विशिनष्टि मनुप्रीतासः मनुष्यैः प्रीतादेवाः विवस्वतः विवस्वत्पुत्रस्य मनोः जनिम जन्मानि मनुष्यान्धारयन्ति किञ्च ये देवाः नहुषस्य नहुष्यपुत्रस्य ययातेरेतन्नामकस्य राजर्षेः बर्हिषि यज्ञे आसते उपविशन्ति ते देवाः नोस्मानधिब्रुवन्तु धनादिप्रदानेन अस्मानधिकं वदन्तु पूजयन्त्वित्यर्थः॥ १॥

अथ द्वितीया—

विश्वाहिवोनमस्यानिवन्द्यानामानिदेवाउतयज्ञियानिवः।
येस्थजाताअदितेरद्भ्यस्परियेपृथिव्यास्तेमइहश्रुताहवम्॥ २॥

विश्वा। हि। वः। नमस्यानि। वन्द्या। नामानि। देवाः।
उत। यज्ञियानि। वः। ये। स्थ। जाताः। अदितेः। अत्ऽभ्यः।
परि। ये। पृथिव्याः। ते। मे। इह। श्रुत। हवम्॥ २॥

हे देवाः इन्द्रादयः हिरवधारणे वोयुष्माकमेव नामानि नमनीयानि विश्वा सर्वाणि शरीराणि नमस्यानि नमस्कारार्हाणि भवन्ति वंद्या वंद्यानि स्तोतव्यानि च भवन्ति। उतापिच वोयुष्माकं

तानि शरीराणि यज्ञियानि यज्ञार्हाणि भवन्ति ये यूयं अदितेरदीनात् द्युलोकात् अद्भ्यः अन्तरिक्षनामैतत् अन्तरिक्षात्परिः पञ्चम्यर्थद्योतकः पृथिव्याश्च जाताः प्रादुर्भूताः स्थ भवथ ते यूयं इहास्मिन्यज्ञे आगत्य मे मदीयं हवमाह्वानं श्रुत शृणुत ॥ २ ॥

अग्निष्टोमे वैश्वदेवशस्त्रे येभ्योमातेत्येषा धाय्या । सूत्रितञ्च—अयंवेनश्चोदयत्पृश्निगर्भा येभ्योमातामधुमत्पिन्वतेपयइति ।

सैषा तृतीया—

**येभ्यो॑मा॒ता॒मधु॑म॒त्पिन्व॑ते॒पयः॑पी॒यूषं॒द्यौरदि॑ति॒रद्रि॑बर्हाः ।**
**उ॒क्थशु॑ष्मान्वृषभ॒रान्त्स्वप्न॑स॒स्ताँआ॑दि॒त्याँअनु॑मदास्व॒स्तये॑ ॥ ३॥**

येभ्यः॑ । मा॒ता । मधु॑ऽमत् । पिन्व॑ते । पयः॑ । पी॒यूष॑म् । द्यौः ।
अदि॑तिः । अद्रि॑ऽबर्हाः । उ॒क्थऽशु॑ष्मान् । वृ॒ष॒ऽभ॒रान् ।
सु॒ऽअप्न॑सः । तान् । आ॒दि॒त्यान् । अनु॑ । म॒द॒ । स्व॒स्तये॑ ॥ ३ ॥

मात सर्वस्य निर्मात्री पृथिवी येभ्योदेवेभ्यः देवार्थं मधुमत् माधुर्योपेतं पयः सारभूतं क्षीरं पिन्वते क्षरति तथा अदितिरदीना अद्रिबर्हाः मेघैः परिवृढा प्रवृद्धा परिवृद्धमेघावा द्यौश्च पीयूषं पिन्वते द्यावापृथिव्यौ हविरुत्पादयतइत्यर्थः ऋषिरात्मानंसंबोध्याह उक्थशुष्मानतिबलान् वृषभरान् वृष्टेराहर्तॄन् हृग्रहोर्भइतिभः स्वप्नसः सुकर्मणः तानादित्यानदितेः पुत्रान् देवान् स्वस्तये अविनाशाय अनुमद अनुस्तुहि माद्यतेर्लोटि व्यत्ययेन शप् मन्दतेर्वा स्तुत्यर्थस्य अनित्यमागमशासनमिति नुमभावः ॥ ३ ॥

अथ चतुर्थी—

**नृ॒चक्ष॑सो॒अनि॑मिषन्तो॒अ॒र्हणा॑बृ॒हद्दे॒वासो॑अमृत॒त्वमा॑नशुः ।**
**ज्यो॒तीर॑था॒अहि॑माया॒अना॑गसोदि॒वोव॒र्ष्माणं॑वसते॒स्व॒स्तये॑ ॥ ४ ॥**

नृ॒ऽचक्ष॑सः । अनि॑ऽमिषन्तः । अ॒र्हणा॑ । बृ॒हत् । दे॒वासः॑ ।
अ॒मृ॒त॒ऽत्वम् । आ॒न॒शुः । ज्यो॒तिःऽर॑थाः । अहि॑ऽमायाः ।
अना॑गसः । दि॒वः । व॒र्ष्माण॑म् । व॒स॒ते॒ । स्व॒स्तये॑ ॥ ४ ॥

नृचक्षसः कर्मनेतॄणां मनुष्याणां द्रष्टारः अतएवानिमिषन्तः निमेषमकुर्वाणाः सर्वदा जागरूकाः देवासोदेवाः अर्हणा लोकस्य परिचरणार्थं स्तोतव्यत्वाय बृहत् बृंहितं अमृतत्वं अमरणधर्मं आनशुः प्राप्ताः देवाः खलु मनुष्यैः पूज्याः तस्मात्पूजाहेतु देवत्वं आनशिरे अतएव ज्योतीरथादीप्यमानरथोपेताः अहिमायाः कैश्चिदप्यहन्तव्यप्रज्ञाः अनागसः पापरहिताः आदित्याः दिवोद्युलोकस्य वर्ष्माणं नाभिस्थानं समुच्छ्रितं देशं स्वस्तये अविनाशाय लोकस्य क्षेमकरणार्थं वसते अधिवसन्ति यद्वा स्वतेजसाच्छादयन्ति ॥ ४ ॥

अथ पञ्चमी—

सम्राजोयेसुवृधोयज्ञमाययुरपरिह्वृतादधिरेदिविक्षयम् ।
ताँआविवासनमसासुवृक्तिभिर्महोआदित्याँअदितिंस्वस्तये ॥५॥३॥

सम्ऽराजः । ये । सुऽवृधः । यज्ञम् । आऽययुः । अपरिऽह्वृताः ।
दधिरे । दिवि । क्षयम् । तान् । आ । विवास । नमसा । सुवृक्तिऽभिः ।
महः । आदित्यान् । अदितिम् । स्वस्तये ॥ ५ ॥ ३ ॥

सम्राजः सर्वेषां राजानः स्वतेजोभिः सम्यक् राजमानाः सुवृधः सुवृद्धाये देवाः यज्ञं आययुः आयांति सोमादिहविर्भक्षणार्थं ततः अपरिष्कृताः कैश्चिदप्यहिंसिताये देवाः दिवि द्युलोके क्षयं निवासं दधिरे विदधति कुर्वन्ति ऋषिरात्मानमाह महोमहतः गुणाधिक्येन आदित्यानदितेः पुत्रान् तान्प्रसिद्धान्देवान् अदितिं तेषां मातरमेतन्नामिकां च स्वस्तये अविनाशाय नमसा हवीरूपेणान्नेन सुवृक्तिभिः शोभनाभिः स्तुतिभिश्च आविवास आभिमुख्येन परिचर विवासतिः परिचरणकर्मा ॥ ५ ॥

॥ इत्यष्टमस्य द्वितीये तृतीयोवर्गः ॥ ३ ॥

अथ षष्ठी—

कोवःस्तोमंराधतियंजुजोषथविश्वेदेवासोमनुषोयतिष्ठन ।
कोवोध्वरंतुविजाताअरंकरद्योनःपर्षदत्यंहःस्वस्तये ॥ ६ ॥

कः । वः । स्तोमम् । राधति । यम् । जुजोषथ । विश्वे । देवासः ।
मनुषः । यति । स्थन । कः । वः । अध्वरम् । तुविऽजाताः ।
अरम् । करत् । यः । नः । पर्षत् । अति । अंहः । स्वस्तये ॥ ६ ॥

ऋषिर्देवान्प्रति बहुधा वितर्कयति हे देवाः वः युष्माकं कः स्तोता स्तोमं त्रिवृत्पञ्चदशादिलक्षणं राधति संसाधयति न कश्चिदस्तीत्यर्थः । यद्वा मदन्यः कोवा युष्मभ्यंस्तोमंकरोति यूयं यं स्तोतारं जुजोषथ सेवध्वे जुषी प्रीतिसेवनयोः लेटि शपः श्लुः अडागमः । किञ्च हे मनुषोमन्तारोज्ञातारोहे विश्वेदेवासोदेवाः यूयं यति यत् संख्याः स्थन भवथ यच्छब्दादपि छान्दसोडतिर्द्रष्टव्यः । हे तुविजाताः धात्रादिविभागेनबहुजननाः हेदेवाः युष्मदर्थं कोवा यजमानः अध्वरं यज्ञं अरंकरत् अलंकरोति स्तुतिभिर्हविर्भिश्च । मदन्योनास्तीत्यर्थः योयज्ञः नोस्मान् स्वस्तये अविनाशाय अंहः पापरूपं मार्गं अवैदिकं अतिपर्षत् अतिपारयति तं यज्ञं कोवालंकरोतीति ॥ ६ ॥

अथ सप्तमी—

येभ्योहोत्रांप्रथमामायेजेमनुःसमिद्धाग्निर्मनसासप्तहोतृभिः ।
तआदित्याअभयंशर्मयच्छतसुगानःकर्तसुपथास्वस्तये ॥ ७ ॥

येभ्यः । होत्राम् । प्रथमाम् । आऽयेजे । मनुः । समिद्धऽअग्निः ।
मनसा । सप्त । होतृऽभिः । ते । आदित्याः । अभयम् । शर्म ।
यच्छत । सुऽगा । नः । कर्त । सुऽपथा । स्वस्तये ॥ ७ ॥

समिद्धाग्निः हविर्भिः सम्यक् दीप्ताग्निः मनुर्वैवस्वतः मनुष्याणां प्रथमभावी श्रद्दधानेन मनसा सप्त सप्तसंख्याकैर्होतृभिः वषट्कर्तृभिः ऋत्विग्भिश्च सह येभ्योयुष्मभ्यं प्रथमां प्रथमं मुख्यं यद्वा सर्वेषां मनुष्याणामग्रे क्रियमाणत्वादाद्यं होत्रां हूयन्ते हवींष्यत्रेति होत्रायज्ञः तं यद्वा आहूयन्ते देवाः स्तुतिभिरत्रेति तं यज्ञं आयेजे आभिमुख्येनेष्टवान् यजेर्लिटि रूपं । यद्वा लटि लोपस्तआत्मनेपदेष्विति तलोपः । यजिवप्योरलिट्चेत्वं वक्तव्यमितिवचनादेकारः । हे आदित्याः अदितेः पुत्राः हे देवाः ते यूयं नोस्मभ्यमभयं शर्म च सुखं प्रयच्छत । किञ्च नो-

स्माकं स्वस्तये क्षेमाय सुपथा सुपथानि शोभनान्वैदिकमार्गान् सुगा सुष्ठु गंतव्यानि कर्त कुरुत करोतेर्लोटि बहुलंछन्दसीतिविकरणस्य लुक् तस्य तबादेशः ॥ ७ ॥

अथाष्टमी—

य ई॑शि॒रे भुव॑नस्य॒ प्रचे॑तसो॒ विश्व॑स्य स्था॒तुर्जग॑तश्च॒ मन्त॑वः ।
ते नः॑ कृ॒तादकृ॑ता॒देन॑स॒स्पर्य॒द्या दे॑वासः पिपृता स्व॒स्तये॑ ॥ ८ ॥

ये । ई॑शि॒रे । भुव॑नस्य । प्रऽचे॑तसः । विश्व॑स्य । स्था॒तुः ।
जग॑तः । च॒ । मन्त॑वः । ते । नः॒ । कृ॒तात् । अकृ॑तात् ।
एन॑सः । परि॑ । अ॒द्य । दे॒वा॒सः॒ । पि॒पृ॒त॒ । स्व॒स्तये॑ ॥ ८ ॥

प्रचेतसः प्रकृष्टज्ञानामन्तवः सर्वस्य वेदितारः ये देवाः स्थातुः स्थावरस्य जगतोजंगमस्य विश्वस्य सर्वस्य भुवनस्य लोकस्य ईशिरे ईश्वराभवन्ति । अथ प्रत्यक्षः हे देवासोदेवा ये उक्तगुणास्ते यूयं नोस्मान् कृतात् कायिकात्पापात् अकृतात् करचरणादिभिरकृतात् एनसः किंतु मानसात्पापाच्च अद्यास्मिन्दिने स्वस्तये अविनाशाय आयुषोभिवृद्धये पिपृत पारयत पापरहितान्कुरुतेत्यर्थः ॥ ८ ॥

अथ नवमी—

भरे॒ष्विन्द्रं॑ सु॒हवं॑ हवामहें॒होमुचं॑ सु॒कृतं॒ दैव्यं॒ जन॑म् ।
अ॒ग्निं मि॒त्रं वरु॑णं सा॒तये॒ भगं॒ द्यावा॑पृथि॒वी म॒रुतः॑ स्व॒स्तये॑ ॥ ९ ॥

भरे॑षु । इन्द्र॑म् । सु॒ऽहव॑म् । ह॒वा॒म॒हे॒ । अं॒हः॒ऽमुच॑म् । सु॒ऽकृत॑म् ।
दैव्य॑म् । जन॑म् । अ॒ग्निम् । मि॒त्रम् । वरु॑णम् । सा॒तये॑ ।
भग॑म् । द्यावा॑पृथि॒वी इति॑ । म॒रुतः॑ । स्व॒स्तये॑ ॥ ९ ॥

अंहोमुचं अंहसः पापस्य मोचकं सुहवं शोभनाह्वानं इन्द्रं भरेषु भृणन्ति भर्जयन्ति विनाशयन्ति शत्रूनत्रेति भराः संग्रामाः तेषु हवामहे रक्षणायाह्वयामः । किञ्च सुकृतं सुकर्माणं दैव्यं देवसंबंधिनं अन्यं जनं चाह्वयामहे । तंजनमुद्दिशति अग्निं मित्रं वरुणं भगं भजनीयमेतन्नामानं देवं द्यावापृथिवी द्यावापृथिव्यौ मरुतश्च सातये अन्नलाभाय स्वस्तये अविनाशाय रक्षणायाह्वयामहे ॥ ९ ॥

अदितिदेवताकस्य पशोः सुत्रामाणमित्येषा वपायागस्य याज्या। सूत्रितञ्च—अदितिर्ह्य जनिष्ट सुत्रामाणंपृथिवींद्यामनेहसमिति। प्रायणीयेष्टौ आदित्यस्य हविषएषैवानुवाक्या सैवोदयनीयायां याज्या। सूत्रितञ्च—सुत्रामाणंपृथिवींद्यामनेहसं महीमूषुमातरंसुव्रतानामिति। प्रयाणे अनयैव नावमारोहेत्। सूत्रितञ्च—सुत्रामाणंपृथिवींद्यामनेहसमिति नावमिति।

सैषा सूक्ते दशमी—

**सुत्रामाणंपृथिवींद्यामनेहसंसुशर्माणमदितिंसुप्रणीतिम्।**
**दैवींनावंस्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये॥ १० ॥ ४॥**

सुऽत्रामाणम्। पृथिवीम्। द्याम्। अनेहसम्। सुऽशर्माणम्।
अदितिम्। सुऽप्रनीतिम्। दैवीम्। नावम्। सुऽअरित्राम्।
अनागसम्। अस्रवन्तीम्। आ। रुहेम। स्वस्तये॥ १० ॥ ४॥

द्युलोकः नौरूपकतया स्तूयते—सुत्रामाणं सुष्ठु त्रायन्तीं पृथिवीं विस्तृतां अनेहसं पापरहितां सुशर्माणं शोभनसुखयुक्तां अदितिं अदीनां सुप्रणीतिं सुप्रणयनां सुष्ठु प्रणेत्रीं दैवीं देवसंबंधिनीं स्वरित्रां शोभनारित्रां जलाहरणशीलदारुयुक्तां अनागसं पापरहितां अस्रवन्तीं अगच्छन्तीं अविनश्वरीं नावं नावमिव स्थितां द्यां स्वस्तये अविनाशाय देवत्वप्राप्तये आरुहेम वयमारोहेम रोहतेर्लिङि लिङ्याशिष्यङित्यङ्प्रत्ययः॥ १० ॥

॥ इत्यष्टमस्य द्वितीये चतुर्थोवर्गः॥ ४ ॥

अथैकादशी—

**विश्वेयजत्राअधिवोचतोतयेत्रायध्वंनोदुरेवायाअभिह्रुतः।**
**सत्ययावोदेवहूत्याहुवेमशृण्वतोदेवाअवसेस्वस्तये॥ ११ ॥**

विश्वे। यजत्राः। अधि। वोचत। ऊतये। त्रायध्वम्। नः।
दुःऽएवायाः। अभिऽह्रुतः। सत्यया। वः। देवऽहूत्या।
हुवेम। शृण्वतः। देवाः। अवसे। स्वस्तये॥ ११ ॥

हे यजत्राः यजनीयाः हे विश्वे सर्वे देवाः यूयं ऊतये रक्षणार्थं अधिवोचत अस्मानधिब्रूत आभाष्य च अभिह्रुतः अभिहिंसित्र्याः दुरेवायाः दुर्गतेः नोस्मान्त्रायध्वं यद्येवं कुरुथ तर्हि हेदेवाः शृण्वतः स्तोत्राण्यस्माभिरुक्तानि तादृशान् वोयुष्मान् सत्यया यथार्थभूतया देवहूत्या देवाहूयन्ते अनयेति देवहूतिः स्तुतिः तया वयं हुवेम आह्वयेम । किमर्थं अवसे रक्षणाय शत्रुभ्यः स्वस्तये क्षेमाय जीवनाभिवृद्धयेच ॥ ११ ॥

अथ द्वादशी—

**अपामीवामपविश्वामनाहुतिमपारातिंदुर्विदत्रामघायतः ।**
**आरेदेवाद्वेषोअस्मद्युयोतनोरुणःशर्मयच्छतास्वस्तये ॥ १२ ॥**

**अप । अमीवाम् । अप । विश्वाम् । अनाहुतिम् । अप । अरातिम् । दुःऽविदत्राम् । अघऽयतः । आरे । देवाः । द्वेषः । अस्मत् । युयोतन । उरु । नः । शर्म । यच्छत । स्वस्तये ॥ १२ ॥**

हे देवाः अमीवां रोगादिकं यद्वा रोगवद्बाधकं शत्रुं अस्मत्तोदूरे अपकुरुत पृथक्कुरुत तथा विश्वां सर्वामनाहुतिं देवानामाह्वानबुद्धिं यद्वा देवानां महाशत्रुं पृथक्कुरुत । किञ्च अरातिं अदानं लोभबुद्धिं यद्वा देवेभ्योहविषामदातारं शत्रुमपगमयत । अपिच अघायतः पापमिच्छतः शत्रोः दुर्विदत्रां दुर्विज्ञानं दुष्टां बुद्धिं च इत्थं द्वेषोद्वेष्टॄन् सर्वान् शत्रून् अस्मदस्मत्तः आरे दूरे युयोतन पृथक्कुरुत एवं सति यूयं नोस्मभ्यं उरु विस्तीर्णं शर्म सुखं स्वस्तये कल्याणाय प्रयच्छत ॥ १२ ॥

अथ त्रयोदशी--

**अरिष्टःसमर्तोविश्वएधतेप्रप्रजाभिर्जायतेधर्मणस्परि ।**
**यमादित्यासोनयथासुनीतिभिरतिविश्वानिदुरितास्वस्तये ॥१३ ॥**

**अरिष्टः । सः । मर्तः । विश्वः । एधते । प्र । प्रऽजाभिः । जायते । धर्मणः । परि । यम् । आदित्यासः । नयथ । सुनीतिऽभिः । अति । विश्वानि । दुःऽइता । स्वस्तये ॥ १३ ॥**

हे देवाः विश्वः सर्वः मर्तः समनुष्यः अरिष्टः कैश्चिदप्यहिंसितः सन् एधते पश्वादिभिर्वर्धते तथा धर्मणः परिधारकात्कर्मणोनंतरं समनुष्यः प्रजाभिः पुत्रादिभिः प्रजायते प्रकर्षेणाविर्भूतोभवति हे आदित्याः देवाः यं मनुष्यं सुनीतिभिः सुनयनैर्विश्वानि सर्वाणि दुरिता दुरितानि तद्रूपान् वा स्वस्तये क्षेमायातिनयथ अतीत्य सन्मार्गे नयथ सवर्धतइति समन्वयः ॥ १३ ॥

अथ चतुर्दशी—

यंदेवासोवथवाजसातौयंशूरसातामरुतोहितेधने ।
प्रातर्यावाणंरथमिन्द्रसानसिमरिष्यन्तमारुहेमास्वस्तये ॥ १४ ॥

यम् । देवासः । अवथ । वाजऽसातौ । यम् । शूरऽसाता ।
मरुतः । हिते । धने । प्रातःऽयावानम् । रथम् । इन्द्र ।
सानसिम् । अरिष्यन्तम् । आ । रुहेम । स्वस्तये ॥ १४ ॥

हे देवासोदेवाः वाजसातौ अन्नभजने अन्नलाभे वा यं रथं अवथ रक्षथ हे मरुतः शूरसाता संग्रामनामैतत् शूराः स्यंति खिद्यन्ते अत्रेति शूराः सीयन्ते विनाश्यन्ते योद्धृभिरत्रेति तस्मिन् युद्धे यं रथं हिते निहितेधने धनमुद्दिश्य निमित्तात्कर्मयोगे इति सप्तमी तदुद्दिश्य रक्षथ। सर्वेषां देवानां मुख्यत्वात् इन्द्रमेवाभिलक्ष्य वदति उत्तरार्धेन । हे इन्द्र सर्वेषां मुख्य प्रातर्यावाणं प्रातरेव युद्धं प्रतिगन्तारं सानसिं संभजनीयं अरिष्यन्तं कैश्चिदप्यहिंसितं यद्वा इन्द्रसहायानां मरुतामबाधकं तं रथं स्वस्तये अस्माकं रक्षणाय वयमारुहेम आरोहेम ॥ १४ ॥

प्रायणीयेष्टौ पथ्यास्वस्तेर्यागस्य स्वस्तिनःपथ्यास्वित्येषानुक्या उत्तरायाज्या । सूत्रितं च—स्वस्तिनःपथ्यासुधन्वस्विति द्वे अग्नेनयसुपथारायेअस्मानिति । उदयनीयायामेते एव विपर्यस्ते याज्यानुवाक्ये । सूत्रितञ्च—विपरीताश्च याज्यानुवाक्याइति ।

सैषा सूक्ते पञ्चदशी—

स्वस्तिनःपथ्यासुधन्वसुस्वस्त्यप्सुवृजनेस्वर्वति ।
स्वस्तिनःपुत्रकृथेषुयोनिषुस्वस्तिरायेमरुतोदधातन ॥ १५ ॥

स्व॒स्ति । नः॒ । प॒थ्या॑सु । धन्व॑ऽसु । स्व॒स्ति । अ॒प्ऽसु । वृ॒जने॑ ।
स्व॑ःऽवति । स्व॒स्ति । नः॒ । पु॒त्र॒ऽकृ॒थेषु॑ । योनि॑षु । स्व॒स्ति ।
रा॒ये । म॒रु॒तः॒ । द॒धा॒त॒न ॥ १५ ॥

हे मरुतोमितराविणोदेवाः नोस्माकं पथ्यासु पथियोग्येषु सोदकेषु देशेषु स्वस्ति कल्याणं कुरुत तथा धन्वसु निरुदकेषु देशेषु च स्वस्ति कल्याणं उदकजननलक्षणं कुरुत तथा अप्सूदकेषु स्वस्ति तथा स्वर्वति सर्वैरायुधैर्युक्ते सेनालक्षणे वृजने शत्रूणामावर्जके बले च कल्याणं कुरुत ततः नोस्माकं पुत्रकृथेषु पुत्राणां कर्तृषु उत्पाकेषु स्त्रीणां योनिषु स्वस्ति कल्याणं यथा गर्भानपतन्ति तथा क्षेमं कुरुत । किञ्च नोस्माकं राये धनाय गवादिलक्षणाय स्वस्ति क्षेमं दधातन धत्त कुरुत ॥ १५ ॥

अथ षोडशी—

**स्व॒स्तिरिद्धिप्रप॑थे॒श्रेष्ठा॒रेक्ण॑स्वत्य॒भिया॒वा॒मम॒ेति॑ ।**
**सानो॑अ॒मासो॒अर॑णे॒निपा॑तुस्वावे॒शाभ॑वतुदे॒वगो॑पा ॥ १६ ॥**

स्व॒स्तिः । इत् । हि । प्रऽप॑थे । श्रेष्ठा॑ । रेक्ण॑स्वती । अ॒भि ।
या । वा॒मम् । एति॑ । सा । नः॒ । अ॒मा । सो इति॑ । अर॑णे । नि ।
पा॒तु । सु॒ऽआ॒वे॒शा । भ॒व॒तु । दे॒वऽगो॑पा ॥ १६ ॥

या पृथिवी गन्तुमुद्युक्तानां प्रपथे प्रकृष्टायमार्गाय स्वस्तिरित् क्षेमकारिण्येव भवति श्रेष्ठा प्रशस्यतमा रेक्णस्वती धनवती या पृथिवी वामं वननीयं यज्ञं अभ्येति उत्तरवेद्यात्मनावाभिप्राप्नोति सा पृथिवी नोस्माकं अमा गृहनामैतत् गृहं रक्षतु तथा सो साउ सैव अरणे गन्तव्ये देशे अरणे अरमणे देशेअरण्यादिकेदेशे वा नोस्मान्निपातु नितरां रक्षतु। तथा देवगोपादेवाः गोपायितारोयस्याः सन्ति सा पृथिवी अस्माकं स्वावेशा शोभननिवासा भवतु ॥१६॥

अथ सप्तदशी—

**ए॒वाप्लु॒तेः॑सू॒नुर॑वीवृधद्वो॒विश्व॑आदित्याअदितेमनी॒षी ।**
**ई॒शा॒नासो॒नरो॒अम॑र्त्ये॒नास्ता॑वि॒जनो॑दि॒व्योगये॑न ॥ १७ ॥ ५ ॥**

एव । प्लुतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः ।
अदिते । मनीषी । ईशानासः । नरः । अमर्त्येन । अस्तावि ।
जनः । दिव्यः । गयेन ॥ १७ ॥ ५ ॥

हे विश्वआदित्याः सर्वे देवाः हे अदिते देवानां मातृभूते एतन्नामिके देवि वोयुष्मान् मनीषी प्राज्ञः स्तोता प्लुतेः एतन्नामकस्यऋषेः सूनुः पुत्रोगयोनाम एवैवमुक्तरीत्या अवीवृधत् स्तुतिभिरवर्धयत् वर्धतेर्ण्यन्तस्य लुङि रूपं अमर्त्येन मनुष्यधर्मरहितेन स्तुतेन येन देवजनेन नरोमनुष्याःईशानासः धनस्य ईश्वराः स्वामिनोभवन्ति सदिव्योदिविभवोजनोदेवगणोगयेन एतन्नामकेन मया अस्तावि अभिष्टुतोभूत् स्तौतेः कर्मणि लुङि चङि रूपं ॥ १७ ॥

॥ इत्यष्टमस्य द्वितीये पञ्चमोवर्गः ॥ ५ ॥

कथेति सप्तदशर्चं चतुर्थं सूक्तं प्लातस्य गयस्यार्षं वैश्वदेवं यांमे धियमित्येषा द्वादशी षोडशी सप्तदश्यौ च त्रिष्टुभः शेषाजगत्यः । तथाचानुक्रान्तम्—कथायांमेत्रिष्टुबिति । गतोविनियोगः ।

तत्र प्रथमा—

**कथादेवानांकतमस्ययामंनिसुमन्तुनामशृण्वतांमनामहे ।**
**कोमृळातिकतमोनोमयस्करत्कतमऊतीअभ्यावंवर्तति ॥ १ ॥**

कथा । देवानाम् । कतमस्य । यामनि । सुऽमन्तु । नाम ।
शृण्वताम् । मनामहे । कः । मृळाति । कतमः । नः । मयः ।
करत् । कतमः । ऊती । अभि । आ । ववर्तति ॥ १ ॥

ऋषिर्बहुधात्मानं वितर्कयति यामनि यान्ति गच्छन्त्यत्रेति यामायज्ञः तस्मिन् शृण्वतांअस्माभिरुक्तानि स्तोत्राणि देवानां मध्ये कतमस्य देवस्य सुमंतु सुष्ठु मननीयं स्तोतव्यं नाम कथा कथं मनामहे उच्चारयामः अस्मान्कोवा मृळाति मृळतिरुपदयाकर्मेतियास्कः । कृपांकरोति कतमोवा नोस्माकं मयः सुखं करत् करोति कतमोवा ऊती चतुर्थ्याः पूर्वसवर्णदीर्घः ऊत्यै अस्माकं रक्षणाय अभ्यावववर्तति अभ्यागच्छतीत्यर्थः ॥१॥

अथ द्वितीया—

क्रतूयन्तिक्रतवोहृत्सुधीतयोवेनन्तिवेनाःपतयन्त्यादिशः ।
नमर्डिताविद्यतेअन्यएभ्योदेवेषुमेअधिकामाअयंसत ॥ २ ॥

क्रतुऽयन्ति । क्रतवः । हृत्ऽसु । धीतयः । वेनन्ति । वेनाः ।
पतयन्ति । आ । दिशः । न । मर्डिता । विद्यते । अन्यः ।
एभ्यः । देवेषु । मे । अधि । कामाः । अयंसत ॥ २ ॥

हृत्सु अस्माकं हृदयेषु धीतयः निधातव्याः निहिताः क्रतवः प्रज्ञाः क्रतूयन्ति अग्निहोत्रादिकर्मकर्तुमिच्छन्ति तदेवाह वेनाः कान्ताः प्रज्ञाः वेनन्ति देवान्कामयन्ते वेनोवेनतेः कान्तिकर्मणइतियास्कः । तथादिशोस्माभिर्निर्दिश्यमानाः प्रेर्यमाणाः कामाः आपतयन्ति देवान् फलावाप्तये आगच्छन्ति यतः येभ्योदेवेभ्यः अन्योदेवः एषां कामानां मर्डिता सुखयिता न विद्यते किंबहुना देवेष्वधि अधिशब्दः सप्तम्यर्थद्योतकः इन्द्रादिषु देवेषु मे मदीयाः कामाः अयंसत नियम्यन्ते यच्छतेः कर्मणि लुङिरूपं ॥ २ ॥

अथ तृतीया—

नराशंसंपूषणमगोह्यमग्निंदेवेद्धमभ्यर्चसेगिरा ।
सूर्यामासाचन्द्रमसायमंदिवित्रितंवातमुषसमक्तुमश्विना ॥ ३ ॥

नराशंसम् । वा । पूषणम् । अगोह्यम् । अग्निम् । देवऽइद्धम् ।
अभि । अर्चसे । गिरा । सूर्यामासा । चन्द्रमसा । यमम् । दिवि ।
त्रितम् । वातम् । उषसम् । अक्तुम् । अश्विना ॥ ३ ॥

ऋषिः स्वात्मानं संबोध्याह नराशंसं उभेवनस्पत्यादिषुयुगपदिति उभयपदप्रकृतिस्वरत्वं संहितायां विप्रकर्षश्छान्दसः नरैः शंसनीयं एतन्नामानं पूषणं स्तोतॄणां धनदानेन पोषकमेतन्नामानं तथा अगोह्यमगूहितं अन्यैर्गन्तुमशक्यं देवेद्धं वामदेवादिभिर्ऋषिभिर्दीपितं अग्निं च

1 नि० १०. ३८. ।

गिरा स्तुत्या अभ्यर्चसे अभिष्टुहि । तथा सूर्यामासा चन्द्रमसा माइतिचन्द्रमसोविशेषणं माति पक्षमिति माश्चन्द्रमाः तौ सूर्याचन्द्रमसौ दिवि द्युलोके स्थितं यमं च त्रितं त्रिषु लोकेषु ततं स्वमहिम्ना विस्तृतं त्रिस्थानं वा तमिन्द्रं वातं वायुं उषसमुषःकालं अक्तुं रात्रिं अश्विना अश्विनौ चैतान् देवान् तत्तल्लिंगैः स्तोत्रैः अभिष्टुहि ॥ ३ ॥

अथ चतुर्थी—

कथाकविस्तुवीरवान्कयागिराबृहस्पतिर्वावृधतेसुवृक्तिभिः ।
अजएकपात्सुहवेभिर्ऋक्वभिरहिःश्रृणोतुबुध्न्योहवीमनि ॥ ४ ॥

कथा । कविः । तुविऽरवान् । कया । गिरा । बृहस्पतिः । वावृधते । सुवृक्तिऽभिः । अजः । एकऽपात् । सुऽहवेभिः । ऋक्वऽभिः । अहिः । श्रृणोतु । बुध्न्यः । हवीमनि ॥ ४ ॥

कविः क्रान्तप्रज्ञोग्निः कथा कथं केन प्रकारेण तुवीरवान् बहुस्तोतृयुक्तोभवति मत्वर्थीयप्रत्ययावृत्तिः यद्वा तुविशब्दस्यरोमत्वर्थीयः बाहुल्ययुक्तदेवैः सहितोभवति । कया वा गिरा स्तुत्या बहुमान् भवति बृहस्पतिः एतन्नामकोदेवः सुवृक्तिभिः शोभनाभिः स्तुतिभिः तथा वावृधतेवर्धते तथा एकपात् एकः असहायएव पतति गच्छतीति एकपात् तादृशोदिवोधारयिता अजः एतन्नामकोदेवश्च सुहवेभिः शोभनाह्वानैः ऋक्वभिः मन्त्रवद्भिः स्तोत्रैर्वावृधते एते त्रयोदेवावर्धन्ते त्रित्वापेक्षया बहुवचनं । वृधु वृद्धौ व्यत्ययेन शपः श्लुः अहिर्बुध्न्यश्च एतन्नामकोदेवश्च हवीमनि आह्वाने अस्मान् श्रृणोतु ॥ ४ ॥

अथ पंचमी—

दक्षस्यवादितेजन्मनिव्रतेराजानामित्रावरुणाविवाससि ।
अतूर्तपन्थाःपुरुरथोअर्यमासप्तहोताविषुरूपेषुजन्मसु ॥ ५ ॥ ६ ॥

दक्षस्य । वा । अदिते । जन्मनि । व्रते । राजाना । मित्रावरुणा । आ । विवाससि । अतूर्तऽपन्थाः । पुरुऽरथः । अर्यमा । सप्तऽहोता । विषुऽरूपेषु । जन्मऽसु ॥ ५ ॥ ६ ॥

हे अदिते पृथिवि दक्षस्य सूर्यस्य जन्मनि तस्मिन् जाते व्रते तस्य यज्ञकर्मणि राजाना राजानौ मित्रावरुणौ विवाससि वाशब्दउपमार्थः यथा त्वं वेदिभूतासती तौ पर्यचरः एवमिदानीमपि अस्मद्यज्ञे कुर्वीति पृथिवीमाशास्ते । सः अर्यमा अरीणां तमसां यन्ता नियन्ता सूर्यः विषुरूपेषु नानारूपेषु जन्मसु कर्मसु अन्वहमुद्यन् सप्तहोता सप्तरश्मयोयस्मिन् रसान् जुह्वति प्रक्षिपन्ति सएतादृशोभवति । अतूर्तपन्थाः अतूर्तस्त्वरारहितः पंथायस्य सनियतगतित्वात् त्वरमाणोहि अनियतगतिर्भवति पुरुरथः रथोरंहतेः प्रत्यहं भुक्तिभेदाद्बहुरंहणोभवति यद्वा हे अदिते प्रातस्तनि संध्ये दक्षस्यादित्यस्य जन्मनि उदयाख्ये जन्मनि कर्मणि उद्यत्यादित्यइत्यर्थः वाशब्दः श्रुतिसामर्थ्यात् दक्षस्य वा जन्मनि त्वत्तः तव वा जन्मनि दक्षादिति राजाना दीप्यमानौ मित्रावरुणा । अहर्वैमित्रोरात्रिर्वरुणइतिश्रुतेः । अहोरात्रौ मित्रावरुणावुच्येते तौ विवाससि परिचरसि कथं तदनुप्रवेशेन अर्धं हि संध्यायाः रात्रिमनुप्रविशति अर्धमहरिति । उत्तरार्धः पूर्ववत् । सप्तहोता ह्वयतेरर्चतिकर्मण इदं रूपं सप्तर्षयोभरद्वाजादयोहोतारः स्तोतारः संतीति अथवा सप्तहोता मलिम्लुचांहस्पतिसहिताः सप्तर्तवोयस्य होतारोभवन्ति तादृशः अत्र-निरुक्तं—दक्षस्यवादितेजन्मनि व्रते कर्मणि राजानौ मित्रावरुणौ परिचरसि विवासतिः परिचर्यायां हविष्मांआविवासतीत्याशास्तेर्वातूर्तपंथा अत्वरमाणपंथा बहुरथोर्यमाइत्यनुसंधेयं ॥ ५॥

॥ इत्यष्टमस्य द्वितीये षष्ठोवर्गः ॥ ६ ॥

अथ षष्ठी—

**तेनोअर्वन्तोहवनश्रुतोहवंविश्वेशृण्वन्तुवाजिनोमितद्रवः ।**
**सहस्रसामेधसाताविवत्मनामहोयेधनंसमिथेषुजभ्रिरे ॥ ६ ॥**

ते । नः । अर्वन्तः । हवनऽश्रुतः । हवम् । विश्वे । शृण्वन्तु ।
वाजिनः । मितऽद्रवः । सहस्रऽसाः । मेधसाताऽइव । त्मना ।
महः । ये । धनम् । सम्ऽइथेषु । जभ्रिरे ॥ ६ ॥

हवनश्रुतः आह्वानं शृण्वन्तः वाजिनोबलवन्तः मितद्रवोमितमार्गाः अध्वानं परिच्छिन्दन्तः विश्वे सर्वे प्रसिद्धाअर्वन्तोश्वाः इन्द्रादीनांवाहनभूताः हयादयः नोस्माकं हवमाह्वानं शृ

१ ऐ० ब्रा० ४. १०. ।    २ नि० ११. २३. ।

ण्वन्तु । कीदृशामेधसातावेिव मेधाः स्तुतयः सार्यंते संभज्यन्ते अत्रेति मेघसातिर्यज्ञः तस्मि न्निव त्मना आत्मनैव सहस्रसाः सहस्रसंख्याकस्य धनस्य दातारः तेश्शृण्वन्तु येश्वाः समिथे षु संग्रामनामैतत् संप्राप्यते योद्धृभिरत्रेतितेषु संग्रामेषु महोमहत्धनं जभ्रिरे शत्रुभ्यआहरंति। इमहोभः ॥ ६ ॥

अथ सप्तमी—

प्रवोवायुंरथयुजंपुरंधिंस्तोमैःकृणुध्वंसख्यायपूषणंम् ।
तेहिदेवस्यसवितुःसवीमनिक्रतुंसचंन्तेसचितःसचेतसः ॥ ७ ॥

प्र । वः । वायुम् । रथऽयुजंम् । पुरंमऽधिम् । स्तोमैः । कृणुध्वम् ।
सख्याय । पूषणंम् । ते । हि । देवस्य । सवितुः । सवीमनि ।
क्रतुंम् । सचंन्ते । सऽचितः । सऽचेतसः ॥ ७ ॥

हे स्तोतारोवोयूयंवायुं रथयुजं रथस्य योक्तारं पुरंधिं बहुकर्माणमिन्द्रं पूषणमेतन्नामानं चस्तोमैः त्रिवृत्पञ्चदशादिलक्षणैः सख्याय सखिकर्मणे प्रकृणुध्वं प्रकुरुध्वं यथाते अस्माकं धनादि प्रदानेन सखायोभवन्ति तथा कुरुत हि यस्मात् सचितः ज्ञानयुक्तास्ते देवाः सचेतसः परस्परं समानबुद्धयः सन्तः सवितुः सर्वस्य प्रेरकस्य देवस्यादित्यस्य सवीमनि प्रसवे अह्नि क्रतुं यज्ञं सचन्ते सेवन्ते तस्मात्प्रकुरुध्वम् ॥ ७ ॥

अथाष्टमी—

त्रिःसप्तसस्रानद्योमहीरपोवनस्पतीन्पर्वताँअग्निमूतये ।
कृशानुमस्तॄन्तिष्यंसधस्थआरुद्रंरुद्रेषुरुद्रियंहवामहे ॥ ८ ॥

त्रिः । सप्त । सस्राः । नद्यः । महीः । अपः । वनस्पतीन् । पर्वतान् ।
अग्निम् । ऊतये । कृशानुम् । अस्तॄन् । तिष्यम् । सधऽस्थे ।
आ । रुद्रम् । रुद्रेषु । रुद्रियम् । हवामहे ॥ ८ ॥

त्रिःसप्त एकविंशतिसंख्याकाः सस्राः सरन्तीः नद्योनदीः सरस्वती सरयूः सिंधुरिति त्रया णांगणानां प्रधानभूताःतदाद्यानदीः महीर्महान्ति अपस्तासामुदकानि सोमाभिषवार्थं वनस्पती

न् दारुमयांश्चमसादीन् पर्वतान् सोमाभिषवार्थं ग्राव्णः अग्निं होमनिष्पादकं कृशानुं सोमपालमेतन्नामानं गंधर्वं अस्तॄन् इषूणां क्षेप्तॄन् तदनुचरान्गंधर्वान् ऊतये सोमरक्षणाय तिष्यं नक्षत्रं च रुद्रियं रुद्रस्तोमार्हं रुद्रं हविर्भागिनं रुद्रमेतन्नामानं यद्वा यज्ञपरिशिष्टस्वामिनं रुद्रं च एतान् सर्वान् सधस्थे सह तिष्ठन्त्यत्रेति सधस्थोयज्ञः तस्मिन् रुद्रेषु स्तोत्रकारिषु तदर्थं हवामहे स्तुत्यत्वेनाह्वयामहे ॥ ८ ॥

अथ नवमी—

सरस्वतीसरयुःसिन्धुरूर्मिभिर्महोमहीरवसायन्तुवक्षणीः ।
देवीरापोमातरःसूदयित्न्वोघृतवत्पयोमधुमन्नोअर्चत ॥ ९ ॥

सरस्वती । सरयुः । सिन्धुः । ऊर्मिऽभिः । महः । महीः । अवसा । आ । यन्तु । वक्षणीः । देवीः । आपः । मातरः । सूदयित्न्वः । घृतऽवत् । पयः । मधुऽमत् । नः । अर्चत ॥ ९ ॥

महोमहतोपि महीर्महत्यः अत्यन्तं महत्यः ऊर्मिभिः सहिताः सरस्वती सरयूः सिन्धुः एतदाद्याएकविंशतिसंख्याकाः वक्षणीः इमानद्यः अवसा रक्षणेन हेतुना आयन्तु अस्मदीयं यज्ञं प्रत्यागच्छन्तु ततः देवीः देवनशीलामातरोमातृभूताः सूदयित्न्वः प्रेरयित्र्यः तासामापः घृतवत् घृतयुक्तं मधुमत् मधुसहितमात्मीयं पयः नोस्मभ्यमर्चत प्रयच्छत ॥ ९ ॥

अथ दशमी—

उतमाताबृहद्दिवाशृणोतुनस्त्वष्टादेवेभिर्जनिभिःपितावचः ।
ऋभुक्षावाजोरथस्पतिर्भगोरण्वःशंसःशशमानस्यपातुनः॥१०॥७॥

उत । माता । बृहत्ऽदिवा । शृणोतु । नः । त्वष्टा । देवेभिः । जनिऽभिः । पिता । वचः । ऋभुक्षाः । वाजः । रथःपतिः । भगः । रण्वः । शंसः । शशमानस्य । पातु । नः ॥ १० ॥ ७ ॥

उतापिच बृहद्दिवा महद्दिवेति यास्कः । महती दिवा दीप्तिर्यस्याः सा माता देवमाता नोस्माकमाह्वानं शृणोतु तथा देवेभिर्देवैरिन्द्रादिभिः जनिभिर्देवपत्नीभिश्च पिता सर्वेषां त्वष्टा

एतन्नामकः अस्मदीयं वचः शृणोतु तथा ऋभुक्षाः इन्द्रः वाजः तत्सहायः वाजोनामसौधन्वनः कनीयान् रथस्पतिः रथस्य पतिः भगश्च तथा रण्वोरमणीयः शंस स्तुत्योमरुद्गणश्च ततः शशमानस्य शंसमानं स्तोतुं नोस्मान् पातु रक्षतु ॥ १० ॥

॥ इत्यष्टमस्य द्वितीये सप्तमोवर्गः ॥ ७ ॥

अथैकादशी—

रण्वःसंदृष्टौपितुमाँइवक्षयोभद्रारुद्राणांमरुतामुपस्तुतिः ।
गोभिःष्यामयशसोजनेष्वासदादेवासइळयासचेमहि ॥ ११ ॥

रण्वः । सम्ऽदृष्टौ । पितुमान्ऽइव । क्षयः । भद्रा । रुद्राणाम् ।
मरुताम् । उपऽस्तुतिः । गोभिः । स्याम । यशसः । जनेषु ।
आ । सदा । देवासः । इळया । सचेमहि ॥ ११ ॥

संदृष्टौ संदर्शने रण्वोरमणीयोमरुद्गणः पितुमानिव अन्नवानिव क्षयोनिवासः स्तोतॄणां भवति रुद्राणां रुद्रपुत्राणां तेषां मरुतां उपस्तुतिः अनुग्रहबुद्धिः भद्रा कल्याणी भवति । तस्मात् जनेषु जनानां मध्ये वयं गोभिर्गवादिभिः यशसोयशस्विनः स्याम भवेम आ अनंतरं हे देवासोदेवाः युष्मान् सदा सर्वदा इळया अन्नेन हविर्लक्षणेन सचेमहि सचेम संगच्छेम ॥ ११ ॥

अथ द्वादशी—

यांमेधियंमरुतइन्द्रदेवाअददातवरुणमित्रयूयम् ।
तांपीपयतपयसेवधेनुंकुविद्गिरोअधिरथेवहाथ ॥ १२ ॥

याम् । मे । धियम् । मरुतः । इन्द्र । देवाः । अददात । वरुण ।
मित्र । यूयम् । ताम् । पीपयत । पयसाऽइव । धेनुम् ।
कुवित् । गिरः । अधि । रथे । वहाथ ॥ १२ ॥

---

१ नि० ११. ४९ ।

हेमरुतः हेइन्द्र देवाः हे वरुण हेमित्र यूयं यां धियं यत्कर्म मे मह्यं अददात दत्तवन्तः स्थ। मरुतइत्यत्र वाक्यभेदादनिघातः पूर्वपूर्वस्याविद्यमानत्वेनाद्युदात्तत्वं। तां धियं पीपयत फलेनाप्यायत। तत्रदृष्टान्तः—पयसेव धेनुं नवसूतिकां गां क्षीरेण यथाप्याययन्ति तद्वत्। किञ्च गिरः अस्मदीयाः स्तुतीः रथेधिरथे आत्मीये रथे कुवित् बहुवारं वहाथ प्राप्ताः स्थ स्तुतेषु सत्सु यज्ञं प्रत्यागमनाय रथारूढाभवथ॥ १२॥

अथ त्रयोदशी—

कुविदङ्गप्रतियथाचिदस्यनःसजात्यंस्यमरुतोबुबोधथ।
नाभायत्रंप्रथमंसंनसामहेतत्रंजामित्वमादितिर्दधातुनः॥ १३॥

कुवित्। अङ्ग। प्रति। यथा। चित्। अस्य। नः। सऽजात्यंस्य। मरुतः। बुबोधथ। नाभा। यत्रं। प्रथमम्। सम्ऽनसामहे। तत्रं। जामिऽत्वम्। अदितिः। दधातु। नः॥ १३॥

अंगेति संबुद्धौ हे मरुतः यूयं नोस्मात् कुवित् बहुवारं प्रतिबुबोधथ तथा प्रतिबुध्यध्वं कुविच्छब्दयोगादनिघातः यथानोस्मान् सजात्यस्यास्य बांधवस्य विषयभूतान् कुरुथ तथा जानीथ ततोनाभा पृथिव्यानाभिस्थाने यत्र यस्मिन्नुत्तरवेदिलक्षणे देशे प्रथममेव संनसामहे हविषा यत्र संगच्छेमहि तत्रैव देशे अदितिः देवानां माता नोस्माकं जामित्वं मनुष्यैः सह बांधवंदधातु विदधातु॥ १३॥

अथ चतुर्दशी—

तेहिद्यावापृथिवीमातरामहीदेवीदेवाञ्जन्मनायज्ञियेइतः।
उभेबिभृतउभयंभरीमभिःपुरूरेतांसिपितृभिश्चसिञ्चतः॥ १४॥

ते इति। हि। द्यावापृथिवी इति। मातरा। मही इति। देवी इति। देवान्। जन्मना। यज्ञिये इति। इतः। उभे इति। बिभृतः। उभयम्। भरीमऽभिः। पुरु। रेतांसि। पितृऽभिः। च। सिञ्चतः॥ १४॥

मातरा सर्वस्य जगतोनिर्मात्र्यौ अतएव मही महत्यौ देवी देवनशीले यज्ञिये यज्ञार्हे ते द्यावापृथिव्यौ देवानिन्द्रादीन् जन्मनैव इतोहि प्रापुतः खलु इण् गतौ लिटि रूपं। किञ्च उभे द्यावापृथिव्यौ भरीमभिः भरणैर्नानाविधैः उभयं जनं देवान्मनुष्यांश्च बिभृतः धारयतः पोषयतः तथा पितृभिः पालकैर्देवैःसंगते ते पुरु पुरूणि आत्मीयानि रेतांस्युदकानि सिञ्चतः क्षरतः प्रत्यक्षेण धारयतः ॥ १४ ॥

अथ पञ्चदशी—

विषाहोत्राविश्वंमश्नोतिवार्यंबृहस्पतिररमंतिःपनीयसी।
ग्रावायत्रंमधुषुदुच्यतेबृहदवींवशन्तमतिभिर्मनीषिणः॥ १५ ॥

वि। सा। होत्रा। विश्वम्। अश्नोति। वार्यम्। बृहस्पतिः।
अरमतिः। पनीयसी। ग्रावा। यत्र। मधुऽसुत्। उच्यते।
बृहत्। अवीवशन्त। मतिऽभिः। मनीषिणः॥ १५ ॥

होत्रा वाङ्नामैतत् आहूयन्ते अनया देवाइति सा वाक् वार्यं वरणीयं विश्वं सर्वं पश्वादिसहितं धनं व्यश्नोति। विविधं व्याप्नुते कीदृशी बृहस्पतिः बृहतां महतां पालयित्री अरमतिः पर्याप्तस्तुतिः यद्वा कुत्राप्यनुपरता पनीयसी अत्यंतं देवानां स्तोत्रकारिणी यत्र यस्यां होत्रायां मधुषुत् सोममभिषुण्वन् बृहत् महान् ग्रावा उच्यते अभिधीयते स्तूयते इत्यर्थः तं स्तुतिमन्तं यज्ञं मनीषिणोदेवाः मतिभिः स्तुतिभिः सह अवीवशन्त कामयन्ते वष्टेर्ण्यन्तस्य लुङि रूपं यद्वा मनीषिणः स्तोतारः स्तुतिभिर्देवान् यज्ञं कामयमानान् कुर्वन्ति॥ १५ ॥

अथ षोडशी—

एवाकविस्तुवीरवाँऋतज्ञाद्रविणस्युर्द्रविणसश्चकानः।
उक्थेभिरत्रमतिभिश्चविप्रोपीपयद्गयोदिव्यानिजन्म॥ १६ ॥

एव। कविः। तुविऽरवान्। ऋतऽज्ञाः। द्रविणस्युः।
द्रविणसः। चकानः। उक्थेभिः। अत्र। मतिऽभिः। च।
विप्रः। अपीपयत्। गयः। दिव्यानि। जन्म॥ १६ ॥

कविः क्रान्तप्रज्ञः तुवीरवान् मत्वर्थीयप्रत्ययावृत्तिः बहुस्तुतियुक्तः ऋतज्ञाः यज्ञस्य वेदिता द्रविणस्युः धनकामः सर्वप्रातिपदिकेभ्योलालसायामिति सुगागमः । तस्यैव विशदवचनं द्रविणसश्वकानइति पश्वादिधनं कामयमानइत्यर्थः । विप्रोमेधावी गयोनाम ऋषिः एवं उक्तप्रकारेण अत्र सूक्ते उक्थेभिः शस्त्रैः मतिभिः स्तुतिभिश्च दिव्यानि दिविजातानि जन्म जननानि देवान् अपोपयत् अवर्धयत् अस्तावीदित्यर्थः ॥ १६ ॥

अथ सप्तदशी—

एवाप्लुतेःसूनुरवीवृधद्वोविश्वआदित्याअदितेमनीषी ।
ईशानासोनरोअमर्त्येनास्तावि जनोदिव्योगयेन ॥ १७ ॥ ८ ॥

एव । प्लुतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः ।
अदिते । मनीषी । ईशानासः । नरः । अमर्त्येन ।
अस्तावि । जनः । दिव्यः । गयेन ॥ १७ ॥ ८ ॥

इयं व्याख्यता ॥ १७ ॥

॥ इत्यष्टमस्य द्वितीयेष्टमोवर्गः ॥ ८ ॥

अग्निरिन्द्रइति पञ्चदशर्चं पञ्चमं सूक्तं वसुक्रपुत्रस्य वसुकर्णस्यार्षं वैश्वदेवं पञ्चदशी त्रिष्टुप् शिष्टाजगत्यः । तथाचानुक्रम्यते—अग्निरिन्द्रः पञ्चोना वासुक्रोवसुकर्णस्त्रिष्टुबन्तंत्विति ।

तत्र प्रथमा—

अग्निरिन्द्रोवरुणोमित्रोअर्यमावायुःपूषासरस्वतीसजोषसः ।
आदित्याविष्णुर्मरुतःस्वर्बृहत्सोमोरुद्रोअदितिर्ब्रह्मणस्पतिः ॥१॥

अग्निः । इन्द्रः । वरुणः । मित्रः । अर्यमा । वायुः । पूषा ।
सरस्वती । सऽजोषसः । आदित्याः । विष्णुः । मरुतः । स्वः ।
बृहत् । सोमः । रुद्रः । अदितिः । ब्रह्मणः । पतिः ॥ १ ॥

अग्न्यादयः आदित्यादयः बृहत् बृहती स्वः द्यौश्च सोमादयएते देवाः सजोषसः संगताः संतः अन्तरिक्षं स्वमहिम्ना आपूरयन्तीत्युत्तरेण संबंधः ॥ १ ॥

अथ द्वितीया—

इन्द्राग्नीवृंत्रहत्येषुसत्पतीमिथोहिन्वानातन्वा३समोकसा ।
अन्तरिक्षंमह्यापप्रुरोजसासोमोघृतश्रीर्महिमानमीरयन् ॥ २ ॥

इन्द्राग्नी इति । वृत्रऽहत्येषु । सत्पती इति सत्ऽपती । मिथः ।
हिन्वाना । तन्वा । समऽओकसा । अन्तरिक्षम् । महि । आ ।
पप्रुः । ओजसा । सोमः । घृतऽश्रीः । महिमानम् । ईरयन् ॥ २ ॥

वृत्रहत्येषु वृत्रहननेषु युद्धेषु यद्वा कर्मणि छान्दसः क्यप् वृत्राणि शत्रवोहन्यन्ते अत्रेति वृत्रहत्या युद्धानि तेषु मिथः परस्परं तन्वा शरीरेण तत्रस्थेन बलेन शत्रून् हिन्वाना प्रेरयन्तौ सत्पती सतां पती समोकसा समानस्थानौ इन्द्राग्नी घृतश्रीः उदकं वसतीवर्याख्यं श्रयमाणः महिमानं आत्मीयमीरयन् सर्वत्र उदीरयन् उद्गमयन् सोमश्च एते पूर्वे च महि महदन्तरिक्षमोजसा स्वबलेन आपप्रुः आपूरयन्ति । प्रा पूरणे ॥ २ ॥

अथ तृतीया—

तेषांहिमह्नामहतामनर्वणांस्तोमाँइयर्म्यृतज्ञाऋतावृधाम् ।
येअंप्सवमर्णवंचित्रराधसस्तेनोरासन्तांमहयेसुमित्र्याः ॥ ३ ॥

तेषाम् । हि । मह्ना । महताम् । अनर्वणाम् । स्तोमान् । इयर्मि ।
ऋतऽज्ञाः । ऋतऽवृधाम् । ये । अप्सवम् । अर्णवम् ।
चित्रऽराधसः । ते । नः । रासन्ताम् । महये । सुऽमित्र्याः ॥ ३ ॥

मह्ना स्वमहत्त्वेन महतां अनर्वणां अन्यस्मिन्नप्रत्यृतानां शत्रुभिरभिगन्तव्यानांऋतावृधां सत्यभूतेन यज्ञेन वृद्धानां तेषामग्न्यादीनां देवानामेव ऋतज्ञाः यज्ञस्य ज्ञाताहं स्तोमानिय-

र्मि प्रेरयामि । ऋ गतिप्रापणयोः जौहोत्यादिकः चित्रराधसः चायनीयधनोपेताः यद्वा पश्वादिलक्षणबहुधनाः ये देवाः अप्सवं अप्सइति रूपनाम रूपवन्तं अर्णवं अर्णसःसलोपश्चेति मत्वर्थीयोवप्रत्ययः उदकवन्तं मेघं वर्षन्ति ते सुमित्र्याः शोभनसखिकर्माणस्ते देवाः नोस्मभ्यं महये जनेषु मध्ये पूजार्थं धनं रासंतां प्रयच्छन्तु । रासृ दाने ॥ ३ ॥

अथ चतुर्थी—

**स्वर्णरमन्तरिक्षाणिरोचनाद्यावाभूमीपृथिवींस्कम्भुरोजसा ।**
**पृक्षाइवमहयन्तःसुरातयोदेवास्तवन्तेमनुषायसूरयः ॥ ४ ॥**

स्वःऽनरम् । अन्तरिक्षाणि । रोचना । द्यावाभूमी इति । पृथिवीम् । स्कम्भुः । ओजसा । पृक्षाःऽइव । महयन्तः । सुऽरातयः । देवाः । स्तवन्ते । मनुषाय । सूरयः ॥ ४ ॥

स्वर्णरं सर्वस्य स्वस्वकर्मणि नेतारं आदित्यं अन्तरिक्षाणि द्यावापृथिव्योरन्तरा मध्ये क्षियन्ति निवसन्तीत्यन्तरिक्षाणि मध्यस्थितानि रोचना रोचमानानि तेजांसि द्यावाभूमी द्यावापृथिव्यौ पृथिवीं विस्तीर्णमन्तरिक्षं च एतानादित्यादीन् ओजसास्वबलेनैव देवाः स्कंभुः धारयन्ति स्कंभु इति सौत्रोधातुः लिटिरूपं । किञ्च पृक्षाइव दरिद्रेषु धनानि संपर्चयन्तइव अत एव महयन्तः स्तोतॄन् धनादिभिः पूजयन्तः सुरातयः सुदानाः मनुषाय मनुष्याय सूरयः धनानां प्रेरकाः एते देवाः स्तवन्ते अस्मिन् यज्ञे स्तूयन्ते ॥ ४ ॥

अथ पञ्चमी—

**मित्रायशिक्षवरुणायदाशुषेयासम्राजामनसानप्रयुच्छतः ।**
**ययोर्धामधर्मणारोचतेबृहद्ययोरुभेरोदसीनाधसीवृतौ ॥ ५ ॥ १ ॥**

मित्राय । शिक्ष । वरुणाय । दाशुषे । या । सम्ऽराजा । मनसा । न । प्रऽयुच्छतः । ययोः । धाम । धर्मणा । रोचते । बृहत् । ययोः । उभे इति । रोदसी इति । नाधसी इति । वृतौ ॥ ५ ॥ १ ॥

दाशुषे धनानि स्तोतृभ्यः प्रयच्छते मित्राय वरुणाय च शिक्ष हवींषि प्रयच्छ शिक्षतिर्दानकर्मा सम्राजा सम्राजौ सर्वस्य या यौ मित्रावरुणौ मनसा अन्तःकरणेनापि न प्रयुच्छतः न प्रमाद्यतः किमुत बाह्येन व्यापारेण । युच्छ प्रमादे भौवादिकः । ययोर्मित्रावरुणयोः बृहत् महत् धाम शरीरं धर्मणा आत्मीयेन लोकप्रकाशनादिलक्षणेन कर्मणा रोचते सम्यग्दीप्यते ययोश्च नाधसी नाधृयाञ्चोपतापैश्वर्याशीःषु याचमाने उभे रोदसीद्यावापृथिव्यौ वृतौ वर्तमाने भवतः यद्वा नाधसी देवमनुष्यैः समृद्धे द्यावापृथिव्यौ तयोर्वृतौ वर्तनेभवतः तदधीने भवत इत्यर्थः ॥ ५ ॥

॥ इत्यष्टमस्य द्वितीये नवमोवर्गः ॥ ९ ॥

अथ षष्ठी—

यागौर्वर्तनिंपर्येतिनिष्कृतंपयोदुहानाव्रतनीरवारतः ।
साप्रब्रुवाणावरुणायदाशुषेदेवेभ्योदाशद्धविषाविवस्वते ॥ ६ ॥

या । गौः । वर्तनिम् । परिऽएति । निःऽकृतम् । पयः । दुहाना ।
व्रतऽनीः । अवारतः । सा । प्रऽब्रुवाणा । वरुणाय ।
दाशुषे । देवेभ्यः । दाशत् । हविषा । विवस्वते ॥ ६ ॥

येयं मदीया पयः क्षीरादिकं दुहाना व्रतनीः आश्रयणपयःप्रदानेन कर्मणोनेत्री गौः निष्कृतं संस्कृतंवर्तनिमावासस्थानं यज्ञमवारतः अवरणेन अप्रार्थनेनैव पर्येति परिगच्छति स्वयमेवागच्छति प्रब्रुवाणा मया प्रस्तूयमाना सागौर्दाशुषे हविर्दत्तवते वरुणाय देवेभ्यः अन्येभ्यइन्द्रादिभ्यश्च हविषा अन्नेन विवस्वते देवान् परिचरते मह्यं मां रक्षितुं दाशत् पयः प्रयच्छतु दाशृदाने लेटयडागमः ! यद्वा गौरिति माध्यमिका वाक् या पयऊर्जं दुहाना । सानोमन्द्रेषमूर्जंदुहानाइत्यादिषु दृष्टत्वात् । तत्परतया पूर्ववद्योज्यम् ॥ ६ ॥

अथ सप्तमी—

दिवक्षसोअग्निजिह्वाऋतावृधऋतस्ययोनिंविमृशन्तआसते ।
द्यांस्कभित्व्य[1]पआचक्रुरोजसायज्ञंजनित्वीतन्वीऽनिमामृजुः ॥ ७ ॥

---

[1] ऋ० सं० ६. ७. ५.

दिवक्षसः । अग्निऽजिह्वाः । ऋतऽवृधः । ऋतस्यं । योनिम् ।
विऽमृशन्तः । आसते । द्याम् । स्कभित्वी । अपः । आ । चक्रुः ।
ओजसा । यज्ञम् । जनित्वी । तन्वि । नि । ममृजुः ॥ ७ ॥

दिवक्षसः स्वतेजसादिवं व्याप्नुवंतः अक्षू व्याप्तौ असुनि रूपं । यद्वा दिवोवोढारः अग्निजिह्वाः अग्न्यास्याः अग्निना हवींषि लिहन्ति आस्वादयन्तीति तन्मुखाः ऋतावृधः यज्ञवृद्धा यज्ञस्य वर्धयितारो देवा ऋतस्य सत्यभूतस्य यज्ञस्य योनिं स्थानं विमृशन्तः विचारयन्तः प्रतीक्षमाणाः सन्तः आसते सर्वत्र तिष्ठन्ति तइमे द्यां द्युलोकं स्कभित्वी स्कभित्वा तां धारयित्वा ओजसा स्वबलेन अपः अपेक्षितान्युदकानि आचक्रुः आकुर्वन्ति ततः यज्ञं यजनीयं हविश्च जनित्वी जनयित्वा तन्वि स्वशरीरे निमामृजुः निमृजन्ति नितरामलंकुर्वन्ति हविर्भक्षयन्तीत्यर्थः ॥ ७ ॥

अथाष्टमी—

परिक्षितांपितरांपूर्वजावरीऋतस्ययोनांक्षयतःसमोकसा ।
द्यावांपृथिवीवरुणायसव्रंतेघृतवत्पयोंमहिषायंपिन्वतः ॥ ८ ॥

परिऽक्षितां । पितरां । पूर्वजावरी इति पूर्वऽजावरी । ऋतस्यं ।
योनां । क्षयतः । समऽओकसा । द्यावांपृथिवी इति । वरुणाय ।
सव्रंते इति सऽव्रंते । घृतऽवंत् । पयंः । महिषायं । पिन्वतः ॥ ८ ॥

परिक्षिता परितोनिवसन्त्यौ सर्वत्र व्यापिन्यौ पितरा सर्वेषां मातापितृभूते अतएव पूर्वजावरी पूर्वं जाते समोकसा समाननिवासस्थाने एते द्यावापृथिव्यौ ऋतस्य यज्ञस्य योना योनौ स्थाने क्षयतः आहुत्यधिकरणत्वेन निवसतः हविर्धानरूपेवा क्षियतः । किञ्च सव्रते समानकर्मणी ते महिषाय महते पूज्याय वा वरुणाय तं यष्टुं उपलक्षणमेतत् अन्यान् देवानपि घृतवत् क्षरणवत् पयउदकं पिन्वतः सिञ्चतः उदकेनहि अन्नंजायते ॥ ८ ॥

अथ नवमी—

पर्जन्यावातांवृषभापुरीषिणेन्द्रवायूवरुणोमित्रोअर्यमा ।
देवाँआंदित्याँअदितिंहवामहेयेपार्थिवासोदिव्यासोअप्सुये ॥ ९॥

पर्जन्यावाता । वृषभा । पुरीषिणा । इन्द्रवायू इति । वरुणः । मित्रः । अर्यमा । देवान् । आदित्यान् । अदितिम् । हवामहे । ये । पार्थिवासः । दिव्यासः । अप्ऽसु । ये ॥ ९ ॥

पर्जन्यावाता पर्जन्यावातौ पर्जन्यवायू वृषभा वृषभौ कामानां सेक्तारौ पुरीषिणा पुरीषिणौ पुरीषमुदकं कर्तृत्वेन तद्वन्तौ तौ इन्द्रवायू वरुणादयश्च एते स्वमहिम्ना सर्वत्र वर्तन्ते वायोः पर्जन्येन इन्द्रेण च तत्कार्यापेक्षया सहोपादानं । एतानादित्यान् देवान् अदितिं तेषां मातरं च हवामहे अस्मिन्यज्ञे वयमाह्वयामः । किञ्च ये देवाः पार्थिवासः पार्थिवाः पृथिव्यां भवाः ये च दिव्याः दिवि जाताः ये च अप्सु अन्तरिक्षे समुत्पन्नास्तानप्याह्वयामहे ॥ ९ ॥

अथ दशमी–

त्वष्टारंवायुमृभवोयओहतेदैव्याहोताराउषसंस्वस्तये ।
बृहस्पतिंवृत्रखादंसुमेधसमिन्द्रियंसोमंधनसाउईमहे ॥१०॥१०॥

त्वष्टारम् । वायुम् । ऋभवः । यः । ओहते । दैव्या । होतारौ । उषसम् । स्वस्तये । बृहस्पतिम् । वृत्रऽखादम् । सुऽमेधसम् । इन्द्रियम् । सोमम् । धनऽसाः । ऊँ इति । ईमहे ॥ १०॥ १० ॥

हे ऋभवः ऋतेन सत्येन भांतीत्यृभवः उरु प्रभूतं स्वतेजसा भांतीति वा हे मेधाविनः यः सोमः स्वस्तये कल्याणाय युष्माकं मदाय त्वष्ट्रप्रभृतीन् ओहते ओहिर्गत्यर्थः भौवादिकः आवहति प्राप्नोति तथा बृहस्पतिं सुमेधसं सुप्रज्ञं वृत्रखादं वृत्रस्यासुरस्य खादितारं इन्द्रं च प्राप्नोति धनसा धनं संभजमाना वयं इन्द्रियं इन्द्रजुष्टं तं सोमं ईमहे धनं याचामहे ईमहइति याञ्चाकर्मा । ईङ्गतौ दैवादिकः बहुलंछन्दसीतिविकरणस्य लुक् ॥ १० ॥

॥ इत्यष्टमस्य द्वितीये दशमोवर्गः ॥ १० ॥

अथैकादशी–

ब्रह्मगामश्वंजनयन्तओषधीर्वनस्पतीन्पृथिवींपर्वताँअपः ।
सूर्यंदिविरोहयन्तःसुदानवआर्याव्रताविसृजन्तोअधिक्षमि ॥११॥

ब्रह्म । गाम् । अश्वम् । जनयन्तः । ओषधीः । वनस्पतीन् ।
पृथिवीम् । पर्वतान् । अपः । सूर्यम् । दिवि । रोहयन्तः । सुऽदानवः ।
आर्याः । व्रता । विऽसृजन्तः । अधि । क्षमि ॥ ११ ॥

ब्रह्म वर्धनसाधनमन्नं अन्नेन हि सर्वाः प्रजावर्धन्ते गां अश्वं एतत्प्रभृतीन् पशून् तथा ओषधीः वनस्पतींश्च तथा पृथिवीं विस्तीर्णां भूमिं पर्वतान् शिलोच्चयान् वृष्ट्या जगदापूरकान् मेघान् वा अपउदकानि अन्तरिक्षं वा एतान् जनयन्तः उत्पादयन्तः । किञ्च दिविद्युलोके सूर्यमादित्यं रोहयन्तः सुदानवः शोभनदानाः ते अमी देवाः अधिक्षमि आतइति योगविभागादाकारलोपः क्षमायां पृथिव्यां आर्या श्रेष्ठानि कल्याणानि व्रतानि कर्माणि यागादीनि विसृजन्तः प्रसारयन्तः सर्वत्र वर्तन्ते तान् वयं धनं याचामहे इति शेषः ॥ ११ ॥

अथ द्वादशी—

भुज्युमंहसःपिपृथोनिरश्विनाश्यावंपुत्रंवध्रिमत्याअजिन्वतम् ।
कमद्युवंविमदायोहथुर्युवंविष्णाप्वं[1]विश्वकायावसृजथः ॥ १२ ॥

भुज्युम् । अंहसः । पिपृथः । निः । अश्विना । श्यावम् । पुत्रम् ।
वध्रिऽमत्याः । अजिन्वतम् । कमऽद्युवम् । विऽमदाय । ऊहथुः ।
युवम् । विष्णाप्वम् । विश्वकाय । अव । सृजथः ॥ १२ ॥

हे अश्विना अश्ववन्तौ सर्वं व्याप्नुवन्तौ वा एतन्नामकौ हे देवौ अंहसउपद्रवकारिणः समुद्रात् भुज्युं तुग्रपुत्रं एतन्नामानं निष्पिपृथः निपारयथः नितरां रक्षथः पृपालनपूरणयोः जौहोत्यादिकः । निष्टौग्र्यंपारयथःसमुद्रादितिनिगमः[2] । तथा श्यावंहिरण्यहस्तनामानं पुत्रं वध्रिमत्याः एतन्नामिकायाः अजिन्वतं अप्रीणयतं अदत्तं हिरण्यहस्तमश्विनारराणेत्यादिनिगमः । तथा कमद्युवं कामस्य दीपनीं वेनपुत्रीं जायां विमदाय ऋषये युवामूहथुः प्रापयथः युवंरथेनविमदायेतिनिगमः[3] । तथा विष्णाप्वं एतन्नामानं विनष्टं पुत्रं विश्वकाय ऋषये आनीय अवसृजथः अदत्तं । पशुंननष्टमिवदर्शनायेतिनिगमः[4] ॥ १२ ॥

---

१ ऋ० सं० १. ८. १९. । २ ऋ० सं० १. ८. १७. । ३ ऋ० सं० ७. ८. १६. ।
४ ऋ० सं० १. ८. १४. ।

अथ त्रयोदशी—

**पा॒वी॒र॒वी॒त॒न्य॒तु॒रेक॑पाद॒जो दि॒वो ध॒र्ता सिन्धु॒राप॑: समु॒द्रिय॑: ।**
**विश्वे॑ दे॒वास॑: शृणव॒न्वचां॑सि मे॒ सर॑स्वती स॒ह धी॒भिः पुर॑न्ध्या ॥ १३ ॥**

पा॒वी॒र॒वी । त॒न्य॒तुः । एक॑ऽपात् । अ॒जः । दि॒वः । ध॒र्ता । सिन्धुः॑ । आप॑: । स॒मु॒द्रिय॑: । विश्वे॑ । दे॒वास॑: । शृ॒ण॒व॒न् । वचां॑सि । मे॒ । सर॑स्वती । स॒ह । धी॒भिः । पुर॑म्ऽध्या ॥ १३ ॥

पावीरवी आयुधवती तन्यतुः स्तनयित्री वाङ्माध्यमिका तथा दिवोद्युलोकस्य धर्ता धारयिता अजएकपात् एकएव पद्यते गच्छतीति न जायतइति एतत्संज्ञकोदेवः सिंधुश्च समुद्रियः समुद्रमन्तरिक्षं तत्रभवाआपश्च समुद्राभ्राद्घइतिभावर्थे घप्रत्ययः विश्वे देवाश्चधीभिः कर्मभिर्युक्ताः पुरंध्या बहुविधया प्रज्ञया सहिता सरस्वती च मे मदीयानि वचांसि वक्तव्यानि स्तोत्राणि शृणवन् शृण्वन्तु । पविः शल्योभवति यद्विपुनाति कायं तद्वत्पवीरमायुधमित्यादि निरुक्तमनुसंधेयं ॥ १३ ॥

अथ चतुर्दशी—

**विश्वे॑ दे॒वाः स॒ह धी॒भिः पुर॑न्ध्या॒ मनो॒र्यज॑त्रा अ॒मृता॑ ऋत॒ज्ञाः ।**
**रा॒ति॒षाचो॑ अभि॒षाच॑: स्व॒र्विद॒: स्व१र्गिरो॒ ब्रह्म॑ सू॒क्तं जु॑षेरत ॥ १४ ॥**

विश्वे॑ । दे॒वाः । स॒ह । धी॒भिः । पुर॑म्ऽध्या । मनो॑: । यज॑त्राः । अ॒मृता॑: । ऋ॒त॒ऽज्ञाः । रा॒ति॒ऽसाच॑: । अ॒भि॒ऽसाच॑: स्व॒:ऽविद॑: । स्व॑: । गिर॑: । ब्रह्म॑ । सु॒ऽउ॒क्तम् । जु॒षे॒र॒त ॥ १४ ॥

धीभिः कर्मभिः सहिताः पुरंध्या प्रज्ञानेन युक्ताः मनोर्मनुष्यस्य यज्ञे यजत्रा यष्टव्याः अमृतामरणधर्मरहिताः ऋतज्ञाः सत्यविदः रातिषाचः दीयमानं हविः सेवमानाः अभिषाचः आभिमुख्येन यज्ञं समवयन्तः संगतवन्तः स्वर्विदः सर्वस्य लंभकाविश्वे सर्वे इन्द्रादयोदेवाः स्वः सर्वागिरोस्मदीयाः स्तुतीः ब्रह्म महच्चान्नं सूक्तं सुष्ठु वक्तव्यं स्तोमं यद्वा सुष्ठु मन्त्रेण सह

---

१ नि० १२. ३०. ।

दत्तमन्नं जुषेरत सेवन्तां जुषी प्रीतिसेवनयोः तौदादिकः अनुदात्तेत्। लिङि झस्य रन्नादेशाभावश्छान्दसः बहुलंछन्दसीति रुडागमः ॥ १४ ॥

अथ पञ्चदशी—

देवान्वसिष्ठोअमृतान्ववन्देयेविश्वाभुवनाभिप्रंतस्थुः।
तेनोरासन्तामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ १५ ॥ ११ ॥

देवान्। वसिष्ठः। अमृतान्। ववन्दे। ये। विश्वा। भुवना।
अभि। प्रऽतस्थुः। ते। नः। रासन्ताम्। उरुऽगायम्। अद्य।
यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ १५ ॥ ११ ॥

वसिष्ठः वसिष्ठकुलजोयमृषिः अमृतान् मरणधर्मरहितान् देवान् ववंदे एवमस्तावीत् ये देवाविश्वा विश्वानि भुवना भुवनानि लोकान् अभिप्रतस्थुः स्वतेजसा अभिभवन्ति अभितः प्रतिष्ठन्तीति वा प्रपूर्वात्तिष्ठतेर्लिटि रूपं समासस्वरः। ते देवाः अद्यास्मिन्दिने नोस्मभ्यं उरुगायं प्रभूतयशस्कमन्नं रासन्तां प्रयच्छन्तु हे देवाः यूयं स्वस्तिभिः ऊतिभिः नोस्मान् सदा सर्वदा पात रक्षत ॥ १५ ॥

॥ इत्यष्टमस्य द्वितीये एकादशोवर्गः ॥ ११ ॥

देवान्हुवइति पञ्चदशर्चं षष्ठं सूक्तं ऋष्याद्याः पूर्ववत्। देवान्हुवइत्यनुक्रान्तम्। पृष्ठ्याभिप्लवषडहयोः पंचमेहनि इदंवैश्वदेवनिविद्धानं। सूत्रितंच—इहेहवइतिचतस्रोदेवान्हुवइति वैश्वदेवमिति।

तत्र प्रथमा—

देवान्हुवेबृहच्छ्रवसःस्वस्तयेज्योतिष्कृतोअध्वरस्यप्रचेतसः।
येवावृधुःप्रतरंविश्ववेदसइन्द्रज्येष्ठासोअमृताऋतावृधः ॥ १ ॥

देवान्। हुवे। बृहत्ऽश्रवसः। स्वस्तये। ज्योतिःऽकृतः।
अध्वरस्य। प्रऽचेतसः। ये। ववृधुः। प्रऽतरम्। विश्वऽवेदसः।
इन्द्रऽज्येष्ठासः। अमृताः। ऋतऽवृधः ॥ १ ॥

बृहच्छ्रवसः प्रभूतान्नान् ज्योतिष्कृतः आदित्याख्यस्य तेजसः कर्तॄन् प्रचेतसः प्रकृष्टज्ञानान् तान् देवान् अध्वरस्यास्य यज्ञस्य स्वस्तये अविनाशाय निर्विघ्नेन यज्ञपरिसमाप्तये हुवे आह्वयामि विश्ववेदसः सर्वधनाः इन्द्रज्येष्ठासः इन्द्रः ज्येष्ठः प्रधानोयेषां इन्द्रनेतृकाइत्यर्थः अमृतामरणधर्मरहिताः ऋतावृधः यज्ञेन प्रवृद्धाये देवाः प्रतरं अत्यंतंववृधुः वर्धन्ते ॥ १ ॥

अथ द्वितीया—

इन्द्रप्रसूतावरुणप्रशिष्टायेसूर्यस्यज्योतिषोभागमानशुः ।
मरुद्गणेवृजनेमन्मधीमहिमाघोनेयज्ञंजनयन्तसूरयः ॥ २ ॥

इन्द्रऽप्रसूताः । वरुणऽप्रशिष्टाः । ये । सूर्यस्य । ज्योतिषः ।
भागम् । आनशुः । मरुत्ऽगणे । वृजने । मन्म । धीमहि ।
माघोने । यज्ञम् । जनयन्त । सूरयः ॥ २ ॥

इन्द्रप्रसूताः इन्द्रेण तत्तत्कार्येषु प्रेरिताः वरुणप्रशिष्टाः वरुणेनानुशिष्टाअनुमोदिताः ये मरुतः ज्योतिषोद्योतमानस्य सूर्यस्य स्वस्वकर्मणि सर्वस्य प्रेरकस्य अमुष्यादित्यस्य भागं भजनीयं लोकं आनशुः आनशिरे व्याप्तवन्तः सूर्यमधिष्ठाय वर्तन्तइत्यर्थः । वृजने शत्रूणां छेदके मघोने मघवतइन्द्रस्य संबंधिनि मरुद्गणे तेषां मरुतां गणे मन्म मननीयं स्तोत्रं धीमहि दध्मः कुर्मः । किञ्च सूरयः प्राज्ञायजमानाः तन्निमित्तमेव यज्ञं जनयन्त जनयन्ति तेषां हविः प्रदानाय कुर्वन्ति ॥ २ ॥

अथ तृतीया—

इन्द्रोवसुभिःपरिपातुनोगयमादित्यैर्नोअदितिःशर्मयच्छतु ।
रुद्रोरुद्रेभिर्देवोमृळयातिनस्त्वष्टानोग्नाभिःसुवितायजिन्वतु ॥ ३॥

इन्द्रः । वसुऽभिः । परि । पातु । नः । गयम् । आदित्यैः । नः ।
अदितिः । शर्म । यच्छतु । रुद्रः । रुद्रेभिः । देवः । मृळयाति ।
नः । त्वष्टा । नः । ग्नाभिः । सुविताय । जिन्वतु ॥ ३ ॥

वसुभिः एतन्नामकैरष्टभिर्देवैः सहितइन्द्रः नोस्मदीयं गयं गृहनामैतत् प्राप्तव्यं गायते शब्द्यतेत्रेति वा गृहं गयं परिपातु परिरक्षतु तथा अदितिर्देवमाता आदित्यैर्देवैःसह नोस्मभ्यं शर्म सुखं प्रयच्छतु किञ्च देवः दीप्यमानोरुद्रः रुद्रेभिः स्वपुत्रैःमरुद्भिः सह नोस्मान् मृळयातिसुखयतु मृड सुखने लेट्याडागमः। अपिच त्वष्टा प्रजापतिः ग्नाभिः देवपत्नीभिः छन्दोभिः सुविताय सुष्ठुप्राप्तव्याय अभ्युदयाय नोस्मान् जिन्वतु प्रीणयतु ॥ ३ ॥

अथ चतुर्थी—

अदितिर्द्यावापृथिवीऋतंमहदिन्द्राविष्णूमरुतःस्वर्बृहत्।
देवाँआदित्याँअवसेहवामहेवसून्रुद्रान्त्सवितारंसुदंससम् ॥ ४ ॥

अदितिः। द्यावापृथिवी इति। ऋतम्। महत्। इन्द्राविष्णू इति। मरुतः। स्वः। बृहत्। देवान्। आदित्यान्। अवसे। हवामहे। वसून्। रुद्रान्। सवितारम्। सुऽदंससम् ॥ ४ ॥

अदितिः द्यावापृथिवी द्यावापृथिव्यौ महत् महान् ऋतं सत्यभूतोग्निः इन्द्राविष्णू मरुतश्च बृहत् परिवृढः स्वरादित्यः एते देवाः सर्वत्र स्वमहिम्ना वर्तन्ते एतान् देवानादित्यादीन् सुदंससं सुकर्माणं सवितारं एतन्नामानं च अवसे रक्षणाय हवामहे वयमाह्वयामहे ॥ ४ ॥

अथ पञ्चमी—

सरस्वान्धीभिर्वरुणोधृतव्रतःपूषाविष्णुर्महिमावायुरश्विना।
ब्रह्मकृतोअमृताविश्ववेदसःशर्मनोयंसन्त्रिवरूथमंहसः ॥५॥१२॥

सरस्वान्। धीभिः। वरुणः। धृतऽव्रतः। पूषा। विष्णुः। महिमा। वायुः। अश्विना। ब्रह्मऽकृतः। अमृताः। विश्वऽवेदसः। शर्म। नः। यंसन्। त्रिऽवरूथम्। अंहसः ॥ ५ ॥ १२ ॥

धीभिः प्रज्ञाभिर्युक्तः सरस्वानेतन्नामा धृतव्रतः धृतकर्मा वरुणश्च पूषा महिमा महत्वेन युक्तौ विष्णुश्च वायुरश्विनाश्विनौ ब्रह्मकृतः कर्मकृतः स्तोतॄणामन्नदातारोवा विश्ववेदसः सर्वधना व्याप्तज्ञानावा अंहसः पापरूपाणां शत्रूणां हन्तारः अमृताएते देवाः नोस्मभ्यं त्रिवरूथं

त्रिष्कभं त्रिकक्षं शर्म गृहं यद्वा त्रिवरूथं द्रोणकलशाधवनीयपूतभृत्संज्ञकानि त्रीणि पात्राणि यत्र नियंते संभज्यंते तद्यज्ञसाधनं गृहं यंसन् प्रयच्छन्तु यच्छतेर्लेटि सिप्यडागमः॥ ५॥

॥ इत्यष्टमस्य द्वितीये द्वादशोवर्गः ॥ १२ ॥

अथ षष्ठी—

वृषायज्ञोवृषणःसन्तुयज्ञियावृषणोदेवावृषणोहविष्कृतः ।
वृषणाद्यावापृथिवीऋतावरीवृषापर्जन्योवृषणोवृषस्तुभः ॥ ६ ॥

वृषा । यज्ञः । वृषणः । सन्तु । यज्ञियाः । वृषणः । देवाः ।
वृषणः । हविःऽकृतः । वृषणा । द्यावापृथिवी इति ।
ऋतवरी इत्यृतऽवरी । वृषा । पर्जन्यः । वृषणः । वृषऽस्तुभः ॥ ६ ॥

यज्ञएषोस्मदीयः वृषा कामानां वर्षितास्तु । तथा यज्ञियायज्ञार्हादेवाश्च वृषणः सन्तु । किञ्च देवाः स्तुतिकारिणः ऋत्विजोवृषणः धनवर्षणे कारणानि सन्तु साधुस्तुतिकरणेन । तथा हविष्कृतः हविषां कर्तारोध्वर्य्वादयः वृषणः अव्यग्रतया मन्त्रसाहित्येन च हविः प्रदाने । अपिच ऋताव-री यज्ञवत्यौ द्यावापृथिवी द्यावापृथिव्यौ वृषणा हविरुत्पादनेन कामानां वर्षयित्र्यौ भवतां । तथा पर्जन्यइन्द्रः वृषा अपां वर्षिता भवतु वृषस्तुभः वर्षणशीलस्तुतिभिः देवान् स्तुवन्तः सर्वे ऋत्विजः वृषणोभवन्तु ॥ ६ ॥

अथ सप्तमी—

अग्नीषोमावृषणावाजसातयेपुरुप्रशस्तावृषणाउपब्रुवे ।
यावीजिरेवृषणोदेवयज्ययातानःशर्मत्रिवरूथंवियंसतः ॥ ७ ॥

अग्नीषोमा । वृषणा । वाजऽसातये । पुरुऽप्रशस्ता । वृषणौ ।
उप । ब्रुवे । यौ । ईजिरे । वृषणः । देवऽयज्यया । ता ।
नः । शर्म । त्रिऽवरूथम् । वि । यंसतः ॥ ७ ॥

वृषणा वर्षणशीलौ पुरुप्रशस्ता बहुभिः प्रस्तुतौ अग्नीषोमा अग्नीषोमौ वाजसातये अन्न-लाभाय उपब्रुवे अहमुपस्तौमि पुनर्वृषणेत्यादरार्थं यौ देवौ वृषणऋत्विजः देवयज्यया देवाइ-

न्यन्ते अत्रेतिदेवयज्या यज्ञः छन्दसिनिष्टक्र्येतिनिपातितः तेन ईजिरे यजन्ते हविर्भिः पूजयन्ति ता तौ प्रसिद्धौ नोस्मभ्यं त्रिवरूथं त्रिष्कंभं शर्म गृहं वियंसतः विशेषेण प्रयच्छतां ॥ ७ ॥

अथाष्टमी—

धृतव्रताः क्षत्रिया यज्ञनिष्कृतो बृहद्दिवा अध्वराणामभिश्रियः ।
अग्निहोतार ऋतसापो अद्रुहोपो असृजन्ननु वृत्रतूर्ये ॥ ८ ॥

धृतऽव्रताः । क्षत्रियाः । यज्ञनिःऽकृतः । बृहत्ऽदिवाः ।
अध्वराणाम् । अभिऽश्रियः । अग्निऽहोतारः । ऋतऽसापः ।
अद्रुहः । अपः । असृजन् । अनु । वृत्रऽतूर्ये ॥ ८ ॥

धृतव्रताः धृतकर्माणोजात्या क्षत्रियाः यद्वा क्षत्रं बलं तदर्हाः यज्ञनिष्कृतः यज्ञं प्रति निर्गमनं यज्ञनिः तस्य कर्तारः बृहद्दिवा महातेजस्काः अध्वराणां रक्षोभिरहिंसितानां यज्ञानामभिश्रियः अभिसेवकाः अग्निहोतारअ ग्निर्होता आह्वाता येषां तादृशाः ऋतसापः षपसमवाये सत्यभाजः अतएव अद्रुहः केषां चिदप्यद्रोग्धारः यद्वा द्रुहेः कर्मण्यौणादिकः क्विप् कैश्चिदप्यहिंस्याः एवंप्रभावादेवाः वृत्रतूर्ये वृत्रस्तूर्यते हिंस्यतेत्रेति वृत्रतूर्यः संग्रामः तस्मिन् अपामावरकशत्रुवधे अपउदकानि अन्वसृजन् अन्वसारयन् ॥ ८ ॥

अथ नवमी—

द्यावापृथिवी जनयन्नभि व्रतापओषधीर्वनिनानियज्ञिया ।
अन्तरिक्षं स्वरापप्रुरूतयेवशंदेवासस्तन्वीनिमामृजुः ॥ ९ ॥

द्यावापृथिवी इति । जनयन् । अभि । व्रता । आपः । ओषधीः ।
वनिनानि । यज्ञिया । अन्तरिक्षम् । स्वः । आ । पप्रुः ।
ऊतये । वशम् । देवासः । तन्वि । नि । ममृजुः ॥ ९ ॥

देवासोदेवाइन्द्रादयः द्यावापृथिवी द्यावापृथिव्यावभिलक्ष्य व्रता व्रतेन स्वेन कर्मणा आपः सुब्व्यत्ययः अपउदकानि ओषधीश्च तथा यज्ञियायज्ञार्हान् वनिनानि वने भवान् पलाशादीन् वृक्षान् जनयन् उदपादयन् । किञ्च ते देवाः स्वः सर्वमन्तरिक्षं आपप्रुः तेजसा

आपूरयन्ति किमर्थं ऊतये रक्षणाय शत्रुभ्योबाधाभावाय। अपिच वशं काम्यमानं वशिरण्योरुपसंख्यानमिति अकर्तरि कारके अप् तं यज्ञं तन्वि स्वशरीरे निममृजुः नितरां शुद्धं अलं कृतं चक्रुः॥ ९॥

अथ दशमी—

धर्तारोदिवऋभवःसुहस्तावातापर्जन्यामहिषस्यतन्यतोः।
आपओषधीःप्रतिरन्तुनोगिरोभगोरातिर्वाजिनोयन्तुमेहवम्॥१०॥१३॥

धर्तारः। दिवः। ऋभवः। सुऽहस्ताः। वातापर्जन्या। महिषस्य।
तन्यतोः। आपः। ओषधीः। प्र। तिरन्तु। नः। गिरः।
भगः। रातिः। वाजिनः। यन्तु। मे। हवम्॥ १०॥ १३॥

दिवोद्युलोकस्य धर्तारोधारयितारः ऋभवः सत्येन भासमानाः सुहस्ताः शोभनवज्राद्यायुधयुक्तहस्ताः देवाः तथा महिषस्य महतः तन्यतोः शब्दस्य तनु विस्तारे ऋतन्यञ्जीति यतुच् प्रत्ययः शब्दस्य कर्तारौ वातापर्जन्या पर्जन्यवायू च तत्कार्याआपःओषधीरोषधयश्च नोस्माकं गिरः स्तुतीः प्रतिरन्तु प्रवर्धयन्तु प्रपूर्वस्तिरतिर्वृद्ध्यर्थः तथा रातिः दाता भगोभजनीयोर्यमा च वाजिनः अग्निर्वायुः सूर्यः। तेवैवाजिनइति तैत्तिरीयकब्राह्मणं[1]। एते देवाश्च मे मदीयं हवह्वानं यन्तु अभिगच्छन्तु॥ १०॥

॥ इत्यष्टमस्य द्वितीये त्रयोदशोवर्गः॥ १३॥

अथैकादशी—

समुद्रःसिन्धूरजोअन्तरिक्षमजएकपात्तनयित्नुरर्णवः।
अहिर्बुध्न्यःशृणवद्वचांसिमेविश्वेदेवासउतसूरयोमम॥ ११॥

समुद्रः। सिन्धुः। रजः। अन्तरिक्षम्। अजः। एकऽपात्।
तनयित्नुः। अर्णवः। अहिः। बुध्न्यः। शृणवत्।
वचांसि। मे। विश्वे। देवासः। उत। सूरयः। मम॥ ११॥

---

१ तै० ब्रा० १.६.३।

समुद्रः समुंदनशीलः स्यन्दनशीलः स्यन्दमानोदकः सिन्धुः एतन्नामकः अन्तरिक्षं द्यावापृथिव्योरन्तरा मध्ये क्षितमुषितं रजः मध्यमलोकं अजएकपात् अजायमानः एकएव पद्यते एतत्संज्ञकोदेवः अर्णवउदकवान् तनयित्नुः स्तनयित्नुर्मेघः बुध्न्यः अन्तरिक्षे भवोहिः एतत्संज्ञकः एते देवाः मे मम वचांसि वक्तव्यानि स्तोत्राणि शृणवत् प्रत्येकं शृणोतु । उतापिच सूरयः प्राज्ञाविश्वेदेवासोदेवाः मम स्तोत्राणि शृण्वन्तु ॥ ११ ॥

अथ द्वादशी–

स्यामवोमनवोदेववीतयेप्राञ्चंनोयज्ञंप्रणयतसाधुया ।
आदित्यारुद्रावसवःसुदानवइमाब्रह्मशस्यमानानिजिन्वत॥१२॥

स्याम । वः । मनवः । देवऽवीतये । प्राञ्चम् । नः । यज्ञम् ।
प्र । नयत । साधुऽया । आदित्याः । रुद्राः । वसवः ।
सुऽदानवः । इमा । ब्रह्म । शस्यमानानि । जिन्वत ॥ १२ ॥

हे देवाः मनवोमनुष्यावयं वोयुष्मदीयाय देववीतये देवानां वीतिर्भक्षणं यस्मिन् सयज्ञः तस्मै यज्ञाय स्याम यज्ञकर्तारोभवेम । ततः नोस्माकं नोस्मदीयं यज्ञं साधुया सुपोयाजादेशः साधु कल्याणं प्राञ्चं प्राचीनं प्रणयत प्रकृष्टाञ्चनं कुरुत हे आदित्याः हे रुद्राः हे रुद्रपुत्राः मरुतः हे सुदानवः शोभनदानाः हे वसवः इमा इमानि शस्यमानानि ब्रह्म ब्रह्माणि स्तोत्राणि जिन्वत प्रीणयत ॥ १२ ॥

अप्तोर्यामे अच्छावाकातिरिक्तोक्थस्य दैव्याहोतारेत्येषा परिधानीया । सूत्रितञ्च–उभाउनूनं दैव्याहोताराप्रथमापुरोहितेति परिधानीयेति ।

सैषा सूक्ते त्रयोदशी–

दैव्याहोताराप्रथमापुरोहितऋतस्यपन्थामन्वेमिसाधुया ।
क्षेत्रस्यपतिंप्रतिवेशमीमहेविश्वान्देवाँअमृताँअप्रयुच्छतः ॥१३॥

दैव्या॑ । होता॑रा । प्र॒थ॒मा । पु॒रः॒ऽहि॑ता । ऋ॒तस्य॑ । पन्था॑म् ।
अनु॑ । ए॒मि॒ । सा॒धु॒ऽया । क्षेत्र॑स्य । पति॑म् । प्रति॑ऽवेशम् ।
ई॒म॒हे॒ । विश्वा॑न् । दे॒वान् । अ॒मृता॑न् । अप्र॑ऽयुच्छतः ॥ १३॥

प्रथमाप्रथमौ मुख्यौ पुरोहिता पुरोहितौ पुरतोनिहितौ दैव्या देवसंबंधिनौ होतारा होतारौ एतन्नामानौ अङ्यादित्यावन्वेमि हविर्भिरनुगच्छामि । ततः ऋतस्य यज्ञस्य पंथां पंथानं साधुया कल्याणं विघ्नराहित्येन अन्वेमि अनुगच्छामि अनंतरं प्रतिवेशं समीपे वर्तमानं क्षेत्रस्य पतिं पालयितारमेतन्नामानं अमृतान् मरणधर्मरहितान् अप्रयुच्छतः अप्रमाद्यतः विश्वान् सर्वान् देवांश्च ईमहे धनं याचामहे ॥ १३ ॥

अथ चतुर्दशी—

वसि॑ष्ठासः पितृ॒वद्वाच॑मक्रत दे॒वाँ ईळा॑ना ऋषि॒वत्स्व॒स्तये॑ ।
प्री॒ताइ॑व ज्ञा॒तयः॒ काम॒मेत्या॒स्मे दे॑वा॒सोऽव॑ धूनुता॒ वसु॑ ॥ १४ ॥

वसि॑ष्ठासः । पि॒तृ॒ऽवत् । वाच॑म् । अ॒क्र॒त॒ । दे॒वान् । ईळा॑नाः ।
ऋ॒षि॒ऽवत् । स्व॒स्तये॑ । प्री॒ताःऽइ॑व । ज्ञा॒तयः॑ । काम॑म् ।
आ॒ऽइत्य॑ । अ॒स्मे इति॑ । दे॒वा॒सः॒ । अव॑ । धू॒नु॒त॒ । वसु॑ ॥ १४ ॥

ऋषिवत् पूर्वेऋषयइव देवानीळानाः स्तुवन्तः वसिष्ठासोवसिष्ठकुलजाताऋषयः पितृवत् वसिष्ठवत् स्वस्तये अविनाशायवाचं स्तोत्रं अक्रत कुर्वन्ति करोतेर्लुङि मन्त्रेघसेति च्लेर्लुक् । हे देवासोदेवाः यूयं काममस्मदभिलाषं एत्य आगत्य अस्मे अस्मासु वसु गवादिलक्षणं धनं अवधूनुत अभिमुखं प्रेरयत । तत्र दृष्टान्तः—प्रीताइव यथा प्रीताः संहृष्टाज्ञातयोबंधवः स्वजनस्य धनं प्रेरयन्ति तद्वत् हविर्दानेन स्तुतिकरणेन च बंधुष्वस्मासु धनं प्रेरयतेति भावः ॥ १४ ॥

अथ पञ्चदशी—

दे॒वान्वसि॑ष्ठो अ॒मृता॑न्ववन्दे॒ ये विश्वा॒ भुव॑ना॒भि प्र॑त॒स्थुः ।
ते नो॑ रासन्तामुरुगा॒यम॒द्य यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ १५ ॥ १४ ॥

देवान् । वसिष्ठः । अमृतान् । ववन्दे । ये । विश्वा । भुवना ।
अभि । प्रऽतस्थुः । ते । नः । रासन्ताम् । उरुऽगायम् । अद्य ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १५ ॥ १४ ॥

एषा ऋक् पूर्वमेव व्याख्यायि ॥ १५ ॥

॥ इत्यष्टमस्य द्वितीये चतुर्दशोवर्गः ॥ १४ ॥

इमांधियमिति द्वादशर्चं सप्तमं सूक्तं आंगिरसस्यायास्यस्यार्षं त्रैष्टुभं इदमुत्तरं च बृहस्पति देवताकं तथाचानुक्रम्यते—इमांधियंद्वादशायास्योबार्हस्पत्यंत्विति । आभिप्लविकेषूक्थ्येषु स्तोम वृद्धौ ब्राह्मणाच्छंसिनइदं सूक्तमावापार्थं । सूत्रितश्च—इमांधियमिति ब्राह्मणाच्छंसीविष्णोर्नुक-मिति सूक्ते इति ।

तत्र प्रथमा—

इमांधियंसप्तशीर्ष्णींपितानऋतप्रंजातांबृहतीमविन्दत् ।
तुरीयंस्विज्जनयद्विश्वजंन्योयास्यंउक्थमिन्द्रांयशंसंन् ॥ १ ॥

इमाम् । धियम् । सप्तऽशीर्ष्णीम् । पिता । नः । ऋतऽप्रंजाताम् ।
बृहतीम् । अविन्दत् । तुरीयम् । स्वित् । जनयत् । विश्वऽजंन्यः ।
अयास्यः । उक्थम् । इन्द्राय । शंसन् ॥ १ ॥

अत्रेतिहासमाचक्षते पुरा किल अंगिरानामर्षिः—बृहस्पतिं पुत्रमलभत सतु देवानां हितोपदेशनाय इन्द्रस्य पुरोहितोभूत् कदाचित्तस्य गावः पणिनामकैरसुरैरपहृत्य वलपुरं प्रापय्य त्रिषु स्थानेषु तमसावृतेषु स्थापिताआसन् अथ तासामन्वेषणायेन्द्रेण प्रेरितोबृहस्पतिर्मरुद्भिः सह तत्रागत्य गवां गुहास्थितानां दर्शनाय सूर्यं जनयित्वावलनामानमसुरं तदनुचरान्पणींश्च हत्वा गाआजहारेति तत्र दर्शयिष्यते । तथाच अस्याऋचोयमर्थः—धियं कर्मणां धात्रीं सप्तशीर्ष्णीं सप्तशिरस्कां सप्तभिः शिरःस्थानीयैः तद्वत्प्रधानभूतैर्मरुद्गणैरुपेतां यद्वा सप्तछन्दोमयशिरस्कां ऋतप्रजातांयज्ञार्थमुत्पन्नां बृहतीं महतीमिमां तन्वं नोस्माकं पितांगिराः अविन्दत् लब्ध-

वान् कर्मणां ध्यातारं बृहस्पतिं पुत्रमलभतेत्यर्थः । येंगाराआसंस्तेंगिरसोभवन्यदङ्गाराःपुनरव-शान्ता उददीप्यन्ततद्बृहस्पतिरभवदिति ब्राह्मणं[1] । तथा तुरीयं स्विद् नप्तारमपि जनयत् अजन-यत् विश्वजन्यः सर्वजनहितः इन्द्राय ईश्वराय बृहस्पतये इन्द्राय वा उक्थंस्तोत्रं शंसन् अयमयास्योनाम ऋषिः पूर्वमेवं नोस्माकं पिताकार्षीदित्याह ॥ १ ॥

अथ द्वितीया—

ऋतंशंसन्तऋजुदीध्यानादिवस्पुत्रासोअसुरस्यवीराः ।
विप्रंपदमङ्गिरसोदधानायज्ञस्यधामप्रथमंमनन्त ॥ २ ॥

ऋतम् । शंसन्तः । ऋजु । दीध्यानाः । दिवः । पुत्रासः । असुरस्य ।
वीराः । विप्रम् । पदम् । अङ्गिरसः । दधानाः । यज्ञस्य ।
धाम । प्रथमम् । मनन्त ॥ २ ॥

ऋतं सत्यभूतं स्तोमं शंसंतः स्तुवन्तः ऋजु कल्याणं दीध्यानाः कर्मणि ध्यायन्तः दि-वोदीप्तस्य असुरस्य प्रज्ञावतः अग्नेरंगिरसःपुत्राअंगिरसोह्यंगारेभ्योजाताइत्युक्तं अंगारेष्वंगि-राइति । वीराविक्रांतप्रज्ञाः एतेङ्गिरसां विप्रं प्रज्ञापकं यज्ञस्य धाम धारकं पदं बृहस्पत्याख्यं दधानाः कर्मणा धारयन्तः सन्तः प्रथममादितएव मनंत स्तुवन्ति प्रज्ञापकं ह्येतत्स्थानं यद्बृहस्पतिरिति ॥ २ ॥

देवसुवां हविष्षु बृहस्पतयेवाचस्पतयइत्यस्य याज्या हंसैरिवेत्येषा । सूत्रितश्च—बृहस्पतेप्रथमंवाचोअग्रं हंसैरिवसखिभिर्वावदद्भिरिति ।

सैषा तृतीया—

हंसैरिवसखिभिर्वावदद्भिरश्मन्मयानिनहनाव्यस्यन् ।
बृहस्पतिरभिकनिक्रदद्गाउतप्रास्तौदुच्चविद्वाँअंगायत् ॥ ३ ॥

हंसैःऽइव । सखिऽभिः । वावदत्ऽभिः । अश्मन्ऽमयानि । नहना ।
विऽअस्यन् । बृहस्पतिः । अभिऽकनिक्रदत् । गाः । उत ।
प्र । अस्तौत् । उत् । च । विद्वान् । अगायत् ॥ ३ ॥

---

१ ऐ० ब्रा० ३. ३४.।

हंसैरिव मधुरवाग्भिः सखिभिः सखिभूतैः वावदद्भिः अत्यंतं शब्दायमानैः मरुद्भिः अश्मन्मयानिअश्ममयानि नहना गवां बंधकान्यावरकाणि असुराणां स्थानानि व्यस्यन् विक्षिपन् शिथिलयन् अभिकनिक्रदत् आभिमुख्येन शब्दयन् गाः पणिभिरपहृतान् पशूनाजिहीर्षुः सहबृहस्पतिर्वर्तते । यद्वा वावदद्भिरत्यंतं स्तुवद्भिः स्तोतृभिः सह गाः स्तोत्रलक्षणावाचः अभिकनिक्रदत् आभिमुख्येन उच्चारयन् । उतापिच प्रास्तौत् कर्मणि प्रवृत्तौ यज्ञस्य सखिभिः सहासीनः सामगातुं प्रस्तौति विद्वान् सर्वं जानानः सउद्गाता भूत्वा उदगायत् देवानुद्गायति अभिष्टौति ॥ ३ ॥

अथ चतुर्थी—

अवोद्वाभ्यांपरएकयागागुहातिष्ठन्तीरनृतस्यसेतौ ।
बृहस्पतिस्तमसिज्योतिरिच्छन्नुदुस्राआकर्विहितिस्रआवः ॥४॥

अवः । द्वाभ्याम् । परः । एकया । गाः । गुहा । तिष्ठन्तीः । अनृतस्य ।
सेतौ । बृहस्पतिः । तमसि । ज्योतिः । इच्छन् । उत् । उस्राः ।
आ । अकः । वि । हि । तिस्रः । आवरित्यावः ॥ ४ ॥

पणयोगाआहृत्य त्रिषु स्थानेषु निदधुः अवोवस्तात् स्थिताः अनृतस्य तमसः सेतौ स्थाने गुहा गुहायां तिष्ठन्तीर्गाः द्वाभ्यां स्थानाभ्यां उदाजत् ततः परः परस्तादवस्थितागाः एकया एकेन स्थानेन उदगमयत् तदेवाह बृहस्पतिस्तस्मिन् तमसि ज्योतिः कर्तुमिच्छन् तत्र स्थिताउस्रागाः उदाकः उदाकार्षीत् प्रादुर्भूताअकार्षीत् इत्थमयं तिस्रः असुराणां द्वारोव्यावः विवृतान् खलु वृणोतेर्लुङि मन्त्रेघसेतिच्लेर्लुक् बहुलंछन्दसीत्यडागमः ॥ ४ ॥

अथ पंचमी—

विभिद्यापुरंशयथेमपाचींनिस्त्रीणिसाकमुदधेरकृन्तत् ।
बृहस्पतिरुषसंसूर्यंगामर्कंविवेदस्तनयन्निवद्यौः ॥ ५ ॥

विऽभिद्य । पुरम् । शयथा । ईम् । अपाचीम् । निः । त्रीणि ।
साकम् । उदऽधेः । अकृन्तत् । बृहस्पतिः । उषसम् । सूर्यम् ।
गाम् । अर्कम् । विवेद । स्तनयन्ऽइव । द्यौः ॥ ५ ॥

सबृहस्पतिः शयथा उपशयनेन स्थित्वा अपाचीं पराङ्मुखीं ईमिमामसुरपुरीं विभिद्य विदार्य उदधेर्वलाव मेघरूपादसुरात सार्कं सह युगपत् त्रीणि उषसं सूर्यं गां एतानि त्रीणि निरकृन्तत् निर्गतमकार्षीत् तमसावृतेषु स्थानेषु उषःकालं ततः पश्चाद्भाविनं सूर्यं च जनयित्वा पशून्निरगमयदित्यर्थः सोयं अर्कमर्चनीयं मन्त्रं सूर्यविवेद मज्ञापयति कथमिव यथा स्तनयन् शब्दंकुर्वन् द्यौरिव स्थितः ॥ ५ ॥

अथ षष्ठी—

इन्द्रोवलंरक्षितारंदुघानांकरेणेवविचकर्तारवेण ।
स्वेदांजिभिराशिरमिच्छमानोरोदयत्पणिमागाअमुष्णात्॥६॥१५॥

इन्द्रः । वलम् । रक्षितारम् । दुघानाम् । करेणऽइव । वि । चकर्त ।
रवेण । स्वेदाञ्जिऽभिः । आऽशिरम् । इच्छमानः ।
अरोदयत् । पणिम् । आ । गाः । अमुष्णात् ॥ ६ ॥ १५ ॥

इन्द्रईश्वरोबृहस्पतिः दुघानां क्षीरस्य दोग्ध्रीणां गवां रक्षितारं वलमसुरं करेणेव सायुधकरइव स्थितेन रवेण शब्देनवलं विचकर्त विचिच्छेद । किञ्च स्वेदाञ्जिभिः स्वेदांजयोमरुतः क्षरदाभरणाः तैः सह आशिरं आश्रयणं संयोगमिच्छमानः कामयमानः सः पणिं वलस्यानुचरमेतन्नामानं असुरं अरोदयत् व्यनाशयत् ततः तेनापहतागाः आमुष्णात् आजहार ॥ ६ ॥

॥ इत्यष्टमस्य द्वितीये पञ्चदशोवर्गः ॥ १५ ॥

अथ सप्तमी—

सईंसत्येभिःसखिभिःशुचद्भिर्गोधायसंविधनसैरदर्दः ।
ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणंव्यानट् ॥ ७ ॥

सः । ईम् । सत्येभिः । सखिऽभिः । शुचत्ऽभिः । गोऽधायसम् । वि ।
धनऽसैः । अदर्दरित्यदर्दः । ब्रह्मणः । पतिः । वृषऽभिः । वराहैः ।
घर्मऽस्वेदेभिः । द्रविणम् । वि । आनट् ॥ ७ ॥

सबृहस्पतिः सत्येभिः यथार्थबलैः सखिभिः सखिभूतैः शुचद्भिर्दीप्यमानैः धनसैर्धनस्य संभक्तृभिः मरुद्भिः सह गोधायसं गवां धारकं ईमेनं वलं व्यदर्दः व्यदारयत् ततः ब्रह्मणः ऋग्यजुःसामलक्षणस्तोत्रस्य पतिरधिपतिः सवृषभिः वर्षितृभिर्वराहैः वराहारैः वरस्य वरणीयस्योदकस्याहर्तृभिः घर्मस्वेदेभिः दीप्तागमनैः यद्वा क्षरदुदकैः अथवा घर्मोयज्ञः तं प्रति गन्तृभिर्मरुद्भिः द्रविणं गोलक्षणं धनं व्यानट् व्यामोव ॥ ७ ॥

अथाष्टमी—

**तेसत्येनमनसागोपतिंगाइयानासइषणयन्तधीभिः ।**
**बृहस्पतिर्मिथोअवद्यपेभिरुदुस्त्रियाअसृजतस्वयुग्भिः ॥ ८ ॥**

ते । सत्येन । मनसा । गोऽपतिम् । गाः । इयानासः ।
इषणयन्त । धीभिः । बृहस्पतिः । मिथःऽअवद्यपेभिः ।
उत् । उस्त्रियाः । असृजत । स्वयुक्ऽभिः ॥ ८ ॥

गाः पणिभिरपहृतान् पशून् इयानासोभिगच्छन्तः सत्येन यथार्थभूतेन मनसा युक्तास्ते मरुतः धीभिः आत्मीयैः कर्मभिः एतं बृहस्पतिं गोपतिं तदाहरणेन गवां स्वामिनं कुर्मइति इषणयन्त ऐच्छन् बृहस्पतिश्च मिथोवद्यपेभिः पातेः कर्मण्यौणादिकः कप्रत्ययः अवद्यरूपादसुराद्रक्षितव्यागावः येषु मरुत्सु परस्परं संगच्छन्त इति ते तथोक्ताः तैः स्वयुग्भिः स्वयमेव युक्तैर्मरुद्भिः उस्त्रियागाउदसृजत पर्वतान्निरगमयत् ॥ ८ ॥

अथ नवमी—

**तंवर्धयन्तोमतिभिःशिवाभिःसिंहमिवनानदतंसधस्थे ।**
**बृहस्पतिंवृषणंशूरसातौभरेभरेअनुमदेमजिष्णुम् ॥ ९ ॥**

तम् । वर्धयन्तः । मतिऽभिः । शिवाभिः । सिंहम्ऽइव ।
नानदतम् । सधऽस्थे । बृहस्पतिम् । वृषणम् । शूरऽसातौ ।
भरेऽभरे । अनु । मदेम । जिष्णुम् ॥ ९ ॥

सधस्थे सहतिष्ठंत्यत्र देवाइति सधस्थमन्तरिक्षं तस्मिन् सिंहमिव नानदतं पुनःपुनः शब्दायमानं वृषणं कामानां वर्षितारं जिष्णुं जयशीलं तं बृहस्पतिं वर्धयन्तोमरुतोवयं शूरसातौ शूरैः संभजनीये भरेभरे संग्रामे शिवाभिः कल्याणीभिः स्तुतिभिः अनुमदेम अनुष्टुमः स्तोतृपरत्वेन वा योजनीयं ॥ ९ ॥

अथ दशमी—

यदावाजमसंनद्विश्वरूपमाद्यामरुक्षदुत्तराणिसद्म ।
बृहस्पतिंवृषणंवर्धयन्तोनानासन्तोबिभ्रंतोज्योतिरासा ॥ १० ॥

यदा । वाजम् । असनत् । विश्वऽरूपम् । आ । द्याम् । अरुक्षत् ।
उत्ऽतराणि । सद्म । बृहस्पतिम् । वृषणम् । वर्धयन्तः ।
नाना । सन्तः । बिभ्रतः । ज्योतिः । आसा ॥ १० ॥

सबृहस्पतिः यदा यस्मिन्काले विश्वरूपं नानारूपं वाजं गोलक्षणमन्नं असनत् भजते यदावा आहृतपशुकः सन् द्यां द्युलोकमरुक्षत् आरोहति अथवा उत्तराणि वा सद्मस्थानानि आरोहति रुहेर्लुङि च्लेः शलइगुपधादनिटःक्सः तदानीं वृषणं वर्षितारं बृहस्पतिं आसा आस्येन देवाः वर्धयन्तोभवन्ति तथा नानादिक्षु संतोभवन्तः ज्योतिर्बिभ्रतोधारयन्तोदेवाश्च स्तुवन्ति ॥ १० ॥

अथैकादशी—

सत्यामाशिषंकृणुतावयोधैकीरिंचिद्ध्यवथस्वेभिरेवैः ।
पश्चामृधोअपभवन्तुविश्वास्तद्रोदसीशृणुतंविश्वमिन्वे ॥ ११ ॥

सत्याम् । आऽशिषम् । कृणुत । वयःऽधै । कीरिम् । चित् । हि ।
अवथ । स्वेभिः । एवैः । पश्चा । मृधः । अप । भवन्तु । विश्वाः ।
तत् । रोदसी इति । शृणुतम् । विश्वमिन्वे इति विश्वम्ऽइन्वे ॥ ११ ॥

हे बृहस्पतिप्रभृतयोदेवाः वयोधै अन्नस्य धानाय अस्मदीयामाशिषं स्तुतिं सत्यां यथार्थां कृणुत कुरुत तथा यूयं स्वेभिरात्मीयैरेवैर्गमनैः कीरिं स्तोतारं मां अवथ रक्षथ हिरवधार-

णे पश्चा पश्चपश्चाचछन्दसीति निपातितः पश्चात् विश्वाः सर्वास्पृधोहिंसित्र्योपभवन्तु नश्यन्तु तदिदमस्माभिरुक्तं वचनं हे विश्वमिन्वे विश्वस्य प्रीणयित्र्यौ हे रोदसी द्यावापृथिव्यौ शृणुतं ॥ ११ ॥

अथ द्वादशी—

इन्द्रोमह्नामहतोअर्णवस्यविमूर्धानमभिनदर्बुदस्य।
अहन्नहिमरिणात्सप्तसिन्धून्देवैर्द्यावापृथिवीप्रावतंनः ॥१२॥१६॥

इन्द्रः । मह्ना । महतः । अर्णवस्य । वि । मूर्धानम् । अभिनत् ।
अर्बुदस्य । अहन् । अहिम् । अरिणात् । सप्त । सिन्धून् ।
देवैः । द्यावापृथिवी इति । प्र । अवतम् । नः ॥ १२ ॥ १६ ॥

इन्द्रईश्वरः मह्ना महत्त्वेन युक्तोबृहस्पतिः महतः अर्णवस्य उदकवतः अर्बुदस्यांबुदस्य मेघस्य मूर्धानं शिरः व्यभिनत् व्यच्छिनत् तदुच्यते अहिमहंतव्यं अपामावरकं शत्रुमहन् अवधीत् अतः सप्त सर्पणशीलाः सिन्धून् स्यन्दमानाअपः यद्वा सप्तसंख्याकागंगाद्यानदीः अरिणात् समुद्रं प्रत्यगमयत् अस्रावयत् । अथप्रत्यक्षः हे द्यावापृथिव्यौ देवैः सह नोस्मान् प्रावतं प्ररक्षतं ॥ १२ ॥

॥ इत्यष्टमस्य द्वितीये षोडशोवर्गः ॥ १६ ॥

उदप्रुतइति द्वादशर्चमष्टमं सूक्तं ऋष्याद्याः पूर्ववत् । उदप्रुतइत्यनुक्रान्तं । उक्थे ब्राह्मणाच्छंसिनएतत्सूक्तं । सूत्रितश्च—प्रमंहिष्ठायोदप्रुतोच्छामइन्द्रमिति ।

तत्र प्रथमा—

उदप्रुतोनवयोरक्षमाणावावदतोअभ्रियस्येवघोषाः ।
गिरिभ्रजोनोर्मयोमदन्तोबृहस्पतिमभ्य१र्काअनावन् ॥ १ ॥

उदऽप्रुतः । न । वयः । रक्षमाणाः । वावदतः । अभ्रियस्यऽइव ।
घोषाः । गिरिऽभ्रजः । न । ऊर्मयः । मदन्तः ।
बृहस्पतिम् । अभि । अर्काः । अनावन् ॥ १ ॥

उद्प्रुतः उदकस्योद्गमयितारः वयः पक्षिणः पक्वात्सस्यात् रक्षमाणाः कृषीवलाः नउपमार्थे यथा शब्दायन्ते तथा च वावदतः पुनःपुनः शब्दायमानस्य अभ्रियस्येव अभ्रसमूहस्य घोषाः शब्दायथा भवन्ति किञ्च गिरिभ्रजः गिरिभ्योमेघेभ्योभ्रष्टानिर्गताऊर्मयः अप्समूहाः मदन्तः शब्दायमानाभवन्ति तथा अर्काः अर्चकाः स्तोतारः बृहस्पतिं अभ्यनावन् अभिष्टुवन्ति। नु स्तवने ॥ १ ॥

अथ द्वितीया—

संगोभिरांगिरसोनक्षमाणोभगइवेदर्यमणंनिनाय ।
जनेमित्रोनदंपतीअनक्तिबृहस्पतेवाजयाशूँरिवाजौ ॥ २ ॥

सम् । गोभिः । आङ्गिरसः । नक्षमाणः । भगःऽइव । इत् ।
अर्यमणम् । निनाय । जने । मित्रः । न । दम्पती इति दम्ऽपती ।
अनक्ति । बृहस्पते । वाजय । आशून्ऽइव । आजौ ॥ २ ॥

आङ्गिरसः अङ्गिरसः पुत्रः नक्षमाणः स्वतेजसा व्याप्नुवन् भगइव भगोदेवइव स्थितोबृहस्पतिरेव अर्यमणं स्तुतेः प्रेरकं स्तोतारं गोभिः सह संनिनाय संनयति संयोजयति मित्रोन मित्रोयथा जने जनपदे स्वरश्मीन् संयोजयति तद्वत् दंपती जायापती अनक्ति संगमयति स्वसामर्थ्यं तत्र स्थापयतीत्यर्थः। हे बृहस्पते आशून् व्याप्तान् स्वरश्मीन् वाजय तव स्तोतृषु गमय स्थापय यथा आशूनिव व्याप्तानश्वान् आजौ संग्रामे योद्धारोयथा संगमयन्ति तद्वत् ॥२॥

अथ तृतीया—

साध्वर्याअतिथिनीरिषिराःस्पार्हाःसुवर्णाअनवद्यरूपाः ।
बृहस्पतिःपर्वतेभ्योवितूर्यानिर्गाऊपेयवमिवस्थिविभ्यः ॥ ३ ॥

साधुऽअर्याः । अतिथिनीः । इषिराः । स्पार्हाः । सुऽवर्णाः ।
अनवद्यऽरूपाः । बृहस्पतिः । पर्वतेभ्यः । विऽतूर्य । निः ।
गाः । ऊपे । यवम्ऽइव । स्थिविऽभ्यः ॥ ३ ॥

साध्वर्याः साधूनां कल्याणानां पयसां नेत्रीः अतिथिनीः सततं गच्छन्तीः इषिराः एषणीयाः स्पार्हाः स्पृहणीयाः सुवर्णाः शोभनशुक्लादिवर्णोपेताः अनवद्यरूपाः प्रशस्यरूपाः एताः गाः पर्वतेभ्यः वलसंबंधिभ्यः वितूर्य निर्गमय्य उपेदेव समीपे निर्वपति प्रापयति । तत्र दृष्टान्तः—यवमिव यथा यवं स्थिविभ्यः कुसीदेभ्यः आदाय निर्वपति डुवप् बीजसंताने लिटि रूपं । यद्वा साधुनयनादिगुणयुक्तागाः अपः पर्वतेभ्योमेघेभ्यः आहृत्य सर्वत्र वर्षति ॥ ३ ॥

अथ चतुर्थी—

आप्रुषायन्मधुनऋतस्ययोनिमवक्षिपन्नर्कउल्कामिवद्योः ।
बृहस्पतिरुद्धरन्नश्मनोगाभूम्यांउद्नेववित्वचंबिभेद ॥ ४ ॥

आऽप्रुषायन् । मधुना । ऋतस्य । योनिम् । अवऽक्षिपन् ।
अर्कः । उल्काम्ऽइव । द्योः । बृहस्पतिः । उद्धरन् । अश्मनः ।
गाः । भूम्याः । उद्नाऽइव । वि । त्वचम् । बिभेद ॥ ४ ॥

मधुना उदकेन आप्रुषायन् पृथिवीमाभिमुख्येन सिञ्चन् प्रुषप्लुष स्नेहनसेचनपूरणेषु व्यत्ययेन विकरणस्य शायजादेशः ऋतस्योदकस्य योनिं मेघमवक्षिपन् वृष्ट्यर्थमवकिरन्नर्कः अर्चनीयोबृहस्पतिः द्योर्द्युलोकादुल्कामिव उल्कां यथा उद्धरति तथा तद्वत् अश्मनः शिलोच्चयात् बलेनाधिष्ठितात् गाः पणिभिरपहृतान् पशूनुद्धरन् ऊर्ध्वं गमयन् भूम्यास्त्वचं तेषां शफैर्बिभेदविभिन्नामकार्षीत् सर्वत्र गाविततांअकार्षीदित्यर्थः तत्र दृष्टान्तः—उद्नेव यथा वृष्ट्युदकेन पर्जन्यः भूमित्वचं विभिनत्ति तद्वत् ॥ ४ ॥

अथ पंचमी—

अपज्योतिषातमोअन्तरिक्षादुद्गःशीपालमिववातआजत् ।
बृहस्पतिरनुमृश्यावलस्याभ्रमिववातआचक्रआगाः ॥ ५ ॥

अप । ज्योतिषा । तमः । अन्तरिक्षात् । उद्गः । शीपालम्ऽइव ।
वातः । आजत् । बृहस्पतिः । अनुऽमृश्य । वलस्य । अभ्रम्ऽइव ।
वातः । आ । चक्रे । आ । गाः ॥ ५ ॥

सबृहस्पतिः ज्योतिषा तमसावृते पर्वतविवरे कृतेन सूर्येण अंतरिक्षात् तमः अपाजत् अपागमयत् ।तत्र दृष्टान्तः—उद्गः शीपालमिव यथा उदकाद्वातोवायुः शीपालं शैवालमपगमयति तद्वत् ततः सोयं अनुमृश्यं अत्र गावस्तिष्ठन्तीति विचार्य निश्चित्य वलस्य स्वभूतस्य पर्वतस्यान्तर्गतागाः आचक्रे आसमंतादकार्षीत् । कथमिव वायुरंतरिक्षस्थितमभ्रं मेघमाकिरति तद्वत् ॥ ५ ॥

अथ षष्ठी--

यदावलस्यपीयतोजसुंभेद्बृहस्पतिरग्नितपोभिरर्कैः ।
दद्भिर्नजिह्वापरिविष्टमाददाविर्निधीँरकृणोदुस्रियाणाम् ॥६॥१७॥

यदा । वलस्य । पीयतः । जसुम् । भेत् । बृहस्पतिः । अग्नितपःऽभिः । अर्कैः । दत्ऽभिः । न । जिह्वा । परिऽविष्टम् । आदत् । आविः । निऽधीन् । अकृणोत् । उस्रियाणाम् ॥ ६ ॥ १७ ॥

पीयतः पीयतिर्हिंसाकर्मा हिंसकस्य वलस्य जसुमायुधं यदा यस्मिन् काले भेत् भिनत्ति केन साधनेन अग्नितपोभिः अग्निवत्तपनशीलैः अर्कैरर्चनीयैः रश्मिभिः अपिवामन्त्रैर्भिनत्ति किञ्च दद्भिः पद्दन्नोमासित्यादिना दंतशब्दस्य दद्भावः यथा दंतैः परिविष्टं भक्ष्यं जिह्वा भक्षयति तद्वत् सपरिविष्टं पर्वते पणिभिः परिवृतं वलनामानं यदा आदत् अभक्षयत् अवधीत् तदानीं तैरपहृतानामुस्रियाणां गवां निधीन् आविरकृणोत् आविर्भूतमकरोत् ॥ ६ ॥

॥ इत्यष्टमस्य द्वितीये सप्तदशोवर्गः ॥ १७ ॥

अथ सप्तमी—

बृहस्पतिरमतहित्यदासांनामस्वरीणांसदनेगुहायत् ।
आण्डेवभित्वाशकुनस्यगर्भमुदुस्रियाःपर्वतस्यत्मनाजत् ॥ ७ ॥

बृहस्पतिः । अमत । हि । त्यत् । आसाम् । नाम । स्वरीणाम् । सदने । गुहा । यत् । आण्डाऽइव । भित्वा । शकुनस्य । गर्भम् । उत् । उस्रियाः । पर्वतस्य । त्मना । आजत् ॥ ७ ॥

बृहस्पतिः गुहा गुहायां सदने स्थाने स्वरीणां शब्दायमानानां आसां गवां तत् प्रसिद्धं नाम नामधेयं यद्यदा अमतहि ज्ञातवानखलु मनु अवबोधने लुङि तनादिभ्यस्तथासोरिति सिचोलुक्। तदानीं पर्वतस्यांतः स्थिताउस्रियागाः त्मना आत्मनैव असहायेन पर्वतं भित्त्वा उदाजत् उदगमयत्। तत्रदृष्टान्तः आंडेव यथा शकुनस्य पक्षिणः आण्डानि भित्वा तत्रस्थितं गर्भमुद्गमयति तद्वत्॥ ७॥

अथाष्टमी–

**अश्नापिनद्धंमधुपर्यपश्यन्मत्स्यंनदीनउदनिक्षियन्तम्।**
**निष्टज्जभारचमसंनवृक्षाद्बृहस्पतिर्विरवेणाविकृत्य॥ ८॥**

अश्ना। अपिऽनद्धम्। मधु। परि। अपश्यत्। मत्स्यम्। न। दीने। उदनि। क्षियन्तम्। निः। तत्। जभार। चमसम्। न। वृक्षात्। बृहस्पतिः। विऽरवेण। विऽकृत्य॥ ८॥

बृहस्पतिः अश्ना अश्मना व्याप्तया शिलया अपिनद्धं पिहितं मधु गोलक्षणं पर्यपश्यत् परितः अद्राक्षीत् तत्र दृष्टान्तः–मत्स्यंन यथा दीने शुष्कउदनि उदकशब्दस्य उदन्नादेशः उदके क्षियन्तं निवसन्तं मत्स्यं यथा पश्यति तद्वत्। दृष्ट्वा च तद्गोलक्षणं मधु विरवेण विविधेन शब्देन विकृत्य बलं छित्वा निर्जभार पर्वतात् निर्जहार कथमिव चमसं न चमन्ति भक्षयन्त्यत्रेति चमसः सोमपात्रं तं यथा वृक्षात् निर्हरति तद्वत् हरतोर्लिटि रूपं हृग्रहोर्भः॥ ८॥

अथ नवमी–

**सोषामविन्दत्सस्वः१सोअग्निंसोअर्केणविबबाधेतमांसि।**
**बृहस्पतिर्गोवपुषोवलस्यनिर्मज्जानंनपर्वणोजभार॥ ९॥**

सः। उषाम्। अविन्दत्। सः। स्वः१रिति स्वः। सः। अग्निम्। सः। अर्केण। वि। बबाधे। तमांसि। बृहस्पतिः। गोऽवपुषः। वलस्य। निः। मज्जानम्। न। पर्वणः। जभार॥ ९॥

सबृहस्पतिः तत्र पर्वतविवरे गवां दर्शनाय उषां उषसं अविन्दत् अलभत स एव स्वरादित्यं सोऽग्निं लब्ध्वा अर्केणार्चनीयेन तेजसा तमांसि विबबाधे अत्यर्थं बाधितवान् ततः सगोवपुषः गोरूपशरीरस्य पशुभिः परिवृतस्य वलस्य पर्वणः पर्वतात् तागानिर्जभार बलेन निर्जहार। बलादाहरणे दृष्टान्तः—मज्जानं न पर्वणो स्थ्नः मज्जानं यथातिक्लेशेन निर्हरंति तद्वत् ॥ ९ ॥

अथ दशमी—

हिमेवपर्णामुषितावनानिबृहस्पतिनाकृपयद्वलोगाः ।
अनानुकृत्यमपुनश्चकारयात्सूर्यामासामिथउच्चरातः ॥ १० ॥

हिमाऽइव । पर्णा । मुषिता । वनानि । बृहस्पतिना । अकृपयत् । वलः । गाः । अननुऽकृत्यम् । अपुनरिति । चकार । यात् । सूर्यामासा । मिथः । उत्ऽचरातः ॥ १० ॥

हिमेव यथा हिमेन पर्णा पर्णानि पद्मपत्राणि मुषिता मुषितानि भवन्ति तद्वद्वलेन वनानि वननीयानि गोधनानि मुषितान्यभूवन् अथ गवामन्वेषणाय बृहस्पतिना आगतेन हेतुना वलः अकृपयत अस्मै तामुषितागाः प्रायच्छत् ततः अननुकृत्यं अननुकरणीयं अपुनःकर्तव्यं च तत्कर्म चकार यथा तत्पश्चात्करणीयं न भवति यथा पुनरकरणीयं तथाकार्षीदित्यर्थः। किंतदित्याह—सूर्यामासा सूर्याचन्द्रमसौ मिथः परस्परं अहोरात्रयोः उच्चरातः उच्चरतइति यावत् तच्चकार। यादिति दीर्घश्छान्दसः ॥ १० ॥

अथैकादशी—

अभिश्यावंनकृशनेभिरश्वंनक्षत्रेभिःपितरोद्यामपिंशन् ।
रात्र्यांतमोअदधुर्ज्योतिरहन्बृहस्पतिर्भिनदद्रिंविदद्गाः ॥ ११ ॥

अभि । श्यावम् । न । कृशनेभिः । अश्वम् । नक्षत्रेभिः । पितरः । द्याम् । अपिंशन् । रात्र्याम् । तमः । अदधुः । ज्योतिः । अहन् । बृहस्पतिः । भिनत् । अद्रिम् । विदत् । गाः ॥ ११ ॥

पितरः पालयितारोदेवाः द्यां द्युलोकं नक्षत्रेभिः अश्विन्यादिभिरश्यपिंशन् अभितः अदीपयन् पिश अवयवे अयं दीपनायां वर्तते। तत्र दृष्टान्तः—श्यावं न यथा श्याववर्णमश्वं कृशनेभिः सौवर्णैराभरणैरलंकुर्वंति तद्वत्। तथा रात्र्यां तमोनिहितवन्तः किञ्च अहन् अह्निज्योतिरादित्याख्यमदधुः अदधुरित्युत्तरवाक्येन संबंधः करणीयः अन्यथा स्वरोन घटते अत्रतु वाक्यभेदादनिघातः यदाबृहस्पतिः अद्रिं वलेनाधिष्ठितं शिलोच्चयं भिनत् अभिनत् विभिद्य च तत्रस्थितान् गाः पशून् विदत् अविदत् अलभत विदेर्लुङि लृदित्वादङ् तदादेवाएवमकार्षुरित्यर्थः॥ ११ ॥

अथ द्वादशी—

इदमंकर्मनमोअभ्रियाययःपूर्वीरन्वानोनवीति ।
बृहस्पतिःसहिगोभिःसोअश्वैःसवीरेभिःसनृभिर्नोवयोधात्॥१२॥१८॥

इदम्। अकर्म। नमः। अभ्रियाय। यः। पूर्वीः। अनु।
आऽनोनवीति। बृहस्पतिः। सः। हि। गोभिः। सः। अश्वैः।
सः। वीरेभिः। सः। नृऽभिः। नः। वयः। धात्॥ १२ ॥ १८ ॥

अभ्रियाय अभ्रेषु भवाय अंतरिक्ष्याय मध्यमाय बृहस्पतये इदमुक्तं नमः स्तोत्रं अकर्म वयमकार्ष्म योबृहस्पतिः पूर्वीर्बह्वीः ऋचः अनुक्रमेण आनोनवीति अत्यर्थं आभिमुख्येन ब्रवीति सबृहस्पतिरेव गोभिरश्वैश्च युक्तंवीरेभिः पुत्रैर्नृभिर्भृत्यादिभिश्च सहितं वयोन्नं नोस्मभ्यस्तोतृभ्यः धात् दधातुप्रयच्छतु तच्छन्दावृत्तिरादरार्था॥ १२ ॥

॥ इत्यष्टमस्य द्वितीयेष्टादशोवर्गः॥ १८ ॥

॥ इति दशमे मण्डले पञ्चमोनुवाकः॥ ५ ॥

षष्ठेनुवाके षोडशसूक्तानि भद्राइति द्वादशर्चं प्रथमं सूक्तं वध्र्यश्वपुत्रस्य सुमित्रस्यार्षं आदितोद्वे जगत्यौ अथ दशत्रिष्टुभः अग्निर्देवता। तथाचानुक्रम्यते—भद्रासुमित्रोवाध्र्यश्व आग्नेयं द्विजगत्यादीति। गतोविनियोगः।

तत्र प्रथमा—

भद्राअग्नेर्वध्र्यश्वस्यसंदृशोवामीप्रणीतिःसुरणाउपेतयः ।
यदींसुमित्राविशोअग्रइन्धतेघृतेनाहुतोजरतेदविद्युतत् ॥ १ ॥

भद्राः । अग्नेः । वध्रिऽअश्वस्य । सम्ऽदृशः । वामी । प्रऽनीतिः । सुऽरणाः । उपऽइतयः । यत् । ईम् । सुऽमित्राः । विशः । अग्रे । इन्धते । घृतेन । आऽहुतः । जरते । दविद्युतत् ॥ १ ॥

अग्नेर्वक्ष्यमाणगुणस्य संदृशः संदृष्टयः वध्र्यश्वस्य एतन्नामकस्य मम पितुः भद्राः कल्याणकारिण्योभवन्तु यद्वा वध्र्यश्वस्य वध्र्यश्वकुले जातस्य अग्नेः संदृष्टयोभजनीयाभवन्तु प्रणीतिस्तस्य प्रणयनं वामी कल्याणी च भवतु तथा उपेतयः यज्ञं प्रत्युपगतयः सुरणाः शोभनरमणाभवन्ति सुमित्राः एतन्नामधेयाः विशः अमी मनुष्याः ईमेनमग्निं अग्रे प्रथमं यद्यदा इन्धते हविर्भिर्दीपयन्ति तदा घृतेन आहुतः हविर्भिश्च दविद्युतत् भृशं द्योतमानः दाधर्तिदर्धर्तीत्यादिना निपातितः सोग्निर्जरते अस्माभिः स्तूयते ॥ १ ॥

अथ द्वितीया—

घृतमग्नेर्वध्र्यश्वस्यवर्धनंघृतमन्नंघृतम्वस्यमेदनम् ।
घृतेनाहुतउर्वियाविपप्रथेसूर्यइवरोचतेसर्पिरासुतिः ॥ २ ॥

घृतम् । अग्नेः । वध्रिऽअश्वस्य । वर्धनम् । घृतम् । अन्नम् । घृतम् । ऊँ इति । अस्य । मेदनम् । घृतेन । आऽहुतः । उर्विया । वि । पप्रथे । सूर्यःऽइव । रोचते । सर्पिःऽआसुतिः ॥ २ ॥

वध्र्यश्वस्य संबंधिनः अग्नेर्घृतं दीयमानं हविर्वर्धनं भवतु तथा घृतमन्नं अदनीयं भवतु तथा अस्याग्नेर्घृतमु घृतमेव मेदनं पुष्टिकरं भवतु येनाग्निः पुष्टोभवति तन्मेदनं तेन घृतेनाहुतोग्निः उर्विया उरु अत्यंतं विपप्रथे स्वतेजसा विप्रथितोभवति तथा सर्पिरासुतिः सर्पिरासूयते यस्मिन्निति सोग्निः सूर्यइव रोचते दीप्यते ॥ २ ॥

अथ तृतीया—

यत्तेमनुर्यदनीकंसुमित्रःसमीधेअग्नेतदिदंनवीयः ।
सरेवच्छोचसगिरोजुषस्वसवाजंदर्षिसइहश्रवोधाः ॥ ३ ॥

यत् । ते । मनुः । यत् । अनीकम् । सुऽमित्रः । सम्ऽईधे । अग्ने । तत् । इदम् । नवीयः । सः । रेवत् । शोच । सः । गिरः । जुषस्व । सः । वाजम् । दर्षि । सः । इह । श्रवः । धाः ॥ ३ ॥

हे अग्ने ते त्वदीयं यदनीकं रश्मिसंघं मनुः एतन्नामकः यथा समीधे हविर्भिः सम्यग्दीपयति सुमित्रः एतन्नामकोहं समीधे सम्यग्दीपयामि ञिइन्धीदीप्तौ लिटि इन्धिभवतिभ्यांचेति कित्वान्नलोपः तदिदं सोयं रश्मिसंघः नवीयः नवतरोभवतु सत्वंरेवद्धनयुक्तं यथा भवति तथा शोच प्रज्वल सएव त्वं गिरः अस्मदीयाः स्तुतीर्जुषस्व सेवस्व सत्वं वाजं शत्रुबलं दर्षि विदारय तथा इह मयि श्रवोन्नं धाः धेहि ॥ ३ ॥

अथ चतुर्थी—

यंत्वापूर्वमीळितोवध्र्यश्वःसमीधेअग्नेसइदंजुषस्व ।
सनःस्तिपाउतभवातनूपादात्रंरक्षस्वयदिदंतेअस्मे ॥ ४ ॥

यम् । त्वा । पूर्वम् । ईळितः । वध्रिऽअश्वः । सम्ऽईधे । अग्ने । सः । इदम् । जुषस्व । सः । नः । स्तिऽपाः । उत । भव । तनूऽपाः । दात्रम् । रक्षस्व । यत् । इदम् । ते । अस्मे इति ॥ ४ ॥

ईळितः व्यत्ययेन कर्तरिक्तः स्तोतावध्र्यश्वोममपिता पूर्वं पूर्वस्मिन्काले संजातं यं त्वा त्वां समीधे हविर्भिः सम्यगदीपयत् सत्वमिदानीं मया क्रियमाणमिदं स्तोत्रं जुषस्व सेवस्व यद्वा वध्र्यश्वः तस्य पुत्रोहं सम्यक् दीपितवानस्मि सत्वं नोस्माकं स्तिपाः पृषोदरादिः पस्त्यं गृहं तस्य रक्षकोभव यद्वा उपस्थितान् ज्योतिष्टोमादीन् यागान् पालयतीति स्तिपाः अस्मदीयानां यज्ञानां पालयिता भव उतापिच तनूपाः स्वांगानां रक्षकोभव । किञ्च दात्रं तद्धनं रक्षस्वयदिदं धनं ते तव स्वभूतेष्वस्मे अस्मासु तिष्ठति ॥ ४ ॥

अथ पञ्चमी—

भवा॑द्युम्नीवा॑ध्र्यश्वोतगो॒पामात्वा॑तारीद॒भिमा॑ति॒र्जना॑नाम् ।
शूर॑इवधृ॒ष्णुश्च्यव॑नःसु॒मि॒त्रःप्रनु॒वो॑च॒वाध्र्य॑श्वस्य॒नाम॑ ॥ ५ ॥

भव॑ । द्यु॒म्नी । वा॒ध्रि॒ऽअ॒श्व॒ । उ॒त । गो॒पा । मा । त्वा॒ । ता॒री॒त् ।
अ॒भिऽमा॑तिः । जना॑नाम् । शूर॑ःऽइव । धृ॒ष्णुः । च्यव॑नः ।
सु॒ऽमि॒त्रः । प्र । नु । वो॒च॒म् । वाध्रि॑ऽअश्वस्य । नाम॑ ॥ ५ ॥

हे वाध्र्यश्व वध्र्यश्वकुलेजाताग्ने द्युम्नी द्युम्नं द्योततेर्यशोवान्नं वा तद्वान् भव । उतापिच गोपा गोपायिता भव । किञ्च त्वा त्वां कश्चिदपि मातारीत् माहिनस्तु यतः जनानां शत्रूणामभिमातिः अभिभवनशीलमानयुक्तः अभिभविता भवसि । किञ्च शूरइव बलवानिव धृष्णुः शत्रुधर्षणशीलः तस्मात् च्यवनः तेषां च्यावयिता भवसि अथ वाध्र्यश्वस्याग्नेस्तव नाम अग्निर्जात वेदावैश्वानरइत्यादीनि नामानि नु क्षिप्रं सुमित्रोहं प्रवोचं प्रब्रवीमि तस्मान्मे अन्नादियुक्तो-भव ॥ ५ ॥

अथ षष्ठी—

सम॒ज्र्या॑पर्व॒त्या॒३॑वसू॑नि॒दासा॑वृ॒त्राण्यार्या॑जिगेथ ।
शूर॑इवधृ॒ष्णुश्च्यव॑नो॒जना॑नां॒त्वम॑ग्नेपृ॒तना॒यूँर॒भिष्या॑ः ॥ ६ ॥ १९ ॥

सम् । अ॒ज्र्या॑ । प॒र्व॒त्या॑ । वसू॑नि । दासा॑ । वृ॒त्राणि॑ । आर्या॑ ।
जि॒गे॒थ॒ । शूर॑ःऽइव । धृ॒ष्णुः । च्यव॑नः । जना॑नाम् ।
त्वम् । अ॒ग्ने॒ । पृ॒त॒ना॒ऽयून् । अ॒भि । स्या॒ः ॥ ६ ॥ १९ ॥

हे अग्ने अज्र्या अञ्जन्ति गच्छन्तीत्यज्रयोजनाः तेभ्योहितानि पर्वत्या पर्वतभवानि वसूनि गवादिलक्षणानि संजिगेथ शत्रुभ्यः संजितवानसि तथा अर्या बलवद्भिः कृतान् दासा दासैरसुरैः कृतान् वृत्राणि उपद्रवान् संजिगेथ तान् हतवानसीत्यर्थः जिजये लिटि रूपं शूरइव धृष्णुः जनानां च्यवनस्त्वं पृतनायून् संग्रामकामान् अभिष्याः अभिभव पृतनायूनित्यत्र लोपाभावश्छान्दसः अश्वाघस्यादित्यात्वं विधीयमानं अस्मादपि व्यत्ययेन भवति ॥६॥

॥ इत्यष्टमस्य द्वितीये एकोनविंशोवर्गः ॥ १९ ॥

अथ सप्तमी—

दीर्घतन्तुर्बृहदुक्षायमग्निःसहस्रस्तरीःशतनीथऋभ्वा ।
द्युमान्द्युमत्सुनृभिर्मृज्यमानःसुमित्रेषुदीदयोदेवयत्सु ॥ ७ ॥

दीर्घऽतन्तुः । बृहत्ऽउक्षा । अयम् । अग्निः । सहस्रऽस्तरीः ।
शतऽनीथः । ऋभ्वा । द्युऽमान् । द्युमत्ऽसु । नृऽभिः ।
मृज्यमानः । सुऽमित्रेषु । दीदयः । देवयत्ऽसु ॥ ७ ॥

दीर्घतंतुः यैर्यज्ञं संतनोति ते तंतवः स्तोत्रादयः प्रभूतस्तुतिमान् बृहदुक्षाः उक्षासेचकोरश्मिः प्रभूतरश्मियुक्तः सहस्रस्तरीः हवीरूपबह्वाच्छादनः शतनीथः आहवनीयादिद्वारेण बहुविधनयनः ऋभ्वा महान् द्युमत्सु दीप्तिमत्सु मध्ये द्युमान् अतिशयेन दीप्तिमानयमग्निः नृभिः कर्मनेतृभिः ऋत्विग्भिः मृज्यमानः अलंक्रियमाणोभवति मृजू शौचालंकारयोः सत्वं देवयत्सु देवान्कामयमानेषु सुमित्रेष्वस्मासु दीदयः दीप्यस्व दीदयतिर्दीप्तिकर्मा ॥ ७ ॥

अथाष्टमी—

त्वेधेनुःसुदुघाजातवेदोसश्चतेवसमनासबर्धुक् ।
त्वंनृभिर्दक्षिणावद्भिरग्नेसुमित्रेभिरिध्यसेदेवयद्भिः ॥ ८ ॥

त्वे इति । धेनुः । सुऽदुघा । जातऽवेदः । असश्चताऽइव । समना ।
सबःऽधुक् । त्वम् । नृऽभिः । दक्षिणावत्ऽभिः । अग्ने ।
सुऽमित्रेभिः । इध्यसे । देवयत्ऽभिः ॥ ८ ॥

हे जातवेदः जातप्रज्ञाग्ने त्वे त्वयि सुदुघा सुष्ठु पयसोदोग्ध्री काचित् होमसाधनभूता धेनुरस्ति कीदृशी असश्चतेव संगवर्जितेनेव एकत्र स्थित्यभावात् कुत्रापि न संयुक्तेनादित्येन समना संगता सबर्धुक् अमृतं दुहाना गोरूपा माध्यमिका वाक् वैद्युते त्वय्यस्तीतिभावः तादृशस्त्वं नृभिः कर्मनेतृभिः दक्षिणावद्भिः ऋत्विग्भ्योदेयत्वेन तद्वद्भिः देवयद्भिः देवकामैः सुमित्रेभिः अस्माभिरिध्यसे हविर्भिर्दीप्यसे ॥ ८ ॥

अथ नवमी—

दे॒वाश्चि॑त्ते अ॒मृता॑ जातवेदो महि॒मानं॑ वाध्र्यश्व॒ प्र वो॑चन् ।
यत्सं॒पृच्छं॒ मानु॑षी॒र्विश॑ आय॒न्त्वं नृ॒भि॑रजयस्त्वा॒वृ॑धेभिः ॥ ९ ॥

दे॒वाः । चि॒त् । ते॒ । अ॒मृताः॑ । जात॒ऽवे॒दः॒ । म॒हि॒मान॑म् ।
वा॒ध्रि॒ऽअ॒श्व॒ । प्र । वो॒च॒न् । यत् । स॒म्ऽपृच्छ्य॑म् । मानु॑षीः । विशः॑ ।
आय॑न् । त्वम् । नृ॒ऽभिः॑ । अ॒ज॒यः॒ । त्वा॒ऽवृ॑धेभिः ॥ ९ ॥

हे जातवेदः हे वाध्र्यश्वाग्ने ते तव महिमानं अमृतादेवाश्चित् देवाअपि प्रवोचन् प्रब्रुवन्ति यद्यदा मानुषीर्मनुष्यसंबंधिन्योविशः प्रजाः संपृच्छं देवैः सह कोवाअसुरान् हन्तीत्येवमादिकं संप्रश्नमायन् प्राप्तवन्तः तदा त्वं नृभिः सर्वस्य नेतृभिः त्वावृधेभिः त्वयावर्धितैर्देवैः सह कर्मविघ्नकारिणः तानजयः जितवानसि ॥ ९ ॥

अथ दशमी—

पि॒तेव॑ पु॒त्रम॑बिभरु॒पस्थे॒ त्वाम॑ग्ने वध्र्य॒श्वः स॑प॒र्यन् ।
जु॒षा॒णो अ॑स्य स॒मिधं॑ यविष्ठो॒त पूर्वाँ॑ अवनो॒र्व्राध॑तश्चित् ॥ १० ॥

पि॒ताऽइ॑व । पु॒त्रम् । अ॒बि॒भः॒ । उ॒पऽस्थे॑ । त्वाम् । अ॒ग्ने॒ ।
व॒ध्रि॒ऽअ॒श्वः । स॒प॒र्यन् । जु॒षा॒णः । अ॒स्य॒ । स॒म्ऽइध॑म् । य॒वि॒ष्ठ॒ ।
उ॒त । पूर्वा॑न् । अ॒व॒नोः॒ । व्राध॑तः । चि॒त् ॥ १० ॥

हे अग्ने त्वां उपस्थे पृथिव्याउपस्थाने उत्तरवेद्यां सपर्यन् परिचर्या कर्मा परिचरन् वध्र्यश्वोमम पिता अबिभः धृतवान् हविर्भिः पोषितवान् वा कथमिव पितेव यथा पिता समीपे पुत्रं स्थापयति पोषयति वा डुभृञ् धारणपोषणयोः लिङि तिपि गुणेकृते हल्ङ्यादिना तिपोलोपः हे यविष्ठ युवतमाग्ने उतापिच अस्य वध्र्यश्वस्य पितुर्वा मम वा समिधं जुषाणः सेवमानः सन् पूर्वान् प्रत्नान् व्राधतश्चित् बाधकानपिशत्रून् अवनोः अवधीः वनतिर्हिंसायाम् भौवादिकः व्यत्ययेन उप्रत्ययः ॥ १० ॥

अथैकादशी—

शश्वदग्निर्वध्र्यश्वस्यशत्रून्नृभिर्जिगायसुतसोमवद्भिः ।
समनंचिददहश्चित्रभानोवव्राधन्तमभिनद्वृधश्चित् ॥ ११ ॥

शश्वत् । अग्निः । वध्रिऽअश्वस्य । शत्रून् । नृऽभिः । जिगाय ।
सुतसोमवत्ऽभिः । समनम् । चित् । अदहः । चित्रभानो
इति चित्रऽभानो । अव । व्राधन्तम् । अभिनत् । वृधः । चित् ॥११॥

सोग्निः वध्र्यश्वस्य सुतसोमवद्भिः अभिषुतसोमैः अनुवादकोमत्वर्थीयः तैर्नृभिः ऋत्विग्भिः शश्वत् सर्वदा शत्रून् जिगाय जितवान् अथ प्रत्यक्षः हे चित्रभानो नानातेजस्क चायनीयदीप्तिमन्वाग्ने त्वं समनंचित् समनमिति संग्रामनाम तमप्यदहः स्वतेजोभिः । अथ तव स्तोता वध्र्यश्वः वृधश्चित् स्वयं वृद्धोभवन् व्राधंतं वर्धमानं हिंसकं वा अवाभिनत् अवाङ्मुखं कृत्वाच्छिनत् यद्वात्वमेव तमवाभिनत् अवाङ्मुखं कृत्वा अभिनः अच्छिनः प्रथममध्यमयोः समानमेतद्रूपम् ॥ ११ ॥

अथ द्वादशी—

अयमग्निर्वध्र्यश्वस्यवृत्रहासनकात्प्रेद्धोनमसोपवाक्यः ।
सनोअजामीँरुतवाविजामीनभितिष्ठशर्धतोवाध्र्यश्व॥१२॥२०॥

अयम् । अग्निः । वध्रिऽअश्वस्य । वृत्रऽहा । सनकात् । प्रऽइद्धः ।
नमसा । उपऽवाक्यः । सः । नः । अजामीन् । उत । वा ।
विऽजामीन् । अभि । तिष्ठ । शर्धतः । वाध्रिऽअश्व ॥ १२ ॥ २० ॥

वृत्रहाशत्रूणां हन्तायमग्निः सनकात् चिरादारभ्य वध्र्यश्वस्य हविषाप्रेद्धः प्रकर्षेण दीपितोभवति तथा तस्य नमसा नमस्कारेण सह उपवाक्यः उपस्तोतव्योभवति हेवाध्र्यश्व वध्र्यश्वकुले मथनेन समुत्पन्नाग्ने सत्वं नोस्माकं अजामीनज्ञातीन् शत्रून् उतवा अपिवा शर्धतोहिंसतोविजामीन् विविधान् ज्ञातीनपि अभितिष्ठ अभिभव ॥ १२ ॥

॥ इत्यष्टमस्य द्वितीये विंशोवर्गः ॥ २० ॥

इमांमइत्येकादशर्चं द्वितीयं सूक्तं वाध्र्यश्वसुमित्रस्यार्षं त्रैष्टुभं तनूनपाद्वर्जिताः सनराशंसाः समिदादयः प्रत्यृचं देवताः। तथाचानुक्रान्तम्—इमांमएकादशाप्रमिति। वध्र्यश्वगोत्राणां पशाविदमाप्रीसूक्तं। सूत्रितञ्च—समिद्धोअद्येति सर्वेषां यथा ऋषिवेति ।

तत्र प्रथमा—

**इमांमेअग्नेसमिधंजुषस्वेळस्पदेप्रतिहर्याघृताचीं ।**
**वर्ष्मन्पृथिव्याःसुदिनत्वेअह्नामूर्ध्वोभवसुक्रतोदेवयज्या ॥ १ ॥**

इमाम् । मे । अग्ने । सम्ऽइधम् । जुषस्व । इळः । पदे । प्रति ।
हर्य । घृताचीम् । वर्ष्मन् । पृथिव्याः । सुदिनऽत्वे ।
अह्नाम् । ऊर्ध्वः । भव । सुक्रतो इति सुऽक्रतो । देवऽयज्या ॥ १ ॥

हे अग्ने इळस्पदे इळायास्पदे। एतद्वाइळायास्पदं यदुत्तरवेदीनाभिरिति ब्राह्मणं[1]। उत्तरवेद्यां इमां मे मदीयां समिधं जुषस्व सेवस्व तथा घृताचीं घृतमञ्चन्तीं स्रुचं प्रतिहर्य प्रतिकामयस्व। किञ्च हे सुक्रतो सुप्रज्ञ पृथिव्यावर्ष्मन् वर्ष्मणि समुच्छ्रूते पूर्वोक्तदेशे अह्नांसुदिनत्वे तन्निमित्तं देवयज्या देवयागेन हेतुना ऊर्ध्वः ज्वालाभिरुन्नतोभव ॥ १ ॥

अथ द्वितीया—

**आदेवानामग्रयावेहयातुनराशंसोविश्वरूपेभिरश्वैः ।**
**ऋतस्यपथानमसामियेधोदेवेभ्योदेवतमःसुषूदत् ॥ २ ॥**

आ । देवानाम् । अग्रऽयावा । इह । यातु । नराशंसः ।
विश्वऽरूपेभिः । अश्वैः । ऋतस्य । पथा । नमसा ।
मियेधः । देवेभ्यः । देवऽतमः । सुसूदत् ॥ २ ॥

देवानामग्रयावा अग्रे गन्ता नराशंसः उभेवनस्पत्यादिषुयुगपदिति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं नरैः शंसनीयः एतन्नामकोग्निः विश्वरूपेभिर्नानारूपैः अश्वैरोहिदाख्यैः सह इहास्मिन्यज्ञे आयातु आगत्य च मियेधः मेध्यः यज्ञहितः स्तुतियोग्योवा देवतमः देवानां मुख्यः

---

१ ऐ० ब्रा० १. २८.।

सोऽग्निः हविर्नयनयोग्येन ऋतस्य यज्ञस्य पथा मार्गेण नमसा स्तोत्रेण सह देवेभ्यइन्द्रादिभ्यः सुषूदत् हविः प्रेरयतु ॥ २ ॥

अथ तृतीया–

शश्वत्तममीळतेदूत्यायहविष्मन्तोमनुष्यासोअग्निम् ।
वर्हिष्ठैरश्वैःसुवृतारथेनादेवान्वक्षिनिषदेहहोता ॥ ३ ॥

शश्वत्ऽतमम् । ईळते । दूत्याय । हविष्मन्तः । मनुष्यासः ।
अग्निम् । वर्हिष्ठैः । अश्वैः । सुऽवृता । रथेन । आ ।
देवान् । वक्षि । नि । सद । इह । होता ॥ ३ ॥

शश्वत्तमं अत्यंतनित्यं अग्निं हविष्मंतः संभृतहविष्कामनुष्यासोमनुष्यायजमानादूत्याय दूतस्य भागकर्मणी इति यत्प्रत्ययः दूतकर्मणे हविर्वहनलक्षणाय तन्निमित्तं ईळते स्तुवन्ति सत्वं एवं स्तुतः वहिष्ठैर्वोढृतमैरश्वैः सुवृता सुवर्तनेन रथेन च सह देवानिन्द्रादीन् आवक्षि अस्मदीयं यज्ञं प्रत्यावह प्रापय ततः त्वं होता भवन् इहास्मिन्यज्ञे निषद निषीद ॥ ३ ॥

अथ चतुर्थी–

विप्रंथतांदेवजुष्टंतिरश्चादीर्घंद्राघ्मासुरभिभूत्वस्मे ।
अहेळतामनसादेवबर्हिरिन्द्रज्येष्ठाँउशतोयक्षिदेवान् ॥ ४ ॥

वि । प्रथताम् । देवऽजुष्टम् । तिरश्चा । दीर्घम् । द्राघ्मा । सुरभि ।
भूतु । अस्मे इति । अहेळता । मनसा । देव । बर्हिः ।
इन्द्रऽज्येष्ठान् । उशतः । यक्षि । देवान् ॥ ४ ॥

हे बर्हिर्नामकाग्ने देवजुष्टं देवैः सेवितं तिरश्चा तिरश्चीनं तिर्यगञ्चनं इदं बर्हिः विप्रथतां विशेषेण विस्तृतं भवतु तथा दीर्घं चेदं द्राघ्मा द्राघिम्ना दीर्घशब्दस्येमनिचि प्रियस्थिरेत्यादिना द्राघिरादेशः अकारस्य इकारोवर्णव्यापत्त्या पश्चादल्लोपः द्राघिम्ना युक्तं भवतु अस्मे अस्मदीयं बर्हिः सुरभिसोमादिहविर्निधानैः सुगंधं भूतु भवतु हे देव द्योतमान हे बर्हिः एतन्नामकाग्ने अहेळता हेळइति क्रोधनाम अक्रुध्यता मनसा उशतोहवींषि कामयमानान् इन्द्रज्येष्ठान् इन्द्रप्रधानान् देवान् यक्षि यज पूजय ॥ ४ ॥

अथ पंचमी—

दि॒वो वा॒ सानु॑ स्पृ॒शता॒ वरी॑यः पृथि॒व्या वा॒ मात्र॑या॒ वि श्र॑यध्वम् ।
उ॒श॒तीर्द्वा॑रो महि॒ना म॒हद्भि॑र्दे॒वं रथं॑ रथ॒युर्धा॑रयध्वम् ॥ ५ ॥ २१ ॥

दि॒वः । वा॒ । सानु॑ । स्पृ॒शत॑ । वरी॑यः । पृ॒थि॒व्या । वा॒ । मात्र॑या ।
वि । श्र॒य॒ध्व॒म् । उ॒श॒तीः । द्वा॒रः॒ । म॒हि॒ना । म॒हत्ऽभिः॑ ।
दे॒वम् । रथ॑म् । र॒थ॒ऽयुः । धा॒र॒य॒ध्व॒म् ॥ ५ ॥ २१ ॥

हे द्वारः एतन्नामधेयादेव्यः यूयं दिवोवा वाशब्दश्चार्थे दिवश्च सानु समुच्छ्रितं वरीयः उरुतरं स्थानं स्पृशत उन्नताभवतेत्यर्थः चवायोगेप्रथमेति न निघातः किञ्च । पृथिव्याश्च यावती मात्रास्ति तावत्या मात्रया विश्रयध्वं विस्तृता भवत उशतीर्देवान् कामयमानायूयं रथयुः सुपांसुलुगिति जसः सुः रथकामाः सत्यः महिना महिम्ना महद्भिर्देवैरधिष्ठितं अतएव देवं द्योतमानं रथं रमणसाधनं धारयध्वं धारयत ॥ ५ ॥

॥ इत्यष्टमस्य द्वितीये एकविंशोवर्गः ॥ २१ ॥

अथ षष्ठी—

दे॒वी दि॒वो दु॑हि॒तरा॑ सुशि॒ल्पे उ॒षासा॒नक्ता॑ सदतां॒ नि योनौ॑ ।
आ वां॑ दे॒वास॑ उशती उ॒शन्त॑ उ॒रौ सी॑दन्तु सु॒भगे उ॒पस्थे॑ ॥ ६ ॥

दे॒वी इति॑ । दि॒वः । दु॒हि॒तरा॑ । सु॒शि॒ल्पे इति॑ सु॒ऽशि॒ल्पे । उ॒ष॒सा॒नक्ता॑
स॒द॒ता॒म् । नि । योनौ॑ । आ । वा॒म् । दे॒वासः॑ । उ॒श॒ती॒ इति॑ ।
उ॒शन्तः॑ । उ॒रौ । सी॒द॒न्तु॒ । सु॒भ॒गे इति॑ सु॒ऽभ॒गे । उ॒प॒ऽस्थे॑ ॥ ६ ॥

देवी द्योतमानेदिवोद्युलोकस्य दुहितरा दुहितरौ सुशिल्पे शोभनरूपे उषासानक्ता उषाश्च नक्तं च अहोरात्रौ योनौ यज्ञस्थाने निषदतां निषीदतां हे उशती उशत्यौ कामयमाने हे सुभगे शोभनधने हे देव्यौ वां युवयोः उरौ विस्तीर्णे उपस्थे समीपस्थे स्थाने उशन्तः हवींषि कामयमानाः देवासोदेवाः आसीदन्तु उपविशन्तु ॥ ६ ॥

अथ सप्तमी—

ऊर्ध्वो ग्रावा बृहदग्निः समिद्धः प्रिया धामान्यदितेरुपस्थे ।
पुरोहितावृत्विजा यज्ञे अस्मिन्विदुष्टरा द्रविणमा यजेथाम् ॥ ७ ॥

ऊर्ध्वः । ग्रावा । बृहत् । अग्निः । सम्ऽइद्धः । प्रिया । धामानि ।
अदितेः । उपऽस्थे । पुरःऽहितौ । ऋत्विजा । यज्ञे ।
अस्मिन् । विदुःऽतरा । द्रविणम् । आ । यजेथाम् ॥ ७ ॥

ग्रावा सोमाभिषवाय यदा ऊर्ध्वः उन्नतोभवति यदा च बृहत् महानग्निः समिद्धः हविर्भिः सम्यक् दीप्तोभवति तथा प्रियाणि देवानां सोमादिहविःप्रदानेन प्रीणयितॄणि धामानि हविषां धारकाणि यज्ञपात्राणि अदितेः पृथिव्याउपस्थे यज्ञसदने यदा आसादितानि भवन्ति तदानीं हे ऋत्विजौ दैव्यौ होतारौ पुरोहितौ पुरतोनिहितौ विदुष्टरा छान्दसं संप्रसारणं विद्वत्तमौ युवा अस्मिन्यज्ञे द्रविणं धनमायजेथां यजिर्दानार्थः अस्मभ्यमाभिमुख्येन प्रयच्छतं ॥७॥

अथाष्टमी—

तिस्रो देवीर्बर्हिरिदं वरीय आ सीदत चकृमा वः स्योनम् ।
मनुष्वद्यज्ञं सुधिता हवींषीळा देवी घृतपदी जुषन्त ॥ ८ ॥

तिस्रः । देवीः । बर्हिः । इदम् । वरीयः । आ । सीदत । चकृम ।
वः । स्योनम् । मनुष्वत् । यज्ञम् । सुऽधिता । हवींषि ।
इळा । देवी । घृतऽपदी । जुषन्त ॥ ८ ॥

हे तिस्रोदेवीः इळाद्यास्तिस्रोदेव्यः वरीयः उरुतरं इदं बर्हिरासीदत कालाध्वनोरिति द्वितीया अत्यंतं तस्मिन्निषीदत कुतएतत्तत्राह वोयुष्मदर्थं स्योनं विस्तीर्णमिदं चकृम वयं कृतवन्तः वाक्यभेदादनिघातः । इळाएतन्नामिका देवी द्योतमाना सरस्वती घृतपदी दीप्तपदोपेता भारती च एता मनुष्वत् मनोर्यज्ञे यथा हवींष्यसेवन्त तद्वदस्मदीयं यज्ञं सुधिता सुष्ठुनिहितानि हवींषि च जुषन्त सेवंतां ॥ ८ ॥

त्वाष्ट्रस्य पशोर्वपायागस्य देवत्वष्टरिति याज्या । सूत्रितञ्च—देवत्वष्टर्यद्ध चारुत्वमानट् पिशंगरूपः सुभरोवयोधाइति ।

सैषा सूक्ते नवमी—

देवंत्वष्टर्यद्धंचारुत्वमानडयदङ्गिरसामभंवःसचाभूः ।
सदेवानांपाथउपप्रविद्वानुशन्यंक्षिद्रविणोदःसुरत्नंः ॥ ९ ॥

देवं । त्वष्टः । यत् । ह । चारुऽत्वम् । आनट् । यत् ।
आङ्गिरसाम् । अभंवः । सचाऽभूः । सः । देवानाम् । पाथः ।
उपं । प्र । विद्वान् । उशन् । यक्षि । द्रविणःऽदः । सुऽरत्नः ॥ ९ ॥

हे देव हे त्वष्टः एतन्नामक त्वं यच्चारुत्वं हविर्भिः कल्याणरूपत्वं आनट् प्राप्तवानसि अश्नोतेर्लिटि प्रत्ययस्य लुक् यश्च त्वं अंगिरसामस्माकं सचाभूः सह भावी सखाभवः हे द्रविणोदः धनस्य दातः अतएव सुरत्नः सुधनः सत्वं उशन् हवींषि कामयमानः सन् विद्वान् अस्येदमस्येदमिति प्रजानन् देवानां पाथोन्नमुपयक्षि उपयज तेभ्यः प्रयच्छ ॥ ९ ॥

वनस्पति स्तोमे निष्केवल्ये वनस्पतेरशनयेत्येषा सूक्तमुखीया ।सूत्रितञ्च—देवेभ्योवनस्पतेहवींषिवनस्पतेरशनयातियूयेति सूक्तमुखीयाइति ।

सैषा दशमी—

वनस्पतेरशनयांनियूयांदेवानांपाथउपंवक्षिविद्वान् ।
स्वदांतिदेवःकृणवद्धवींष्यवंतांद्यावांपृथिवीहवंमे ॥ १० ॥

वनंस्पते । रशनयां । निऽयूयं । देवानाम् । पाथः । उपं । वक्षि ।
विद्वान् । स्वदांति । देवः । कृणवत् । हवींषि । अवंताम् ।
द्यावांपृथिवी इति । हवंम् । मे ॥ १० ॥

हे वनस्पते वनस्पतिविकार यूप विद्वान् जानानस्त्वं रशनया रज्ज्वानियूय बध्वा परिव्याय पाथोन्नं देवानामिन्द्रादीनामुपवक्षि उपवह प्रापय।ततः देवोवनस्पतिः स्वदाति हविःप्रापणेन स्वदयतु तथा हवींषि अस्माभिर्दत्तानि कृणवत् देवानां करोतु तथा मे मदीयं हवं देवविषयाह्वानं द्यावापृथिवी द्यावापृथिव्यौ अवतां रक्षतां ॥ १० ॥

अथैकादशी—

**आग्नेवहवरुणमिष्टयेनइन्द्रंदिवोमरुतोअन्तरिक्षात् ।**
**सीदन्तुबर्हिर्विश्वआयजत्राःस्वाहादेवाअमृतामादयन्ताम्॥ ११॥२२॥**

आ । अग्ने । वह । वरुणम् । इष्टये । नः । इन्द्रम् । दिवः ।
मरुतः । अन्तरिक्षात् । सीदन्तु । बर्हिः । विश्वे । आ । यजत्राः ।
स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥ ११ ॥ २२ ॥

हे अग्ने त्वं नोस्माकमिष्टये यागाय इन्द्रं वरुणं च मरुतश्च दिवोद्युलोकादन्तरिक्षाच्च अस्मदीयं यज्ञमावह प्रापय आगतास्ते यजत्रा यष्टव्याविश्वे सर्वे देवाः बर्हिरासीदन्तु तत्रासन्नाभवन्तु ततः अमृतामरणधर्मरहितादेवाः स्वाहा स्वाहाकारेण दत्तैर्हविर्भिः मादयन्तां आत्मानं मादयन्तु ॥ ११ ॥

॥ इत्यष्टमस्य द्वितीये द्वाविंशोवर्गः ॥ २२ ॥

बृहस्पतइत्येकादशर्चं तृतीयं सूक्तं आंगिरसस्य बृहस्पतेरार्षं नवमी जगती शिष्टादशत्रिष्टुभः अनेन सूक्तेन ऋषिः परमपुरुषार्थसाधनं परब्रह्मज्ञानं स्तुतवान् अतस्तद्देवत्यमिदं । उक्तं हि बृहद्देवतायां—यज्ज्योतिःपरमंब्रह्मयद्योगात्समुपाश्नुते । तज्ज्ञानमभितुष्टाव सूक्तेनाथबृहस्पतिरिति ॥ १॥ अनुक्रान्तंच—बृहस्पतेबृहस्पतिर्ज्ञानं तुष्टाव नवमी जगतीति । सूक्तविनियोगोगतः । देवसुवां हविष्षु बृहस्पतिर्वाचस्पतिरित्यस्य प्रथमानुवाक्या । सूत्रितश्च—बृहस्पतेप्रथमंवाचोअग्रंहंसैरिवसखिभिर्वावदद्भिरिति ।

तत्र प्रथमा—

**बृहस्पतेप्रथमंवाचोअग्रंयत्प्रैरतनामधेयंदधानाः ।**
**यदेषांश्रेष्ठंयदरिप्रमासीत्प्रेणातदेषांनिहितंगुहाविः ॥ १ ॥**

बृहस्पते । प्रथमम् । वाचः । अग्रम् । यत् । प्र । ऐरत ।
नामऽधेयम् । दधानाः । यत् । एषाम् । श्रेष्ठम् । यत् । अरिप्रम् ।
आसीत् । प्रेणा । तत् । एषाम् । निऽहितम् । गुहा । आविः ॥ १ ॥

बृहस्पतिरनेन सूक्तेन विदितवेदार्थान् बालान् दृष्ट्वाविस्मयमानः स्वात्मानं संबोध्याह हे बृहस्पते अंतरात्मन् प्रथममुत्पत्त्यनंतरं इतरवागुच्चारणात् प्रागेव नामधेयं नाम दधानाः पदार्थेषु निदधानाबालाः यत्प्रैरत प्रेरितवन्तः तद्वाचोअग्रं भवति यत्तत तातेत्यादिकं वाक्यं पूर्वमभिधाय पश्चादन्यावाचोवदिष्यन्ति खलु तस्माद्वाचोअग्रं अस्यां दशायामवस्थितान् बालान् पश्य । तथा इदानीं एषां श्रेष्ठं प्रशस्यतमं यत् यच्चारिप्रं पापरहितं वेदार्थज्ञानमासीत् एषां तत् ज्ञानं गुहा गुहायां निहितं गोप्यं तत् प्रेणा मकारलोपश्छान्दसः प्रेम्णा आविर्भवति वेदाभ्यासकाले सरस्वती स्वार्थमेभ्यः प्रकाशयतीत्यर्थः । एवं विस्मये बृहस्पतेप्रथमंवाचोअग्रमित्यादिकमारण्यकमनुसंधेयं ॥ १ ॥

अथ द्वितीया—

सक्तुमिवतितउनापुनन्तोयत्रधीरामनसावाचमक्रत ।
अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचि ॥ २ ॥

सक्तुम्ऽइव । तितउना । पुनन्तः । यत्र । धीराः । मनसा । वाचम् । अक्रत । अत्र । सखायः । सख्यानि । जानते । भद्रा । एषाम् । लक्ष्मीः । निऽहिता । अधि । वाचि ॥ २ ॥

तितउना परिपूयतेनेनेति यद्वा ततविस्तृता भ्रष्टयवाअत्रेति तितउः तनोतेर्डउः सन्वच्चेति सन्वद्भावाद्द्वित्वं उक्तनिर्वचनेन शूर्पेण सक्तुमिव यथा कश्चित्सक्तुं दुर्धावं पुनाति तद्वत् प्रकृतितः प्रत्ययतश्च शब्दानुत्पुनंतः धीराधीमन्तः विद्वांसः यत्र यस्मिन्काले विद्वत्संघे वा मनसा प्रज्ञायुक्तेन वाचं अक्रत अकृषत कुर्वन्ति करोतेर्लुङि रूपं अत्र तत्र काले सखायः समानख्यानाः शास्त्रादिविषयज्ञानाः ते सख्यानि तेषु भवानि ज्ञानानि जानते जानन्ति यद्वा सखायः वाचा बद्धसख्यास्ते तस्यास्तस्यावाचः सख्यानि जानन्ति वाक्ययुक्तानभ्युदयान् लभन्तइत्यर्थः तस्मात् एषां वाचि भद्रा कल्याणीनिहितालक्ष्मीर्भवति अधिः सप्तम्यर्थद्योतकः अर्थज्ञानं वाचिपश्यामइत्यर्थः । तितउपरिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा सक्तुमिवपरिपवनेन पुनन्तइत्यादि निरुक्तमनुसंधेयं[1] ॥ २ ॥

---

१ नि० ४. १०.

वाग्देवत्यपशोर्वपापुरोडाशयोर्यज्ञेनवाचइत्यादिके द्वे क्रमेण याज्ये। सूत्रितश्च—यज्ञेन-वाचःपदवीयमायन्निति द्वे देवींवाचमजनयन्तदेवाइति।

सैषा तृतीया—

यज्ञेनंवाचःपंदवीयंमायन्तामन्वंविन्दन्नृषिषुप्रविंष्टाम्।
तामाभृत्याव्यंदधुःपुरुत्रातांसप्तरेभाअभिसंनंवन्ते॥ ३॥

यज्ञेनं। वाचः। पदऽवीयंम्। आयन्। ताम्। अनुं। अविन्दन्। ऋषिषु। प्रऽविंष्टाम्। ताम्। आऽभृत्यं। वि। अदधुः। पुरुऽत्रा। ताम्। सप्त। रेभाः। अभि। सम्। नवन्ते॥ ३॥

विदितार्थाधीराः पदवीयं वेतेरचोयत् संज्ञापूर्वकस्य विधेरनित्यत्वात् गुणाभावः पदेन यातव्यः पंथाः पदवीयः तं वाचोमार्गं यज्ञेन आयन् प्राप्तवन्तः ऋषिषु अतीन्द्रियार्थदर्शिषु प्रविष्टां तां वाचमविन्दन् अलभन्त अनंतरं तां वाचमाभृत्य आहृत्य पुरुत्रा बहुषु देशेषु व्यदधुः व्यकार्षुः सर्वान्मनुष्यानध्यापयामासुरित्यर्थः एतादृशींतां वाचं सप्तरेभाः शब्दायमानाः पक्षिणः पक्षिरूपाणि गायत्र्यादीनि सप्तछन्दांसि अभिसंनवन्ते अभितः संगच्छन्ते॥ ३॥

अथ चतुर्थी—

उतत्वःपश्यन्नदंदर्शवाचंमुतत्वंःशृण्वन्नशृंणोत्येनाम्।
उतोत्वंस्मैतन्वं१विसंस्रेजायेवपत्यंउशतीसुवासाः॥ ४॥

उत। त्वः। पश्यंन्। न। ददर्श। वाचंम्। उत। त्वः। शृण्वन्। न। शृणोति। एनाम्। उतो इति। त्वस्मै। तन्वंम्। वि। सस्रे। जायाऽइंव। पत्यें। उशती। सुऽवासाः॥ ४॥

त्वशब्दएकवाची एकः उतशब्दोप्यर्थे पश्यन्नपि मनसा पर्यालोचयन्नपि वाचं न ददर्श दर्शनफलाभानान्नपश्यति त्वएकः शृण्वन्नपि एनां वाचं न शृणोति श्रवणफलाभावात् इत्यनेनार्धेनाविद्वानभिहितः तृतीयपादेनविदितवेदार्थमाह त्वस्मै एकस्मै अपि तन्वं आत्मीयं शरीरं विसस्रे स्वयं वाग्विधं गमयति आत्मानं विवृणुते प्रकाशयतीत्यर्थः। तत्रदृष्टान्तः—जायेव

यथा उशती संभोगं कामयमाना सुवासाः शोभनवासा जाया पत्ये भर्त्रे ऋतुकाले संभोगार्थं स्वयमात्मानं विवृणुते तद्वत् एनां पश्यति शृणोति च इति विदितवेदार्थस्य प्रशंसा । अप्येकः पश्यन्नपश्यतिवाचमित्यादिनिरुक्तमत्रद्रष्टव्यम् ॥ ४ ॥

अथ पञ्चमी—

उ॒तत्वं॑स॒ख्येस्थि॒रपी॑तमाहु॒र्नैनं॑हिन्व॒न्त्यपि॒वाजि॑नेषु ।
अधे॑न्वाचरति॒मा॒यय्यै॒षवाचं॑शुश्रु॒वाँअ॑फ॒लाम॑पु॒ष्पाम् ॥ ५ ॥२३॥

उ॒त । त्व॒म् । स॒ख्ये । स्थि॒रऽपी॑तम् । आ॒हुः॒ । न । ए॒न॒म् । हि॒न्व॒न्ति॒ ।
अपि॑ । वा॒जिने॑षु । अधे॑न्वा । च॒र॒ति॒ । मा॒यया॑ । ए॒षः॒ ।
वाच॑म् । शु॒श्रु॒ऽवान् । अ॒फ॒लाम् । अ॒पु॒ष्पाम् ॥ ५ ॥ २३ ॥

त्वमुतएकमपि सख्ये विदुषां संसदि या सत्कथा सासखिकर्मत्वात् सख्यमित्युच्यते सा च वाचा क्रियते अतोवाक्संबंधात् वाक्सख्येस्थिरपीतं पीतं मधुयस्य हृदये स्थिरं भवति यद्वा स्थिरपीतं स्थिरमाप्तिमाहुः यद्वा तस्मिन्ज्ञातार्थमाहुः लोके यथा ज्ञातार्थं पुरुषं पीतार्थमिति वदन्ति । किञ्च एनं विज्ञातार्थं पुरुषं वाजिनेषु वाक् इना ईश्वरा येषां ते वाजिनाः अर्थाः वाच-आयत्ताः खलु वाक् ज्ञेयेषु अर्थेषु नापि हिन्वन्ति अपिशब्दोन्वर्थे केचिदपि नानुगच्छन्ति अयमेवातिशयेनविद्वानित्यर्थः यद्वा वाजिनेषु सारभूतेषु निरूपणीयेष्वर्थेषु एनं न हिन्वन्ति नबहिष्कुर्वन्ति एनं पुरस्कृत्यैव सर्वं वेदार्थं विचारयन्तीत्यर्थः । इत्यर्थः प्रशस्तः । अनंतरं उ-त्तरार्धेन केवलपाठकोनिन्द्यते एषः अविज्ञातार्थः पुरुषःअधेन्वा धेनुत्वविवर्जितया कामानाम-दोग्ध्र्या देवमनुष्यस्थानेषु वाक् प्रतिरूपया मायया चरति । किं कुर्वन् अफलामपुष्पां वा-चोर्थः पुष्पफलं अर्थवर्जितां यद्वा वाचोर्थः याज्ञदैवते यज्ञेभवं ज्ञानं याज्ञं देवतासु भवं ज्ञानं दैवतं तद्वर्जितां कर्मादिविषयज्ञानवर्जितां वाचंशुश्रुवान् केवलं पाठमात्रेणैवश्रुतवान् सः चरति यथा वंध्या पीना गौः किं द्रोणमात्रं क्षीरं दोग्धीति मायांउत्पादयन्ती चरति यथा वंध्यो-वृक्षोकाले पल्लवादियुक्तः सन् पुष्पति फलतीति भ्रांतिमुत्पादयंस्तिष्ठति तथा पाठंप्रब्रुवाण-श्चरतीत्यर्थः ।अप्येकं वाक्सख्ये स्थिरपीतमाहुरित्यादिकं निरुक्तंमत्रानुसंधेयं ॥ ५ ॥

॥इत्यष्टमस्य द्वितीये त्रयोविंशोवर्गः ॥ २३ ॥

---

१ नि० १.१९ । २ नि० १.२० ।

अथ षष्ठी—

यस्तित्याजसचिविदंसखायंनतस्यंवाच्यपिभागोअस्ति ।
यदींशृणोत्यलकंशृणोतिनहिप्रवेदंसुकृतस्यपन्थाम् ॥ ६ ॥

यः । तित्याजं । सचिऽविदम् । सखायम् । न । तस्यं । वाचि । अपि । भागः । अस्ति । यत् । ईम् । शृणोति । अलकम् । शृणोति । नहि । प्रऽवेदं । सुऽकृतस्यं । पन्थाम् ॥ ६ ॥

सचिविदं सचिशब्दः सखिवाचि सखिविदं योध्येता सवेदस्य सखा संप्रदायोच्छेदनिवारकत्वेन वेदं प्रत्युपकारित्वात् तादृशमुपकारिणमध्येतारं वेत्तीति सचिवित् तमभिज्ञं सखायमध्येतॄणां पुरुषाणां स्वार्थबोधनेनोपकारित्वात् सखिभूतं वेदं यः पुमान् तित्याज तत्याज परार्थविनियोगेन परित्यजति त्यजतेर्लेटि अपस्पृधेथामानृचुरित्यादिना निपातितः तस्य पुरुषस्य वाचि सर्वस्यां लौकिक्यां शास्त्रीयायां वाच्यपि भागोभजनीयः कश्चिदर्थोनास्ति ईमयं पुरुषः यत् वेदव्यतिरिक्तं शृणोति तत् अलकं अलीकं व्यर्थमेव शृणोति हि यस्मात्कारणात् सुकृतस्य पंथां पंथानं न प्रवेद श्रद्धाराहित्यादनुष्ठानमार्गं न जानाति तस्मात्तदीयश्रवणमपि निष्फलमित्यर्थः । द्वितीयचतुर्थपादयोरभिप्रायआरण्यके दर्शितः—नतस्यानूक्तेभागोस्तीत्यादिना । तथातं योनूत्सृजति अभागोवाचि भवत्यभागोनाके तदेषाभ्युक्तेत्यध्वर्युभिश्च ॥ ६ ॥

अथ सप्तमी—

अक्षण्वन्तःकर्णवन्तःसखायोमनोजवेष्वसमाबभूवुः ।
आदघ्नासउपकक्षासउत्वेह्रदाइवस्नात्वाउत्वेददृश्रे ॥ ७ ॥

अक्षण्ऽवन्तः । कर्णऽवन्तः । सखायः । मनःऽजवेषु । असमाः । बभूवुः । आदघ्नासः । उपऽकक्षासः । ऊँ इति । त्वे । ह्रदाःऽइव । स्नात्वाः । ऊँ इति । त्वे । ददृश्रे ॥ ७ ॥

अक्षण्वन्तः अक्षिमन्तः छन्दस्यपिदृश्यते इति अक्षशब्दात् अनङ् अनोनुडिति नुट् अनेन दृश्यते सर्वमित्यक्षि यद्वा तैजसत्वात् अन्येभ्योंगेभ्योव्यक्ततरं । तथाच श्रूयते—तस्मादेतेव्य-

---

१ तै० आरण्यके २. १५. ।

कतरइवेति । तादृशाक्षियुक्ताः कर्णवन्तः कर्णोनिकृत्तद्वारः गर्भावस्थायामेव केनापि निर्मितबिलइत्यर्थः यद्वा शरीरस्य शिरसोवाऊर्ध्वं गते उच्चैः स्थिते कर्णबिललक्षणाकाशवन्तः तथाचाम्नायते—ऋच्छन्तीइवखेउदगन्तामिति । तादृशः सखायः समानं ख्यानं ज्ञानं येषामिति सखायः तेषु वाक्येषु बाह्येष्विन्द्रियेषु समानज्ञानाइत्यर्थः ते मनोजवेषु मनसा गम्यन्ते इति मनोजवाः प्रज्ञाद्याः तेषु असमाः अतुल्याः बभूवुः भवन्ति तेषु मध्ये केचित् आदघ्नासः आस्यशब्दस्य पृषोदरादित्वादाकारादेशः आस्यदघ्नाः आस्यप्रमाणोदकाह्रदाइव । मध्यमप्रज्ञानाह अथत्वे एके सर्वनामत्वाज्जसः शीभावः उपकक्षासः कक्षसमीपप्रमाणोदकाह्रदाइव अल्पोदकाइत्यर्थः । अनेनाल्पप्रज्ञानाह । तथा त्वएके स्नात्वाः स्नातेः कृत्यार्थेत्वन् प्रत्ययः सच अर्हेकृत्यतृचश्चेत्यर्हार्थे च भवति स्नानार्हाः अक्षोभ्योदकाह्रदाइव ददृश्रे दृश्यन्ते अनेन महाप्रज्ञानाह उः पूरणः । अक्षिमन्तः कर्णवन्तः सखायोक्षिचष्टेरित्यादिकंनिरुक्तमत्रद्रष्टव्यं ॥ ७ ॥

अथाष्टमी—

हृदातष्टेषुमनसोजवेषुयद्ब्राह्मणाःसंयजन्तेसखायः ।
अत्राहत्वंविजहुर्वेद्याभिरोहब्रह्माणोविचरन्त्युत्वे ॥ ८ ॥

हृदा । तष्टेषु । मनसः । जवेषु । यत् । ब्राह्मणाः । सम्ऽयजन्ते ।
सखायः । अत्र । अह । त्वम् । वि । जहुः । वेद्याभिः ।
ओहऽब्रह्माणः । वि । चरन्ति । ऊँ इति । त्वे ॥ ८ ॥

सखायः समानख्यानाब्राह्मणाः हृदा बुद्धिमता हृदयेन तष्टेषु निश्चितेषु परिकल्पितेषु मनसः जवेषु गन्तव्येषु वेदार्थेषु गुणदोषनिरूपणाय यद्यथा संयजन्ते संगच्छन्ते यजिरत्र संगतकरणवाची अत्रास्मिन्ब्राह्मणसंघे त्वं अविज्ञातार्थमेकं पुरुषं वेद्याभिर्वेदितव्याभिर्विद्याभिः प्रवृत्तिभिर्वा विजहुः विशेषेण परित्यजन्ति अहेतिविनिश्चये । ओहब्रह्माणः ऊह्यमानं ब्रह्मविद्याश्रुतिमतिबुद्धिलक्षणं येषां ते तथोक्ताः तादृशास्ते एके विद्वांसः विचरन्ति यथाकामं वेदार्थेषु विनिश्चयार्थं प्रवर्तन्ते उः प्रसिद्धौ । हृदातष्टेषुमनसां प्रजवेषु इत्यादिनिरुक्तं द्रष्टव्यं ॥ ८ ॥

अथ नवमी—

इमेयेनार्वाङ्नपरश्चरन्तिनब्राह्मणासोनसुतेकरासः ।
तएतेवाचमभिपद्यपापयासिरीस्तन्त्रंतन्वतेअप्रजज्ञयः ॥ ९ ॥

---

१ नि० १.९. । २ नि० १३. १३. ।

इमे । ये । न । अर्वाक् । न । परः । चरन्ति । न । ब्राह्मणासः ।
न । सुतेऽकरासः । ते । एते । वाचम् । अभिऽपद्य । पापया ।
सिरीः । तन्त्रम् । तन्वते । अप्रऽजज्ञयः ॥ ९ ॥

अनया वेदार्थानभिज्ञान्निंदन्ते इमे ये अविद्वांसः अर्वाक् अर्वाचीनमधोभाविन्यस्मिन्लोके ब्राह्मणैः सह न चरन्ति ये परः परस्ताद्देवैः सह न चरन्ति ते ब्राह्मणासोब्राह्मणावेदार्थतत्परान भवन्ति तथा सुतेकरासः सोमं सुतमभिषुतं कुर्वन्तीति सुतेकराऋत्विजः तेपि न भवन्ति अप्रजज्ञयः जानातेराद्दगमहनइति किप्रत्ययः अविद्वांसः तएते मनुष्याः वाचं लौकिकीं अभिपद्य प्राप्य तया पापया पापकारिण्या वाचा युक्तास्ते सिरीः छन्दसीवनिपाविती प्रत्ययः सुपांसुलुगितिजसः सुः सीरिणोभूत्वा तन्त्रं कृषिलक्षणं तन्वते विस्तारयन्वि कुर्वन्तीत्यर्थः सर्वथा वेदार्थोज्ञेयइत्यभिप्रायः ॥ ९ ॥

सोमप्रवहणे सर्वेनन्दन्तीत्येषा । सूत्रितश्च—सोमयास्तेमयोभुवइतितिस्रः सर्वेनन्दन्तियशसागतेनेति ।

सैषा दशमी—

**सर्वेनन्दन्तियशसागतेनसभासाहेनसख्यासखायः ।**
**किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय ॥ १० ॥**

सर्वे । नन्दन्ति । यशसा । आऽगतेन । सभाऽसहेन । सख्या ।
सखायः । किल्बिषऽस्पृत् । पितुऽसनिः । हि । एषाम् ।
अरम् । हितः । भवति । वाजिनाय ॥ १० ॥

सखायः समानख्यानाः समानज्ञानाः सर्वे सभ्याः मनुष्याः सभासाहेन सभां सोढुं शक्नुवता सख्या ऋत्विजां प्रतिभूतेन यज्ञं प्रत्यागतेन यशसा यशस्विना सोमेन हेतुना नन्दन्ति हृष्टाभवन्ति सहि सएव सोमएषां जनानां किल्बिषस्पृत् यः स्वस्मादन्यः पुरुषः श्रेष्ठतामश्नुते स किल्बिषं भवति बाध्यत्वेन यथा पापं सदाचारैर्बाधितव्यं भवति तद्वत् पापरूपस्य शत्रोर्बाधकः यद्वा यज्ञे साध्वनुप्रवचनाकरणेन यत्किल्बिषमेषां जायते तत् योबाधते सकिल्बिषस्पृत् तथा त्वं पितुषणिः पितुरित्यन्ननाम दक्षिणा वा तमेनेन सोमेन सनोति यजमानः

संभजतइति तादृशः तेषामन्नदक्षिणादातेत्यर्थः । किञ्च हितः पात्रेषु निहितःसोमः वाजिनाय इन्द्रियं वीर्यं वाजिनं तेषां वीर्याय तत्कर्तुं अरमलं पर्याप्तः समर्थोभवति । सर्वेनन्दन्तियशसागतेनेत्यन्वाह यशोवैसोमोराजेत्यादिकं । इन्द्रियं वैवीर्यं वाजिनमाजरसंहास्मै वाजिनं नापच्छिद्यतइत्यन्तं ब्राह्मणमत्रानुसंधेयं ॥ १० ॥

अथैकादशी–

ऋचांत्वःपोषमास्तेपुपुष्वान्गायत्रंत्वोगायतिशक्करीषु ।
ब्रह्मात्वोवदतिजातविद्यांयज्ञस्यमात्रांविमिमीतउत्वः॥११॥२४॥

ऋचाम् । त्वः । पोषम् । आस्ते । पुपुष्वान् । गायत्रम् । त्वः ।
गायति । शक्करीषु । ब्रह्मा । त्वः । वदति । जातऽविद्याम् ।
यज्ञस्य । मात्राम् । वि । मिमीते । ऊँ इति । त्वः ॥ ११ ॥ २४ ॥

अनया होत्रादिकृत्विक्कर्मणां विनियोगमाचष्टे त्वएकोहोता ऋचां पोषं यथाविधिकर्मणि प्रयोगं पुपुष्वान् एकोधातुरनुवादार्थः बह्वीर्ऋचः पुष्यन् शंसन् आस्ते त्वः एकः उद्गाता शक्करीषु शक्वर्यऋचः आभिर्ऋग्भिर्वृत्रं हन्तुमिन्द्रः समर्थोभूदिति शक्वर्यऋचः तासु गायत्रं समगायति त्वः एकोब्रह्मा च जातविद्यां जातेजाते कर्तव्ये प्रायश्चित्तादौ वेदयित्रीं वाचं वदति ब्रह्माहि सर्वं वेदितुं योग्योभवति खलु चादिलोपेविभाषेति ननिघातः त्वः एकोध्वर्युश्च यज्ञस्य मात्रां यज्ञोयया मीयते अभिषवग्रहणादिकया क्रियया तां मात्रां यज्ञशरीरं विमिमीते अत्यर्थं निर्मिमीते । ऋचामेकः पोषमास्तेपुपुष्वान् होतर्गर्चनीत्यादिनिरुक्तानुसारेणाथोंभ्यधायि एवं बृहस्पतिर्वेदितवेदार्थज्ञानं तुष्टाव ॥ ११ ॥

॥ इत्यष्टमस्य द्वितीये चतुर्विंशोवर्गः ॥ २४ ॥

वेदार्थस्य प्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये अष्टमाष्टके द्वितीयोध्यायः॥२॥

---

१ ऐ० ब्रा० १. १३. । २ नि १. ८. ।

## ॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदायोवेदेभ्योखिलं जगत्। निर्ममे तमहं वन्देविद्यातीर्थमहेश्वरम् ॥१॥

प्राज्ञः श्रीसायणाचार्योव्याख्याय चरमेष्टके। स्फुटं द्वितीयमध्यायं तृतीयं वक्तुमुद्यतः॥२॥

तत्र देवानामिति नवर्चमनुवाकापेक्षया चतुर्थं सूक्तं आनुष्टुभं देवदेवत्यं लोकनाम्नः पुत्रोबृहस्पतिरांगिरसएव वा बृहस्पतिर्ऋषिः अथवा दक्षस्य दुहितादितिर्ऋषिः। तथाचानुक्रान्तं—देवानांनव लौक्योवाबृहस्पतिर्दाक्षायण्यदितिर्वा दैवमानुष्टुभमिति। गतः सूक्तविनियोगः।

तत्र प्रथमा—

**ॐम् दे॒वानां॒ नु व॒यंजाना॒प्रवो॑चामवि॒प॒न्यया॑। उ॒क्थेषु॑श॒स्यमा॑नेषु॒यःप॑श्या॒दुत्त॑रेयु॒गे ॥ १ ॥**

दे॒वाना॑म्। नु। व॒यम्। जाना॑। प्र। वो॒चा॒म॒। वि॒प॒न्यया॑। उ॒क्थेषु॑। श॒स्यमा॑नेषु। यः। पश्या॑त्। उत्ऽत॑रे। यु॒गे ॥ १ ॥

अदितिर्दाक्षायण्यनेन सूक्तेन स्वयं यथादित्यानजनयत् तद्ब्रवीति बृहस्पतिऋषिपक्षे सऋषिः अदितेः सकाशात् आदित्योत्पत्तिप्रकारमाह वयं देवानामादित्यानां जाना जन्मानि प्रवोचाम प्रकथयाम विपन्यया विस्पष्टया वाचा वयमिति वोचामेति चोभयत्र पूजार्थं बहुवचनं। अथैकवदाह योदेवानांगणः पूर्वे युगे उत्पन्नोपि उक्थेषु शस्यमानेषु यागे शस्त्रेष्वनुष्ठीयमानेषु उत्तरे युगे वर्तमानं स्तुवन्तं स्तोतारं पश्यात् पश्यति अनेकेष्वपि युगेषु गतेषु कर्मसु स्तूयमानोवर्ततइत्यर्थः ॥ १ ॥

अथ द्वितीया—

**ब्रह्म॑ण॒स्पति॑रे॒तासंक॒र्मार॑इवाधमत्। दे॒वानां॒पूर्व्ये॑यु॒गेस॑तः॒सद॑जायत॥२॥**

ब्रह्म॑णः। पतिः॑। ए॒ता। सम्। क॒र्मारः॑ऽइव। अ॒ध॒म॒त्। दे॒वाना॑म्। पू॒र्व्ये। यु॒गे। अस॑तः। सत्। अ॒जा॒य॒त॒ ॥ २ ॥

ब्रह्मणोत्रस्य पतिरदितिः एताएतानि देवानां जन्मानि कर्मारइव सयथा भस्त्रया अग्निं उपधमति प्रज्वलनार्थं एवं समधमत् उदपादयदित्यर्थः। देवानां पूर्व्ये युगे आदिसृष्टावित्यर्थः तेषामुपादानकारणादसतोनामरूपवर्जितत्वेनासत्समानाद्ब्रह्मणः सकाशात्सत् नामरूपविशिष्टं देवादिकं अजायत प्रादुरभूत्। असद्वाइदमग्रआसीत्ततोवैसदजायतेतिहि श्रुतिः। न सद्रात्मकस्य प्रपंचस्यासत्कारणत्वं युक्तमिति वाच्यं छन्दोगैः कथमसतः सज्जायेतेत्यसत्कारणत्वमाक्षिप्य सदेवसोम्येदमग्रआसीदित्यवधारितत्वात्। तर्हिअसत्कारणप्रतिपादकवाक्यानां का गतिरिति चेत् तेषामव्याकृतत्वाभिप्रायत्वात् तद्धेदंतर्ह्यव्याकृतमासीदित्यादिश्रुतेः। यद्येवं तर्ह्यदितेः सकाशात्कथं देवाद्युत्पत्तिः वायोरग्निरित्यादिवत् अधिष्ठानसकाशादुत्पत्तेः यद्वा देवानां कारणभूतं सदसतोब्रह्मणः सकाशादुत्पन्नमिति योजनादुक्तन्यायोस्मिन्पक्षेपि समानएव ॥ २ ॥

अथ तृतीया—

देवानांयुगेप्रथमेसतःसदजायत ।
तदाशाअन्वजायन्ततदुत्तानपदस्परि ॥ ३ ॥

देवानाम् । युगे । प्रथमे । असतः । सत् । अजायत । तत् ।
आशाः । अनु । अजायन्त । तत् । उत्तानऽपदः । परि ॥ ३ ॥

पूर्वार्धमुक्तं तदन्वाशादिशोजायन्त तत्परि तदन्वित्यर्थः उत्तानपदः उत्तानमूर्ध्वंतानं पद्यन्ते इत्युत्तानपदोवृक्षाः ते अजायन्त प्रादुरभवन् ॥ ३ ॥

अथ चतुर्थी—

भूर्जज्ञउत्तानपदोभुवआशाअजायन्त ।
अदितेर्दक्षोअजायतदक्षाद्वदितिःपरि ॥ ४ ॥

भूः । जज्ञे । उत्तानऽपदः । भुवः । आशाः । अजायन्त । अदितेः ।
दक्षः । अजायत । दक्षात् । ऊँ इति । अदितिः । परि ॥ ४ ॥

भूरुत्तानपदोवृक्षान् जज्ञे तथा भुवः सकाशादाशाअजायन्त तथा अदितेर्दक्षः अजायत उत्पन्नः दक्षादु दक्षादपि अदितिः पर्यजायत नस्वोत्पन्नं कार्यं स्वस्यैव कारणमपि भवतीति विप्रतिषिद्धमिति वाच्यं यास्काचार्यः इदमेव वाक्यमुदाहृत्य विरोधमाशंक्य पर्यहरत् तथाहि–अदितेर्दक्षोजायत दक्षाद्वा अदितिः परीतिच तत्कथमुपपद्येत समानजन्मानौस्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृतीइति[1] ॥ ४ ॥

अदितिदेवताके पशौ अदितिर्ह्यजनिष्टेत्येषा हविषोनुवाक्या । सूत्रितंच–अदितिर्ह्यजनिष्ट सुत्रामाणंपृथिवींद्यामनेहसमिति ।

सैषा पंचमी–

अदि॑ति॒र्ह्यज॑निष्ट॒दक्ष॒यादु॑हि॒तात॑व ।
तांदे॒वाअन्व॑जायन्तभ॒द्राअ॒मृत॑बन्धवः ॥ ५ ॥ १ ॥

अदि॑तिः । हि । अज॑निष्ट । दक्ष॑ । या । दु॒हि॒ता । तव॑ । ताम् ।
दे॒वाः । अनु॑ । अ॒जा॒य॒न्त॒ । भ॒द्राः । अ॒मृत॑ऽबन्धवः ॥ ५ ॥ १ ॥

हे दक्ष या तव दुहिताभूत् सा अदितिरजनिष्ट हि पुत्रानादित्यान्। तदेवाह तांदेवाअन्वजायन्त भद्राः स्तुत्या भजनीया अमृतबन्धवः अमरणबन्धनाः ॥ ५ ॥

॥ इत्यष्टमस्य तृतीये प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी–

यद्दे॑वाअ॒दः स॑लि॒ले सु॒संर॑ब्धा॒अति॑ष्ठत ।
अत्रा॑वो॒नृत्य॑तामिव॒ती॒व्रो॒रे॒णुरपा॑यत ॥ ६ ॥

यत् । दे॒वाः । अ॒दः । स॒लि॒ले । सु॒ऽसंर॑ब्धाः । अति॑ष्ठत । अत्र॑ ।
व॒ः । नृत्य॑ताम्ऽइव । ती॒व्रः । रे॒णुः । अप॑ । आ॒य॒त ॥ ६ ॥

---

१ नि० ११. २३।

अनयोत्तरेण चादित्याः स्तूयन्ते यद्यदा हे देवाः अदःअमुष्मिन्सलिले यूयं सुसंरब्धाः सुष्ठु लब्धात्मानोतिष्ठतस्थितवंतः। आपोवाइदंसर्वमपएवससर्जादावितिश्रुतिस्मृती। अत्रास्मिन् सलिलेनृत्यतामिव चोयुष्माकं संबन्धी तीव्रोदुःसहोरेणुरंशभूतएकः अपायत अपागच्छत दिवं प्रति गतइति सूर्याभिप्रायं परामार्तण्डमास्यदिति वक्ष्यति ॥ ६ ॥

अथ सप्तमी—

यद्देवायतयोयथाभुवनान्यपिन्वत।
अत्रासमुद्रआगूळ्हमासूर्यमजभर्तन ॥ ७ ॥

यत्। देवाः। यतयः। यथा। भुवनानि। अपिन्वत। अत्र। समुद्रे। आ। गूळ्हम्। आ। सूर्यम्। अजभर्तन ॥ ७ ॥

यद्यदा हे देवायतयोयथा वृष्ट्या नियमयन्तीति वा अवर्षणेन यातयन्तीतिवा यतयोमेघाः ते यथा उदकैर्भुवनानि लोकं पूरयन्ति तद्वत् स्वतेजोभिः अपिन्वत पूरितवन्तः अत्र समुद्रेप्सु आगूळ्हं निगूळ्हं सूर्यं प्रातरुदयाय आजभर्तन आहृतवन्तः ॥ ७ ॥

अथाष्टमी—

अष्टौपुत्रासोअदितेर्येजातास्तन्व१स्परि।
देवाँउपप्रैत्सप्तभिःपरामार्ताण्डमास्यत् ॥ ८ ॥

अष्टौ। पुत्रासः। अदितेः। ये। जाताः। तन्वः। परि। देवान्। उप। प्र। ऐत्। सप्तऽभिः। परा। मार्ताण्डम्। आस्यत् ॥ ८ ॥

अष्टौ पुत्रासः पुत्राः मित्रादयः अदितेर्भवन्ति ये अदितेस्तन्वः परि शरीरात् जाताउत्पन्नाः अदितेरष्टौ पुत्राअध्वर्युब्राह्मणे परिगणिताः। तथाहि—ताननुक्रमिष्यामोमित्रश्चवरुणश्च धाताचार्यमाच अंशश्च भगश्च विवस्वानादित्यश्चेति[1]। तथाहि तत्रैव प्रदेशान्तरे अदितिं प्रस्तुत्याम्नातं—तस्याउच्छेषणमदधुस्तत्प्राश्नात् सारेतोधत्त तस्यैचत्वारआदित्याअजायन्त साद्वितीयमपचदित्यादिनाष्टानामादित्यानामुत्पत्तिर्वर्णिता। सादितिः सप्तभिः पुत्रैर्देवानुपप्रैत् उपागच्छत अष्टमं पुत्रं मार्तांडं सूर्यं परास्यत् उपरिमाक्षिपदित्यर्थः[2] ॥ ८ ॥

---

१ तै० आरण्यके। २ तै० सं० ६. ५. ६।

अथ नवमी—

सप्तभिः पुत्रैरदितिरुप प्रैत्पूर्व्यं युगम्।
प्रजायै मृत्यवे त्वत्पुनर्मार्ताण्डमाभरत्॥ ९॥ २॥

सप्तऽभिः। पुत्रैः। अदितिः। उप। प्र। ऐत्। पूर्व्यम्। युगम्।
प्रऽजायै। मृत्यवे। त्वत्। पुनः। मार्ताण्डम्। आ।
अभरत्॥ ९॥ २॥

पूर्वमन्त्रोक्तएवार्थः पुनरत्रोच्यते सप्तभिर्मार्ताडव्यतिरिक्तैर्मित्रादिभिरदितिः पूर्व्यं पुराणमुत्तमं युगं उपप्रैत् उपगता अथ प्रजायै प्राणिनामुत्पत्तये मृत्यवे तेषां मरणाय मार्ताडं मृतात्व्यृद्धादण्डाज्जातं मार्ताडनामानं सूर्यं पुनराभरदाहरत् द्युलोके अधारयत् प्राणिमरणजननादीनां सूर्योदयास्तमयायत्तता स्फुटा। तस्यै व्यृद्धमाण्डमजायतेत्यादिब्राह्मणं॥ ९॥

॥ इत्यष्टमस्य तृतीये द्वितीयोवर्गः॥ २॥

जनिष्ठाइत्येकादशर्चं पंचमं सूक्तं शक्तिपुत्रस्य गौरिवीतेरार्षं मारुतं त्रैष्टुभं। तथाचानुक्रान्तं—जनिष्ठाएकादश गौरिवीतिरिति। अग्निष्टोमे मरुत्वतीये शस्त्रे इदं सूक्तं निविद्धानं सूत्रितंच—जनिष्ठाउग्रइत्येकभूयसीः शस्त्वा मरुत्वतीयां निविदं दध्यादिति। सौमिकचातुर्मास्येषु वैश्वदेवेप्येतन्मरुत्वतीयं निविद्धानं। सूत्रितंच—जनिष्ठाउग्रउग्रोजज्ञइति माध्यन्दिनइति। महाव्रतेपि निष्केवल्ये एतत्सूक्तं। तथैव पंचमारण्यके सूत्रितं—जनिष्ठाउग्रःसहसेतुरायेति निविद्धानमिति।

तत्र प्रथमा—

जनिष्ठाउग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा॥ १॥

जनिष्ठाः। उग्रः। सहसे। तुराय। मन्द्रः। ओजिष्ठः।
बहुलऽअभिमानः। अवर्धन्। इन्द्रम्। मरुतः। चित्।
अत्र। माता। यत्। वीरम्। दधनत्। धनिष्ठा॥ १॥

---

१ तै० सं० ६.५.६।

हे इन्द्र सहसे बलाय तुराय शत्रूणां हिंसनाय त्वं उग्रउद्गूर्णबलोजनिष्ठाः अजायथाः। कीदृशस्त्वं मन्द्रः स्तुत्यः ओजिष्ठः ओजः शारीरबलं अतिशयेन तद्वान् बहुलाभिमानः भूयिष्ठाभिमानी ईदृशं महानुभावं इन्द्रं अत्र वृत्रवधे मरुतश्चित् मरुतोप्यवर्धन् स्तुत्या साहाय्येन वा वर्धितवन्तः यद्यदा धनिष्ठाधारयित्री इन्द्रमाता वीरं दधनत् अधारयत्॥ १॥

अथ द्वितीया–

द्रुहोनिषंत्तापृशनीचिदेवैःपुरूशंसेनवावृधुष्टइन्द्रंम्।
अभीर्वृतेवतामहापदेनंध्वान्तात्प्रपित्वादुदंरन्तगर्भाः॥ २॥

द्रुहः। निऽसंत्ता। पृशनी। चित्। एवैः। पुरु। शंसेन। वृवृधुः।
ते। इन्द्रम्। अभिर्वृताऽइव। ता। महाऽपदेन।
ध्वान्तात्। प्रऽपित्वात्। उत्। अरन्त। गर्भाः॥ २॥

द्रुहोद्रोग्धुरिन्द्रस्य पृशनी चित् सेनापि निषत्ता तत्सन्निधौनिषण्णाभूत् एवैर्गन्तृभिर्मरुद्भिः सहितमिन्द्रं निषण्णेति संबन्धः तेपि मरुतः पुरुप्रभूतेन शंसेन स्तोत्रेण इन्द्रं ववृधुरवर्धन्त वृत्रं जिघांसन्तं अथ महापदेन महता व्रजेन अभीवृतेव परिवृतानीव गवादीनि तानि यथा आवरणापगमे निर्गच्छन्ति तद्वत्ता तान्युदकानि ध्वान्तादन्धकाररूपात् प्रपित्वात् आसन्नात् प्राप्ताद्वृत्राद्गर्भाः गर्भभूतान्युदकानि उदरन्तउदगच्छन्॥ २॥

अथ तृतीया–

ऋष्वातेपादाप्रयज्जिगास्यवंर्धन्वाजाउतयेचिदत्रं।
त्वमिन्द्रसालावृकान्त्सहस्रंमासंदधिषेअश्विनावंवृत्याः॥ ३॥

ऋष्वा। ते। पादा। प्र। यत्। जिगासि। अवंर्धन्। वाजाः।
उत। ये। चित्। अत्रं। त्वम्। इन्द्र। सालावृकान्। सहस्रम्।
आसन्। दधिषे। अश्विना। आ। ववृत्याः॥ ३॥

हे इन्द्र ते पादौ ऋष्वा महान्तौ तादृशस्त्वं यद्यदा जिगासि गच्छसि तदानीं वाजाऋभवः अवर्धन् अवर्धयन् । उतापिच येचित् ये केचन देवाः सन्ति ते अपि अवर्धयन् हे इन्द्र त्वं सहस्रं सालावृकान् आसन् आस्ये दधिषेधारयसि तदानीमश्विना अश्विनावपि आववृत्याः आवर्तयेः ॥ ३ ॥

अथ चतुर्थी—

समनातूर्णिरुपयासियज्ञमानासत्यासख्यायवक्षि ।
वसाव्यामिन्द्रधारयःसहस्राश्विनाशूरददतुर्मघानि ॥ ४ ॥

समना । तूर्णिः । उप । यासि । यज्ञम् । आ । नासत्या ।
सख्याय । वक्षि । वसाव्याम् । इन्द्र । धारयः । सहस्रा ।
अश्विना । शूर । ददतुः । मघानि ॥ ४ ॥

हे इन्द्र समना संग्रामे तूर्णिः त्वरमाणोपि यज्ञमुपयासि उपगच्छसि तदानीं नासत्या अश्विनौ सख्याय वक्षि वहसि हे इन्द्र वसाव्यां वसुसमूहं सहस्रा सहस्रां बहुसंख्यां धारयः धारयसि अस्माकमर्थाय हे शूर अश्विना अश्विनावपि तवानुचरौ मघानि धनानि ददतुः अस्मभ्यं प्रयच्छतः ॥ ४ ॥

अथ पंचमी—

मन्दमानऋतादधिप्रजायैसखिभिरिन्द्रइषिरेभिरर्थम् ।
आभिर्हिमायाउपदस्युमागान्मिहःप्रतम्राअवपत्तमांसि ॥५॥३॥

मन्दमानः । ऋतात् । अधि । प्रऽजायै । सखिऽभिः । इन्द्रः ।
इषिरेभिः । अर्थम् । आ । आभिः । हि । मायाः । उप । दस्युम् ।
आ । अगात् । मिहः । प्र । तम्राः । अवपत् । तमांसि ॥ ५ ॥ ३ ॥

इन्द्रः ऋताव यज्ञात् अधि इषिरेभिः गमनशीलैः सखिभिर्मरुद्भिः सहमन्दमानोमाद्यन् प्रजायै यजमानायार्थं धनं प्रयच्छति सचेन्द्रः आभिः प्रजाभिः निमित्तभूताभिः मायाः दस्युसंबन्धिनीर्विनाशयितुं दस्युमुपागात् सइन्द्रः तम्राः अवर्षणेन ग्लापयित्रीर्मिहोवृष्टीः प्रावपत् तमांसि च प्रावपत् व्यनाशयदित्यर्थः ॥ ५ ॥

॥ इत्यष्टमस्य तृतीयेतृतीयोवर्गः ॥ ३ ॥

अथ षष्ठी—

सनामानाचिद्ध्वसयोन्यस्माअवाहन्निन्द्रउषसोयथानः ।
ऋष्वैरगच्छःसखिभिर्निकामैःसाकंप्रतिष्ठाहृद्याजघन्थ ॥ ६ ॥

सऽनामाना । चित् । ध्वसयः । नि । अस्मै । अव । अहन् । इन्द्रः ।
उषसः । यथा । अनः । ऋष्वैः । अगच्छः । सखिऽभिः ।
निऽकामैः । साकम् । प्रतिऽस्था । हृद्या । जघन्थ ॥ ६ ॥

अयमिन्द्रोवृत्रं हन्तुं सनामानाचित् समाननामानौ निध्वसयः न्यगमयत् अथेन्द्रस्त्वं वृत्रमवाहन् अवहतवान् यथोषसोऽनः शकटमवनाशितवान् तद्वत् । अथप्रत्यक्षेणोच्यते हे इन्द्र त्वं ऋष्वैर्दीप्तैर्महद्भिर्वा निकामैः नितरां वृत्रवधं कामयमानैः सखिभिर्मरुद्भिः साकं वृत्रं हन्तुं अगच्छः आगत्य च प्रतिष्ठा प्रतिष्ठानानि शरीराणि हृद्या हृद्यानि रमणीयानि जघन्थ हतवानसि हन्तेस्थलि उपदेशेत्वतइतीट्प्रतिषेधः ॥ ६ ॥

अथ सप्तमी—

त्वंजघन्थनमुचिंमखस्युंदासंकृण्वानऋषयेविमायम् ।
त्वंचकर्थमनवेस्योनान्पथोदेवत्राञ्जसेवयानान् ॥ ७ ॥

त्वम् । जघन्थ । नमुचिम् । मखस्युम् । दासम् । कृण्वानः ।
ऋषये । विऽमायम् । त्वम् । चकर्थ । मनवे । स्योनान् । पथः ।
देवऽत्रा । अञ्जसाऽइव । यानान् ॥ ७ ॥

हे इन्द्र त्वं नमुचिं एतत्संज्ञकमसुरं जघन्थ हतवानसि कीदृशं मखस्युं ऋषेर्यज्ञं विधातुमिच्छन्तं यद्वा त्वदीयं धनमिच्छन्तं किं कुर्वन् दासं उपक्षपयितारं नमुचिमसुरं ऋषये मनवे विमायं विगतमायं कृण्वानः कुर्वन् । किंच त्वं देवत्रा देवेषु मध्ये मनवे ऋषये सामान्येन मनुष्यायवा. पथोमार्गान् स्योनान् चकर्थ कृतवानसि अथवा देवत्रा देवेषु मध्ये गन्तव्यान् मार्गानिति वा संबन्धः स्योनान् चकर्थेत्युक्तमेव विवृणोति अञ्जसेवयानानिति इवेत्येवकारार्थे अञ्जसैव अकुटिलेनैव यानान् गन्तृन् मार्गान् अकरोः अथवा मार्गेणाकुटिलेनैव गन्तृन् चकर्थ यथा लोके शीघ्रं गतोमार्गइति मार्गस्य गन्तृत्वोपचारः तद्वदत्रापि यातृत्वं द्रष्टव्यं ॥ ७ ॥

अथाष्टमी—

त्वमे॒तानि॑पप्रिषे॒विनामेशा॑नइन्द्रद॒धिषे॒गभ॑स्तौ ।
अनु॑त्वादे॒वाःशव॑सामदन्त्यु॒परि॑बुध्नान्व॒निनं॑श्चकर्थ ॥ ८ ॥

त्वम् । ए॒तानि॑ । प॒प्रि॒षे॒ । वि । नाम॑ । ईशा॑नः । इ॒न्द्र॒ ।
द॒धि॒षे॒ । गभ॑स्तौ । अनु॑ । त्वा॒ । दे॒वाः । शव॑सा ।
म॒द॒न्ति॒ । उ॒परि॑ऽबुध्नान् । व॒निनः॑ । च॒क॒र्थ॒ ॥ ८ ॥

हे इन्द्र त्वं एतानि नाम नामानि नामकान्युदकानि विपप्रिषे विपूरयसि हे इन्द्र ईशानः सर्वस्येश्वरस्त्वं गभस्तौ हस्ते दधिषे धारयसि वज्रं धनं वा । किंच त्वा त्वां शवसा बलेनोपेतं देवाः सर्वे अनुमदन्ति अनुष्टुवन्ति सत्वं वनिनउदकवतोमेघान् रश्मीन्वा उपरिबुध्नान् उपरिमूलान् अधोमुखान् चकर्थ कृतवानसि ॥ ८ ॥

अथ नवमी—

च॒क्रंयद॑स्या॒प्स्वानिष॑त्तमु॒तोतद॑स्मै॒मध्विच्च॑च्छद्यात् ।
पृ॒थि॒व्यामति॑षि॒तं॒यदूध॒ःपयो॒गोष्वद॑धा॒ओष॑धीषु ॥ ९ ॥

चक्रम् । यत् । अस्य । अप्ऽसु । आ । निऽसत्तम् । उतो इति । तत् ।
अस्मै । मधु । इत् । चच्छद्यात् । पृथिव्याम् । अतिऽसितम् ।
यत् । ऊधः । पयः । गोषु । अदधाः । ओषधीषु ॥ ९ ॥

परामासित्वेहननार्थं उतोचित् अपिवा अस्माइन्द्राय मध्वितत् उदकमपि चच्छद्यात् पृथिव्यामतिषितंविमुक्तंयदधर्मेस्थितउदकमस्तिननापोगोष्ठादिषुवादधाइति ॥ ९ ॥

अथ दशमी—

अश्वादियायेतियद्वदन्त्योजसोजातमुतमन्यएनम् ।
मन्योरियायहर्म्येषुतस्थौयतःप्रजज्ञइन्द्रोअस्यवेद ॥ १० ॥

अश्वात् । इयाय । इति । यत् । वदन्ति । ओजसः । जातम् ।
उत । मन्ये । एनम् । मन्योः । इयाय । हर्म्येषु । तस्थौ ।
यतः । प्रऽजज्ञे । इन्द्रः । अस्य । वेद ॥ १० ॥

इन्द्रसामर्थ्यं दृष्ट्वा केचिदेनमश्वादादित्यादियाय उदितवानिति वदन्ति यद्यद्यपि उत तथाप्यहमेनमोजसोबलाज्जातं मन्ये जानामि अस्य तेजस्वित्वं दृष्ट्वा सूर्यादुत्पन्नइति तेषां मतिः अहं त्वोजःपदार्थाज्जातइति मन्ये यतोयं वृत्रादीन् हतवान् इति अथवायं मन्योः क्रोधादियाय उदितवान् अतोहर्म्येषु शत्रुसंबन्धिषु युद्धेषु हर्म्येष्वेव वा तस्थौ तिष्ठति यतोयं प्रजज्ञे उत्पन्नइतीन्द्रएवास्य स्वस्येत्यर्थः सामर्थ्यं वेद जानाति नह्यन्योज्ञातुमीष्टे ॥ १० ॥

अथैकादशी—

वयःसुपर्णाउपसेदुरिन्द्रंप्रियमेधाऋषयोनाधमानाः ।
अपध्वान्तमूर्णुहिपूर्धिचक्षुर्मुमुग्ध्य१स्मान्निधयेवबद्धान् ॥ ११ ॥ ४ ॥

वयः । सुऽपर्णाः । उप । सेदुः । इन्द्रम् । प्रियऽमेधाः । ऋषयः ।
नाधमानाः । अप । ध्वान्तम् । ऊर्णुहि । पूर्धि । चक्षुः ।
मुमुग्धि । अस्मान् । निधयाऽइव । बद्धान् ॥ ११ ॥ ४ ॥

वयोगन्तारः सुपर्णाः सुपतनाआदित्यरश्मयइन्द्रमुपसेदुरुपसन्नाअभवन् । कीदृशाः प्रियमेधाः प्रिययज्ञाः ऋषयोद्रष्टारः नाधमानाः प्रज्ञां याचमानाः याचनप्रकारउच्यते हे इन्द्र ध्वान्तमन्धकारमपोर्णुहि परिहर पूर्धि पूरयच चक्षुस्तेजः मुमुग्धि मोचय चास्मान् निधयेव बद्धान् निधा पाश्या भवति पाश्या पाशसमूहः पाशसमूहेन बद्धान् यथा मुंचन्ति तद्वत् अत्रवयोवैबंहुवचनमित्यादिकं निरुक्तंद्रष्टव्यं ॥ ११ ॥

॥ इत्यष्टमस्य तृतीये चतुर्थोवर्गः ॥ ४॥

वसूनामिति षळृचं षष्ठंसूक्तं ऋष्याद्याः पूर्ववत् । वसूनां षळित्यनुक्रान्तं । गतोविनियोगः ।

तत्र प्रथमा—

**वसूनांवाचर्कृषइयंक्षन्धियावायज्ञैर्वारोदस्योः ।**
**अर्वन्तोवायेरयिमन्तःसातौवनुंवायेसुश्रुणंसुश्रुतोधुः ॥ १ ॥**

वसूनाम् । वा । चर्कृषे । इयंक्षन् । धिया । वा । यज्ञैः ।
वा । रोदस्योः । अर्वन्तः । वा । ये । रयिऽमन्तः । सातौ ।
वनुम् । वा । ये । सुऽश्रुणम् । सुऽश्रुतः । धुरितिधुः ॥ १ ॥

इयक्षन् धनानि दातुमिच्छन् इन्द्रोवसूनां धनानां लाभाय वा चर्कृषे अपकृष्यते धियावा धीः कर्म धार्यमाणत्वात् युद्धादिकर्मणा वा निमित्तेनापकृष्यते यज्ञैर्वा निमित्तभूतैः कृष्यते कैरिति उच्यते रोदस्योर्द्यावापृथिव्योः संबन्धिभिर्देवैः मनुष्यैश्चेत्यर्थः सातौ संग्रामे जेतव्ये सति ये अर्वंतोगच्छन्तोरयिमन्तोभवन्ति तैरप्याकृष्यते ये वनुं वा हिंसां वा सुश्रुणं सुप्रसिद्धां अत्यन्तदुर्जयविषयां सुश्रुतः सुश्रवसः प्रसिद्धाः कुर्वन्ति तैरपीन्द्रआकृष्यते इति ॥ १ ॥

अथ द्वितीया—

**हवंएषामसुरोनक्षतद्यांश्रवस्यतामनंसानिंसतक्षाम् ।**
**चक्षाणायत्रंसुवितायदेवाद्यौर्नवारेभिःकृणवन्तस्वैः ॥ २ ॥**

---

१ नि० ४ । ३ ।

हवः । एषाम् । असुरः । नक्षत । द्याम् । श्रवस्यता । मनसा ।
निंसत । क्षाम् । चक्षाणाः । यत्र । सुविताय । देवाः ।
द्यौः । न । वारेभिः । कृणवन्त । स्वैः ॥ २ ॥

एषामनुष्ठातॄणामंगिरसां हवआह्वानशब्दः असुरइन्द्रस्य प्रेरकोद्यां दिवं नक्षत व्यामोत् तत्रत्याइन्द्रसंबन्धिनोदेवाः श्रवस्यता अन्नमिच्छता मनसा क्षां पृथिवीं नींसत प्राप्नुवन्तः यत्र यस्यां पृथिव्यां चक्षाणाः पणिभिरपहृतागाः पश्यन्तोदेवाः सुविताय सुष्ठु हिताय स्वात्मनोभ्यु दयाय द्यो नं आदित्यइव वारिभिः वरणीयैः स्वैस्तेजोभिः कृणवन्त प्रकाशमकुर्वन् गवां प्रदा नायान्धकारमपनेतुमिति शेषः । अथवा एषां यज्विनामपहृतानां गवां हवः असुरः इन्द्रस्य प्रेर यिता सन् नक्षत इन्द्रप्रेरिताअंगिरसः श्रवस्यता अन्नं कीर्तिं वा इच्छता मनसा क्षां भूमिं निं सत अनुष्ठातॄणां गाः प्रदर्शयितुमित्यर्थः । इतरत्समानं ॥ २ ॥

अथ तृतीया—

इयमेषाममृतानांगीःसर्वतातायेकृपणन्तरत्नम् ।
धियंचयज्ञंचसाधन्तस्तेनोधान्तुवसव्य१मसामि ॥ ३ ॥

इयम् । एषाम् । अमृतानाम् । गीः । सर्वऽताता । ये ।
कृपणन्त । रत्नम् । धियम् । च । यज्ञम् । च । साधन्तः ।
ते । नः । धान्तु । वसव्यम् । असामि ॥ ३॥

इयमेषाममृतानां यष्टव्यानां देवानां गीः स्तुतिः क्रियते इति शेषः ये देवाः सर्वताता सर्वतातौ यज्ञे कृपणन्त प्रयच्छन्ति याच्यन्ते वा रत्नं रमणीयं धनं धियं चास्मदीयां स्तुतिं य ज्ञं च साधन्तः साधयन्तस्तेनोस्मभ्यं वसव्यं वसुसमूहं असामि अनल्पं असाधारणं वा धान्तु प्रयच्छन्तु ॥ ३ ॥

अथ चतुर्थी—

आतत्तइन्द्रायवःपनन्ताभियऊर्वंगोमन्तंतितृत्सान् ।
सकृत्स्वं१येपुरुपुत्रांमहींसहस्रधारांबृहतींदुदुक्षन् ॥ ४ ॥

आ । तत् । ते । इन्द्र । आयर्वः । पनन्त । अभि । ये । ऊर्वम् । गोऽमन्तम् । तितृत्सान् । सकृत्ऽस्वम् । ये । पुरुऽपुत्राम् । महीम् । सहस्रंऽधाराम् । बृहतीम् । दुधुंक्षन् ॥ ४ ॥

हे इन्द्र ते तव आयवोमनुष्याअंगिरसस्तत्तदा आपनन्त आ सर्वतः पनन्त स्तुयन्तेंगिरसोगोमन्तमूर्वं संघं पणिभिरपहृतं प्राप्तं तितृत्सान् हिंसितुमैच्छन् तृदेर्हिंसार्थस्य सन्नन्तस्य लेटयाडागमः यद्योगादनिघातः अभ्यस्तस्वरः । येचांगिरसः सकृत्स्वं या सकृत् सूते सा सकृत्सूः तां सकृत्प्रजातां पुरुपुत्रां बह्वोषधिवनस्पतिरूपपुत्रां सहस्रधारां बहुलकामानामुत्पादयित्रीं बृहतीं विस्तृतां महीं भूमिं यद्वा पुरुत्रां बह्वोषधिवनस्पतिरूपपुत्रां सहस्रधारां बहुकामवर्षित्रीं महीं महतीं पूज्यां वा बृहतीं परिमाणरहितां दिवं दुधुक्षन् दुदुहुः ते पनन्तेति संबन्धः सकृद्धद्यौरजायतेत्याद्युक्तं ॥ ४ ॥

अथ पंचमी—

शचींवइन्द्रमवंसेकृणुध्वमनांनतंदमयंन्तंपृतन्यून् ।
ऋभुक्षणंमघवांनंसुवृक्तिंभर्तायोवज्रंनर्यंपुरुक्षुः ॥ ५ ॥

शचींऽवः । इन्द्रम् । अवंसे । कृणुध्वम् । अनांनतम् । दमयंन्तम् । पृतन्यून् । ऋभुक्षणंम् । मघऽवानम् । सुऽवृक्तिम् । भर्ता । यः । वज्रंम् । नर्यंम् । पुरुऽक्षुः ॥ ५ ॥

हे शचीवः कर्मवन्तोयजमानाः व्यत्ययेनैकवचनं इन्द्रं देवमवसे रक्षणाय कृणुध्वं कुरुध्वं कीदृशमिन्द्रं अनानतं कदाचिदपि परेषामनवनतं पृतन्यून् पृतनाइच्छतः शत्रून् दमयन्तं वशं प्रापयन्तं ऋभुक्षणं महान्तं मघवानं धनवन्तं सुवृक्तिं सुष्टुतिं यः पुरुक्षुः बहुशब्दइन्द्रोनर्यं नरेभ्योहितं असुरविघातकत्वात् तादृशं वज्रं भर्ता बिभर्ति तमिन्द्रमवसे कृणुध्वमिति ॥ ५॥

निष्केवल्ये यद्वावानेत्येषा धाय्या । सूत्रितंच—यद्वावानेति धाय्या पिबासुतस्यरसिनइतिसामप्रगाथइति । महाव्रतेप्येषा तथैवपंचमारण्यकेसूत्रितं—यद्वावानेतिधाय्या सूददोहाइति ।

---

१ ऋ० सं० ४. ८. ४ ।

सैषा षष्ठी—

**यद्वावानंपुरुतमंपुराषाळावृत्रहेन्द्रोनामान्यप्राः ।**
**अचेतिप्रासहस्पतिस्तुविष्मान्यदीमुश्मसिकर्तवेकरत्तत् ॥६॥५॥**

यत् । ववानं । पुरुऽतमम् । पुराषाट् । आ । वृत्रऽहा । इन्द्रः । नामानि ।
अप्राः । अचेति । प्रऽसहः । पतिः । तुविष्मान् । यत् ।
ईम् । उश्मसि । कर्तवे । करत् । तत् ॥ ६ ॥ ५ ॥

यद्यदा पुरुतमं अत्यन्तप्रवृद्धतमं वृत्रं ववान हन्ति पुराषाट् शत्रुपुराणामभिभवितेन्द्रः तदानीं आ अनन्तरमेव वृत्रहेन्द्रोनामान्युदकानि अप्राः पूरयति व्यत्ययेन मध्यमः सोयमिन्द्रः प्रासहः शत्रूणां प्रकर्षेणाभिभविता पतिः सर्वस्य स्वामी तुविष्मान् तुवीति बहुनाम तत्साम-र्थ्याद्धनं परिगृह्यते बहुधनइत्यर्थः ईदृशः सन् अचेति सर्वैः प्रज्ञातः समहानिन्द्रोयदीं यदेतत्कर्म उश्मसि वयं कामयामहे तत्करत् करोत्येव इदं भवत्विदं भवत्विति यत् कामयामहे तत्तदानी-मेव करोत्येव नोदास्तइत्यर्थः । सैतदेव प्रत्यपद्यत यद्वावानपुरुतमंपुराषाळित्यादिकं ब्रा-ह्मणमत्रद्रष्टव्यं[1] ॥ ६ ॥

॥ इत्यष्टमस्य तृतीये पंचमोवर्गः ॥ ५ ॥

प्रसुवइति नवर्चं सप्तमं सूक्तं प्रियमेधपुत्रस्य सिन्धुक्षितआर्षं जागतं नदीदेवताकं । त-थाचानुक्रान्तं—प्रसु नव सिन्धुक्षित् प्रैयमेधोनदीस्तुतिर्जागतं त्विति । गतोविनियोगः ।

तत्र प्रथमा—

**प्रसुवंआपोमहिमानमुत्तमंकारुर्वोचातिसदनेविवस्वतः ।**
**प्रसप्तसंप्तत्रेधाहिचंक्रमुःप्रसृत्वरीणामतिसिन्धुरोजसा ॥ १ ॥**

प्र । सु । वः । आपः । महिमानम् । उत्ऽतमम् । कारुः । वोचाति ।
सदने । विवस्वतः । प्र । सप्तऽसप्त । त्रेधा । हि । चक्रमुः ।
प्र । सृत्वरीणाम् । अति । सिन्धुः । ओजसा ॥ १ ॥

---

[1] ऐ० ब्रा० ३. २२.

हे आपोवोयुष्माकं महिमानं महत्त्वं स्तोत्रं उत्तमं उत्कृष्टतमं कारुः स्तोतासिन्धुक्षिदहं विवस्वतः परिचरणवतोयजमानस्य सदने यज्ञगृहे सु सुष्ठु प्रवोचाति प्रब्रवीमि तानद्यः सप्त सप्त-भूत्वा त्रेधा पृथिव्यामन्तरिक्षे दिवि चेति त्रेधा त्रिप्रकारं चक्रमुः प्रावहन् सृत्वरीणां आसां मध्ये सिन्धुरेतन्नामिका नदी ओजसा स्वबलेन अति सर्वाअपि नदीरतिक्रम्य प्रवहती ति शेषः ॥१ ॥

अथ द्वितीया—

प्रतेरदद्वरुणोयातवेपथःसिन्धोयद्वाजाँअभ्यद्रवस्त्वम् ।
भूम्याअधिप्रवतायासिसानुनायदेषामग्रंजगतामिरज्यसि ॥२ ॥

प्र । ते । अरदत् । वरुणः । यातवे । पथः । सिन्धो इति । यत् ।
वाजान् । अभि । अद्रवः । त्वम् । भूम्याः । अधि । प्रऽवता ।
यासि । सानुना । यत् । एषाम् । अग्रम् । जगताम् । इरज्यसि ॥ २ ॥

हे सिन्धो देवि ते तव यातवे गमनाय वरुणोदेवः पथोमार्गान् प्रारदत् प्राचीनं व्यलिखत् साहि प्राक् प्रवहति अथवा प्रकृष्टं इतरनदीभ्योप्यत्यन्तं विस्तृतं व्यदारयत् यद्यस्मात् हे सिन्धो वाजानन्नान्यभि अभिलक्ष्य त्वमभ्यद्रवः अभ्यगच्छः । किंच त्वं भूम्याअधि उपरि सानुना समुच्छ्रितेन प्रवता मार्गेण यासिगच्छसि सिन्धुः खलु पर्वतान् विभिद्य गता यद्येन समुच्छ्रिते नमार्गेण गच्छन्ती त्वमेषां सर्वेषां जगतां जंगमानां प्राणिनामग्रं प्रत्यक्षं इरज्यसि ईशिषे॥२॥

अथ तृतीया—

दिविस्वनोयततेभूम्योपर्यनन्तंशुष्ममुदियर्तिभानुना ।
अभ्रादिवप्रस्तनयन्तिवृष्टयःसिन्धुर्यदेतिवृषभोनरोरुवत् ॥३ ॥

दिवि । । स्वनः । यतते । भूम्या । उपरि । अनन्तम् । शुष्मम् ।
उत् । इयर्ति । भानुना । अभ्रात्ऽइव । प्र । स्तनयन्ति ।
वृष्टयः । सिन्धुः । यत् । एति । वृषभः । न । रोरुवत् ॥ ३ ॥

भूम्योपरि भूमेरुपरि प्रवर्तमानः स्वनोदिवि यतते गच्छति दिवं व्याप्नोति सेयं सिन्धु-रनन्तं अपर्यन्तं शुष्मं वेगं भानुना दीप्तेनोर्मिणा उदियर्ति उद्गमयति अभ्रादिव अन्तरिक्षा-द्यथा वृष्टयः प्रस्तनयन्ति तद्वत् अस्याः शब्दाः प्रादुर्भवन्ति यद्यदा सिन्धुरियं रोरुवत् भृशं शब्दयन् वृषभोन वृषभइवेति गच्छति तदैवं भवति ॥ ३ ॥

अथ चतुर्थी—

**अभित्वासिन्धोशिशुमिन्नमातरोवाश्राअर्षन्तिपयसेवधेनवः ।**
**राजेवयुध्वानयसित्वमित्सिचौयदासामग्रंप्रवतामिनंक्षसि ॥ ४ ॥**

अभि । त्वा । सिन्धो इति । शिशुम् । इत् । न । मातरः । वाश्राः ।
अर्षन्ति । पयसाऽइव । धेनवः । राजाऽइव । युध्वा । नयसि ।
त्वम् । इत् । सिचौ । यत् । आसाम् । अग्रम् । प्रऽवताम् । इनक्षसि॥४॥

हे सिन्धो त्वा त्वां शिशुमिन्न मातरः मातरः पुत्रमिव वाश्राः शब्दयन्त्यइतरानद्यः अ भ्यर्षन्ति अभिगच्छन्ति पयसेवधेनवः पयसा युक्तानवप्रसूतिकागावइव । किंच युध्वा यु-द्धकृद्राजेव त्वमित् त्वमेव सिचौ सिच्यमानौ भटौ नयसि यद्यदा आसां प्रवतां त्वया सहगच्छंतीनामग्रं अग्रे इनक्षसि व्याप्नोषि सर्वासां पुरतोगच्छसि ॥ ४ ॥

अथ पञ्चमी—

**इमंमेगङ्गेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ।**
**असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ ५ ॥६॥**

इमम् । मे । गङ्गे । यमुने । सरस्वति । शुतुद्रि । स्तोमम् । सचत ।
परुष्णि । आ । असिक्न्या । मरुत्ऽवृधे । वितस्तया ।
आर्जीकीये । शृणुहि । आ । सुऽसोमया ॥ ५ ॥ ६ ॥

अत्र प्रधानभूताः सप्तनद्यः तदवयवभूतास्तिस्रः स्तूयन्ते हे गंगे हे यमुने हे सरस्वति हे शुतुद्रि हे परुष्णि हे असिक्न्या अवयवभूतया सहिते मरुद्वृधे वितस्तया सोमया च सहिते आर्जीकीये त्वं चैवं सप्त नद्योयूयं मे स्तोमं स्तोत्रं अस्मदीयं आसचत आसेवध्वं शृणुहि

शृणुत च आर्जीकीयायावितस्तया सुषोमया च साहित्यं निरुक्ते उक्तं—वितस्तया चार्जीकीयआशृणुहि सुषोमयाचेति । अत्रगंगा गमनादित्यादिनिरुक्तंद्रष्टव्यं ॥ ५ ॥

॥ इत्यष्टमस्य तृतीये षष्ठोवर्गः ६ ॥

अथ षष्ठी—

तृष्टामयाप्रथमंयातवेसजूःसुसर्त्वारसयांश्वेत्यात्या ।
त्वंसिन्धोकुभयागोमतींक्रुमुंमेहत्न्वासरथंयाभिरीयसे ॥ ६ ॥

तृष्टऽअमया । प्रथमम् । यातवे । सऽजूः । सुऽसर्त्वा । रसया ।
श्वेत्या । त्या । त्वम् । सिन्धो इति । कुभया । गोऽमतीम् ।
क्रुमुम् । मेहत्न्वा । सऽरथम् । याभिः । ईयसे ॥ ६ ॥

हे सिन्धो त्वं क्रुमुं क्रमणीयां गोमतीं नदीं यातवे प्रतियातुं पर्वतादवरूढा प्रथमं तृष्टामया नद्या सजूःसंगतासि पश्चात् सुसर्त्वा रसया श्वेत्यात्या कुभया मेहत्न्वा च सह सजूर्भव याभिस्त्वं सरथं समानं रथमारुह्य ईयसे गच्छसि ॥ ६ ॥

अथ सप्तमी—

ऋजीत्येनीरुशतीमहित्वापरिज्रयांसिभरतेरजांसि ।
अदब्धासिन्धुरपसामपस्तमाश्वानचित्रावपुषीवदर्शता ॥ ७ ॥

ऋजीती । एनी । रुशती । महिऽत्वा । परि । ज्रयांसि । भरते ।
रजांसि । अदब्धा । सिन्धुः । अपसाम् । अपःऽतमा । अश्वा । न ।
चित्रा । वपुषीऽइव । दर्शता ॥ ७ ॥

ऋजीति ऋजुगामिनी एनी श्वेतवर्णा रुशती दीप्यमाना सिन्धुः ज्रयांसि वेगवन्ति रजांसि उदकानि परिभरते प्रभरति तादृशी अदब्धा अहिंसिता सिन्धुरपसां कर्मवतीनां मध्ये अपस्तमा वेगाख्यकर्मवती भवति अश्वान वडवेव चित्रा चायनीया वपुषी वपुष्मती योषिदिव दर्शता दर्शनीया भवति ॥ ७ ॥

---

१ नि० ९. २६ ।

अथाष्टमी–

स्वश्वासिन्धुःसुरथासुवासाहिरण्ययीसुकृतावाजिनीवती ।
ऊर्णावतीयुवतिःसीलमावत्युताधिवस्तेसुभगामधुवृधम् ॥ ८ ॥

सुऽअश्वा । सिन्धुः । सुऽरथा । सुऽवासाः । हिरण्ययी । सुऽकृता ।
वाजिनीऽवती । ऊर्णाऽवती । युवतिः । सीलमाऽवती । उत ।
अधि । वस्ते । सुऽभगा । मधुऽवृधम् ॥ ८ ॥

सेयं सिन्धुः स्वश्वा शोभनाश्वोपेता सुरथा शोभनरथा सुवासाः शोभनवसना हिरण्ययी हिरण्मयाभरणा सुकृता वाजिनीवती अन्नवती ऊर्णावती तस्याः समीपे देशे सन्त्यूर्णाः यासां रोमभिः कंबलाः क्रियन्ते युवतिर्नित्यतरुणी सर्वदा अहीनोदका सीलमावती सीराणि ययोषध्या रज्जुभूतया बध्यन्ते सा सीलमेति निगद्यते कृषीवलैः तादृगोषध्युपेता उतापिच सुभगा सिन्धुर्मधुवृधं मधुवर्धकं निर्गुंड्यादिकं अधिवस्ते आच्छादयति तस्यास्तीरे निर्गुंड्यादीनि बहूनि सन्ति ॥ ८ ॥

अथ नवमी–

सुखंरथंयुयुजेसिन्धुरश्विनंतेनवाजंसनिषदस्मिन्नाजौ ।
महान्ह्यस्यमहिमापनस्यतेदब्धस्यस्वयशसोविरप्शिनः ॥९॥ ७॥

सुऽखम् । रथम् । युयुजे । सिन्धुः । अश्विनम् । तेन । वाजम् ।
सनिषत् । अस्मिन् । आजौ । महान् । हि । अस्य । महिमा ।
पनस्यते । अदब्धस्य । स्वऽयशसः । विऽरप्शिनः ॥ ९ ॥ ७ ॥

सिन्धुर्देवता सुखं सुखकरं शोभनद्वारं वा अश्विनमश्ववन्तं रथं युयुजे युनक्ति तेन रथेन वाजमन्नं सनिषत् प्रयच्छतु अस्मिन्नाजौ संग्रामे यज्ञे वा अस्य सिन्धुरथस्य महिमा महान् हि पनस्यते स्तूयते कीदृशस्यास्य अदब्धस्य अन्यैरहिंस्यस्य स्वयशसः स्वायत्तकीर्तेः विरप्शिनः महन्नामैतत् महतः ॥ ९ ॥

॥ इत्यष्टमस्य तृतीये सप्तमोवर्गः ॥ ७ ॥

आवइत्यष्टर्चमष्टमं सूक्तं इरावतः पुत्रस्य सर्पजातेर्जरत्कर्णनाम्नआर्षं जागतं सोमाभिषवार्थाये ग्रावाणः तद्देवत्यं । तथाचानुक्रान्तं—आवोष्टौ सर्पऐरावतोजरत्कर्णोग्राव्णोऽस्तौदिति । ग्रावस्तोत्रे एतत्सूक्तं । सूत्रितंच—आवऋंजसे प्रवोग्रावाणइतिसूक्तयोरन्तरोपरिष्टाद् पुरस्ताद्वेति ।

तत्र प्रथमा—

आवंऋञ्जसऊर्जांव्युंष्टिष्विन्द्रंमरुतोरोदंसीअनक्तन ।
उभेयथांनोअहंनीसचाभुवासदंःसदोवरिवस्यातंउद्भिदां ॥ १ ॥

आ । वः । ऋञ्जसे । ऊर्जाम् । विऽउंष्टिषु । इन्द्रंम् । मरुतंः ।
रोदंसी इतिं । अनक्तन । उभे इतिं । यथां । नः । अहंनी इतिं ।
सचाऽभुवां । सदंःऽसदः । वरिवस्यातंः । उत्ऽभिदां ॥ १ ॥

हे ग्रावाणोवोयुष्मान् ऊर्जां सारभूतानामन्नवतीनां वोषसां व्युष्टिषु विभागेषु सत्सु आऋंजसे आप्रसाधयामि यूयं सामेनेन्द्रं मरुतोरोदसी द्यावापृथिव्यौ चानक्तन व्यंजयत नोस्मान् उभे सचाभुवा सहोत्पन्नेअहनी द्यावापृथिव्यौ सदःसदः सर्वेषु यागगृहेषु वरिवस्यातः परिचरतः उद्भिदा उद्भेदकेन धनेन पूरयतमिति ॥ १ ॥

अथ द्वितीया—

तदुश्रेष्ठंसवंनंसुनोतनात्योनहस्तंयतोअद्रिःसोतरिं ।
विदद्ध्यर्यो१योंअभिभूतिपौंस्यंमहोरायेचित्तरुतेयदर्वंतः ॥ २ ॥

तत् । ऊँ इतिं । श्रेष्ठम् । सवंनम् । सुनोतन । अत्यंः । न ।
हस्तंऽयतः । अद्रिंः । सोतरिं । विदत् । हि । अर्यः । अभिऽभूंति ।
पौंस्यंम् । महः । राये । चित् । तरुते । यत् । अर्वंतः ॥ २ ॥

हे ग्रावाणो यूयं तदु तमेव प्रशस्यं श्रेष्ठंसवनं सोमं सुनोतन अभिषुणुत। अथैकवदाह—अद्रिरभिषवग्रावा हस्तयतोहस्ताभ्यां गृहीतः सन् अत्योनघृतोश्वइव भवति सोतरि अभिषव-

भुरन्तु । नः । यशसः । सोतु । अन्धसः । ग्रावाणः । वाचा ।
दिविता । दिवित्मता । नरः । यत्र । दुहते । काम्यम् ।
मधु । आऽघोषयन्तः । अभितः । मिथःऽतुरः ॥ ६ ॥

यशसोयशस्विनोग्रावाणोनोस्मभ्यं सोतु सुतं अन्धसः सोमस्य रसं भुरन्तु भरन्तु संपादयन्तु उकारश्छान्दसः। किंच ते दिवित्मता दीप्तिमत्या लिंगव्यत्ययः वाचा स्तुतिवाचा दिविता दिवितायां दीप्तिमत्तायां वास्मान् कुर्वन्तु सोमयागे स्थापयन्त्वित्यर्थः।कैषादीप्तिमत्तेति उच्यते—नरोनेतारऋत्विजोयत्र यागे काम्यं कमनीयं मधु सोमरसं दुहते किंकुर्वन्तः आघोषयन्तः सर्वतोभिषवशब्दं स्तोत्रशस्त्रादिरूपं वा शब्दं कुर्वन्तः अभितः सर्वतः मिथस्तुरः त्वरमाणाः सादीप्तिमत्तेति ॥ ६ ॥

अथ सप्तमी—

सुन्वन्तिसोमंरथिरासोअद्रयोनिरस्यरसंगविषोदुहन्तिते ।
दुहन्त्यूधरुपसेचनायकंनरोहव्यानमर्जयन्तआसभिः ॥ ७ ॥

सुन्वन्ति । सोमम् । रथिरासः । अद्रयः । निः । अस्य । रसम् ।
गोऽइषः । दुहन्ति । ते । दुहन्ति । ऊधः । उपऽसेचनाय ।
कम् । नरः । हव्या । न । मर्जयन्ते । आसऽभिः ॥ ७ ॥

रथिरासोरथवन्तोरंहणवन्तः अद्रयोग्रावाणः सोमं सुन्वन्ति ते ग्रावाणोस्य सोमस्य रसं निर्दुहन्ति निःशेषेण दुहन्ति गविषः स्तुतिवाचमिच्छन्तः सन्तः दुहन्त्यूधोरसंसोमसंबन्धिनं । किमर्थं उपसेचनायाग्नेः। कमितिपदपूरणः। नरोनेतारोभिषवकर्तारः ऋत्विजोहव्या हवींषि च अग्न्युपसेचनानन्तरं आसभिः स्वास्यैः मर्जयन्ते शोधयन्ति शेषभक्षणेन शुद्धीकुर्वन्ति। यद्वाग्नौ होतुर्दशापवित्रात् पुरा आसभिरास्योपलक्षितैः स्तोत्रैर्मर्जयन्ते ॥ ७ ॥

अथाष्टमी—

एतेनरःस्वपसोअभूतनयइन्द्रायसुनुथसोममद्रयः ।
वामंवामंवोदिव्यायधाम्नेवसुवसुवःपार्थिवायसुन्वते ॥ ८ ॥ ९ ॥

एते । नरः । सुऽअपसः । अभूतन । ये । इन्द्राय । सुनुथ ।
सोमम् । अद्रयः । वामम्ऽवामम् । वः । दिव्याय । धाम्ने ।
वसुऽवसु । वः । पार्थिवाय । सुन्वते ॥ ८ ॥ ९ ॥

हे नरोनेतारः हे अद्रयः एते यूयं स्वपसः अभूतन शोभनाभिषवकर्माणोभवत ये यूय-मिन्द्राय सोमं सुनुथ वोयूयं वामंवामं यद्यद्वननीयं धनं अस्ति तत्तद्दिव्याय धाम्ने तेजसे कु-रुत तथा वसुवसु यद्यद्वासयोग्यं धनमस्ति तद्वः यूयं पार्थिवाय सुन्वते यजमानाय कुरुत॥८॥

॥ इत्यष्टमस्य तृतीये नवमोवर्गः ॥ ९ ॥

अभ्रप्रुषइत्यष्टर्चं नवमं सूक्तं भृगुगोत्रस्य स्यूमरश्मेरार्षं मरुद्देवताकं पंचमी जगती शिष्टाः सप्त त्रिष्टुभः । तथाचानुक्रान्तं—अभ्रप्रुषः स्यूमरश्मिर्भार्गवोमारुतं तु पंचमी जगतीति । गतोविनियोगः ।

तत्र प्रथमा—

अभ्रप्रुषोनवाचाप्रुषावसुहविष्मन्तोनयज्ञाविजानुषः ।
सुमारुतंनब्रह्माणमर्हसेगणमस्तोष्येषांनशोभसे ॥ १ ॥

अभ्रऽप्रुषः । न । वाचा । प्रुष । वसु । हविष्मन्तः । न । यज्ञाः ।
विऽजानुषः । सुऽमारुतम् । न । ब्रह्माणम् । अर्हसे ।
गणम् । अस्तोषि । एषाम् । न । शोभसे ॥ १ ॥

अभ्रप्रुषोन मेघान्निर्गच्छन्तउदकबिन्दवइव वाचा स्तुत्या प्रीतामरुतोवसु धनं प्रुष सिंचं-ति व्यत्ययेन बहुवचनं । किंच हविष्मन्तोन यज्ञाः हविर्भिर्युक्तायागाइव विजानुषः जगतोवि-जनयितारोभवन्ति । अथ समुदायेनाह तेषामेषां सुमारुतं शोभनानां मरुतां ब्रह्माणं महान्तं गणं अर्हसे पूजार्थं नास्तोषि नास्तौषं न स्तुतवानस्मि इतः पूर्वं । तथा शोभसे शोभार्थमपि मारुतं गणं नास्तोषि अतइदानीं नूतनेन स्तोत्रेण स्तौमीत्यर्थः ॥ १ ॥

अथ द्वितीया—

**श्रियेमर्यासोअञ्जीँरकृण्वतसुमारुतंनपूर्वीरतिक्षपः ।**
**दिवस्पुत्रासएतानयेतिरआदित्यासस्तेअक्रानवावृधुः ॥ २ ॥**

श्रिये । मर्यासः । अञ्जीन् । अकृण्वत । सुऽमारुतम् । न । पूर्वीः ।
अति । क्षपः । दिवः । पुत्रासः । एताः । न । येतिरे ।
आदित्यासः । ते । अक्राः । न । वावृधुः ॥ २ ॥

श्रिये शोभार्थं मर्यासोमारकाः मनुष्यरूपावा मरुतः पूर्वं मनुष्याः सन्तः पश्चात्सुकृतविशेषेण ह्यमराआसन् ते अञ्जीनञ्जकान्याभरणानि अकृण्वत कुर्वन्ति । किमर्थं श्रिये स्वशरीरशोभनार्थं सुमारुतं शोभनानां मरुतां गणं पूर्वीः बह्वचः क्षपः क्षपयित्र्यः सेनानाति न पराभावयन्तीति शेषः । किंच दिवोद्युदेवतायाः पुत्रासः पुत्राः एतागन्तारः नयेतिरे निर्गच्छन्ति ते आदित्यासः अदितेः पुत्राअक्रा आक्रमणशीलामरुतोन वावृधुः नवर्धन्ते यतोस्माभिर्न स्तुताअतइति भावः ॥ २ ॥

अथ तृतीया—

**प्रयेदिवःपृथिव्यानबर्हणात्मनारिरिच्रेअभ्रान्नसूर्यः ।**
**पाजस्वन्तोनवीराःपनस्यवोरिशादसोनमर्याअभिद्यवः ॥ ३ ॥**

प्र । ये । दिवः । पृथिव्याः । न । बर्हणा । त्मना । रिरिच्रे ।
अभ्रात् । न । सूर्यः । पाजस्वन्तः । न । वीराः । पनस्यवः ।
रिशादसः । न । मर्याः । अभिऽद्यवः ॥ ३ ॥

ये मरुतोदिवः पृथिव्यान पृथिव्याश्चनेति चार्थे बर्हणा महत्त्वेन त्मना आत्मनैव रिरिच्रे रिरिचिरे अतिरिक्ताअभवन् स्वशरीरेण अभ्रान्न अभ्रादिव सूर्यः । किंच पाजस्वन्तोन वीराः बलवन्तोवीराइव पनस्यवः स्तुतिकामाभवन्ति । किंच रिशादसोन मर्याः रिशतामसितारोमनुष्याइव अभिद्यवोभिगतदीप्तयोभवन्ति ॥ ३ ॥

अथ चतुर्थी–

युष्माकंबुध्नेअपांनयामंनिविथुर्यतिनमहीश्रथर्यति ।
विश्वप्सुर्यज्ञोअर्वागयंसुवःप्रयस्वन्तोनसत्राचआगत ॥ ४ ॥

युष्माकम् । बुध्ने । अपाम् । न । यामनि । विथुर्यति । न ।
मही । श्रथर्यति । विश्वऽप्सुः । यज्ञः । अर्वाक् । अयम् ।
सु । वः । प्रयस्वन्तः । न । सत्राचः । आ । गत ॥ ४ ॥

हे मरुतोयुष्माकं बुध्ने परस्परसंघाते अपां न यामनि प्रवृद्धानामुदकानां गमनइव मही महती भूमिर्न विथुर्यति नव्यथते नापि श्रथर्यति न विशीर्णा भवति शीघ्रगतयोपि यूयमेनां न पीडयध्वमित्यर्थः । विश्वप्सुः विश्वरूपोयं यज्ञोयागसाधनं हविः वोयुष्माकमर्वागभिमुखं सु सुष्ठु गच्छति प्रयस्वन्तोन अन्नवन्तः परिष्कर्तारइव सुखप्रदाः सन्तः सत्राचः सहांचनाआगत आगच्छत संघाकारेणागच्छतेत्यर्थः । सप्तगणावैमरुतइति श्रुतेः ॥ ४ ॥

अथ पंचमी–

यूयंधूर्षुप्रयुजोनरश्मिभिर्ज्योतिष्मन्तोनभासाव्युष्टिषु ।
श्येनासोनस्वयशसोरिशादसःप्रवासोनप्रसितासःपरिप्रुषः ॥५॥ १०॥

यूयम् । धूःऽसु । प्रऽयुजः । न । रश्मिऽभिः । ज्योतिष्मन्तः । न ।
भासा । विऽउष्टिषु । श्येनासः । न । स्वऽयशसः । रिशादसः ।
प्रवासः । न । प्रऽसितासः । परिऽप्रुषः ॥ ५ ॥ १० ॥

हे मरुतो यूयं धूर्षु रथसंबन्धिनीषु रश्मिभिर्योक्त्रैः प्रयुजः प्रयुक्ताबद्धाअश्वाइव परिप्रुषः परितोगन्तारः स्थ तथा ज्योतिष्मन्तोन तेजस्वन्तः आदित्यादयइव भासा युक्ताभवथ व्युष्टिषु उषस्सु व्युदितासु किंच श्येनासोन श्येनाइव । किंच स्वयशसः स्वायत्तयशसः ते यथा रिशादसोरिशतामसितारः तद्वत् रिशादसः स्वायत्तयशसश्च । किंच प्रवासोन प्रवासिनइव पथिकाइव प्रसितासः प्रसिद्धयानाः उक्तरूपामरुतः परिप्रुषः परितोगन्तारोभवथ ॥ ५ ॥

॥ इत्यष्टमस्य तृतीये दशमोवर्गः ॥ १० ॥

---

१ तै० सं० २.२. ५. ।

अथ षष्ठी–

प्रयद्वहंध्वेमरुतःपराकाद्यूयंमहःसंवरणस्यवस्वंः ।
विदानासोवसवोराध्यंस्याराच्चिद्द्वेषःसनुतर्युयोत ॥ ६ ॥

प्र । यत् । वहंध्वे । मरुतः । पराकात् । यूयम् । महः ।
सम्ऽवरणस्य । वस्वंः । विदानासंः । वसवः । राध्यंस्य ।
आरात् । चित् । द्वेषंः । सनुतः । युयोत ॥ ६ ॥

हे मरुतो यूयं यद्यदा पराकात् अत्यन्तं दूरदेशाद्वहध्वे आगच्छत तदानीं महोमहत् संवरणस्य संवरणीयं राध्यस्य संराधनीयं वस्वोवसु धनं विदानासः प्रयच्छन्तोवसवोयूयमाराच्चित् दूरादेव युयोत पृथक्कुरुत । कानिति उच्यते द्वेषोद्वेष्टॄन् कीदृशान् सुनुतः अन्तर्हितान् निगूढानित्यर्थः । सनुतइत्यन्तर्हितनाम ॥ ६ ॥

अथ सप्तमी–

यउदृचियज्ञेअंध्वरेष्ठामरुद्भ्योनमानुंषोददांशत् ।
रेवत्सवयोदधतेसुवीरंसदेवानामपिंगोपीथेअंस्तु ॥ ७ ॥

यः । उत्ऽऋचि । यज्ञे । अध्वरेऽस्थाः । मरुत्ऽभ्यंः । न ।
मानुंषः । ददांशत् । रेवत् । सः । वयंः । दधते । सुऽवीरंम् ।
सः । देवानांम् । अपिं । गोऽपीथे । अस्तु ॥ ७ ॥

अध्वरेष्ठाः यागे सीदन्मानुषोयजमानोयज्ञे उदृचि सति ऋक्शब्देन स्तोत्रमुपलक्ष्यते यज्ञे समाप्तस्तुतिके सति संपूर्णे सति मरुद्भ्योन मरुद्भ्यइवान्येषामध्वर्युप्रभृतिभ्यः ऋत्विगादिभ्योददाशत् दद्यात् यद्वा उदृचि उपक्रान्ते इत्यर्थः तस्मिन्यज्ञे मरुद्भ्यइवान्यस्माइन्द्राय ददाशत् ददाति सयजमानोरेवद्रयिमत् सुवीरं शोभनपुत्राद्युपेतं वयोन्नं दधते धारयति व्यत्ययेनैकवचनं सदेवानामिन्द्रादीनामपि गोपीथे सोमपाने अस्तु भवतु ॥ ७ ॥

अथाष्टमी—

**तेहियज्ञेषुंयज्ञियासऊमाआदित्येननाम्नाशंभंविष्ठाः ।**
**तेनोंवन्तुरथतूर्मनीषांमहश्चयामन्नध्वरेचकानाः ॥ ८ ॥ ११ ॥**

ते । हि । यज्ञेषु । यज्ञियासः । ऊमाः । आदित्येन । नाम्ना ।
शम्ऽभविष्ठाः । ते । नः । अवन्तु । रथऽतूः । मनीषाम् ।
महः । च । यामन् । अध्वरे । चकानाः ॥ ८ ॥ ११ ॥

ते हि ते खलु यज्ञेषु यागेषु यज्ञियासोयज्ञार्हायष्टव्याऊमाअवितारआदित्येन नाम्ना आदित्यसंबद्धेनोदकेन शंभविष्ठाः सुखस्य भावयितारः यद्वा आदित्याख्येन नाम्ना आदित्यनामकेन देवेन सह शंभविष्ठाः ते मरुतोनोस्मान् अवन्तु रथतूः रथतुरः रथस्य यज्ञगमनसाधनस्य त्वरयितारः सन्तोमनीषां स्तुतिं अवन्तु रक्षन्तु कीदृशास्ते अध्वरे यामन् यामनि गमने महो महद्धविश्चकानाः कामयमानाः ॥ ८ ॥

॥ इत्यष्टमस्य तृतीये एकादशोवर्गः ॥ ११ ॥

विप्रासइत्यष्टर्चं दशमं सूक्तं पंचम्याद्यास्तिस्रोद्वितीयाचेति चतस्रोजगत्यः शिष्टाश्चतस्रस्त्रिष्टुभः पूर्ववदृषिदेवते । तथाचानुक्रान्तं—विप्रासोद्वितीयापंचम्याद्याश्चतिस्रोजगत्यइति । गतोविनियोगः ।

तत्र प्रथमा—

**विप्रासोनमन्मंभिःस्वाध्योदेवाव्योऽ३नयज्ञैःस्वप्नसः ।**
**राजानोनचित्राःसुसंदृशःक्षितीनांनमर्याअरेपसः ॥ १ ॥**

विप्रासः । न । मन्मऽभिः । सुऽआध्यः । देवऽअव्यः । न ।
यज्ञैः । सुऽअप्नसः । राजानः । न । चित्राः । सुऽसन्दृशः ।
क्षितीनाम् । न । मर्याः । अरेपसः ॥ १ ॥

विप्रासोन विप्राब्राह्मणाइव ते यथा मन्मभिः स्तुतिभिः स्वाध्यः शोभनाध्यानाभवन्त्येवमेते मरुतोप्यस्मदीयैर्मन्मभिर्मननीयैः स्तोत्रैः स्वाध्यः सुमनसोभवन्ति अथवा मन्मभिः स्तोत्रै

युक्ताविप्रासोनमेधाविनः स्तोतारइव स्वाध्यः यज्ञे यजमाने वा स्वाध्यानाइत्यर्थः तथा यज्ञैर्यागैर्देवाव्योन देवानां तर्पयितारोयजमानाइव स्वप्नसः अप्नइति कर्मनाम शोभनकर्माणः ते यथा कर्मसु व्यापृताभवन्ति तद्वद्वृष्टिप्रदानादिकर्मसु व्यापृताइत्यर्थः राजानोन मूर्धाभिषिक्ताः क्षितिपतयइव चित्राश्चायनीयाः पूजनीयाः यद्वा चित्राभरणाः तथा सुसन्दृशः सुष्ठुदर्शनीयाः तथा क्षितीनां निवासानां स्वामिनोमर्यान मनुष्याइव अरेपसः अपापाः यथा प्रतिग्रहार्थमन्यत्रागत्वा स्वगृहएवानुतिष्ठन्तोनिर्दोषाभवन्ति तादृशाइत्यर्थः ईदृशाः शोभन्तइत्यर्थः ॥ १ ॥

अथ द्वितीया—

अ॒ग्निर्न ये भ्राज॑सा रु॒क्मव॑क्षसो॒ वाता॑सो॒ न स्व॒युजः॑ स॒द्यऊ॑तयः ।
प्र॒ज्ञा॒तारो॒ न ज्ये॒ष्ठाः सु॒नी॒तयः॑ सु॒शर्मा॑णो॒ न सोमा॑ ऋ॒तं य॒ते ॥ २ ॥

अ॒ग्निः । न । ये । भ्राज॑सा । रु॒क्मऽव॑क्षसः । वाता॑सः । न ।
स्व॒ऽयुजः॑ । स॒द्यःऽऊ॑तयः । प्र॒ऽज्ञा॒तारः॑ । न । ज्ये॒ष्ठाः ।
सु॒ऽनी॒तयः॑ । सु॒ऽशर्मा॑णः । न । सोमाः॑ । ऋ॒तम् । य॒ते ॥ २ ॥

ये मरुतोग्निर्नअग्निरिव स यथा भ्राजसा तेजसा शोभते तवद्भ्राजसा युक्ताः । किंच रुक्मवक्षसोरुक्मालंकृतवक्षस्काः वातासोन प्रत्यक्षवाताइव स्वयुजः स्वयं युज्यमानाः सद्यः ऊतयः सद्योगमनाः प्रज्ञातारोन प्रकर्षेण ज्ञातारोज्ञानिनइव ज्येष्ठाः पूज्याः सुनीतयः सुनयनाः सुशर्माणोन सोमाः सुमुखाः सोमाइव ते यूयं ऋतं यतेयज्ञं गच्छते यजमानाय गच्छतेति ॥ २ ॥

अथ तृतीया—

वाता॑सो॒ न ये धुन॑यो जिग॒त्नवो॑ऽग्नी॒नां न जि॒ह्वा वि॑रो॒किणः॑ ।
वर्म॑ण्वन्तो॒ न यो॒धाः शिमी॑वन्तः पितॄ॒णां न शंसाः॑ सुरा॒तयः॑ ॥ ३ ॥

वाता॑सः । न । ये । धुन॑यः । जि॒ग॒त्नवः॑ । अ॒ग्नी॒नाम् । न ।
जि॒ह्वाः । वि॒ऽरो॒किणः॑ । वर्म॑ण्ऽवन्तः । न । यो॒धाः ।
शिमी॑ऽवन्तः । पि॒तॄ॒णाम् । न । शंसाः॑ । सु॒ऽरा॒तयः॑ ॥ ३ ॥

ये मरुतोवातासोन वायवइव धुनयः शत्रूणां कंपयितारोजिगत्नवोगमनशीलाः अत्र-मारुते सूक्ते मरुतामेव दृष्टान्तकथनं संचरणस्वभाववायुपदार्थतदभिमानिदेवताभेदेनाविरुद्धं तथाग्नीनां न जिह्वाः अग्नीनां ज्वालाइवविरोकिणः विरोचनशीलमुखाः तथा वर्मण्वन्तोन योधाः कवचिनोयोद्धारइव शिमीवन्तः शौर्यकर्मवन्तः तथा पितॄणां न शंसाः पितॄणां जनकानां शंसावाचइव सुरातयः सुदानाः एवं महानुभावाः एते मरुतोस्मद्यज्ञमागच्छन्तु ॥ ३ ॥

अथ चतुर्थी—

**रथा॑नां॒नये॒॑३रा॒ःसना॑भयोजिगी॒वां॑सो॒नशू॒रा॑अ॒भिद्य॑वः ।**
**व॒रे॒यवो॒नमर्या॑घृत॒प्रुषो॑भिस्व॒र्ता॑रो॑अ॒र्कंनसु॒ष्टुभ॑ः ॥ ४ ॥**

**रथा॑नाम् । न । ये । अ॒राः । सऽना॑भयः । जि॒गी॒वांसः॑ । न ।**
**शूरा॑ः । अ॒भिऽद्य॑वः । व॒रे॒ऽयवः॑ । न । मर्या॑ः । घृ॒त॒ऽप्रुषः॑ ।**
**अ॒भि॒ऽस्व॒र्तारः॑ । अ॒र्कम् । न । सु॒ऽस्तुभः॑ ॥ ४ ॥**

रथानां न रथचक्राणामिव अराः ते यथाबहवोपि सनाभयः समाननाभयोभवन्ति तद्व-त् ये परस्परं सनाभयः समानबन्धनाः एकस्मिन्नेवान्तरिक्षे वर्तमानाः परस्परं बन्धुभूताइत्यर्थः जिगीवांसोनशूराः जयशीलाः शूराइव अभिद्यवः अभिगतदीप्तयः किंच वरेयवोन मर्याः वृतं वरं परस्मै प्रदातुमिच्छन्तो मनुष्याइव घृतप्रुषः उदकसेक्तारः उदकपूर्वं हि वराणि वस्तूनि दीय-न्ते नियमेन वृष्ट्युदकप्रदाइत्यर्थः । किंच अभिस्वर्तारः अर्कंन अर्कमर्चनीयं स्तोत्रमभिस्वर्ता-रः अभितः शब्दयितारोबन्दिनइव सुष्टुभः सुशब्दाः ॥ ४ ॥

अथ पञ्चमी—

**अश्वा॑सो॒नयेज्ये॒ष्ठास॑आ॒शवो॑दि॒धि॒षवो॒नर॒थ्य॑ःसु॒दान॑वः ।**
**आपो॒ननि॒म्नैरु॒दभि॑र्जि॒ग॒त्नवो॑वि॒श्वरू॑पा॒अङ्गि॑रसो॒नसाम॑भिः॥५॥ १२॥**

**अश्वा॑सः । न । ये । ज्येष्ठा॑सः । आ॒शवः॑ । दि॒धि॒षवः॑ । न ।**
**र॒थ्यः॑ । सु॒ऽदान॑वः । आपः॑ । न । नि॒म्नैः । उ॒दऽभि॑ः । जि॒ग॒त्नवः॑ ।**
**वि॒श्वऽरू॑पाः । अङ्गि॑रसः । न । साम॑ऽभिः ॥ ५ ॥ १२ ॥**

ये मरुतोऽश्वासोन अश्वाइव ज्येष्ठासोज्येष्ठाः प्रशस्यतमाआशवः शीघ्रगमनाः तथा दिधिषवोन वसूनां धारकाइव रथ्योरथस्वामिनः सुदानवः सुदानाः तथा आपोन आपइव निम्नैः प्रवणगैः उदभिरुदकैः सह जिगत्नवोगमनशीलाः तथा विश्वरूपाः नानारूपाः सामभिर्युक्ताः अंगिरसोन अंगिरसइव सर्वदा सामगाइत्यर्थः ॥ ५ ॥

॥ इत्यष्टमस्य तृतीये द्वादशोवर्गः ॥ १२ ॥

अथ षष्ठी—

ग्रावाणोनसूरयःसिन्धुमातरआदर्दिरासोअद्रयोनविश्वहा ।
शिशूलानक्रीळयःसुमातरोमहाग्रामोनयामन्नुतत्विषा ॥ ६ ॥

ग्रावाणः । न । सूरयः । सिन्धुऽमातरः । आऽदर्दिरासः । अद्रयः ।
न । विश्वहा । शिशूलाः । न । क्रीळयः । सुऽमातरः ।
महाऽग्रामः । न । यामन् । उत । त्विषा ॥ ६ ॥

सूरयः उदकस्य प्रेरकाः ग्रावाणोन मेघाइव सिन्धुमातरः नदीनिर्मातारः आदर्दिरासः आदरणशीलानि अद्रयोन वज्राद्यायुधानीव विश्वहा सर्वदा शत्रूणां हन्तारइत्यर्थः यद्वा सर्वदा अद्रयोन वज्राइव शत्रूणामादर्दिरासः आदरणशीलाः सुमातरः शोभनमातृकाः शिशूलान शिशवइव क्रीळयः विहर्तारः । उतापिच महाग्रामोन महान् जनसंघइव यामन् यामनि गमने त्विषा दीप्त्या युक्ताभवन्ति तेस्मद्यज्ञमागच्छन्तु ॥ ६ ॥

अथ सप्तमी—

उषसांनकेतवोऽध्वरश्रियःशुभंयवोनाञ्जिभिर्व्यश्वितन् ।
सिन्धवोनययियोभ्राजदृष्टयःपरावतोनयोजनानिममिरे ॥ ७ ॥

उषसाम् । न । केतवः । अध्वरऽश्रियः । शुभम्ऽयवः । न ।
अञ्जिऽभिः । वि । अश्वितन् । सिन्धवः । न । ययिनः ।
भ्राजत्ऽऋष्टयः । पराऽवतः । न । योजनानि । ममिरे ॥ ७ ॥

ये मरुतः उषसां न केतवः उषसां रश्मयइव अध्वरश्रियोयज्ञस्य श्रयितारोभवन्ति तथा शुभंयवोन कल्याणकामावराइव अञ्जिभिराभरणैः व्यश्वितन् दीप्यन्ते । श्विता वर्णे लङि रूपं । तथा सिन्धवोन नद्यइव ययियोगमनशीलाभ्राजदृष्टयः दीप्यमानायुधाः परावतोन दूराध्वनीना वडवाइव योजनानि दूरदेशान्ममिरे परिच्छिन्दन्ति तेस्मद्यज्ञमागच्छन्त्विति ॥ ७ ॥

अथाष्टमी—

**सुभागान्नोदेवाःकृणुतासुरत्नानस्मान्स्तोतॄन्मरुतोवावृधानाः ।**
**अधिस्तोत्रस्यसख्यस्यगातसनाद्धिवोरत्नधेयानिसन्ति ॥८॥१३॥**

**सुऽभागान् । नः । देवाः । कृणुत । सुऽरत्नान् । अस्मान् । स्तोतॄन् ।**
**मरुतः । ववृधानाः । अधि । स्तोत्रस्य । सख्यस्य ।**
**गात । सनात् । हि । वः । रत्नऽधेयानि । सन्ति ॥ ८ ॥ १३ ॥**

अनया स्तुतिमुपसंहरति हे मरुतोदेवाः ववृधानाः स्तुत्या वर्धमाना यूयं स्तोतॄन् नोस्मान् सुभगान् सुधनान् कृणुत कुरुत तथा सुरत्नान् शोभनरत्नान् कृणुत यद्वा सुरत्नान् शोभन रमणीयस्तोत्रानस्मानिति संबन्धनीयं । किंच यूयं सख्यस्य स्तोत्रस्य सखिभूतं स्तोत्रमधिगात अधिगच्छत वोयुष्माकं रत्नधेयानि रत्नदानानि अस्मद्विषयाणि सनाद्धि चिरकालादारभ्य खलु सन्ति ॥ ८ ॥

॥ इत्यष्टमस्य तृतीये त्रयोदशोवर्गः ॥ १३ ॥

अपश्यमिति सप्तर्चमेकादशं सूक्तं आग्नेयं त्रैष्टुभं सौचीकगुणोग्निर्ऋषिः वैश्वानरगुणोवा अथवा सप्तिर्नाम वाजंभरपुत्रः । तथाचानुक्रान्तं—अपश्यंसप्त सौचीकोग्निर्वैश्वानरोवा सप्तिर्वा वाजंभरआग्नेयं त्विति । प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि इदमादिकेद्वे सूक्ते । सूत्रितंच—अपश्यमस्यमहतइति सूक्ते इति ।

तत्र प्रथमा—

**अपश्यमस्यमहतोमहित्वममर्त्यस्यमर्त्यासुविक्षु ।**
**नानाहनूविभृतेसंभरतेअसिन्वतीबप्सतीभूर्यत्तः ॥ १ ॥**

अपश्यम् । अस्य । महतः । महिऽत्वम् । अमर्त्यस्य । मर्त्यासु ।
विक्षु । नाना । हनू इति । विभृते इति विऽभृते । सम् ।
भरेते इति । असिन्वती इति । बप्सती इति । भूरि । अत्तः ॥ १ ॥

अस्याग्नेर्महतोमंहनीयस्य महित्त्वं महत्वमपश्यं पश्यामि कीदृशस्यास्य मर्त्यासु विक्षु मनुष्यरूपासु प्रजासु तासां हृदये अमर्त्यस्य अमरणस्वभावस्य वैश्वानररूपेण वर्तमानस्य यद्वा मर्त्यासु विक्षु ऋत्विग्यजमानरूपासु प्रजासु अमर्त्यस्य सर्वदा जागरितस्य अथवा दावाग्निरूपोग्निरुच्यते अस्याग्नेर्हनू शिप्रे नाना विभृते विभिन्ने संभरेते संभरतोदन्तैः तथा कृत्वा असिन्वतीअसंखादन्त्यौ स्तोतारं बप्सती भक्षयन्त्यौ भूरि प्रभूतं काष्ठमरण्योर्वर्तमानं अत्तः भक्षयतः ॥ १ ॥

अथ द्वितीया—

गुहाशिरोनिहितमृधगक्षीअसिन्वन्नत्तिजिह्वयावनानि ।
अत्राण्यस्मैपड्भिःसंभरन्त्युत्तानहस्तानमसाधिविक्षु ॥ २ ॥

गुहा । शिरः । निऽहितम् । ऋधक् । अक्षी इति । असिन्वन् । अत्ति ।
जिह्वया । वनानि । अत्राणि । अस्मै । पट्ऽभिः । सम् ।
भरन्ति । उत्तानऽहस्ताः । नमसा । अधि । विक्षु ॥ २ ॥

अस्याग्नेः शिरोमूर्धा गुहा गुहायां निहितं मनुष्योदरेणु वर्तते अस्याक्षी अक्षिणी ऋधक् पृथक् निहिनं निहिते चन्द्रसूर्यात्मना तावेवाक्षिणीइत्यर्थः । ईदृशोयोग्निः असिन्वन् दन्तैरसंखादन् जिह्वया वनान्यत्ति काष्ठानि भक्षयति दाहभूतः । अस्माअग्नये अध्वर्य्वादयः पड्भिः पादैरभिगत्य अत्राणि संभरन्ति संपादयन्ति हवींषि । कथंभूताः उत्तानहस्ताः पात्रधारणार्थं उन्नतकराः नमसा नमस्कारेण युक्ताः कुत्र अधिविक्षु प्रजासु ऋत्विक्षु मध्ये ॥ २ ॥

अथ तृतीया—

प्रमातुःप्रतरंगुह्यमिच्छन्कुमारोनवीरुधःसर्पदुर्वीः ।
ससंनपक्वमविदच्छुचन्तंरिरिह्वांसंरिपउपस्थेअन्तः ॥ ३ ॥

प्र । मातुः । प्रऽतरम् । गुह्यम् । इच्छन् । कुमारः । न । वीरुधः ।
सर्पत् । उर्वीः । ससम् । न । पक्कम् । अविदत् । शुचन्तम् ।
रिरिह्वांसम् । रिपः । उपऽस्थे । अन्तरिति ॥ ३ ॥

अयमग्निर्मातुः पृथिव्याः संबन्धिनीरुर्वीर्बह्वीः वीरुधोलताइच्छन तथा प्रतरं प्रकृष्टतरं गुह्यं गोप्यं तासां वीरुधां मूलमपि इच्छन् कामयमानः प्रसर्पत्र प्रसर्पति प्रसरति । किमिव कुमारोन कुमारइव सयथा स्तन्यं पातुं जानुभ्यां सर्पति तद्वत् ससं न पक्कं पक्कमन्नमिव शुचन्तं दीप्यमानं नीरसं वृक्षं रिपः पृथिव्याउपस्थे अन्तः उत्संगे अन्तरविदत् विन्दति । पुनः कीदृशं रिरिह्वांसं आकाशमास्वादयन्तं यद्वा मूलैर्मातरं पृथिवीं रिरिह्वांसं ॥ ३ ॥

अथ चतुर्थी—

तद्वांमृतंरोदसीप्रब्रवीमिजायमानोमातरागर्भोअत्ति ।
नाहंदेवस्यमर्त्यश्चिकेताग्निरङ्गविचेताःसप्रचेताः ॥ ४ ॥

तत् । वाम् । ऋतम् । रोदसी इति । प्र । ब्रवीमि । जायमानः ।
मातरा । गर्भः । अत्ति । न । अहम् । देवस्य । मर्त्यः ।
चिकेत । अग्निः । अङ्ग । विऽचेताः । सः । प्रऽचेताः ॥ ४ ॥

हे रोदसी द्यावापृथिव्यौ वां युवां तदृतं सत्यं प्रब्रवीमि यदरणीभ्यां जायमानउत्पन्नो-गर्भोगर्भस्थानीयोग्निर्मातरा अरणी अत्ति भक्षयति । देवस्य द्योतमानादिगुणस्याग्नेर्वर्तनं मर्त्यो-मनुष्योहं न चिकेत न जानामि । हे अंग वैश्वानर अग्निररणीभ्यामुत्पन्नोविचेताः विविधज्ञा-नवान् सप्रचेताः सएव प्रकृष्टज्ञानः अतोन जानामीत्यर्थः अथवांगइत्यात्मानमेव संबोध्य ब्र-वीमि अग्निरेव विचेताः बहुधा जानाति सप्रचेताः सएव जानाति स्वमहिमानं नाहं स्तोतुं प्रभवामीत्यर्थः ॥ ४ ॥

अथ पंचमी—

योअस्माअन्नंतृष्वाऽदधात्याज्यैर्घृतैर्जुहोतिपुष्यति ।
तस्मैसहस्रमक्षभिर्विचक्षेग्नेविश्वतःप्रत्यङ्ङसित्वम् ॥ ५ ॥

यः । अस्मै । अन्नम् । तृषु । आऽदधाति । आज्यैः । घृतैः ।
जुहोति । पुष्यति । तस्मै । सहस्रम् । अक्षऽभिः । वि ।
चक्षे । अग्ने । विश्वतः । प्रत्यङ् । असि । त्वम् ॥ ५ ॥

योयजमानः अस्मै अग्नये तृषु क्षिप्रमन्नं आदधाति करोति आज्यैर्घृतैः क्षरद्रूपैः दीप्तैर्वा सोमरसैर्जुहोति पुष्यति पुष्णाति चैनं काष्ठैः तस्मै तमित्यर्थः तं सहस्रं सहस्रसंख्याकैरक्षभिरक्षिस्थानीयाभिरपरिमिताभिर्ज्वालाभिः विचक्षे विचष्टे विपश्यति। अथ प्रत्यक्षकृतः हे अग्ने त्वं विश्वतः सर्वतः प्रत्यङ्ङसि प्रत्यगंचनोभवसि अस्मदानुकूल्येन प्रवर्तमानोभवसि ॥ ५ ॥

अथ षष्ठी—

किंदेवेषुत्यजएनंश्चकर्थाग्नेपृच्छामिनुत्वामविद्वान् ।
अक्रीळन्क्रीळन्हरिरत्तवेदन्विपर्वशश्चकर्तगामिवासिः ॥ ६ ॥

किम् । देवेषु । त्यजः । एनः । चकर्थ । अग्ने । पृच्छामि । नु ।
त्वाम् । अविद्वान् । अक्रीळन् । क्रीळन् । हरिः । अत्तवे ।
अदन् । वि । पर्वऽशः । चकर्त । गाम्ऽइव । असिः ॥ ६ ॥

हे अग्ने त्वां नु क्षिप्रं देवेषु किं त्यजः क्रोधं एनः पापंच चकर्थ कृतवानसीत्यविद्वानहं पृच्छामि खांडवं दहन्तमग्निं पृच्छामि। किंचाक्रीळन् क्वचिद्देशे अविहरन् क्रीळन् क्वचिद्देशे विनोदयन् लीलया दहन् हरिर्हरितवर्णः सन् अत्तवे अत्तव्यमदन् अन्नकाष्ठादिकं पर्वशः सन्धौ सन्धौ विचकर्थ विविधं करोषि गामिवासिः गां यथा असिः स्वधितिः पर्वशश्छिनत्ति तद्वत्॥६॥

अथ सप्तमी—

विषूचोअश्वान्युयुजेवनेजाऋजीतिभीरशनाभिर्गृभीतान् ।
चक्षदेमित्रोवसुभिःसुजातःसमानृधेपर्वभिर्वावृधानः ॥७॥१४॥

विषूचः । अश्वान् । युयुजे । वनेऽजाः । ऋजीतिऽभिः ।
रशनाभिः । गृभीतान् । चक्षदे । मित्रः । वसुऽभिः । सुऽजातः ।
सम् । आनृधे । पर्वऽभिः । वावृधानः ॥ ७ ॥ १४ ॥

अयमग्निर्विषूचोविष्वगंचनानश्वान् व्याप्तान् महतोवृक्षान् सर्वतोगन्तॄन् अश्वानेव वा युयुजे युंक्ते वनेजाः वने प्रवृद्धः संपन्नः सन् कीदृशानश्वान् ऋजीतिभिः ऋजुगामिनीभिः रशनाभिः रशनास्थानीयाभिः लताभिः गृभीतान् परिगृहीतान् वेष्टितान् साक्षादश्वपक्षे ऋजुगतिभिः प्रसिद्धाभीरशनाभिःगृभीतान् गृहीतान् स्वकीयानश्वान् शीघ्रदाहाय रथे योजितवानित्यर्थः तादृशोग्निश्चक्षदे चक्षाद शकलीकरोति वसूनि मित्रोस्माकं मित्रभूतः वसुभिर्वासकैरश्मिभिः सुजातः सुष्ठु प्रवृद्धः सन् । किंच समानृधे सम्यग्वर्धते पर्वभिः काष्ठखंडैर्वावृधानोवर्धमानः ॥७ ॥

॥ इत्यष्टमस्य तृतीये चतुर्दशोवर्गः ॥ १४ ॥

अग्निःसप्तिमिति सप्तर्चं द्वादशं सूक्तं सौचीकस्यवैश्वानरस्याग्नेरार्षं त्रैष्टुभमाग्नेयं । अग्निः सप्तिमित्यनुक्रान्तं । प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्र प्रथमा—

अ॒ग्निः सप्तिं॑ वा॒जं॒भ॒रं द॑दात्य॒ग्निर्वी॒रं श्रुत्यं॑ कर्म॒निष्ठा॑म् ।
अ॒ग्नी रोद॑सी॒ वि च॑रत्सम॒ञ्जन्न॒ग्निर्नारीं॑ वी॒रकु॑क्षिं॒ पुरं॑धिम् ॥ १ ॥

अ॒ग्निः । सप्ति॑म् । वा॒ज॒म्ऽभ॒रम् । द॒दा॒ति॒ । अ॒ग्निः । वी॒रम् ।
श्रु॒त्य॑म् । क॒र्म॒नि॒ःऽस्थाम् । अ॒ग्निः । रोद॑सी॒ इति॑ । वि । च॒र॒त् ।
स॒म्ऽअ॒ञ्जन् । अ॒ग्निः । नारी॑म् । वी॒रऽकु॑क्षिम् । पुर॑म्ऽधिम् ॥ १ ॥

अयमग्निः सप्तिं सपर्णस्वभावमश्वं वाजंभरं युद्धे शत्रूञ्जित्वा अन्नसंपादकं ददाति स्तोतृभ्यः । तथाग्निर्वीरं वीर्यवन्तं पुत्रं श्रुत्यं पितृव्यपदेशकं कर्मनिष्ठां यागे अनन्यचित्तं ददाति अग्निः रोदसी द्यावापृथिव्यौ समञ्जन् सम्यगञ्जयन् विचरत् विविधं चरति अयमग्निर्नारीं योषितं वीरकुक्षिं वीरप्रसवकुक्षिं पुरंधिं च करोति ॥ १ ॥

अथ द्वितीया—

अ॒ग्नेरप्न॑सः स॒मिद॑स्तु भ॒द्राग्निर्म॒ही रोद॑सी॒ आ वि॑वेश ।
अ॒ग्निरेकं॑ चोदयत्स॒मत्स्व॒ग्निर्वृ॒त्राणि॑ दयते पु॒रूणि॑ ॥ २ ॥

अग्नेः । अम॑सः । सम्ऽइत् । अस्तु । भद्रा । अ॒ग्निः । म॒ही इति॑ ।
रोद॑सी॒ इति॑ । आ । वि॒वे॒श॒ । अ॒ग्निः । एक॑म् । चो॒द॒य॒त् ।
स॒मत्ऽसु॑ । अ॒ग्निः । वृ॒त्राणि॑ । द॒य॒ते॒ । पु॒रूणि॑ ॥ २ ॥

अम्नसः कर्मवतोग्नेः समिद्भद्रास्तु अयमग्निर्मही महत्यौ रोदसी द्यावापृथिव्यौ आविवेश आविष्टवान् स्वतेजसा तथायमग्निरेकं असहायमेव चोदयत् चोदयति प्रेरयति समत्सु संग्रामेषु युद्धे स्वभक्तं स्वयं सहायः सन् जयिनं करोतीत्यर्थः । तथाग्निर्वृत्राणि पुरूणि बहून् शत्रून्दयते हन्ति ॥ २ ॥

अथ तृतीया—

अ॒ग्निर्ह॒ त्यं जर॑त॒ः कर्ण॑मावा॒ग्निर॒द्भ्यो निर॑दह॒ज्जरू॑थम् ।
अ॒ग्निरत्रिं॑ घ॒र्म उ॑रुष्यद॒न्तर॒ग्निर्नृ॒मेधं॑ प्र॒जया॑सृज॒त्सम् ॥ ३ ॥

अ॒ग्निः । ह॒ । त्यम् । जर॑तः । कर्ण॑म् । आ॒व॒ । अ॒ग्निः । अ॒त्ऽभ्यः । निः ।
अ॒द॒ह॒त् । जरू॑थम् । अ॒ग्निः । अत्रि॑म् । घ॒र्मे । उ॒रु॒ष्य॒त् । अ॒न्तः ।
अ॒ग्निः । नृ॒ऽमेध॑म् । प्र॒ऽजया॑ । अ॒सृ॒ज॒त् । सम् ॥ ३ ॥

अग्निर्ह अयमग्निः खलु त्यं तं प्रसिद्धं जरतः कर्णं जरत्कर्णनामानमृषिं आव ररक्ष तथायमग्निरद्भ्योजरूथं एतन्नामानमसुरं निरदहत् निर्दग्धवान् तथाग्निरात्रिं महर्षिं घर्मेन्तः ऋबीसेवस्थितउरुष्यत् ररक्ष तथायमग्निर्नृमेधमेतन्नामकमृषिं प्रजया पुत्रादिलक्षणया समसृजत संयुयोज ॥ ३ ॥

अथ चतुर्थी—

अ॒ग्निर्दा॒द्द्रवि॑णं वी॒रपे॑शा अ॒ग्निरृषिं॒ यः स॒हस्रा॑ स॒नोति॑ ।
अ॒ग्निर्दि॒वि ह॒व्यमात॑ताना॒ग्नेर्धामा॑नि॒ विभृ॑ता पुरु॒त्रा ॥ ४ ॥

अ॒ग्निः । दा॒त् । द्रवि॑णम् । वी॒रऽपे॑शाः । अ॒ग्निः । ऋषि॑म् । यः ।
स॒हस्रा॑ । स॒नोति॑ । अ॒ग्निः । दि॒वि । ह॒व्यम् । आ ।
त॒ता॒न॒ । अ॒ग्नेः । धामा॑नि । विऽभृ॑ता । पु॒रु॒ऽत्रा ॥ ४ ॥

अयमग्निर्वीरपेशाः प्रेरकज्वालारूपोद्रविणं धनं दात् ददाति तथाग्निर्ऋषिं मंत्रद्रष्टारं पुत्रं प्रयच्छतीति शेषः। ऋषिर्विशेष्यते यऋषिः सहस्रा गवां सहस्राणि सनोति भजते दक्षिणात्वेन तमृषिं ददातीति। तथा अग्निर्दिवि द्युलोके हव्यं यजमानैर्हुतं आततान देवेषु विस्तारयति तथाग्नेर्धामानि शरीराणि विभृता विभृतानि पुरुत्रा बहुषु स्थानेषु आहवनीयधिष्ण्यादिषु क्षित्यादिषु वा ॥ ४ ॥

अथ पंचमी--

**अग्निमुक्थैर्ऋषयोविह्वयन्तेग्निंनरोयामनिबाधितासः।**
**अग्निंवयोअन्तरिक्षेपतंतोग्निःसहस्रापरियातिगोनाम् ॥ ५ ॥**

अग्निम्। उक्थैः। ऋषयः। वि। ह्वयन्ते। अग्निम्। नरः।
यामनि। बाधितासः। अग्निम्। वयः। अन्तरिक्षे। पतन्तः।
अग्निः। सहस्रा। परि। याति। गोनाम् ॥ ५ ॥

अग्निमुक्थैः शस्त्रैः ऋषयः पूर्वे विह्वयन्ते विविधमाह्वयन्ति यज्ञे स्वीये अग्निं नरोमनुष्यायामनि संग्रामे यातिर्वधकर्मसु पठितः बाधितासः शत्रुभ्योबाधिताः प्राप्नुवन्ति जयार्थं। तथाग्निं वयः पक्षिणोन्तरिक्षे पतन्तः पश्यन्ति रात्रिषु। तस्मादिमां वयांसि नक्तं नाध्यासतइति ब्राह्मणं[1]। यद्वा दावभूतमग्निं अन्तरिक्षगावयः पतन्ति तथाग्निर्गोनां गवां सहस्रा सहस्राणि परिपरितोयाति गच्छति ॥ ५ ॥

अथ षष्ठी--

**अग्निंविशईळतेमानुषीर्याअग्निंमनुषोनहुषोविजाताः।**
**अग्निर्गान्धर्वींपथ्यांमृतस्याग्नेर्गव्यूतिर्घृतआनिषत्ता ॥ ६ ॥**

अग्निम्। विशः। ईळते। मानुषीः। याः। अग्निम्। मनुषः। नहुषः।
वि। जाताः। अग्निः। गान्धर्वीम्। पथ्याम्। ऋतस्य।
अग्नेः। गव्यूतिः। घृते। आ। निऽसत्ता ॥ ६ ॥

---

१ तै० सं०. ५. ६. ४.

अग्निं विशः प्रजा ऋत्विग्यजमानलक्षणाः ईळते स्तुवन्ति यामानुषीर्मानुष्यः मनुष्याज्जाताः ताईळते तथाग्निं मनुषोमनुष्यानहुषोराज्ञः सकाशाज्जाताः प्रजाविविधं स्तुवन्तीति । अग्निर्गान्धर्वी वाङ्नामैतत् वाचं शृणोति कीदृशीं गान्धर्वी ऋतस्य यज्ञस्य पथ्यां पथि हितां अग्नेर्महात्मनोगव्यूतिर्मार्गोघृते आज्ये आनिषत्ता सर्वतोनिषण्णोभवति ॥ ६ ॥

अथ सप्तमी—

अग्नयेब्रह्मऋभवंस्ततक्षुरग्निंमहामवोचामासुवृक्तिम् ।
अग्नेप्रावंजरितारंयविष्ठाग्नेमहिद्रविणमायजस्व ॥ ७ ॥ १५ ॥

अग्नये । ब्रह्म । ऋभवः । ततक्षुः । अग्निम् । महाम् ।
अवोचाम । सुऽवृक्तिम् । अग्ने । प्र । अव । जरितारम् ।
यविष्ठ । अग्ने । महि । द्रविणम् । आ । यजस्व ॥ ७ ॥ १५ ॥

अग्नये ब्रह्म स्तोत्रं ऋभवोमेधाविनस्ततक्षुः अकुर्वन् वयं च महां महान्तमग्निं प्रति सुवृक्तिं स्तुतिमवोचाम ।हे यविष्ठ युवतमाग्ने जरितारं स्तोतारं प्राव प्ररक्ष हे अग्ने महि महत् द्रविणं धनमायजस्व प्रयच्छेत्यर्थः अत्र प्रतिवाक्यमग्न्यभिधानं तस्य स्तुत्यत्वप्रदर्शनार्थं ॥ ७ ॥

॥ इत्यष्टमस्य तृतीये पञ्चदशोवर्गः ॥ १५ ॥

यइमेति सप्तर्चं त्रयोदशं सूक्तं भुवनपुत्रस्य विश्वकर्मणआर्षं त्रैष्टुभं विश्वकर्मदेवत्यं । तथाचानुक्रान्तं—यइमाविश्वकर्मा भौवनोवैश्वकर्मणं त्विति । गतः सूक्तविनियोगः । अत्र वाजसनेयकं—ब्रह्मावैस्वयंभूस्तपोतप्यत तदैक्षत नवैतपस्यानन्त्यमस्ति हन्ताहंभूतेष्वात्मानं जुहवामि भूतानिचात्मनीति । तत्सर्वेषु भूतेष्वात्मानंहुत्वेत्यादि ।

तत्र प्रथमा—

यइमाविश्वाभुवनानिजुह्वदृषिर्होतान्यसीदत्पितानः ।
सआशिषाद्रविणमिच्छमानःप्रथमच्छदवराँआविवेश ॥ १ ॥

यः । इमा । विश्वा । भुवनानि । जुह्वत् । ऋषिः । होता ।
नि । असीदत् । पिता । नः । सः । आऽशिषा । द्रविणम् ।
इच्छमानः । प्रथमऽच्छत् । अवरान् । आ । विवेश ॥ १ ॥

अत्रनिरुक्तं—विश्वकर्मासर्वमेधेसर्वाणि भूतानि जुहवांचकार सआत्मानमप्यन्ततोजुहवांचकार तदभिवादिन्येषर्ग्भवति यइमाविश्वाभुवनानिजुह्वदितीति[1]। योविश्वकर्मा एतन्नामकः ऋषिः भुवनपुत्रोहोता होमनिष्पादकः सन् विश्वा सर्वाणि भुवनानि जुह्वत् होमं कुर्वन् प्रथमं सर्वं जगद्धुत्वेत्यर्थः पश्चादग्नौ न्यसीदत् पिता जनकः आत्मकृतेन कर्मणा देहोत्पत्तेः नचैकस्य जन्यजनकभावोविरुध्यते तपोबलेन शरीरद्वयस्वीकारात् सएकधाभवतीत्यादिश्रुतेः[2]। सऋषिः आशिषा आशीःप्रतिपादकेन सूक्तवाकादिना द्रविणं धनं स्वर्गाख्यमिच्छमानः कामयमानः प्रथमच्छत् प्रथममग्नेर्भुवनैराच्छादयिता अवरान् विप्रकृष्टान् भूतान् स्वात्मना हुतान् आविवेश आविष्टवानग्निमित्युक्तार्थएव पुनर्विशेषेणोक्तः एवमुत्तरत्राधियज्ञपरतया योज्यं । अथाध्यात्मप्रसिद्ध्योच्यते—योविश्वकर्मा परमेश्वरइमा विश्वा भुवनानि जुह्वत् प्रलयकाले पृथिव्यादीनिमान्सप्तलोकान् स्वात्मन्याहुतिप्रक्षेपवत् संहरन् ऋषिरतीन्द्रियद्रष्टा सर्वज्ञोहोता संहाररूपस्य होमस्य कर्ता नोस्माकं पिता जनकोनिषसाद स्वयं स्थितवान् । अयमर्थः प्रलयकाले प्राप्ते सति सर्वान् लोकान् संहृत्यास्माकमपि संहर्ता पुनः स्रष्टा च सन् सर्वज्ञोयः परमेश्वरः स्वयमेकएवासीत् । तथाब्रुवते हि श्रुतयः—आत्मावाइदमेकएवाग्रआसीत् । सदेवसोम्येदमग्रआसीदित्यादिकाः[3]।सतादृशःपरमेश्वरः आशिषा बहुःस्यांप्रजायेयेत्येवंरूपया पुनः पुनःसिसृक्षया द्रविणमिच्छमानः धनोपलक्षितं जगद्भोगमाकांक्षमाणः प्रथमच्छत् प्रथमं मुख्यं निष्प्रपंचं पारमार्थिकं रूपमावृण्वन् अवरान् स्वसृष्टान् प्राणिहृदयप्रदेशानाविवेश आविष्टवान् जीवरूपेण । तथाच श्रूयते—सोकामयत बहुःस्यांप्रजायेयेति । सतपोतप्यत सतपस्तप्त्वा इदꣳसर्वमसृजत यदिदंकिंच तत्सृष्ट्वातदेवानुप्राविशदिति[4]। एवमन्याअप्युपनिषदउदाहार्याः ॥ १ ॥

वैश्वदेवस्यपशोर्वपायाअनुवाक्या किंस्विदासीदित्येषा । सूत्रितंच—किंस्विदासीदधिष्ठानं योनःपिताजनितेति ।

---

१ नि० १०. २६ ।    २ तै० उ० । ३. तै० उ० । ४. तै० उ० ।

सैषा द्वितीया—

किंस्विंदासीदधिष्ठानंमारम्भंणंकतमत्स्वित्कथासीत् ।
यतोभूमिंजनयन्विश्वकंर्माविद्यामौर्णोन्महिनाविश्वचंक्षाः ॥ २ ॥

किम् । स्वित् । आसीत् । अधिऽस्थानंम् । आऽरम्भंणम् ।
कतमत् । स्वित् । कथा । आसीत् । यतः । भूमिम् । जनयंन् ।
विश्वऽकंर्मा । वि । द्याम् । और्णोत् । महिना । विश्वऽचंक्षाः ॥ २ ॥

पूर्वमन्त्रे जगत्प्रलयकालेसंहृत्य पश्चात्सिसृक्षायां सर्वं सृष्ट्वा तत्र प्रविष्टइत्युक्तं अत्र तस्य द्वितीयस्याधिष्ठानं जगदुपादानकारणाद्यसंभवात् सृष्टिरनुपपन्नेत्याक्षिपति । लोके हि घटं चिकीर्षुः कुलालोगृहादिकं किंचित्स्थानमधिष्ठाय मृद्रूपेणारंभकद्रव्येण चक्रादिरूपैरुपकरणैर्घटं निष्पादयति तद्वदीश्वरस्य जगदाश्रयद्यावापृथिव्योरुत्पादनवेलायामधिष्ठानं किं स्विदासीत् किंनामाभूत् न किंचिदित्यर्थः तथा तयोरारंभणं कतमत्स्वित् आरभ्यतेऽनेनेत्यारंभणं उपादानकारणं तदपि कतमद्भवेत् तदपि नेत्यर्थः । यद्यपि संभवेदारंभणं कथासीत् कथमभूत् किं स्वयं सदसद्वाभवेदित्यर्थः उभयमपि नोपपद्यते सच्चेदद्वैतभंगप्रसंगः असच्चेत्सदात्मकयोर्द्यावापृथिव्योरुपादानानर्हत्वात् नान्यत् किंचनमिषदित्यादिश्रुतेश्चेत्यभिप्रायः । यतोयस्मादधिष्ठानादारंभणाच्च विश्वचक्षाः सर्वद्रष्टा विश्वकर्मा परमेश्वरोभूमिंजनयन् वर्तते तथा द्यां दिवं व्यौर्णोत् व्यवृणोत् सृष्टवान् महिना स्वमहत्त्वेन किंस्विदासीदिति ॥ २ ॥

अथ तृतीया—

विश्वतंश्चक्षुरुतविश्वतोंमुखोविश्वतोंबाहुरुतविश्वतंस्पात् ।
संबाहुभ्यांधमंतिसंपतंत्रैर्द्यावाभूमींजनयंदेवएकंः ॥ ३ ॥

विश्वतंःऽचक्षुः । उत । विश्वतंःऽमुखः । विश्वतंःऽबाहुः । उत ।
विश्वतंःऽपात् । सम् । बाहुऽभ्याम् । धमंति । सम् । पतंत्रैः ।
द्यावाभूमी इतिं । जनयंन् । देवः । एकंः ॥ ३ ॥

अनया सर्वात्मकत्वेन कुलालादिविलक्षणत्वादधिष्ठानाद्यभावेपि स्रष्टुं शक्नोतीत्याह वि-श्वतश्चक्षुः सर्वतोव्याप्तचक्षुः उतापिच विश्वतोमुखः तथा विश्वतोबाहुः उतापिच विश्वतस्पात् सएवंविधः परमेश्वरः स्वस्मिन् त्रैलोक्यमुत्पादयतीत्यर्थः । कथमित्युच्यते—बाहुभ्यां दिवं सं-धमति धमतिर्गतिकर्मा सम्यक् प्रेरयति तथा पतत्रैः गमनशीलैः पादैः पृथिवीं संधमतीत्युभयो-रेवश्रवणं प्राधान्याभिप्रायं एवं द्यावाभूमी जनयन् दिवं च पृथिवींचोत्पादयन् देवोद्योतमानः स्वयंप्रकाशः परमेश्वरएकोसहायएव वर्तते ॥ ३ ॥

अथ चतुर्थी—

किंस्विद्वनंकउसवृक्षआसयतोद्यावापृथिवीनिष्टतक्षुः ।
मनीषिणोमनसापृच्छतेदुतद्यदध्यतिष्ठद्भुवनानिधारयन् ॥ ४ ॥

किम् । स्वित् । वनम् । कः । ऊँ इति । सः । वृक्षः । आस । यतः । द्यावापृथिवी इति । निःऽततक्षुः । मनीषिणः । मनसा । पृच्छत । इत् । ऊँ इति । तत् । यत् । अधिऽअतिष्ठत् । भुवनानि । धारयन् ॥ ४ ॥

पूर्वस्यामृच्युक्तं ब्रह्मैव भूम्यादिकारणमिति तदेवानयाप्रश्नकथनव्याजेनोच्यते—लोके हि प्रौढं प्रासादं निर्मिमाणः कस्मिंश्चित्प्रौढे वने कंचिन्महान्तं वृक्षं छित्वा तक्षणादिना स्तंभा-दिकं संपादयति इहतु परमेश्वरप्रेरिताजगत्स्रष्टारोयतोयस्माद्वनात् यं वृक्षमादाय द्यावापृ-थिवी निष्टतक्षुः तक्षणेन द्यावापृथिव्यौ निष्पादितवन्तः तद्वनं किंस्वित् किंनाम स्यात् । तथा-कउ सवृक्षआस कस्तादृशोमहान् वृक्षोभूत् । हे मनीषिणोमनसईश्वरास्तदुभयं मनसा जिज्ञा-सायुक्तेन पृच्छतेदु पृच्छतैव । किंचेश्वरोभुवनानि धारयन् यत्स्थानमध्यतिष्ठत्तदपि पृच्छत एतस्य सर्वस्याप्युत्तरं ब्रह्मवनंब्रह्मसवृक्षआसीदित्यादिकमुत्तरं ॥ ४ ॥

साकमेधेषु वैश्वदेवकर्मणएककपालस्य यातेधामानीत्येषा याज्या सूत्रितंच—विश्वकर्मन्ह-विषावावृधानो यातेधामानिपरमाणियावमेति । पूर्वोक्तस्य पशोर्हविषएषैव याज्या । सूत्रितंच—यातेधामानिपरमाणियावमा यइमेद्यावापृथिवीजनित्रीइति ।

१ तै० ब्रा० २. ८. ९ ।

सैषा पंचमी—

यातेधामानिपरमाणियावमायामध्यमाविश्वकर्मन्नुतेमा ।
शिक्षासखिभ्योहविषिस्वधावःस्वयंयजस्वतन्वंवृधानः ॥ ५ ॥

या । ते । धामानि । परमाणि । या । अवमा । या । मध्यमा ।
विश्वऽकर्मन् । उत । इमा । शिक्ष । सखिऽभ्यः । हविषि ।
स्वधाऽवः । स्वयम् । यजस्व । तन्वम् । वृधानः ॥ ५ ॥

अनया भौवनोविश्वकर्मा जगत्कारणं विश्वकर्मदेवं स्तौति । हे विश्वकर्मन् या यानि ते तव परमाणि धामानि शरीराणि सन्ति या यानि च मध्यमानि शरीराणि सन्ति उतापिच या यानि अवमानि धामानि शरीराणि सन्ति उतापिच तानीमानि सर्वाणि शरीराणि सखिभ्योस्मभ्यं यष्टुं हविषिमयि हविर्भूतेसति शिक्षदेहि । हे स्वधावोहविर्लक्षणान्नवन् स्वयमेव त्वं तन्वं स्वकीयं पूर्वोक्तं त्रिविधं शरीरं वृधानोहविषावर्धमानः सन् अनेन धामत्रैविध्योपन्यासेन उत्तमभूतानि देवादिशरीराणि मध्यमभूतानि मनुष्यादिशरीराणि निकृष्टभूतानि कृमिकीटादिशरीराणि च परिगृहीतानि किंबहुना सर्वं जगदुपात्तं भवति उक्तव्यतिरेकेण निरवयवस्य परमेश्वरस्य विग्रहाभावात् तदैक्षत बहुःस्यांप्रजायेयेत्यादि श्रुतिभ्यः परमेश्वरस्यैव देवादिभेदेन बहुभावावगमात् ॥ ५ ॥

तस्मिन्नेव वैश्वकर्मणपशौ वपापुरोडाशयोर्विश्वकर्मन्हविषेति द्वेक्रमेणानुवाक्ये। सूत्रितंच— विश्व कर्मन्हविषावावृधानइति द्वे विश्वकर्माविमनाआद्विहायाइति । साकमेधेषुवैश्वकर्मणस्य विश्वकर्मन्हविषेत्यैषवानुवाक्या । सूक्तंतु पूर्वमुदाहृतं ।

सैषा षष्ठी—

विश्वकर्मन्हविषावावृधानःस्वयंयजस्वपृथिवीमुतद्याम् ।
मुह्यन्त्वन्येअभितोजनासइहास्माकंमघवासूरिरस्तु ॥ ६ ॥

विश्वऽकर्मन् । हविषा । ववृधानः । स्वयम् । यजस्व ।
पृथिवीम् । उत । द्याम् । मुह्यन्तु । अन्ये । अभितः । जनासः ।
इह । अस्माकम् । मघऽवा । सूरिः । अस्तु ॥ ६ ॥

हे विश्वकर्मन् विश्वविषयकर्मन् एतन्नामक परमेश्वर हविषा हविर्भूतेन मया विश्वकर्मणा मया दत्तेन वा हविषा वावृधानो वर्धमानः विश्वकर्मा सर्वाणि भूतानि जुहवांचकार सआत्मानमप्यन्ततोजुहवांचकारेति हि निरुक्तं[1] पूर्वमुदाहृतं। स्वयमेव पृथिवीमुतापिच द्यां दिवं च स्वसृष्टे द्यावापृथिव्यौ स्वयं प्रवृद्धः सन् यजस्व पूजय अन्ये मत्तोन्ये जनासोजनाअयष्टारोस्मद्यागविरोधिनोवा मुह्यन्तु मुग्धाभवन्तु अभितः। सर्वतः अथ परोक्षकृतः इहास्मिन्यागेस्माकं मघवास्मत्प्रत्तेन हविर्लक्षणेन धनेन धनवान् ससूरिः स्वर्गादिफलस्य प्रेरकोस्तु भवतु। अत्र विश्वकर्मन् हविषावर्धमानइत्यादिनिरुक्तं[2]द्रष्टव्यं ॥ ६ ॥

अथ सप्तमी—

वाचस्पतिंविश्वकर्माणमूतयेमनोजुवंवाजेअद्याहुवेम ।
सनोविश्वानिहवनानिजोषद्विश्वशंभूरवसेसाधुकर्मा ॥ ७ ॥ १६ ॥

वाचः । पतिम् । विश्वऽकर्माणम् । ऊतये । मनःऽजुवम् ।
वाजे । अद्य । हुवेम । सः । नः । विश्वानि । हवनानि । जोषत् ।
विश्वऽशंभूः । अवसे । साधुऽकर्मा ॥ ७ ॥ १६ ॥

वाचस्पतिं मंत्रात्मकस्य वचसः स्वामिनं विश्वकर्माणं विश्वकर्तारं मनोजुवं मनोवेगगमनं देवं वाजे यज्ञे अद्यास्मिन्दिने ऊतये तर्पणाय हुवेम आह्वयाम सदेवोनोस्माकं विश्वानि सर्वाणि हवनानि जोषत् सेवतां। किमर्थं अवसे अस्माकं रक्षणाय सविशेष्यते विश्वशंभूः विश्वस्य सुखस्योत्पादकः साधुकर्मा च ॥ ७ ॥

॥ इत्यष्टमस्य तृतीये षोडशोवर्गः ॥ १६ ॥

चक्षुषइति सप्तर्चं चतुर्दशं सूक्तं ऋष्याद्याः पूर्ववत्। चक्षुषइत्यनुक्रान्तं गतः सूक्तविनियोगः।

तत्र प्रथमा—

चक्षुषःपितामनसाहिधीरोघृतमेनेअजनन्नम्नमाने ।
यदेदन्ताअददृहन्तपूर्वआदिद्द्यावापृथिवीअप्रथेताम् ॥ १ ॥

---

१ नि० १०.२६ ।   २ नि० १०.२७ ।

चक्षुषः । पिता । मनसा । हि । धीरः । घृतम् । एने ।
अजनत् । नम्नमाने इति । यदा । इत् । अन्ताः । अददृहन्त ।
पूर्वे । आत् । इत् । द्यावापृथिवी इति । अप्रथेताम् ॥ १ ॥

चक्षुषः चक्षुरुपलक्षितस्येन्द्रियसंघातमकस्य शरीरस्य पिता उत्पादयिता यद्वा चक्षुः
ख्यापकं तेजः तस्योत्पादयिता मनसा नहि मत्समोस्ति कश्चिदिति बुद्ध्याहि खलु धीरोधृष्टो-
विश्वकर्मा प्रथमघृतमुदकमजनदजनयत् आपोवाइदमग्रे अपएवससर्जादावित्यादि श्रुतिस्मृती
स्यातां पश्चादेने द्यावापृथिव्यौ नम्नमाने तस्मिन्नुदके इतस्ततश्चलन्त्यौ यःअजनयत् अथ य-
देव् यदेवान्ताः पर्यन्तप्रदेशाः पूर्वे पुराणाः द्यावापृथिव्योः संबन्धिनः अददृहन्त दृढाअभवन्
विश्वकर्मणा दृढाः संपादिताइत्यर्थः आदित् अनन्तरमेव द्यावापृथिवी द्यावापृथिव्यौ अप्रथे-
तां यथा कामं प्रथिते अभूतां ॥ १ ॥

वैश्वकर्मणस्य पशोर्हविषएषानुवाक्या विश्वकर्माविमनाआद्विहायाः किंस्विदासीदधि-
ष्ठानमितिसूत्रितं ।

अथ द्वितीया—

विश्वकर्माविमनाआद्विहायाधातावि‍धातापरमोतसंदृक् ।
तेषामिष्टानिसमिषामदन्तियत्रासप्तऋषीन्परएकमाहुः ॥ २ ॥

विश्वऽकर्मा । विऽमनाः । आत् । विऽहायाः । धाता ।
विऽधाता । परमा । उत । सम्ऽदृक् । तेषाम् । इष्टानि । सम् ।
इषा । मदन्ति । यत्र । सप्तऽऋषीन् । परः । एकम् । आहुः ॥ २ ॥

अयं मंत्रोधियज्ञाध्यात्मयोर्भेदेन द्विधा व्याख्येयः । तत्र प्रथमं दैवतमधिकृत्योच्यते—वि-
श्वकर्मा बहुविधप्रकाशवृष्टिप्रदानादिकर्मणां कर्ता आदित्यः सच विमनाः विभूतमनाः आदि-
त्यनर्थकः सर्वतइत्यर्थे वाविहायाः विविधमाप्ता महानित्यर्थः धाता वृष्ट्यादिकर्ता च विधाता
जगतः कर्ता च परमा परमः सन्दृक् सन्द्रष्टाच भूतानां तेषां सप्तऋषीणां सज्योतिषां रश्मीना-
मित्यर्थः चरमपादे वक्ष्यमाणत्वात् इष्टानि स्थानानि शरीराणि वा इषोदकेन संमदन्ति संमो-
दन्ते यत्र यस्मिन्नादित्ये तं देवं सप्तर्षीन् सप्तर्षिभ्यइत्यर्थः तेभ्यः परःपरस्तात् एकमेवादित्य-

माहुर्मन्त्रविदः । अथाध्यात्मपक्षे उच्यते—विश्वकर्मा यः परमात्मा प्राणप्रकाशाभ्यामुपेतः सन् बहुकर्मा भवति सच विमनाः विभूतमनाः विहायाः वस्तुतोमहान् विशेषेण सुकृतदुष्कृतफलस्याप्ता धाता विधाता च परमोतसन्दृक् परमश्च सन्द्रष्टेन्द्रियाणां । तेषांसप्तर्षीणां द्रष्टृणामिन्द्रियाणां इष्टानि स्वरूपाणि इषान्नेन सह संमदन्ति संमोदन्ते । यत्र यस्मिन्नात्मनि तमात्मानं सप्तर्षीन् सप्तसंख्याकेभ्यः सर्पणस्वभावेभ्योवा परः परस्ताद्वर्तमानमिन्द्रियाद्यतीतमेकं परमात्मानमाहुस्तत्वविदः अत्र विश्वकर्माविभूतमनाव्याप्तेत्यादिनिरुक्तमनुसन्धेयं ॥ २ ॥

पूर्वोक्तएव पशौ पुरोडाशस्य योनःपितेत्येषा याज्या । सूत्रितं च—योनःपिताजनितायोविधाता यातेधामानिपरमाणियावमेति ।

सैषा तृतीया—

**योनःपिताजनितायोविधाताधामानिवेदभुवनानिविश्वा ।**
**योदेवानांनामधाएकएवतंसंप्रश्नंभुवनायन्त्यन्या ॥ ३ ॥**

यः । नः । पिता । जनिता । यः । विऽधाता । धामानि । वेद ।
भुवनानि । विश्वा । यः । देवानाम् । नामऽधाः । एकः ।
एव । तम् । सम्ऽप्रश्नम् । भुवना । यन्ति । अन्या ॥ ३ ॥

योविश्वकर्मा नोस्माकं पिता पालयिता न केवलं पालकः किंच जनिता उत्पादकः किमनेनास्माकमुत्पादकइति संकोचेन योविधाता सर्वस्य जगतउत्पादकः योविश्वकर्मा नोस्माकमुत्पन्नानि धामानि देवानां तेजःस्थानानि वेद वेत्ति । किंबहुना विश्वा विश्वानि भुवना भूतजातानि वेद वेत्ति यश्च देवानामग्निवाय्वादीनां नामधाः नाम्नां धाता इन्द्रादीन्निर्माय तेषां इन्द्रादि नाम कृत्वा तत्पदेषु स्थापयिता एकएव तंदेवं अन्या अन्यानि भुवना भूतजातानि प्रश्नं कः परमेश्वरइति पृच्छां यन्ति प्राप्नुवन्ति ॥ ३ ॥

अथ चतुर्थी—

**तआयजन्तद्रविणंसमस्माऋषयःपूर्वेजरितारोनभूना ।**
**असूर्तेसूर्तेरजसिनिषत्तेयेभूतानिसमकृण्वन्निमानि ॥ ४ ॥**

---

१ नि० १०. २६ ।

ते । आ । अयजन्त । द्रविणम् । सम् । अस्मै । ऋषयः । पूर्वे ।
जरितारः । न । भूना । असूर्ते । सूर्ते । रजांसि । निऽसत्ते ।
ये । भूतानि । सम्ऽअकृण्वन् । इमानि ॥ ४ ॥

ते पूर्वे ऋषयोऽस्मै विश्वकर्मणे द्रविणं च पुरोडाशादिलक्षणं धनं संसम्यगायजन्त सर्वतोयजन्ते जरितारोनभूना स्तोतारोयथा भूना भूम्ना महतास्तोत्रेण यथा यजन्ति तद्वत् ये महर्षयः असूर्ते सरणवर्जिते सूर्ते सरणसहिते स्थावरजंगमात्मके रजसि लोके निषत्ते निषण्णे निश्चलमवस्थितते इमानि भूतानि भुवनानि प्राणिनइत्यर्थः समकृण्वन् सम्यक् धनादिना पूजयन् । अथवायमर्थः येस्थावरजंगमात्मके जगति वर्तमानानेतान् प्राणिनः तेजसा समकृण्वन् ते पूर्वेऋषयोद्रष्टारोरश्मयोस्माआदित्यात्मकाय विश्वकर्मणे द्रविणं तेजः आयजन्त ॥ ४ ॥

अथ पञ्चमी—

परोदिवापरएनापृथिव्यापरोदेवेभिरसुरैर्यदस्ति ।
कंस्विद्गर्भंप्रथमंदध्रआपोयत्रदेवाःसमपश्यन्तविश्वे ॥ ५ ॥

परः । दिवा । परः । एना । पृथिव्या । परः । देवेभिः । असुरैः ।
यत् । अस्ति । कम् । स्वित् । गर्भम् । प्रथमम् । दध्रे ।
आपः । यत्र । देवाः । सम्ऽअपश्यन्त । विश्वे ॥ ५ ॥

यदीश्वरतत्त्वं दिवा परः द्युलोकादपि परस्तात् वर्तमानं तथा एनाअस्याः पृथिव्याः परःपरस्ताद्वर्तमानं तथा देवेभिर्देवैपरस्ताद्वर्तमानंअसुरैश्च यत् परः परस्तात् वर्तमानं गुहायामवस्थितं कंस्वित् गर्भं गर्भवत् सर्वस्य ग्राहकंतत्त्वं आपः प्रथमं दध्रे धृतवत्यः यत्र यस्मिन् गर्भे देवाइन्द्रादयोविश्वे सर्वेपि समपश्यन्त संगताः परस्परं पश्यन्ति एवं जानन्नेव कश्चित्तत्ववित् प्रश्नं करोति॥५॥

अथ षष्ठी—

तमिद्गर्भंप्रथमंदध्रआपोयत्रदेवाःसमगच्छन्तविश्वे ।
अजस्यनाभावध्येकमर्पितंयस्मिन्विश्वानिभुवनानितस्थुः ॥ ६ ॥

तम् । इत् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः ।
सम्ऽअगच्छन्त । विश्वे । अजस्य । नाभौ । अधि । एकम् ।
अर्पितम् । यस्मिन् । विश्वानि । भुवनानि । तस्थुः ॥ ६ ॥

अनया पूर्वमन्त्रोक्तस्य प्रश्नस्योत्तरमभिधीयते तमित् तमेव विश्वकर्माणं गर्भं भर्गस्थानीयं प्रथमं इतरसृष्टेः पूर्वं आपोदध्रे धृतवत्यः । यत्र गर्भे विश्वे सर्वे देवाः इन्द्रादयः समगच्छन्त संगताभवन्ति तस्याजस्य नाभावधि नाभौ अधीति सप्तम्यर्थानुवादी एकमर्पितमित्यण्डाभिप्रायेणोक्तं अण्डं हि प्राक् सर्गान्नाभिस्थाने तिष्ठति यस्मिन्नण्डे विश्वानि भुवनानि सर्वाणि भूतजातानि तस्थुस्तिष्ठन्ति अथवा अजस्य जन्मरहितस्य ब्रह्मणः स्वसृष्टे जले शयानस्य नाभौ सर्वजगद्बन्धके उदके एकं ब्रह्माण्डमर्पितं स्थापितं शिष्टं समानं । अथास्मिन्नर्थे स्मृतिः—अपएवससर्जादौतासुवीर्यमवाकिरत् । तदण्डमभवद्धैमंसूर्यकोटिसमप्रभमिति ॥ ६ ॥

अथ सप्तमी—

नतंविदाथयइमाजजानान्यद्युष्माकमन्तरंबभूव ।
नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरन्ति ॥ ७ ॥ १७ ॥

न । तम् । विदाथ । यः । इमा । जजान । अन्यत् । युष्माकम् ।
अन्तरम् । बभूव । नीहारेण । प्रावृताः । जल्प्या ।
च । असुऽतृपः । उक्थऽशसः । चरन्ति ॥ ७ ॥ १७ ॥

हे नरास्तं विश्वकर्माणं न विदाथ न जानीथ यइमा इमानि भूतानि जजान उत्पादितवान् देवदत्तोहं यज्ञदत्तोहमिति वयमात्मानं विश्वकर्माणं जानीमइति यदुच्येत तदसत् नह्यहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य तत्वं किंतु युष्माकमहंप्रत्ययगम्यानां जीवानामन्तरं अन्यदहं प्रत्ययगम्यादतिरिक्तं सर्वं वेदान्तवेद्यमीश्वरतत्वं बभूव भवति विद्यते जीवरूपवत्तदपि कुतोनविद्मइति चेत् श्रूयतां । नीहारेण प्रावृतायूयं नीहारसदृशेनाज्ञानेन आच्छन्नाः अतोन जानीथ यथा नीहारोनात्यन्तमसद्दृष्टेरावरकत्वात् नात्यन्तंसत्काष्ठपाषाणादिवत्संबोद्धुमयोग्यत्वात् एवमज्ञानमपि नात्यन्तमसत् इश्वरतत्वावरकत्वात् नापि सत् बोधमात्र-

निवर्त्यत्वात् ईदृशेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः। न केवलं प्रावृतत्वं किन्तु जल्प्या च देवोहं मनुष्योहमित्याद्यनृतजल्पनेन प्रावृताः। किंच असुतृपः केनाप्युपायेनासून्प्राणान् तृप्यन्तः उदरंभराइत्यर्थः नतु पारमेश्वरं तत्त्वं विचारितवन्तः न केवलमिह लोके भोगमात्र-तृप्ताः उक्थशासः नानाविधेषु यज्ञेषु उक्थं प्रउगनिष्केवल्यादिकं शंसन्तश्चरन्ति पृथिव्यां व-र्तन्ते केवलमैहिकामुष्मिकभोगपरावर्तध्वे अतोविश्वकर्माणं देवं न जानीथेत्यर्थः ॥ ७ ॥

॥ इत्यष्टमस्य तृतीये सप्तदशोवर्गः ॥ १७ ॥

यस्तेमन्योइतिसप्तर्चं पंचदशं सूक्तं मन्युर्नाम तपसः पुत्रऋषिः आद्या जगती शिष्टास्त्रिष्टुभः इदमुत्तरं च मन्युदैवत्यं। तथाचानुक्रान्तं—यस्तेमन्योमन्युस्तापसोमान्यवंतु जगत्यादीति। अजिरनाम्न्यभिचारसाधने यज्ञे एतत्सूक्तं निविद्धानं सूत्रितंच—त्वयामन्यो यस्तेमन्योइति।

तत्र प्रथमा—

यस्तेमन्योविधद्वज्रसायकसहओजःपुष्यतिविश्वमानुषक्।
साह्यामदासमार्यन्त्वयायुजासहस्कृतेनसहसासहस्वता ॥ १ ॥

यः। ते। मन्यो इति। अविधत्। वज्र। सायक। सहः। ओजः। पुष्यति। विश्वम्। आनुषक्। सह्याम। दासम्। आर्यम्। त्वया। युजा। सहःऽकृतेन। सहसा। सहस्वता ॥ १ ॥

हे मन्यो क्रोधाभिमानिन् देव मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणोवधकर्मणोवेतिनिरुक्तं[1]। योयजमानस्ते तुभ्यंअविधत् परिचरति हे वज्र वज्रवत्सारभूत सायक सायकवत् शत्रूणां हिं-सक समनुष्यःसहोबलं बाह्यं ओजः शारीरं बलं चानुषक् अनुषक्तं पुष्यति त्वदनुग्रहात् संग्रामे यस्मादेवं तस्माद्वयं दासं उपक्षयकर्तारमार्यं अस्मत्तोधिकं चोभयविधं शत्रुं साह्याम अभिभ-वेम। केन साधनेनेति तदुच्यते त्वया युजा त्वया सहायेन सहायोविशेष्यते सहस्कृतेन बलो-त्पादितेन सहसा सहमानेन परान् सहस्वता बलवता ईदृशेन महता त्वया सहायेनाभिभवे-मेत्यर्थः ॥ १ ॥

---

१ नि० १०. २९.

अथ द्वितीया—

मन्युरिन्द्रोमन्युरेवासदेवोमन्युर्होतावरुणोजातवेदाः ।
मन्युंविशईळतेमानुषीर्याःपाहिनोमन्योतपसासजोषाः ॥ २ ॥

मन्युः । इन्द्रः । मन्युः । एव । आस । देवः । मन्युः । होता ।
वरुणः । जातऽवेदाः । मन्युम् । विशः । ईळते । मानुषीः ।
याः । पाहि । नः । मन्यो इति । तपसा । सऽजोषाः ॥ २ ॥

अयं मन्युरिन्द्रः मन्युरेव देवः सर्वोपि मन्युरेवास अभवत् मन्युरेव होता होमनिष्पादकोग्निः तथा मन्युर्वरुणोपि जातवेदाः जातप्रज्ञोवरुणश्च सर्वेष्वपि तेजस्विषु मन्युसद्भावात् यामानुषीर्मनुषोपत्यभूताविशः प्रजाः सन्ति ताः मन्युमेवदेवमीळते स्तुवन्ति हे मन्यो तपसा एतन्नामकेनास्मत्पित्रा सजोषाः समानप्रीतिस्त्वं पाहि रक्ष ॥ २ ॥

अथ तृतीया—

अभीहिमन्योतवसस्तवीयान्तपसायुजाविजहिशत्रून् ।
अमित्रहावृत्रहादस्युहाचविश्वावसून्याभरात्वंनः ॥ ३ ॥

अभि । इहि । मन्यो इति । तवसः । तवीयान् । तपसा । युजा ।
वि । जहि । शत्रून् । अमित्रऽहा । वृत्रऽहा । दस्युऽहा । च ।
विश्वा । वसूनि । आ । भर । त्वम् । नः ॥ ३ ॥

हे मन्यो त्वमभीहि अभिगच्छास्मद्यज्ञं कीदृशस्त्वं तवसोबलवतोपि तवीयानत्यन्तं बलवान् सत्वं तपसा अस्मत्पित्रा युजा सहायेन शत्रून् विजहि किंचामित्रहा अमित्राणां हन्ता अमित्रोस्निग्धः तथा वृत्रहा आवरकाणां शत्रूणां हन्ता तथा दस्युहा च दस्युरुपक्षयकारी शत्रुः तादृशमन्युदेव त्वं विश्वा सर्वाणि वसूनि धनानि नोस्मभ्यमाभर आहर ॥ ३ ॥

अथ चतुर्थी—

त्वंहिमन्योअभिभूत्योजाःस्वयंभूर्भामोअभिमातिषाहः ।
विश्वचर्षणिःसहुरिःसहावानस्मास्वोजःपृतनासुधेहि ॥ ४ ॥

त्वम् । हि । मन्यो इति । अभिभूतिऽओजाः । स्वयम्ऽभूः ।
भामः । अभिमातिऽसहः । विश्वऽचर्षणिः । सहुरिः । सहावान् ।
अस्मासु । ओजः । पृतनासु । धेहि ॥ ४ ॥

हे मन्यो त्वं अभिभूत्योजापरेषामभिभावुकबलः स्वयंभूः स्वयमेवोत्पन्नः भामः क्रुद्धः अभिमातिषाहः अभितोहिंसन्तीत्यभिमातयः शत्रवः तेषामभिभविता विश्वचर्षणिः सर्वेषां द्रष्टा सहुरिः सहनशीलः सहावान् सहनवान् ईदृशस्त्वमस्मासु पृतनासु संग्रामेषु ओजोबलं धेहि देहि ॥ ४ ॥

अथ पंचमी–

अभागःसन्नपपरेतोअस्मितवक्रत्वातविषस्यप्रचेतः ।
तंत्वामन्योअक्रतुर्जिहीळाहंस्वातनूर्बलदेयायमेहि ॥ ५ ॥

अभागः । सन् । अप । पराऽइतः । अस्मि । तव । क्रत्वा ।
तविषस्य । प्रचेत इति प्रऽचेतः । तम् । त्वा । मन्यो इति ।
अक्रतुः । जिहीळ । अहम् । स्वा । तनूः । बलऽदेयाय ।
मा । आ । इहि ॥ ५ ॥

हे प्रचेतः प्रकृष्टज्ञान मन्यो तविषस्य महतस्तव क्रत्वा कर्मणा अभागोभागरहितः सन् त्वां यज्ञे अयाजकः सन्नित्यर्थः तदनुकूलरहितोहं अपपरेतः अस्मि युद्धे शत्रुभिरभिभूतः सन् दूरं गतोस्मि तं तादृशं भागरहितं त्वा त्वां हे मन्यो अक्रतुः कर्मरहितोहं जिहीळ क्रुद्धं कृतवानित्यर्थः यद्वा अहमेव त्वत्सहायमेव क्रोधितवान् अथेदानीं स्वा तनूः मम शरीरभूतस्त्वं बलदेयाय बलदानाय मेहि मां प्राप्नुहि ॥ ५ ॥

अथ षष्ठी–

अयंतेअस्म्युपमेह्यर्वाङ्प्रतीचीनःसहुरेविश्वधायः ।
मन्योवज्रिन्नभिमामावंवृत्स्वहनावदस्यूँरुतबोध्यापेः ॥ ६ ॥

अयम् । ते । अस्मि । उप । मा । आ । इहि । अर्वाङ् ।
प्रतीचीनः । सहुरे । विश्वऽधायः । मन्यो इति । वज्रिन् । अभि ।
माम् । आ । ववृत्स्व । हनाव । दस्यून् । उत । बोधि । आपेः ॥ ६ ॥

हे सहुरे शत्रूणां सहनशील विश्वधायः हे विश्वस्य धर्तर्मन्यो अयं जनोहं ते तवास्मि कर्मकृत् यतएवमतःप्रतीचीनः प्रतिगन्ता अर्वागस्मदभिमुखं मा मां उपेहि उपागच्छ। हे मन्यो वज्रिन् मां अभ्याववृत्स्व अभ्यावर्तस्व। किमर्थमभ्यागमनमितिचेत् उच्यते—हनाव आवां दस्यून् शत्रून् उतापिच आपेर्बन्धुं बोधि बुध्यस्व ॥ ६ ॥

अथ सप्तमी—

**अभिप्रेहिदक्षिणतोभवामेधावृत्राणिजंघनावभूरि ।**
**जुहोमितेधरुणंमध्वोअग्रमुभाउपांशुप्रथमापिबाव ॥ ७ ॥ १८ ॥**

अभि । प्र । इहि । दक्षिणतः । भव । मे । अध । वृत्राणि ।
जंघनाव । भूरि । जुहोमि । ते । धरुणम् । मध्वः । अग्रम् ।
उभौ । उपऽअंशु । प्रथमा । पिबाव ॥ ७ ॥ १८ ॥

हे मन्यो अभिप्रेहि अभिगच्छ मम युद्धं गत्वा च मे मम दक्षिणतो भव अध अथ आवां वृत्राणि शत्रून् भूरि प्रभूतं जंघनाव हनाव तेतुभ्यमग्रं श्रेष्ठं मध्वोमधु सोमरसं जुहोमि उभौ त्वं चाहं चोपांशुअप्रकाशं प्रथमा प्रथमौ सन्तौ पिबाव ॥ ७ ॥

॥ इत्यष्टमस्य तृतीयेष्टादशोवर्गः ॥ १८ ॥

त्वयामन्योइति सप्तर्चं षोडशं सूक्तं आदितस्तिस्त्रस्त्रिष्टुभः ततश्चतस्त्रोजगत्यः पूर्ववदृषिदेवते । तथाचानुक्रान्तं—त्वयामन्योचतुर्जगत्यन्तमिति । अजिरनाम्न्येकाहे इदं सूक्तं मरुत्वतीयशस्त्रेनिविद्धानं सूत्रं पूर्वसूक्तएवोदाहृतं । विनुत्यभिभूतिषु वज्रेष्वेकाहेप्येते सूक्ते मरुत्वतीयनिष्केवल्ययोः शस्ये । सूत्रितंच—विनुत्यभिभूत्योरिषुवज्रयोश्च मन्युसूक्तेइति ।

तत्र प्रथमा—

**त्वयामन्योसरथमारुजन्तोहर्षमाणासोधृषितामरुत्वः ।**
**तिग्मेषवआयुधासंशिशानाअभिप्रयन्तुनरोअग्निरूपाः ॥ १ ॥**

त्वया॑ । म॒न्यो॒ इति॑ । स॒ऽरथ॑म् । आ॒ऽरु॒जन्तः॑ । हर्ष॑माणासः ।
धृ॒षि॒ताः । म॒रु॒त्वः॒ । ति॒ग्मऽइ॑षवः । आयु॑धा । स॒म्ऽशिशा॑नाः ।
अ॒भि । प्र । य॒न्तु॒ । नरः॑ । अ॒ग्निऽरू॑पाः ॥ १ ॥

हे मन्यो मरुत्वः त्वया सरथं समानामेकमेव रथमारुह्येति शेषः आरुजन्तोगच्छन्तोहर्षमाणासोहृष्टाः धृषिताः धृष्टास्तिग्मेषवः तीक्ष्णबाणाः आयुधा आयुधानि संशिशानाः सम्यङ्निश्यन्तोनरोयुद्धस्य नेतारइन्द्रादयोदेवाः त्वदनुचरावा अग्निरूपाः अग्निवत्तीक्ष्णदाहादिकर्माणः यद्वा सन्नद्धाः कवचिनोभिप्रयन्तु युद्धे सहायार्थं । अत्र त्वयामन्योसरथमारुह्यरुजन्तइत्यादिनिरुक्तमनुसन्धेयं॥ १ ॥

अथ द्वितीया—

अ॒ग्निरि॑वमन्योत्वि॒षि॒तःस॑हस्व॒सेना॒नीर्नः॑सहु॒रेहू॒तए॑धि ।
ह॒त्वाय॒शत्रू॒न्विभ॑जस्व॒वेद॒ओजो॒मिमा॑नो॒विमृधो॑नुदस्व ॥ २ ॥

अ॒ग्निःऽइ॑व । म॒न्यो॒ इति॑ । त्वि॒षि॒तः । स॒ह॒स्व॒ । से॒ना॒ऽनीः । नः॒ ।
स॒हु॒रे॒ । हू॒तः । ए॒धि॒ । ह॒त्वाय॑ । शत्रू॑न् । वि । भ॒ज॒स्व॒ । वेदः॑ ।
ओजः॑ । मिमा॑नः । वि । मृधः॑ । नु॒द॒स्व॒ ॥ २ ॥

हे मन्यो अग्निरिव त्विषितोज्वलितः सहस्वाभिभव शत्रून् हे सहुरे सहनशील सेनानीरेधि भव नोस्माकं संग्रामे हूतः सन् । किंच हत्वाय हत्वा शत्रून् विभजस्व प्रयच्छास्माकं वेदोधनं शत्रुसंबन्धि । किंच ओजोमिमानः अस्माकं बलं कुर्वन् मृधः शत्रून् विनुदस्व घातयेत्यर्थः ॥ २ ॥

अथ तृतीया—

सह॑स्वमन्योअ॒भिमा॑तिम॒स्मेरु॒जन्मृ॒णन्प्र॑मृ॒णन्प्रेहि॒शत्रू॑न् ।
उ॒ग्रंते॒पाजो॒नन्वा॑रुरुध्रेव॒शीवशं॑नयसएकज॒त्वम् ॥ ३ ॥

---

१ नि० १०. ३० ।

सहस्व । मन्यो इति । अभिऽमातिम् । अस्मे इति । रुजन् । मृणन् ।
प्रऽमृणन् । प्र । इहि । शत्रून् । उग्रम् । ते । पाजः । ननु ।
आ । रुरुध्रे । वशी । वशम् । नयसे । एकऽज । त्वम् ॥ ३ ॥

हे मन्यो अस्मे अस्माकं अभिमातिं अभिगन्तारं शत्रुं सहस्व अभिभव रुजन् मृणन् हिंसन् प्रमृणन् प्रकर्षेण हिंसन् यथा पुनर्नजीवेत्तथा कुर्वन् शत्रून् प्रति प्रेहि ते तव पाजोबलं उग्रमुद्गूर्णं केनन्वारुरुध्रे आरुन्धन्ति न तथा संभवति हे एकज असहाय वशी त्वं वशं नयसे प्रापयसि शत्रुं ॥ ३ ॥

अथ चतुर्थी—

एकोबहूनामसिमन्यवीळितोविशंविशंयुधयेसंशिशाधि ।
अकृत्तरुक्त्वयायुजावयंद्युमन्तंघोषंविजयायकृण्महे ॥ ४ ॥

एकः । बहूनाम् । असि । मन्यो इति । ईळितः । विशम्ऽविशम् ।
युधये । सम् । शिशाधि । अकृत्तऽरुक् । त्वया । युजा ।
वयम् । द्युऽमन्तम् । घोषम् । विऽजयाय । कृण्महे ॥ ४ ॥

हे मन्यो ईळितः स्तुतस्त्वं एकएवासहायएव बहूनां शत्रूणामसिभवसि पर्याप्तोहन्तुं अतोविशंविशं तां तामस्मद्विरोधिनीं प्रजां युधये युद्धाय संशिशाधि सम्यक्तीक्ष्णीकुरु। किंच हे अकृत्तरुक् अच्छिन्नदीप्ते त्वया युजा सहायेन वयं द्युमन्तं दीप्तिमन्तं घोषं सिंहनादवन्तं विजयाय विशिष्टजयार्थं कृण्महेकुर्मः ॥ ४ ॥

अथ पंचमी—

विजेषकृदिन्द्रइवानवब्रवोऽस्माकंमन्योअधिपाभवेह ।
प्रियंतेनामसहुरेगृणीमसिविद्मातमुत्संयतआबभूथ ॥ ५ ॥

विजेषऽकृत् । इन्द्रःऽइव । अनवऽब्रवः । अस्माकम् । मन्यो इति ।
अधिऽपाः । भव । इह । प्रियम् । ते । नाम । सहुरे ।
गृणीमसि । विद्म । तम् । उत्सम् । यतः । आऽबभूथ ॥ ५ ॥

हे मन्यो इन्द्रइव विजेषकृत विजयकर्ता तथा अनवब्रवः अनिन्दितवचनः अनवब्रवो नवक्षिप्तवचनइतियास्कः । ईदृशस्त्वमस्माकं अधिपाअधिकं पाता रक्षिता भवेहास्मिन्यज्ञे हे स हुरे शत्रूणां सहनशील ते प्रियं नाम स्तोत्रं गृणीमसि गृणीमः स्तुमः यतोनाम्नः स्तोत्रात् त्वमा बभूथ आभवसि प्रवृद्धोभवसि तमुत्सं बलस्योद्गमयितारं विद्म जानीमः ॥ ५ ॥

अथ षष्ठी—

आभूंत्यासहजावंज्रसायकसहोंबिभर्ष्यभिभूतउत्तंरम् ।
क्रत्वांनोमन्योसहमेद्येंधिमहाधनस्यंपुरुहूतसंसृजिं ॥ ६ ॥

आऽभूंत्या । सहऽजाः । वज्र । सायक । सहंः । बिभर्षि ।
अभिऽभूते । उत्ऽतंरम् । क्रत्वां । नः । मन्यो इतिं । सह ।
मेदी । एधि । महाऽधनस्यं । पुरुऽहूत । सम्ऽसृजिं ॥ ६ ॥

हे वज्र वज्रवत्सारभूत हे सायक शत्रूणामन्तकर अभिभूते शत्रूणामभिभावुक मन्यो आभूत्या आभूतिरभिभवः तेन सहजाः सहैवोत्पन्नस्त्वं उत्तरमुत्कृष्टतरं सहोबलं बिभर्षिधारयसि हेमन्यो क्रत्वा कर्मणा सह नोस्माकं मेद्येधि स्निग्धोभव। कुत्रेति तदुच्यते महाधनस्य संग्रामना मैतत् संग्रामस्य संसृजि सर्गे हे पुरुहूत बहुभिराहूतेति मन्युसंबोधनं ॥ ६ ॥

अथ सप्तमी—

संसृंष्टंधनंमुभयंसमाकृंतमस्मभ्यंदत्तांवरुंणश्चमन्युः ।
भियंदधांनाहृदंयेषुशत्रंवःपरांजितासोअपनिलंयन्ताम् ॥ ७ ॥ १९ ॥

सम्ऽसृंष्टम् । धनंम् । उभयंम् । सम्ऽआकृंतम् । अस्मभ्यंम् । दत्ताम् ।
वरुंणः । च । मन्युः । भियंम् । दधांनाः । हृदंयेषु । शत्रंवः ।
पराऽजितासः । अपं । नि । लयन्ताम् ॥ ७ ॥ १९ ॥

---

२ नि० ६. २९ ।

संसृष्टमविभागमापन्नमुभयं उभयविधं धनं समाकृतं सम्यगानीतमस्मभ्यं दत्तां कः वरुणश्च देवोमन्युश्च भियं भयं हृदयेषु दधानाः शत्रवोस्मद्विरोधिनः पराजितासः पराजिताः अपनिलयन्तां अपनिलीनाभवन्तु ॥ ७ ॥

॥ इत्यष्टमस्य तृतीये एकोनविंशोवर्गः ॥१९॥

॥ इति दशमे मण्डले षष्ठोनुवाकः ॥ ६ ॥

सप्तमेनुवाके षट् सूक्तानि तत्र सत्येनेति सप्तचत्वारिंशदृचं प्रथमं सूक्तं सवितृसुतायाः सूर्याया आर्षं नवोनवइति तिस्रः अनृक्षराइति द्वे गृभ्णामीति द्वे यदश्विनापृच्छमानावित्येका पूषात्वेतोनयत्वित्येका अघोरचक्षुरितिच एवमेतादशर्चस्त्रिष्टुभः । तृष्टमेतदित्येषा उरोबृहती अष्टकद्वादशकद्व्यष्टकवती । पूर्वापरंचरतइहप्रियंप्रजया आनःप्रजांजनयत्वित्येतास्तिस्रोजगत्यः । शिष्टास्त्रयस्त्रिंशदनुष्टुभः । आदितः पञ्चानामृचां सोमोदेवता तत एकादशभिः सूर्या स्वविवाहं स्तुतवती अतस्तत्रयोर्थः प्रतिपाद्यते सएव देवतात्वेन विज्ञेयः या तेनोच्यते सा देवतेति न्यायात् सप्तदश्यादेवादेवता अष्टादश्याः सोमार्कौ एकोनविंश्याश्चन्द्रमाः सुकिंशुकमित्याद्यानवर्चोविवाहमन्त्राः आशिषःप्रतिपादकाः अतस्तत्र प्रतिपाद्योर्थोदेवता परादेह्यश्रीरातनूरिति द्वे वध्वाः विवाहकाले परिहितस्य वाससः संस्पर्शनिन्दयित्र्यौ येवध्वश्चन्द्रमिति दंपत्योः क्षयरोगस्य नाशिनी अतस्तद्देवताका परिशिष्टानां षोडशानां सूर्या देवता । तथाचानुक्रान्तं— सत्येनसप्तचत्वारिंशत्सर्वमनुक्रान्तं । सूक्त विनियोगोलैंगिकः ।

तत्र प्रथमा—

सत्येनोत्तंभिताभूमिःसूर्येणोत्तंभिताद्यौः ।
ऋतेनादित्यास्तिष्ठन्तिदिविसोमोअधिश्रितः ॥ १ ॥

सत्येन । उत्तंभिता । भूमिः । सूर्येण । उत्तंभिता । द्यौः । ऋतेन ।
आदित्याः । तिष्ठन्ति । दिवि । सोमः । अधि । श्रितः ॥ १ ॥

सत्येन ब्रह्मणा अनन्तात्मना ब्रह्मा खलु देवानां मध्ये सत्यभूतः तेनाधःस्थितेन भूमिरुत्तभिता उपरिस्तंभिता यथा अधोन पतेत्तथा कृता यद्वा सत्येनानृतप्रतियोगिना धर्मेण भूमिरुत्तभिता उद्धृता फलिता भवतीत्यर्थः । असति सत्ये भूम्यां सस्यादयोन फलन्ति तथा सू-

र्येण देवेन द्यौरुत्तभिता सूर्योहि द्युस्थानत्वात् दिवं दधार ऋतेन यज्ञेन आदित्याः अदितेः पुत्रादेवास्तिष्ठन्ति यज्ञेन यजमानदत्तेन खल्वाहुत्या देवाउपजीवन्ति दिवि द्युलोके सोमोदेवतानामाप्यायनकारी वल्लीरूपोदेवतारूपश्चाधिश्रितः अधितिष्ठति इति स्वपतिं सोमं सूर्या स्तौति ॥ १ ॥

अथ द्वितीया—

सोमे॑नादि॒त्याब॒लिन॒ःसोमे॑नपृथि॒वीम॒ही ।
अथो॒नक्ष॑त्राणामे॒षामु॒पस्थे॒सोम॒आहि॑तः ॥ २ ॥

सोमे॑न । आ॒दि॒त्याः । ब॒लिन॑ः । सोमे॑न । पृ॒थि॒वी । म॒ही । अथो॒ इति॑ । नक्ष॑त्राणाम् । ए॒षाम् । उ॒पऽस्थे॑ । सोम॑ः । आऽहि॑तः ॥ २ ॥

सोमेनादित्याअदितेः पुत्राः इन्द्रादयोबलिनोभवन्ति ऐन्द्रवायवादिग्रहपरिग्रहादितिभावः तथा सोमेन आहुत्यात्मनाग्नौहुतेन पृथिवी भूमिः मही महती भवति आहुत्या वृष्टिद्वारेण सस्यादिसम्पत्तेः अथो अपिचायं सोमोनक्षत्राणामेषां नक्षं त्रायन्तइति नक्षत्राग्रहचमसादयः तेषामेषामुपस्थे सोमोरसात्मकआहितः यद्वा प्रसिद्धानामेव नक्षत्राणामुपस्थउपस्थाने द्युलोके सोमआहितः । तृतीयस्यामितोदिविसोमआसीत्तंगायत्र्याहरदित्यादिश्रुतेः । देवतारूपसोमपक्षे सोमेनादित्यादेवाबलिनोबलवन्तोभवन्ति तस्यैकैककलास्वादनात् । प्रथमांपिबतेवह्निर्द्वितीयांपिबतेरविरित्यादिस्मृतेः । सोमेन पृथिवी मही अमृतसेकेनोषध्याद्यभिवृद्धये पृथिव्याबलवत्वं चन्द्रस्य नक्षत्राणामुपस्थे स्थितिः प्रसिद्धा ॥ २ ॥

अथ तृतीया—

सोमं॑मन्यतेपपि॒वान्यत्सं॑पिं॒षन्त्योष॑धिम् ।
सोमं॒यंब्र॒ह्माणो॑वि॒दुर्न॑तस्या॑श्नाति॒कश्च॒न ॥ ३ ॥

सोम॑म् । म॒न्य॒ते॒ । प॒पि॒ऽवान् । यत् । स॒म्ऽपिं॒षन्ति॑ । ओष॑धिम् । सोम॑म् । यम् । ब्र॒ह्माण॑ः । वि॒दुः । न । तस्य॑ । अ॒श्ना॒ति॒ । कः । च॒न ॥ ३ ॥

१ तै० ब्रा० ३. २. १ ।

तं सोमं मन्यते कः पपिवान् वैधेन कामार्थं चिकित्साद्यर्थं पीतः सोमोयेन यत् यमित्यर्थः यंसोममोषधिं वल्लीरूपं संपिंषन्ति सामर्थ्याद्रासायनिकाः नच ससाक्षात्सोमः तर्हिकः उच्यते सोमं हितं मन्यते यं ब्राह्मणः यद्ब्रह्मशब्दोब्राह्मणशब्दपर्यायोस्ति कुतोनुचरसि ब्रह्मन् । तस्मै मान्नूयानिधियाय ब्रह्मन्नित्यादि प्रयोगात् । ब्राह्मणाइत्यर्थः तेच ऋत्विजोयजमानाश्च यागसाधनभूतं संस्कर्तुं विदुर्जानन्ति तं तस्यांसं यद्वा कर्मणि षष्ठी तं सोमं कश्चनाश्नाति कश्चिदप्ययज्वेति शेषः यज्वैनं भक्षितुमर्हति नान्यइत्यर्थः एवमोषधिपक्षे । अथ चन्द्रपक्षउच्यते—तं सोमं मन्यते पपिवान् पीतवान् पीतसोमोयजमानः यत् यमोषधिरूपं संपिंषन्ति अभिषवग्रावभिरध्वर्य्वादयोयजमानाश्च नच ससोमः कस्तर्हि यं ब्रह्माणोब्राह्मणाअभिज्ञादैवज्ञाविदुः कथयन्ति चन्द्रमसं । नतस्याश्नातिकश्चनदेवोदेवेभ्योन्योमनुष्यादिः देवाअग्न्यादयोरश्मयोवा यज्ञार्हसोमस्यासोमत्वं न निन्दायै अपितु इतरस्य स्तुत्या इति मन्तव्यं । अपशवोन्ये गोअश्वेभ्यइत्यादिवत् । एवमत्र सौम्याउभयथा योज्याः ॥ ३ ॥

अथ चतुर्थी—

आच्छद्विधानैर्गुपितोबार्हतैःसोमरक्षितः ।
ग्राव्णामिच्छृण्वन्तिष्ठसिनतेअश्नातिपार्थिवः ॥ ४ ॥

आच्छत्ऽविधानैः । गुपितः । बार्हतैः । सोम । रक्षितः । ग्राव्णाम् ।
इत् । शृण्वन् । तिष्ठसि । न । ते । अश्नाति । पार्थिवः ॥ ४ ॥

हे सोम आच्छद्विधानैः आच्छादयन्ति विधानानि येषां ते आच्छद्विधानाः तैर्गुपितः तथा बार्हतैः गुपितः स्वानभ्राजांघार्यादिभिः सप्तभिः सोमपालैरक्षितस्त्वं एते वाअमुष्मिन्लोके सोममरक्षन्नितिब्राह्मणं । ग्राव्णामिच्छृण्वन् अभिषवग्राव्णां ध्वनिं शृण्वन्नेव तिष्ठसि ते त्वां पार्थिवः पार्थिवो जनः नाश्नाति नहि द्युस्थश्चन्द्ररूपः सोमोत्रत्यैः पानयोग्योभवति । चन्द्रमा-वैसोमोदेवानामन्नं तं पौर्णमास्यामभिषुण्वन्तीति वाजसनेयकं ॥ ४ ॥

---

१ तै०सं० ६. १. १० ।

अथ पञ्चमी–

यत्त्वांदेवप्रपिबंन्तिततआप्यायसेपुनंः ।
वायुःसोमंस्यरक्षितासमानांमासआकृंतिः ॥ ५ ॥ २० ॥

यत् । त्वा । देव । प्रऽपिबंन्ति । ततंः । आ । प्यायसे । पुनरितिं ।
वायुः । सोमंस्य । रक्षिता । समानाम् । मासंः । आऽकृंतिः ॥५॥२०॥

हे देव सोम यद्यदा त्वा त्वां प्रपिबन्त्योषधिरूपंत्रिष्वपि सवनेषु ततोनन्तरमेव पुनराप्यायसे आप्यायस्व समिति प्रातःसवने सन्तेपयांसीत्युत्तरयोः सवनयोराप्यायसे । किंच वायुस्तव सोमस्य रक्षिता यथा न शुष्यसि तथा । वायुः शोषकः प्रसिद्धोलोके । किंच मासः मस्यते परिमीयते इति मासः सोमः सच समानां संवत्सराणामाकृतिः आकर्ता व्यवच्छेदकोभवति संवत्सरे संवत्सरे वसन्तादिकालेष्वनुष्ठीयमानत्वात् वसन्तेवसन्ते ज्योतिषायजेतेतिश्रुतेः । यद्वा सोमाधारवनस्पतिविकारग्रहद्वारेण वायुः सोमस्य रक्षिता भवति । वायुर्गोपावनस्पतयइति श्रुतेः । एवं वल्लीरूपसोमपक्षे योजना । चन्द्रपक्षेतु हे देव सोम यद्यदा त्वा त्वां प्रपिबन्ति रश्मयोऽपरपक्षे ततः अनन्तरमेव पूर्वपक्षे पुनराप्यायसे वायुश्च सोमस्य तव रक्षिता वाय्वधीनत्वाच्चन्द्रगतेः । किंच समानां संवत्सराणां मासः षष्ठ्येकवचनमेतत् मासस्य चाकृतिः कर्ता त्वं चास्यैकैककलाह्रासवृद्धिभ्यांहि मासः पूर्यते तैः संवत्सरइति ॥ ५ ॥

॥ इत्यष्टमस्य तृतीये विंशोवर्गः ॥ २० ॥

अथ षष्ठी–

रैभ्यांसीदनुदेयींनाराशंसीन्योचंनी ।
सूर्यायाभद्रमिद्वासोगाथंयैतिपरिष्कृतम् ॥ ६ ॥

रैभी । आसीत् । अनुऽदेयीं । नाराशंसी । निऽओचंनी । सूर्यायाः ।
भद्रम् । इत् । वासंः । गाथंया । एति । परिंऽकृतम् ॥ ६ ॥

आभिः सूर्या स्वविवाहमस्तौदित्युक्तं सूर्यासावित्रीब्रूते रैभी रैभ्यः काश्चन ऋचः । रैभीः शंसति रेभन्तोवैदेवाश्चऋषयश्च स्वर्गं लोकमायन्नित्यादिब्राह्मणविहिताः रैभ्यः । सा रैभीअनुदेय्यासीत् यजमानवधूविनोदनायानुदीयमाना वयस्यासीत् । तथा नाराशंसी प्रातारत्नमित्यादिका मनुष्याणां स्तुतयो नाराशंस्यः सा नाराशंसी न्योचनी उचतिः सेवाकर्मा सा वधूशुश्रूषार्थं दीयमाना दास्यभवत् । सूर्यायामम भद्रं वासः विचित्रदुकूलादिकमाच्छादन योग्यं वस्त्रं गाथया परिष्कृतमलंकृतमेति । गाथा गीयते इत्यादिब्राह्मणोक्तागाथा तया गाथया परिष्कृतमस्ति तद्वासोभवदिति ॥ ६ ॥

अथ सप्तमी–

चित्तिराउपबर्हणंचक्षुराअभ्यञ्जनम् ।
द्यौर्भूमिःकोशआसीद्यदयात्सूर्यापतिम् ॥ ७ ॥

चित्तिः । आः । उपऽबर्हणम् । चक्षुः । आः । अभिऽअञ्जनम् । द्यौः । भूमिः । कोशः । आसीत् । यत् । अयात् । सूर्या । पतिम् ॥ ७ ॥

चित्तिर्देवता उपबर्हणं आः आसित् चक्षुरभ्यञ्जनं आः आसीत् तथाहि वृत्रस्य कनीनिका परापतत् त्रिककुन्नामपर्वतः तेनत्रैककुदेनाञ्जनेन सजातीयेन चक्षुषी अञ्जेत तच्चक्षुरेवाञ्जनमासीत् इति द्यौश्च भूमिश्च कोशः आसीत् कोशस्थानीये अभूतां यद्यदा सूर्यापतिं स्वकीयं नवभर्तारं सोमं आयात् अगच्छत् तदेवमुपकरणान्यासन् ॥ ७ ॥

अथाष्टमी–

स्तोमाआसन्प्रतिधयःकुरीरंछन्दओपशः ।
सूर्यायाअश्विनावराग्निरासीत्पुरोगवः ॥ ८ ॥

स्तोमाः । आसन् । प्रतिऽधयः । कुरीरम् । छन्दः । ओपशः । सूर्यायाः । अश्विना । वरा । अग्निः । आसीत् । पुरःऽगवः ॥ ८ ॥

---

१ ऐ० ब्रा० ६. ३२ ।

सूर्यायारथस्य स्तोमाः त्रिवृदादयः प्रतिधयआसन् प्रतिधीयन्तइति प्रतिधयः ईषातिर्यं गायत्रकाष्ठादयः तथा कुरीरं छन्दः कुरीरनामकं छन्दः अनसः ओपशोभवत् येनोपशेरते सओपशः तादृशायाः सूर्यायाअश्विना अश्विनौ वरा वरौ आस्तामिति शेषः तस्याविवाहे पुरोगवः पुरोगन्ता पुरतोगन्ता यः पूर्वमेव प्रस्तावार्थं गच्छति तत्स्थानीयोग्निरासीत् । प्रजापतिर्वै सोमायराज्ञेदुहितरंप्रायच्छत् सूर्यांसावित्रीं तस्यैसर्वेदेवावराआगच्छन्नित्यादिहिब्राह्मणं। अत्राय मभिप्रायः प्रजापतिः सविता स्वदुहितरं सोमाय प्रायच्छत् सोमाय दास्यामीति मनीषामकरोत् तस्मिन्समये पुत्र्याउपचारार्थं प्रदानान्युक्तान्यभवन् तथाच सत्यश्विनौ प्रबलौ सन्तौ आजिं पुरतोगत्वा तामलभेतामिति उत्तरत्रापि सोमोवधूयुरभवदित्यादिनायमेवार्थः स्पष्टोभविष्यति । योषावृणीतजेन्येत्यादिकंमुक्तम् ॥ ८ ॥

अथ नवमी—

सोमो॑वधू॒युर॑भवद॒श्विना॑स्तामु॒भावरा ।
सू॒र्यां॑यत्पत्ये॒शंस॑न्तीं॒मन॑सासवि॒तादंदात् ॥ ९ ॥

सोम॑ः । व॒धू॒ऽयुः । अ॒भ॒व॒त् । अ॒श्विना॑ । आ॒स्ता॒म् । उ॒भा । व॒रा ।
सू॒र्याम् । यत् । पत्यै॑ । शंस॑न्तीम् । मन॑सा । स॒वि॒ता । अद॑दात् ॥ ९ ॥

सोमोवधूयुर्वधूकामोवरोभवत् तस्मिन् समये अश्विना अश्विनौ उभा उभौ वरा वरौ आस्तां अभूतां यद्यदा सूर्यां पत्ये शंसन्तीं पतिं कामयमानां पर्याप्तयौवनामित्यर्थः सूर्यां मनसासहिताय सोमाय वराय सवितातत्पिता ददात् प्रादात् दित्सांचकार ॥ ९ ॥

अथ दशमी—

मनो॑अस्या॒अन॑आसी॒द्द्यौरा॑सीदु॒तच्छ॒दिः ।
शु॒क्राव॑न॒ड्वाहा॑वास्तां॒यदया॑त्सू॒र्यागृ॒हम् ॥ १० ॥ २१ ॥

मन॑ः । अ॒स्याः॒ । अन॑ः । आ॒सी॒त् । द्यौः । आ॒सी॒त् । उ॒त । छ॒दिः ।
शु॒क्रौ । अ॒न॒ड्वाहौ॑ । आ॒स्ता॒म् । यत् । अया॑त् । सू॒र्या । गृ॒हम् ॥ १० ॥ २१ ॥

---

१ ऐ० ब्रा० ४. ७ । २ ऋ० सं० १. ८. २० ।

अस्याः सूर्यायाः पत्युर्गृहं गच्छन्त्याः अनोरथोमनआसीत् या पतिगृहं त्वया गच्छामीति मतिरस्ति सा अनआसीत् उतापिच तस्याअनसोद्यौर्द्युलोकः छदिः उपर्यपिधानमासीत् शुक्रौ दीप्तौ सूर्याचन्द्रमसावनड्वाहौ रथस्य वोढारौ आस्तां अभवतां यद्यदा सूर्यागृहं सोमम-यादगात् ॥ १० ॥

॥ इत्यष्टमस्य तृतीये एकविंशोवर्गः ॥ २१ ॥

अथैकादशी—

ऋक्सामाभ्यामभिहितौगावौतेसामनावितः ।
श्रोत्रंतेचक्रेआस्तांदिविपन्थाश्चराचरः ॥ ११ ॥

ऋक्ऽसामाभ्याम् । अभिऽहितौ । गावौ । ते । सामनौ । इतः ।
श्रोत्रम् । ते । चक्रे इति । आस्ताम् । दिवि । पन्थाः । चराचरः ॥ ११ ॥

हे सूर्ये देवि ते तव ऋक्सामाभ्यां अभिधानीस्थानाभ्यां अभिहितौ गावौ गोस्थानीयौ सूर्याचन्द्रमसौ सामनौ सामानौ सन्तौ इतोगच्छतः अनोवाहौ पत्युर्गृहं प्रति गच्छतः ते तव श्रोत्रं श्रोत्रे इत्यर्थः वरस्य गुणग्राहिणी श्रोत्रे एव चक्रे आस्तां मनोरूपस्य रथस्य श्रोत्रे चक्रे अभवतामित्यर्थः दिवि पंथाश्चराचरः चलाचलः अत्यन्तं गमनसाधनभूतोमार्गोऽभूत् रथसंचारप्रदेशोद्युलोकआसीत् ॥ ११ ॥

अथ द्वादशी—

शुचीतेचक्रेयात्याव्यानोअक्षआहतः ।
अनोमनस्मयंसूर्यारोहत्प्रयतीपतिम् ॥ १२ ॥

शुची इति । ते । चक्रे इति । यात्याः । विऽआनः । अक्षः । आऽहतः ।
अनः । मनस्मयम् । सूर्या । आ । अरोहत् । प्रऽयती । पतिम् ॥ १२ ॥

यान्त्या गच्छन्त्यास्ते तव अनसश्चक्रे चंक्रमणशीले रथांगे शुची श्रोत्रे आस्तां व्यानस्तव व्यानोवायुः अक्षः उभयरथच्छिद्रगामिनी या काष्ठा सा च रथस्य सर्वं भारं वहति सोक्षोव्यानोभूत् मनस्मयं मनोमयं अनः शकटं सूर्या पतिं सोमं प्रति प्रयती प्रकर्षेण गच्छन्ती

आरुहत् आरूढवती पतिं प्रतिजिगमिषोर्मनोरूपस्य रथस्य पत्युर्गुणश्राविणी श्रोत्रे एव चक्रे अभूतां व्यानोधारकोवायुश्चेत्यष्टकोऽक्षोभूदित्यर्थः ॥ १२ ॥

अथ त्रयोदशी—

सूर्यायांवहतुःप्रागात्सवितायमवासृजत् ।
अघासुहन्यन्तेगावोर्जुन्योःपर्युह्यते ॥ १३ ॥

सूर्यायाः । वहतुः । प्र । अगात् । सविता । यम् । अवऽअसृजत् ।
अघासु । हन्यन्ते । गावः । अर्जुन्योः । परि । उह्यते ॥ १३ ॥

सोमाय प्रदित्सितायाः सूर्यायाः वहतुः कन्याप्रियार्थं दातव्योगवादिपदार्थो वहतुः सच प्रागात् तस्याअपि पूर्वमगच्छत् यं वहतुं सविता अस्याः पिता अवासृजत् अवसृष्टवान् प्रादादित्यर्थः कदा सागच्छत् कदा वहतुरिति उभयोः कालउच्यते अघासु मघास्वित्यर्थः मघानक्षत्रेषु गावः सवित्रा दत्तागावः सोमगृहं प्रतिहन्यन्ते दण्डैः ताडयन्ते प्रेरणार्थं अर्जुन्योः फाल्गुन्योरित्यर्थः तयोर्नक्षत्रयोः सवितुः सकाशात् परि सोमगृहं प्रतिउह्यतेनीयतेरथेन ॥ १३ ॥

अथ चतुर्दशी—

यदश्विनापृच्छमानावयातंत्रिचक्रेणवहतुंसूर्यायाः ।
विश्वेदेवाअनुतद्वामजानन्पुत्रःपितरावरणीतपूषा ॥ १४ ॥

यत् । अश्विना । पृच्छमानौ । अयातम् । त्रिऽचक्रेण । वहतुम् ।
सूर्यायाः । विश्वे । देवाः । अनु । तत् । वाम् । अजानन् ।
पुत्रः । पितरौ । अवृणीत । पूषा ॥ १४ ॥

हे अश्विना अश्विनौ यद्यदा पृच्छमानौ सवितारं प्रष्टुं आयातं गच्छतं केन साधनेनायातं तदुच्यते त्रिचक्रेण चक्रत्रययुक्तेन रथेन किं पृच्छमानौ सूर्याया वहतुं विवाहमित्यर्थः तत्तदानीं वां युवां सवितारं प्रतिगच्छन्तौ विश्वे सर्वे देवाः अन्वजानन् अनुज्ञातवन्तः । तथा पितरौ पुत्रः अश्विनोः पुत्रः पूषा अवृणीत वृतवान् ॥ १४ ॥

अथ पञ्चदशी—

यदयांतंशुभस्पतीवरेयंसूर्यामुपं।
क्वैकंचक्रंवांमासीत्क्वंदेष्ट्रायंतस्थथुः ॥ १५ ॥ २२ ॥

यत्। अयांतम्। शुभः। पती इति। वरेऽयम्। सूर्याम्। उपं।
क्वं। एकम्। चक्रम्। वाम्। आसीत्। क्वं। देष्ट्रायं।
तस्थथुः ॥ १५ ॥ २२ ॥

हे शुभस्पती उदकस्य स्वामिनौ यत् यौ अयातं अगच्छतं कं प्रति वरेयं वरणीयायाः सूर्यायाः संबन्धिनं वरेयाचितव्यं वा सवितारमित्यर्थः। किमर्थं सूर्यामुपगन्तुं वां भवतोः संप्रति दृश्यमानमिदं एकं चक्रं क्वासीत् पुरा क्व वां युवां देष्ट्राय दानाय प्रवृत्तौ तस्थथुरित्यश्विनोर्निवासंपृच्छति ॥ १५ ॥

॥ इत्यष्टमस्य तृतीये द्वाविंशोवर्गः ॥ २२ ॥

अथ षोडशी—

द्वेतेंचक्रेसूर्येब्रह्माणंऋतुथाविंदुः।
अथैकंचक्रंयद्गुहातदंद्धातयइद्विंदुः ॥ १६ ॥

द्वे इति। ते। चक्रे इति। सूर्ये। ब्रह्माणः। ऋतुऽथा। विदुः।
अथं। एकम्। चक्रम्। यत्। गुहां। तत्। अद्धातयः।
इत्। विदुः ॥ १६ ॥

अथ स्वयमेव स्वात्मानं प्रति सूर्या वदति। हे सूर्ये ते तव द्वे चक्रे प्रज्ञाते पुरा दृष्टे द्वे एव चन्द्रसूर्यात्मके ऋतुथा ऋतुषु विनिर्दिष्टे चक्रे ब्रह्माणोब्राह्मणाविदुः अथैकं चक्रं तृतीयं संवत्सरात्मकं गुहा गुहायां निहितं यदस्ति तदद्धातयइत् एतन्मेधाविनामसुपठितं मेधाविनएव विदुर्जानन्ति ॥ १६ ॥

अथ सप्तदशी—

सूर्यायैदेवेभ्योमित्रायवरुणायच ।
येभूतस्यप्रचेतसइदंतेभ्योकरंनमः ॥ १७ ॥

सूर्यायै । देवेभ्यः । मित्राय । वरुणाय । च । ये । भूतस्य ।
प्रऽचेतसः । इदम् । तेभ्यः । अकरम् । नमः ॥ १७ ॥

सूर्यायै सूर्यस्य पत्न्यै देवेभ्योऽग्न्यादिभ्योमित्राय वरुणाय च ये च भूतस्य भूतजातस्य प्रचेतसः सुमतयः अभिमतप्रदाभवन्ति तेभ्यः सर्वेभ्यः इदं नमः नमस्कारमकरं करोमि ॥ १७ ॥

अथाष्टादशी—

पूर्वापरंचरतोमाययैतौशिशूक्रीळन्तौपरियातोअध्वरम् ।
विश्वान्यन्योभुवनाभिचष्टऋतूँरन्योविदधज्जायतेपुनः ॥ १८ ॥

पूर्वऽअपरम् । चरतः । मायया । एतौ । शिशू इति । क्रीळन्तौ ।
परि । यातः । अध्वरम् । विश्वानि । अन्यः । भुवना । अभिऽचष्टे ।
ऋतून् । अन्यः । विऽदधत् । जायते । पुनरिति ॥ १८ ॥

कश्चित् पूर्वं गच्छति सूर्यः अन्यस्तमनुचरति चन्द्रमाः एवं पूर्वापरं पौर्वापर्येण मायया स्वप्रज्ञानेन एतौ आदित्यचन्द्रौ चरतो गच्छतो दिवि तौ शिशू शिशुवद्भ्रमणाज्जायमानत्वाद्वा शिशूइत्युच्येते शिशूसन्तौ क्रीळन्तौ अन्तरिक्षे विहरन्तौ अध्वरं परियातः यज्ञं प्रति गच्छतः तयोरन्यआदित्योविश्वानि भुवना भुवनान्यभिचष्टे अभिपश्यति ऋतून् वसन्तादीन् अन्यश्चन्द्रमाः विदधत् कुर्वन् मासानर्धमासांश्च कुर्वन् पुनःपुनर्जायते यद्यप्युभयोरपि पुनर्जनिरस्ति तथापि सूर्यस्य सर्वदा प्रवृद्धेः उभयोर्नाभिप्रेतः चन्द्रस्य तु ह्रासवृद्धिसद्भावात् पुनःपुनर्जायतइत्युक्तिर्युक्ता चन्द्रमावैजायतेपुनरित्यादिश्रुतेश्च ॥ १८ ॥

अतिमूर्तिनाम्न्येकाहे शुक्लपक्षे चान्द्रमसीष्टिः तत्र नवोनवइत्येषा याज्या । सूत्रितं च—नवोनवोभवतिजायमानस्तरणिर्विश्वदर्शतइति ।

---

१ तै०सं० ७. ४. १९.।

सैषा एकोनविंशी—

नवोंनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रम् ।
भागंदेवेभ्योविदधात्यायन्प्रचन्द्रमांस्तिरतेदीर्घमायुः॥१९॥

नवःऽनवः । भवति । जायमानः । अह्नाम् । केतुः । उषसाम् ।
एति । अग्रम् । भागम् । देवेभ्यः । वि । दधाति । आऽयन् ।
प्र । चन्द्रमाः । तिरते । दीर्घम् । आयुः ॥ १९ ॥

अयं चन्द्रमाजायमानः प्रतिदिनं जायमानएकैककलाधिक्येनोत्पद्यमानः सन् नवोनवो-भवति प्रतिदिनं नवनवएव भवति एतत्पूर्वपक्षाद्यभिप्रायं तथा अह्नां दिवसानां केतुः प्रज्ञापकः प्रतिपदादीनां तिथीनां चन्द्रकलाह्रासवृद्ध्यधीनत्वात् तादृशश्चन्द्रमाउषसां प्रभातानामग्रमेति एतत्कृष्णपक्षान्ताभिप्रायं । केचनैनं पादं आदित्यदैवतमाहुः तस्मिन्पक्षेऽह्नां केतुत्वं उषसामग्रग-तिश्च प्रसिद्धेभ्योदेवेभ्योभागं हविर्भागं विदधाति करोति उभयपक्षान्ते किंकुर्वन् आयन् प्र-तिदिनं ह्रासवृद्ध्या पक्षान्तमभिगच्छन् एतदर्धमासाभिप्रायं चन्द्रमाउक्तलक्षणोदेवोदीर्घमायुस्ति-रते वर्धयति ॥ १९ ॥

अथ विंशी—

सुकिंशुकंशल्मलिंविश्वरूपंहिरण्यवर्णंसुवृतंसुचक्रम् ।
आरोहसूर्येअमृतस्यलोकंस्योनंपत्येवहतुंकृणुष्व ॥ २० ॥ २३ ॥

सुऽकिंशुकम् । शल्मलिम् । विश्वऽरूपम् । हिरण्यऽवर्णम् ।
सुऽवृतम् । सुऽचक्रम् । आ । रोह । सूर्ये । अमृतस्य । लोकम् ।
स्योनम् । पत्ये । वहतुम् । कृणुष्व ॥ २० ॥ २३ ॥

सुकिंशुकं शोभनकिंशुकवृक्षनिर्मितं तथा शल्मलिं शल्मलिवृक्षनिर्मितं विश्वरूपं मा-मारूपं हिरण्यवर्णं हितरमणीयवर्णं हिरण्यालंकारयुक्तंवा सुवृतं सुष्ठुवर्तनं सुचक्रं शोभनच-

क्रोपेतं रथं हे सूर्ये आरोह अमृतस्यलोकं स्थानं स्योनं सुखकरं पत्ये सोमाय वहतुं वहनमात्मनः प्रापणंकृणुष्व कुरुष्व । अत्र निरुक्तं द्रष्टव्यं ॥ २० ॥

॥ इत्यष्टमस्य तृतीये त्रयोविंशोवर्गः ॥ २३ ॥

अथैकविंशी—

उदीर्ष्वातःपतिवतीह्येषाविश्वावसुंनमसागीर्भिरीळे ।
अन्यामिच्छपितृषदंव्यक्तांसतेभागोजनुषातस्यविद्धि ॥ २१ ॥

उत् । ईर्ष्व । अतः । पतिऽवती । हि । एषा । विश्वऽवसुम् ।
नमसा । गीःऽभिः । ईळे । अन्याम् । इच्छ । पितृऽसदम् ।
विऽअक्ताम् । सः । ते । भागः । जनुषा । तस्य । विद्धि ॥ २१ ॥

आभिर्नृणां विवाहः स्तूयते—हेविश्वावसो अतःस्थानात् कन्यासमीपात् उदीर्ष्व उत्तिष्ठ एषा कन्या पतिवतीहि संजाता अतउदीर्ष्वेतिवा अतः शब्दोयोज्यः । विश्वावसुं एतन्नामानं गंधर्वं नमसा नमस्कारेण गीर्भिः स्तुतिभिश्च ईळे स्तौमि तर्हि एनां विहाय कां स्वीकरोमीति यदिब्रूषे तर्हि अन्यां पितृषदं पितृकुले स्थितां व्यक्तां अनूढेति परिस्फुटां विगतांजनांवा स्तनोद्गमादिरादित्येनाप्रौढामित्यर्थः सतादृशः पदार्थस्तेतव भागः कल्पितः तस्य तं भागं विद्धि-जानीहि जनुषा जन्मनालभस्वेत्यर्थः ॥ २१ ॥

अथ द्वाविंशी—

उदीर्ष्वातोविश्वावसोनमसेळामहेत्वा ।
अन्यामिच्छप्रफर्व्यं[1]संजायांपत्यासृज ॥ २२ ॥

उत् । ईर्ष्व । अतः । विश्ववसो इति विश्वऽवसो । नमसा ।
ईळामहे । त्वा । अन्याम् । इच्छ । प्रऽफर्व्यम् । सम् ।
जायाम् । पत्या । सृज ॥ २२ ॥

---

१ नि० १२.८ ।

अतोस्माच्छयनात् हेविश्वावसो कन्यास्वामिन् गन्धर्व उदीर्ष्व उद्गच्छ ईरगतौ आदादिकः अनुदात्तेत् तस्य लोटिरूपं विश्वावसुर्नामगन्धर्वः कन्यानामधिपतिर्यतः । लभामि ते नकन्यामिति हिमन्त्रः । तादृश देव त्वां नमसा नमस्कारेण ईळामहे स्तुमः सत्वमन्यां प्रफर्व्यं बृहन्नितंबां कन्यामिच्छ जायां मां पत्यासह पुनः संसृज ॥ २२ ॥

अथ त्रयोविंशी—

**अनृक्षराऋजवःसन्तुपन्थायेभिःसखायोयन्तिनोवरेयम् ।**
**समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः ॥ २३ ॥**

अनृक्षराः । ऋजवः । सन्तु । पन्थाः । येभिः । सखायः । यन्ति । नः । वरेऽयम् । सम् । अर्यमा । सम् । भगः । नः । निनीयात् । सम् । जाःपत्यम् । सुऽयमम् । अस्तु । देवाः ॥ २३ ॥

हे देवाः पन्थाः पन्थानोमार्गाः अनृक्षराः ऋक्षरः कण्टकउच्यते । कंटकरहिताऋजवः अकुटिलाश्च सन्तु येभिर्यैः पथिभिः नोस्माकं सखायोवरप्रेषितावरेयं वरैर्याचितव्यं पितरं प्रति यन्ति गच्छन्ति तेपंथाइति । किंच अर्यमादेवोनोस्मान् संनिनीयात् सम्यक्प्रापयेत् । तथा भगोदेवः संनिनीयात् । हेदेवाआसंगतमस्तु पतिकुलमिति शेषः तथा इदं जास्पत्यं जायापत्योर्युगलं सुयममस्तु सुमिथुनमस्तु ॥ २३ ॥

पत्न्यायोक्त्रविमोचने प्रत्वामुंचामीत्येषा । सूत्रितंच—अथास्यायोक्त्रंविचृतेत्प्रत्वामुंचामिवरुणस्यपाशादिति ।

सैषा चतुर्विंशी—

**प्रत्वामुञ्चामिवरुणस्यपाशाद्येनत्वाबध्नात्सवितासुशेवः ।**
**ऋतस्ययोनौसुकृतस्यलोकेरिष्टांत्वासहपत्यादधामि ॥ २४ ॥**

प्र । त्वा । मुञ्चामि । वरुणस्य । पाशात् । येन । त्वा । अबध्नात् । सविता । सुऽशेवः । ऋतस्य । योनौ । सुऽकृतस्य । लोके । अरिष्टाम् । त्वा । सह । पत्या । दधामि ॥ २४ ॥

जातं प्राणिनं सवित्रा प्रेरितोवरुणआत्मपाशैर्बध्नाति तस्मात् वरुणस्य पाशात् हेवधु त्वा त्वां प्रमुंचामि येनपाशेन त्वा त्वां सविता वरुणस्य प्रेरकः सुशेवः सुसुखोबध्नात् बन्धनं कृतवान् यज्ञांगपक्षे पत्नीं योक्त्रेण बध्नाति बन्धनस्य वरुणोभिमानी अतोवरुणपाशात् योक्त्रात् प्रमुंचामि येन योक्त्रेण सविता कर्मणामनुज्ञाता देवकृत्विक्पाशेनाबध्नात् तं मोचयित्वा च कृतस्य यज्ञस्य योनौ स्थाने यागभूमौ सुकृतस्य लोके कर्मक्षेत्रे भूलोकेच अरिष्टां अहिंसितां पुत्राद्यर्थं पत्यासह दधामि स्थापयामि ॥ २४ ॥

अथ पञ्चविंशी—

प्रेतोमुञ्चामिनामुतःसुबद्धाममुतस्करम् ।
यथेयमिन्द्रमीढ्वःसुपुत्रासुभगासति ॥ २५ ॥ २४ ॥

प्र । इतः । मुञ्चामि । न । अमुतः । सुऽबद्धाम् ।
अमुतः । करम् । यथा । इयम् । इन्द्र । मीढ्वः ।
सुऽपुत्रा । सुऽभगा । असति ॥ २५ ॥ २४ ॥

इतः पितृकुलात्प्रमुंचामि त्वां नामुतोभर्तृगृहात्प्रमुंचामि अमुतोभर्तृगृहे सुबद्धां करं यथेयं कन्या हेइन्द्र मीढ्वः सेक्तः सुपुत्रा सुभगा सुष्ठुभाग्यावा सति भवति तथा कुरु ॥ २५ ॥

॥ इत्यष्टमस्य तृतीये चतुर्विंशोवर्गः ॥ २४ ॥

विवाहानन्तरभाविनि प्रयाणे पूषात्वेतोनयत्वित्यनया रथादियानमारोहयेत् । सूत्रितं च—पूषात्वेतोनयतुहस्तगृह्येतियानमारोहयेदिति ।

सैषा षड्विंशी—

पूषात्वेतोनंयतुहस्तगृह्याश्विनांत्वाप्रवंहतांरथेन ।
गृहान्गंच्छगृहपंत्नीयथासोंवशिनीत्वंविदथमावंदासि ॥ २६ ॥

पूषा । त्वा । इतः । नयतु । हस्तऽगृह्य । अश्विना । त्वा । प्र ।
वहताम् । रथेन । गृहान् । गच्छ । गृहऽपत्नी । यथा । असः ।
वशिनी । त्वम् । विदथम् । आ । वदासि ॥ २६ ॥

हस्तगृह्य ग्राह्यहस्तः पूषा त्वा त्वामितोनयतु प्रापयतु अश्विना अश्विनौ त्वा त्वां रथेन प्रवहतां प्रगमयतां गृहान् भर्तृसंबन्धिनोगच्छ त्वं गृहपत्नीयथासः भवसि गृहस्वामिनी भवसि वशिनीसर्वेषां गृहगतानां वशं प्रापयित्री पत्युर्वशे वर्तमाना वा विदथं पतिगृहं आवदासि आवदसि गृहस्थितं भृत्यादिजनमावद ॥ २६ ॥

इहप्रियमित्येषा वध्वागृहप्रवेशनी । सूत्रितंच—इहप्रियंप्रजयातेसमृध्यतामिति गृहं प्रवेशयेदिति ।

सैषा सप्तविंशी—

**इ॒ह प्रि॒यं प्र॒जया॑ ते॒ सम्‌ऋ॑ध्यताम॒स्मिन्गृ॒हे गार्ह॑पत्याय जागृहि ।**
**ए॒ना पत्या॑ त॒न्वं१ सं सृ॑ज॒स्वाधा॒ जिव्री॑ वि॒दथ॒मा व॑दाथः ॥ २७ ॥**

इ॒ह । प्रि॒यम् । प्र॒ऽजया॑ । ते॒ । सम् । ऋ॒ध्य॒ता॒म् । अ॒स्मिन् । गृ॒हे । गार्ह॑ऽपत्याय । जा॒गृ॒हि॒ । ए॒ना । पत्या॑ । त॒न्व॑म् । सम् । सृ॒ज॒स्व॒ । अध॑ । जिव्री॒ इति॑ । वि॒दथ॑म् । आ । व॒दा॒थः॒ ॥ २७ ॥

हे वधु ते तव इहास्मिन् पतिकुले प्रियं प्रजयासह समृध्यतां अस्मिन् गृहे गार्हपत्याय गृहपतित्वाय जागृहि बुध्यस्व एना अनेन पत्या सह तन्वं स्वीयं शरीरं संसृजस्व संसृष्टाभव अधाथ जिव्री जीर्णौ जायापती युवां विदथं गृहमावदाथः आभिमुख्येन वदतं ॥ २७ ॥

अथाष्टाविंशी—

**नी॒ल॒लो॒हि॒तं भ॑वति कृ॒त्यास॒क्तिर्व्य॑ज्यते ।**
**एध॑न्ते अस्या ज्ञा॒तय॒ः पति॑र्ब॒न्धेषु॑ बध्यते ॥ २८ ॥**

नी॒ल॒ऽलो॒हि॒तम् । भ॒व॒ति॒ । कृ॒त्या । आ॒स॒क्तिः । वि । अ॒ज्य॒ते॒ । एध॑न्ते । अ॒स्याः॒ । ज्ञा॒तयः॑ । पतिः॑ । ब॒न्धेषु॑ । ब॒ध्य॒ते॒ ॥ २८ ॥

कृत्याअभिचाराभिमानिनी देवता नीललोहितं भवति नीलंचलोहितंच तस्यारूपं भवतीत्यर्थः । सा कृत्यासक्तिः आसक्ता अस्यां संबद्धा व्यज्यतेतयज्यतेइत्यर्थः तस्यां कृत्यायामपगतायां अस्यावध्वाज्ञातयएधन्ते वर्धन्ते पतिर्बन्धेषु सांसारिकेषु बध्यते ॥ २८ ॥

अथैकोनत्रिंशी—

**परादेहिशामुल्यंब्रह्मभ्योविभजावसु ।**
**कृत्यैषापद्वतीभूत्व्याजायाविशतेपतिम् ॥ २९ ॥**

परा । देहि । शामुल्यम् । ब्रह्मऽभ्यः । वि । भज । वसु । कृत्या ।
एषा । पत्ऽवती । भूत्वी । आ । जाया । विशते । पतिम् ॥ २९ ॥

शामुल्यं शामुलमित्यर्थः शमलं शारीरमलं शरीरावच्छन्नस्य मलस्य धारकं वस्त्रं परादेहि परात्यज धृतप्रायश्चित्तार्थं ब्रह्मभ्योब्राह्मणेभ्योवसुधनं विभज प्रयच्छेत्यर्थः । किमर्थं वधूवासःपरित्यागइतिचेत् उच्यते—एषा कृत्या पद्वती पादवती सती जायाभूत्वी भूत्वा पतिं विशते कृत्यारूपवासःप्रवेशात् कृत्या जाया भूत्वा विशतइत्युपचर्यते । अतस्तत्परित्यागे कृत्येव त्यक्ता भवतीत्यर्थः यदि वधूवासः स्वयं निधत्ते तदैवं भवतीति वधूवासः संस्पर्शनं निन्दायुक्तं ॥ २९ ॥

अथ त्रिंशी—

**अश्रीरातनूर्भवतिरुशतीपापयामुया ।**
**पतिर्यद्वध्वोवाससास्वमङ्गमभिधित्सते ॥ ३० ॥ २५ ॥**

अश्रीरा । तनूः । भवति । रुशती । पापया । अमुया । पतिः ।
यत् । वध्वः । वाससा । स्वम् । अङ्गम् । अभिऽधित्सते ॥ ३० ॥ २५ ॥

अत्रापि वधूवासःसंस्पर्शनिन्दोच्यते—तनूर्वरस्य संबन्धिनी अश्रीरा अश्रीका भवति । कथंस्याच्चेदिति उच्यते—रुशतीरुशदिति वर्णनाम दीप्तया अमुया अनया पापया पापरूपया कृत्यया यदियुक्ता चेत्तनूः । तदेवाह—पतिर्यद्यदि वध्वोवाससा स्वमंगमभिधित्सते परिधातुमिच्छति ॥ ३० ॥

॥ इत्यष्टमस्य तृतीये पंचविंशोवर्गः ॥ २५ ॥

अथैकत्रिंशी—

येवध्वश्चन्द्रंवहतुंयक्ष्मायन्तिजनादनु।
पुनस्तान्यज्ञियादेवानयन्तुयतआगताः ॥ ३१ ॥

ये। वध्वः। चन्द्रम्। वहतुम्। यक्ष्माः। यन्ति। जनात्। अनु।
पुनरिति। तान्। यज्ञियाः। देवाः। नयन्तु। यतः। आऽगताः॥३१॥

येवध्वश्चन्द्रं हिरण्यरूपं वहतुं ये यक्ष्मा व्याधयोनुयन्ति प्राप्नुवन्तिजनादस्मद्विरोधिनः स काशाद्वा जनात् यमाख्यात् तान् यक्ष्मान् पुनर्नयन्तु प्रापयन्तु यज्ञिया यज्ञार्हा देवाइन्द्रादयः। यतआगताः यस्मात्ते यक्ष्माआगताः तत्रतान् नयन्तु ॥ ३१ ॥

वध्वाः प्रयाणे माविदन्नित्येषा जप्या। सूत्रितंच—कल्याणेषु देशवृक्षचतुष्पथेषु माविदन्प रिपंथिनइति जपेदिति।

सैषा द्वात्रिंशी—

माविदन्परिपन्थिनोयआसीदन्तिदंपती।
सुगेभिर्दुर्गमतीतामपद्रान्त्वरातयः ॥ ३२ ॥

मा। विदन्। परिऽपन्थिनः। ये। आऽसीदन्ति। दम्पती
इति दम्ऽपती। सुऽगेभिः। दुःऽगम्। अति। इताम्। अप।
द्रान्तु। अरातयः ॥ ३२ ॥

परिपन्थिनः पर्यवस्थातारः शत्रवोमाविदन् माप्रापयन् येपरिपन्थिनोदंपती आसीद न्ति अभिगच्छन्ति सुगेभिः सुगैर्मार्गैः दुर्गं दुःखेन गन्तुं शक्यं दुर्गमं देशमतीतां अतिगच्छतां अरातयः अदातारः शत्रवोऽपद्रान्तु अपगच्छन्तु ॥ ३२ ॥

अथ त्रयस्त्रिंशी—

सुमङ्गलीरियंवधूरिमांसमेतपश्यत।
सौभाग्यमस्यैदत्वायाथास्तंविपरेतन ॥ ३३ ॥

सुऽमङ्गलीः । इयम् । वधूः । इमाम् । समऽएत । पश्यत ।
सौभाग्यम् । अस्यै । दत्वाय । अथ । अस्तम् । वि ।
परा । इतन ॥ ३३ ॥

इयं वधूः सुमंगलीः शोभनमंगला अतइमां सर्वे आशीःकर्तारः समेत संगच्छत तां पश्यतच । तां संगताश्च दृष्ट्वा अस्याऊढायै सौभाग्यं दत्वाय दत्वा अथ अस्तं गृहनामैतत् स्वस्वसंबन्धिनं विपरेतन विविधं परागच्छत ॥ ३३ ॥

अथ चतुस्त्रिंशी—

तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे ।
सूर्यांयोब्रह्माविद्यात्सइद्वाधूयमर्हति ॥ ३४ ॥

तृष्टम् । एतत् । कटुकम् । एतत् । अपाष्ठऽवत् । विषऽवत् ।
न । एतत् । अत्तवे । सूर्याम् । यः । ब्रह्मा । विद्यात् ।
सः । इत् । वाधूऽयम् । अर्हति ॥ ३४ ॥

अनयापि वधूवस्त्रपरित्यागः प्रतिपाद्यते एतद्वस्त्रं तृष्टं दाहजनकं तथैव तत्कटुकं तथा पाष्ठवत् अपाष्ठमपस्थितमृजीषं तद्वत् तथा विषवत् नैतद्वस्त्रमत्तवे अत्तव्यं अनुपयोग्यं योब्रह्मा ब्राह्मणः सूर्यां इदानीं प्रस्तुतां देवीं विद्यात् सम्यक्जानीयात् सइत् सएव वाधूयं वधूवस्त्रमर्हति ॥ ३४ ॥

अथ पंचत्रिंशी—

आशसनंविशसनमथोअधिविकर्तनम् ।
सूर्यायाःपश्यरूपाणितानिब्रह्मातुशुन्धति ॥ ३५ ॥ २६ ॥

आऽशसनम् । विऽशसनम् । अथो इति । अधिऽविकर्तनम् ।
सूर्यायाः । पश्य । रूपाणि । तानि । ब्रह्मा ।
तु । शुन्धति ॥ ३५ ॥ २६ ॥

आशसनं तूषाधानं तच्चान्यवर्णं भवति विशसनं शिरसि निधीयमानं तादृशं दशान्ते निधीयमानं अधिविकर्तनं यत्त्रिधावासोविकृन्तन्ति तान्याशसनादीनि वासांस्यवस्थितानि सूर्यायारूपाणि भवन्ति तानि पश्य । एवं भूतान्याशसनादीनि पुरा सूर्या स्वशरीरे स्थितानि अमंगलानि वासांसि विधत्ते तानि रूपाणि सूर्याविद्ब्रह्मातु ब्राह्मणएव तस्माद्वाससः सकाशात् शुन्धति अपनयति ॥ ३५ ॥

॥ इत्यष्टमस्य तृतीये षड्विंशोवर्गः ॥ २६ ॥

विवाहे कन्याहस्तग्रहणे गृभ्णामीत्येषा । सूत्रितंच—गृभ्णामितेसौभगत्वायहस्तमित्यंगुष्ठमेव गृह्णीयादिति ।

सैषा षट्त्रिंशी—

**गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ।**
**भगोअर्यमासविता पुरन्धिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ ३६ ॥**

गृभ्णामि । ते । सौभगऽत्वाय । हस्तम् । मया । पत्या ।
जरत्ऽअष्टिः । यथा । असः । भगः । अर्यमा । सविता ।
पुरम्ऽधिः । मह्यम् । त्वा । अदुः । गार्हऽपत्याय । देवाः ॥ ३६ ॥

हेवधूस्ते तव हस्तं गृभ्णामि गृह्णामि किमर्थं सौभगत्वाय सौभाग्याय मया पत्या त्वं यथा जरदष्टिः प्राप्तवार्धक्या असोभवसि । भगः अर्यमा सविता पुरन्धिः पूषा एतेदेवाः त्वां त्वां मह्यं अदुः दत्तवन्तः किमर्थं गार्हपत्याय यथाहं गृहपतिः स्यामिति ॥ ३६ ॥

अथ सप्तत्रिंशी—

**तांपूषञ्छिवतमामेरयस्वयस्यांबीजंमनुष्याऽवपन्ति ।**
**यानऊरूउशतीविश्रयातेयस्यामुशन्तःप्रहरामशेपम् ॥ ३७ ॥**

ताम् । पूषन् । शिवऽतमाम् । आ । ईरयस्व । यस्याम् ।
बीजम् । मनुष्याः । वपन्ति । या । नः । ऊरू इति ।
उशती । विऽश्रयाते । यस्याम् । उशन्तः । प्रऽहराम । शेपम् ॥ ३७॥

हेपूषन् पोषक एतन्नामकदेव शिवतमां अत्यन्तमंगलभूतां तां आएरयस्व सर्वतः प्रेरय। यस्यां ऊरौ बीजं रेतोलक्षणं मनुष्यावपन्ति आदधते यानोस्माकं ऊरू उशती कामयमाना विश्रयाते यस्यामूरौ उशन्तः कामयमानाः वयं शेपं स्पर्शनयोग्यं पुंस्प्रजननं प्रहराम ऊरौ व्यञ्जनसंबन्धं करवामेत्यर्थः ॥ ३७ ॥

अथाष्टत्रिंशी—

तुभ्यमग्रेपर्यवहन्त्सूर्यांवहतुनासह ।
पुनःपतिभ्योजायांदाअग्नेप्रजयासह ॥ ३८ ॥

तुभ्यम् । अग्रे । परि । अवहन् । सूर्याम् । वहतुना । सह ।
पुनरिति । पतिऽभ्यः । जायाम् । दाः । अग्ने । प्रऽजया । सह ॥३८॥

गन्धर्वाः हेअग्ने तुभ्यं अग्रे पर्यवहन् प्रायच्छन्नित्यर्थः कां सूर्यां केन सह वहतुनासह त्वं च तां सूर्यां वहतुनासह सोमाय प्रायच्छः तद्वदिदानीमपि हेअग्ने पुनः पतिभ्योस्मभ्यं जायां प्रजयासह दाः देहि ॥ ३८ ॥

अथैकोनचत्वारिंशी—

पुनःपत्नीमग्निरदादायुषासहवर्चसा ।
दीर्घायुरस्यायःपतिर्जीवातिशरदःशतम् ॥ ३९ ॥

पुनरिति । पत्नीम् । अग्निः । अदात् । आयुषा । सह ।
वर्चसा । दीर्घऽआयुः । अस्याः । यः । पतिः । जीवाति ।
शरदः । शतम् ॥ ३९ ॥

पुनः स्वगृहीतां पत्नीमग्निरायुषा वर्चसाचसह अदात् प्रायच्छत् अस्याग्निदत्तायाः यः पतिः पुमान् सदीर्घायुः सन् शरदः शतं संवत्सरशतं जीवाति जीवतु ॥ ३९ ॥

अथ चत्वारिंशी—

सोमः॑प्रथ॒मोवि॑विदेगन्ध॒र्वोवि॑विद॒उत्त॑रः ।
तृ॒तीयो॑अ॒ग्निष्टे॒पति॑स्तु॒रीय॑स्ते॒मनुष्य॒जाः ॥ ४० ॥ २७ ॥

सोमः॑ । प्र॒थ॒मः । वि॒वि॒दे॒ । ग॒न्ध॒र्वः । वि॒वि॒दे॒ । उत्ऽत॑रः । तृ॒तीयः॑ । अ॒ग्निः । ते॒ । पतिः॑ । तु॒रीयः॑ । ते॒ । म॒नु॒ष्य॒ऽजाः ॥ ४० ॥ २७ ॥

जातां कन्यां सोमः प्रथमभावीसन् विविदे लब्धवान् गंधर्वउत्तरः सन् विविदे अग्निस्तृतीयः पतिः तेतव पश्चान्मनुष्यजाः पतिः तुरीयश्चतुर्थः ॥ ४० ॥

॥ इत्यष्टमस्य तृतीये सप्तविंशोवर्गः ॥२७॥

अथैकचत्वारिंशी—

सोमो॑ददद्गन्ध॒र्वाय॑गन्ध॒र्वो द॑दद॒ग्नये॑ ।
र॒यिंच॑पु॒त्रांश्चा॑दाद॒ग्निर्मह्य॒मथो॑इ॒माम् ॥ ४१ ॥

सोमः॑ । द॒द॒त् । ग॒न्ध॒र्वाय॑ । ग॒न्ध॒र्वः । द॒द॒त् । अ॒ग्नये॑ । र॒यिम् । च॒ । पु॒त्रान् । च॒ । अ॒दा॒त् । अ॒ग्निः । मह्य॑म् । अथो॒ इति॑ । इ॒माम् ॥ ४१ ॥

सोमोगन्धर्वाय प्रथमं ददत् प्रादात् गन्धर्वोऽग्नये प्रादात् अथोअपिच अग्निरिमां कन्यां रयिंधनं पुत्रांश्च मह्यं अदात् ॥ ४१ ॥

अथ द्विचत्वारिंशी—

इ॒हैवस्तं॒मावियौ॑ष्टं॒विश्व॒मायु॒र्व्य॑श्नुतम् ।
क्रीळ॑न्तौपु॒त्रैर्नप्तृ॑भि॒र्मोद॑मानौ॒स्वेगृ॒हे ॥ ४२ ॥

इ॒ह । ए॒व । स्त॒म् । मा । वि । यौ॒ष्ट॒म् । विश्व॑म् । आयुः॑ । वि । अ॒श्नु॒त॒म् । क्रीळ॑न्तौ । पु॒त्रैः । नप्तृ॑ऽभिः । मोद॑मानौ । स्वे । गृ॒हे ॥ ४२ ॥

इहैवस्तं इहैवास्मिन्लोके स्तं भवतं मावियौष्टं मापृथग्भूतं विश्वमायुर्व्यश्नुतं प्राप्नुतं। किंच पुत्रैः नप्तृभिः पौत्रैः सह स्वेगृहे मोदमानौ भवतमितिशेषः ॥ ४२ ॥

गृहप्रवेशे आनःप्रजांजनयत्वित्याद्याश्चतस्रोहोमार्थाः । सूत्रितंच—आनःप्रजांजनयतु-प्रजापतिरितिचतसृभिः प्रत्यृचं हुत्वेति ।

तासु प्रथमा सूक्ते त्रिचत्वारिंशी—

आनःप्रजांजनयतुप्रजापतिराजरसायसमनक्त्वर्यमा ।
अदुर्मङ्गलीःपतिलोकमाविशशन्नोभवद्विपदेशंचतुष्पदे ॥ ४३ ॥

आ । नः । प्रऽजाम् । जनयतु । प्रजाऽपतिः । आऽजरसाय ।
सम् । अनक्तु । अर्यमा । अदुःऽमङ्गलीः । पतिऽलोकम् । आ ।
विश । शम् । नः । भव । द्विऽपदे । शम् । चतुःऽपदे ॥ ४३ ॥

प्रजापतिर्देवोनोस्माकं प्रजामाजनयतु अर्यमाचाजरसाय जरापर्यन्तजीवनाय समनक्तु संगमयतु सात्वं अदुर्मंगलीः दुर्मंगलरहिता सुमंगली यद्वा यामंगलाचारान्दूषयति सादुर्मंगली ततोन्या अदुर्मंगली तादृशी सती पतिलोकं पतिसमीपमाविश प्राप्नुहि । नोस्माकं द्विपदे शं भव तथाच शं चतुष्पदे भव ॥ ४३ ॥

अथ चतुश्चत्वारिंशी—

अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः ।
वीरसूर्देवकामास्योनाशन्नोभवद्विपदेशंचतुष्पदे ॥ ४४ ॥

अघोरऽचक्षुः । अपतिऽघ्नी । एधि । शिवा । पशुऽभ्यः ।
सुऽमनाः । सुऽवर्चाः । वीरऽसूः । देवऽकामा । स्योना ।
शम् । नः । भव । द्विऽपदे । शम् । चतुःऽपदे ॥ ४४ ॥

हेवधूस्त्वं अघोरचक्षुः क्रोधादभयंकरचक्षुरेधि भव तथा अपतिघ्नी भव तथा पशुभ्यः शिवा हितकरी भव सुमनाः सुवर्चाश्च भव वीरसूः पुत्राणामेव प्रसवित्री देवकामास्योना सुखकराच भव ॥ ४४ ॥

अथ पञ्चचत्वारिंशी—

इमांत्वमिन्द्रमीढ्वःसुपुत्रांसुभगाँकृणु ।
दशास्यांपुत्रानाधेहिपतिमेकादशंकृधि ॥ ४५ ॥

इमाम् । त्वम् । इन्द्र । मीढ्वः । सुऽपुत्राम् । सुऽभगाम् । कृणु । दश ।
अस्याम् । पुत्रान् । आ । धेहि । पतिम् । एकादशम् । कृधि ॥ ४५ ॥

हे इन्द्र त्वं इमां वधूं सुपुत्रां सुभगांच कृणु कृधि अस्यां वध्वां दशपुत्रानाधेहि प-
तिमेकादशं कृधि । दशपुत्राः पतिरेकादशो यथा स्यात्तथा कृधि कृणु ॥ ४५ ॥

अथ षट्चत्वारिंशी—

सम्राज्ञीश्वशुरेभवसम्राज्ञीश्वश्र्वांभव ।
ननान्दरिसम्राज्ञीभवसम्राज्ञीअधिदेवृषु ॥ ४६ ॥

सम्ऽराज्ञी । श्वशुरे । भव । सम्ऽराज्ञी । श्वश्र्वाम् । भव । ननान्दरि ।
सम्ऽराज्ञी । भव । सम्ऽराज्ञी । अधि । देवृषु ॥ ४६ ॥

हे वधूः श्वशुरादिषु त्वं सम्राज्ञी भव देवृषु देवरेष्वित्यर्थः ॥ ४६ ॥

समञ्जन्त्वित्येषा वरस्यदधिप्राशने वधूवरयोः हृदयस्पर्शनेवा विनियुक्ता । तथाच सूत्रितं—
समञ्जन्तुविश्वेदेवाइति दधिप्राश्य प्रतिप्रयच्छेदाज्यशेषेणवानक्तिहृदयइति ।

सैषा सप्तचत्वारिंशी—

समञ्जन्तुविश्वेदेवाःसमापोहृदयानिनौ ।
संमातरिश्वासंधातासमुदेष्ट्रीदधातुनौ ॥ ४७ ॥ २८ ॥

सम् । अञ्जन्तु । विश्वे । देवाः । सम् । आपः । हृदयानि ।
नौ । सम् । मातरिश्वा । सम् । धाता । सम् । ऊँ इति ।
देष्ट्री । दधातु । नौ ॥ ४७ ॥ २८ ॥

विश्वेदेवाः सर्वेदेवानौहृदयानि मानसानि समञ्जन्तु सम्यगञ्जन्तु अपगतदुःखादिक्लेशानि कृत्वा लौकिकवैदिकविषयेषु प्रकाशयुक्तानि कुर्वन्त्वित्यर्थः । आपश्च समञ्जन्तु तथा मातरिश्वा नौ हृदयानि सन्दधातु आवयोर्बुद्धीः परस्परानुकूलाः करोत्वित्यर्थः धाताच संदधातु देष्ट्री दात्री फलानां सरस्वतीत्यर्थः साच संदधातु सन्धानं करोतु ॥ ४७ ॥

॥ इत्यष्टमस्य तृतीयेष्टाविंशोवर्गः ॥ २८ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टके तृतीयोध्यायः ॥३॥

## ॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदा योवेदेभ्योखिलं जगत्। निर्ममे तमहंवन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अष्टमाष्टकस्य चतुर्थोध्यायआरभ्यते। तत्र विहीतित्रयोविंशत्यृचं द्वितीयं सूक्तं वृषाकपिर्नामेन्द्रस्य पुत्रः सच इन्द्राणीन्द्रश्चेतेत्रयः संहताःसंवादं कृतवन्तः तत्र विहिसोतोरसृक्षत किंसुबाहोस्वंगुरे इन्द्राणीमासुनारिष्विति द्वे उक्षणोहिमे अयमेमीति चतस्रइत्येतानवर्चंइन्द्रवाक्यानि अतस्तासामिन्द्रऋषिः। पराहीन्द्रेति पंच अवीरामिति द्वे वृषभोनतिग्मश्रृंगइत्याद्याश्चतस्रइत्येकादशर्चं इन्द्राण्यावाक्यानि अतस्तासामिन्द्राणीऋषिः उवेअंब वृषाकपायिरेवति पर्शुर्हनामेति तिस्रोवृषाकपेर्वाक्यानि अतस्तासां वृषाकपिर्ऋषिः। सर्वंसूक्तमैन्द्रं पंचपदापंक्तिच्छन्दस्कं। तथाचानुक्रान्तं—विहित्र्यधिकैन्द्रोवृषाकपिरिन्द्राणीन्द्रश्चसमूदिरेपांक्तमिति। षष्ठेहनि ब्राह्मणाच्छंसिनउक्थशस्त्रे एतत्सूक्तं। सूत्रितंच—अथवृषाकपिंशंसेद्यथाहोताज्याद्यांचतुर्थइति। यदि षष्ठेहन्युक्थस्तोत्राणि द्विपदासुनस्तुवीरन् सामगायदिवेदमहरग्निष्टोमःस्यात् तदानीं ब्राह्मणाच्छंसी माध्यन्दिनसवने आरंभणीयाभ्यऊर्ध्वमेतत्सूक्तं शंसेद्विश्वजित्यपि। तथाचसूत्रितं—सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पांक्तं शंसमिति।

तत्र प्रथमा—

**ॐम् विहिसोतोरसृक्षतनेन्द्रंदेवममंसत।**
**यत्रामदद्वृषाकपिरर्यःपुष्टेषुमत्सखाविश्वस्मादिन्द्रउत्तरः ॥ १ ॥**

वि। हि। सोतोः। असृक्षत। न। इन्द्रम्। देवम्। अमंसत।
यत्र। अमदत्। वृषाकपिः। अर्यः। पुष्टेषु। मत्ऽसखा।
विश्वस्मात्। इन्द्रः। उत्ऽतरः ॥ १ ॥

सोतोः सोमाभिषवं कर्तुं व्यसृक्षत यागं प्रति मया विसृष्टाअनुज्ञाताः स्तोतारोवृषाकपेर्यष्टारः हीतिपूरणः तत्र देवं द्योतमानमिन्द्रं मां नामंसत मयाप्रेरिताः सन्तोपि तेस्तोतारोनस्तुतवन्तः किन्तु मम पुत्रं वृषाकपिमेव स्तुतवन्तः यत्र येषु पुष्टेषु सोमेन प्रवृद्धेषु यागेषु अर्यः स्वामी वृषाकपिर्मम पुत्रोमत्सखा ममसखिभूतः सन् अमदत् सोमपानेन हृष्टोभूत् यद्यप्येवं तथापीन्द्रो-

हं विश्वस्मात् सर्वस्मात् जगतउत्तरउत्कृष्टतरः। माधवभट्टास्तु विहिसोतोरित्येषा ऋगिन्द्राण्यावाक्यमितिमन्यन्ते। तथाच तद्वचनम् इन्द्राण्यैकल्पितं हविः कश्चिन्मृगोदूदूषत् इन्द्रपुत्रस्य वृषाकपेर्विषये वर्तमानस्तत्रेन्द्रमिन्द्राणी वदतीति। तस्मिन्पक्षे त्वस्याऋचोयमर्थः सोतोः सोमाभिषवं कर्तुंविसृक्षत उपरतसोमाभिषवाआसन् यजमानाइत्यर्थः। किंच मम पतिमिन्द्रं देवं नामंसत स्तोतारोनस्तुवन्ति। कुत्रेत्याह—यत्र यस्मिन् देशे पुष्टेषु प्रवृद्धेषु धनेषु अर्यः स्वामी वृषाकपिरमदत् मत्सखामप्रियश्चेन्द्रोविश्वस्मात् सर्वस्मात् जगतउत्तरउत्कृष्टतरः॥ १॥

अथ द्वितीया—

**परा॒हीन्द्र॒धाव॑सि॒वृषाक॑पे॒रति॒व्यथिः।**
**नोअह॒प्रवि॑न्दस्य॒न्यत्र॒सोम॑पीतये॒विश्व॑स्मा॒दिन्द्र॒उत्त॑रः॥ २॥**

परा॑। हि। इ॒न्द्र॒। धाव॑सि। वृ॒षाक॑पेः। अति॑। व्यथिः।
नो इति॑। अह॑। प्र। वि॒न्द॒सि॒। अ॒न्यत्र॑। सोम॑ऽपीतये।
विश्व॑स्मात्। इन्द्रः॑। उत्ऽत॑रः॥ २॥

हेइन्द्र त्वमत्यन्तं व्यथिश्चलितः वृषाकपेर्वृषाकपिंपराधावसि प्रतिगच्छसि अन्यत्र सोमपीतये सोमपानाय नोअह नैवच प्रविन्दसि प्रगच्छसीत्यर्थः सोयमिन्द्रोविश्वस्मादुत्तरः॥ २॥

अथ तृतीया—

**किम॒यंत्वांवृ॒षाक॑पिश्च॒कार॒हरि॑तोमृ॒गः।**
**यस्मा॑इर॒स्यसीदु॒न्व॑१र्योवा॑पुष्टि॒मद्वसु॒विश्व॑स्मा॒दिन्द्र॒उत्त॑रः॥ ३॥**

किम्। अ॒यम्। त्वाम्। वृ॒षाक॑पिः। च॒कार॑। हरि॑तः। मृ॒गः।
यस्मै॑। इ॒र॒स्यसि॑। इत्। ऊँम् इति॑। नु। अ॒र्यः। वा॒।
पु॒ष्टि॒ऽमत्। वसु॑। विश्व॑स्मात्। इन्द्रः॑। उत्ऽत॑रः॥ ३॥

हेइन्द्र त्वां प्रतिहरितोहरितवर्णोमृगोमृगभूतोयं वृषाकपिः मृगजातिर्हि वृषाकपिः किंप्रियं चकाराकार्षित् तस्मै वृषाकपये पुष्टिमत्पोषयुक्तं वसु धनं अर्योवा उदारइव सत्वं नुक्षिप्रं इरस्यसीत् प्रयच्छस्येव यइन्द्रोविश्वस्मादुत्तरः॥ ३॥

अथ चतुर्थी—

यमिमंत्वंवृषाकपिंप्रियमिन्द्राभिरक्षसि ।
श्वान्वस्यजंभिषदपिकर्णेवराहयुर्विश्वस्मादिन्द्रउत्तरः ॥ ४ ॥

यम् । इमम् । त्वम् । वृषाकपिम् । प्रियम् । इन्द्र । अभिऽरक्षसि ।
श्वा । नु । अस्य । जंभिषत् । अपि । कर्णे । वराहऽयुः ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ४ ॥

हेइन्द्र त्वं प्रियमिष्टं पुत्रं यमिमं वृषाकपिं अभिरक्षसि परिपालयसि अस्यैनं वृषाकपिं द्वितीयार्थे षष्ठी । वराहयुर्वराहमिच्छन् श्वा नुक्षिप्रं जंभिषत् भक्षयतु । अपिच कर्णे गृह्णात्विति शेषः श्वानोहि वराहमिच्छन्ति । सिद्धमन्यत् ॥ ४ ॥

अथ पंचमी—

प्रियातष्टानिमेकपिर्व्यक्ताव्यदूदुषत् ।
शिरोन्वस्यराविषंनसुगंदुष्कृतेभुवंविश्वस्मादिन्द्रउत्तरः ॥ ५ ॥१॥

प्रिया । तष्टानि । मे । कपिः । विऽअक्ता । वि । अदूदुषत् ।
शिरः । नु । अस्य । राविषम् । न । सुऽगम् । दुःऽकृते ।
भुवम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ५ ॥ १ ॥

मेमह्यमिन्द्राण्यै तष्टानि यजमानैः कल्पितानि प्रिया प्रियाणि व्यक्ता व्यक्तानि आज्यैर्विशेषेणाक्तानि हवींषि कश्चिद्वृषाकपेर्विषये वर्तमानः कपिर्व्यदूदुषत् दूषयामास ततोहमस्य तत् कपिस्वामिनोवृषाकपेः शिरोनुक्षिप्रं राविषं लुनीयां दुष्कृते दुष्टस्य कर्मणः कर्त्रे वृषाकपयेस्मै सुगं सुखं नभुवं नभवेयं अस्मै सुखप्रदात्री नभवामीत्यर्थः । यस्याामम पतिरिन्द्रोविश्वस्मादुत्तरः ॥ ५ ॥

॥ इत्यष्टमस्य चतुर्थे प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

**नमत्स्त्रीसुभसत्तरानसुयाशुतराभुवत् ।**
**नमत्प्रतिच्यवीयसीनसक्थ्युद्यमीयसीविश्वस्मादिन्द्रउत्तरः ॥६॥**

न । मत् । स्त्री । सुभसत्ऽतरा । न । सुयाशुऽतरा । भुवत् । न ।
मत् । प्रतिऽच्यवीयसी । न । सक्थि । उत्ऽयमीयसी ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ६ ॥

मत् मत्तोन्यास्त्री सुभसत्तरा अतिशयेन सुभगा नभवत् नभवति नास्तीत्यर्थः । किंच मत्तोन्यास्त्री सुयाशुतरा अतिशयेन सुसुखातिशयेन सुपुत्रावा नभवति । तथाचमन्त्रान्तरं—ददातिमह्यंयादुरीयाशूनांभोज्याशतेति[1] । किंच मत् मत्तोन्या प्रतिच्यवीयसी पुमांसं प्रतिशरीरस्यात्यन्तं च्यावयित्री नास्ति । किंच मत्तोन्यास्त्री सक्थि सक्थउद्यमीयसी संभोगेत्यन्तमुत्क्षेप्त्री नास्ति न मत्तोन्या काचिदपि नारी मैथुनेनुगुणं सक्थ्युद्यच्छतीत्यर्थः । मम पतिरिन्द्रोविश्वस्मादुत्तरउत्कृष्टः ॥ ६ ॥

अथ सप्तमी—

**उवेअंबसुलाभिकेयथेवांगभविष्यति ।**
**भसन्मेअंबसक्थिमेशिरोमेवीवहृष्यतिविश्वस्मादिन्द्रउत्तरः ॥७॥**

उवे । अम्ब । सुलाभिके । यथाऽइव । अङ्ग । भविष्यति ।
भसत् । मे । अम्ब । सक्थि । मे । शिरः । मे । विऽइव ।
हृष्यति । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ७ ॥

एवमिन्द्राण्याशप्तोवृषाकपिर्ब्रवीति । उवेइति संबोधनार्थोनिपातः हे अंब मातः सुलाभिके शोभनलाभे त्वया यथैव येन प्रकारेणैवोक्तं तथैव तदंगक्षिप्रं भवविष्यति भवतु किमनेन त्वदनुप्रीतिकारिणाग्रहेणममप्रयोजनं । किंच मे मम पितुस्त्वदीयोभसत् भगउपयुज्यतां

---

[1] ऋ० सं० २. १. ११. ।

किंच मेमम पितरमिन्द्रं त्वदीयं सक्थिचोपयुज्यतां किंच मे मम पितरमिन्द्रं त्वदीयं शिरश्च प्रियालापेन वीव यथाकोकिलादिकः पक्षी तद्वत् हृष्यति हर्षयतु ममपितेन्द्रोविश्वस्मादुत्तरः ॥७॥

अथाष्टमी—

किंसुबाहोस्वङ्गुरेपृथुष्टोपृथुजाघने ।
किंशूरपत्निनस्त्वमभ्यमीषिवृषाकपिंविश्वस्मादिन्द्रउत्तरः ॥ ८ ॥

किम् । सुबाहो इति सुऽबाहो । सुऽअङ्गुरे । पृथुस्तो इति पृथुऽस्तो ।
पृथुऽजघने । किम् । शूरऽपत्नि । नः । त्वम् । अभि । अमीषि ।
वृषाकपिम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ८ ॥

इन्द्राणींकुद्धांइन्द्रउपशमयति हेसुबाहो शोभनबाहो स्वंगुरे शोभनांगुलिके पृथुष्टो पृथुकेशसंघाते पृथुजघने विस्तीर्णजघने शूरपत्नि वीरभार्ये हेइन्द्राणि त्वं नोस्मदीयं वृषाकपिं किं किमर्थं अभ्यमीषि अभिक्रुध्यसि एकः किंशब्दः । यस्य पितेन्द्रोहं विश्वस्मादुत्तरः ॥ ८ ॥

अथ नवमी—

अवीरामिवमामयंशरारुरभिमन्यते ।
उताहमस्मिवीरिणीन्द्रपत्नीमरुत्सखाविश्वस्मादिन्द्रउत्तरः ॥ ९ ॥

अवीराम्ऽइव । माम् । अयम् । शरारुः । अभि । मन्यते ।
उत । अहम् । अस्मि । वीरिणी । इन्द्रऽपत्नी ।
मरुत्ऽसखा । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ९ ॥

पुनरिन्द्राणी ब्रूते—शरारुर्घातुकोमृगोयं वृषाकपिर्मामिन्द्राणीमवीरामिवाभिमन्यते विजानाति । उतापिच इन्द्रपत्नीन्द्रभार्या अहमिन्द्राणी वीरिणी पुत्रवती मरुत्सखा मरुद्भिर्युक्ता चास्मि भवामि यस्या मम पतिरिन्द्रोविश्वस्मादुत्तरः ॥ ९ ॥

अथ दशमी—

संहोत्रंस्मपुरानारीसमनंवावगच्छति ।
वेधाऋतस्यवीरिणीन्द्रपत्नीमहीयतेविश्वस्मादिन्द्रउत्तरः ॥ १० ॥ २ ॥

सम्ऽहोत्रम् । स्म । पुरा । नारी । समनम् । वा । अव । गच्छति ।
वेधाः । ऋतस्य । वीरिणी । इन्द्रऽपत्नी । महीयते ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १० ॥ २ ॥

नारी स्त्री ऋतस्य सत्यस्य वेधाविधात्री वीरिणी पुत्रवतीन्द्रपत्नीन्द्रस्य भार्या इन्द्राणी संहोत्रं स्म समीचीनं यज्ञंखलु समनंवा संग्रामंवा समिति समनमिति संग्रामनामसु पाठात् । अवप्रति पुरागच्छति महीयते स्तोतृभिः स्तूयते च । तस्याममं पतिरिन्द्रोविश्वस्मादुत्तरः ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थे द्वितीयोवर्गः ॥ २ ॥

अथैकादशी—

इन्द्राणीमासुनारिषुसुभगामहमश्रवम् ।
नह्यस्याअपरंचनजरसामरतेपतिर्विश्वस्मादिन्द्रउत्तरः ॥ ११ ॥

इन्द्राणीम् । आसु । नारिषु । सुऽभगाम् । अहम् । अश्रवम् ।
नहि । अस्याः । अपरम् । चन । जरसा । मरते । पतिः ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ११ ॥

अथेन्द्राणीमिन्द्रः स्तौति आसु सौभाग्यवत्तया प्रसिद्धासु नारिषु स्त्रीणां मध्ये इन्द्राणीं सुभगां सौभाग्यवतीमहमिन्द्रोश्रवमश्रौषं । किंचास्याइन्द्राण्याः पतिः पालकोविश्वस्मादुत्तरः उत्कृष्टः इन्द्रोपरंच नान्यद्भूतजातमिव जरसा वयोहान्या नहि मरते नखलुम्रियते । यद्वेयं वृषाकपेर्वाक्यं तस्मिन्पक्षेहमिति शब्दोवृषाकपिपरतया योज्यः । अन्यत्समानं ॥ ११ ॥

अथ द्वादशी—

नाहमिन्द्राणिराणसख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यंहविःप्रियंदेवेषुगच्छतिविश्वस्मादिन्द्रउत्तरः ॥ १२ ॥

न । अहम् । इन्द्राणि । ररण । सख्युः । वृषाकपेः । ऋते । यस्य ।
इदम् । अप्यम् । हविः । प्रियम् । देवेषु । गच्छति ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १२ ॥

हेइन्द्राणि अहमिन्द्रः सख्युर्मम सखिभूताद्वृषाकपेर्ऋते प्रियं वृषाकपिं विना नरराण नरमे । अप्यं अप्सुभवं अद्भिर्वा संस्कृतं प्रियं प्रीतिकरमिदमुपस्थितं हविर्देवेषु देवानां मध्ये यस्य महेन्द्रस्य सकाशं गच्छति तथाहमिन्द्रः सर्वस्मादुत्कृष्टः । यद्वायमर्थः हे इन्द्राणि वृषाकपेः सख्युरिन्द्रादृते हं वृषाकपिर्नरराण नरमे । अन्यत्समानं ॥ १२ ॥

अथ त्रयोदशी—

वृषाकपायिरेवतिसुपुत्रआदुसुस्नुषे ।
घसंत्तइन्द्रउक्षणःप्रियंकाचित्करंहविर्विश्वस्मादिन्द्रउत्तरः ॥१३॥

वृषाकपायि । रेवति । सुऽपुत्रे । आत् । ऊँ इति । सुऽस्नुषे ।
घसत् । ते । इन्द्रः । उक्षणः । प्रियम् । काचित्ऽकरम् ।
हविः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १३ ॥

हेवृषाकपायि कामानां वर्षकत्वादभीष्टदेशगमनाच्चेन्द्रो वृषाकपिस्तस्य पत्नि यद्वा वृषाकपेर्मम मातरित्यर्थः रेवति धनवति सुपुत्रे सुस्नुषे हेइन्द्राणि ते तवायमिन्द्रउक्षणः सेचनसमर्थान् आदु अनन्तरमेव शीघ्रमेवेत्यर्थः पशून् घसत् प्राश्नातु । किंच त्वं काचित्करं कं सुखं तस्याचित् संघः तत्करं हविः प्रियमिष्टं कुर्वितिशेषः । किंच ते पतिरिन्द्रोविश्वस्मादुत्तरः । तथाच यास्यः—वृषाकपायिरेवतिसुपुत्रेमध्यमेनसुस्नुषेमाध्यमिकयावाचास्नुषासाधुसादिनीतिवासाधुसानिनीतिवा प्रियंकुरुष्वसुखाचयकरंहविःसर्वस्माद्यइन्द्रउत्तरइति[1] ॥ १३ ॥

अथ चतुर्दशी--

उक्ष्णोहिमेपञ्चदशसाकंपचन्तिविंशतिम् ।
उताहमद्मिपीवइदुभाकुक्षीपृणन्तिमेविश्वस्मादिन्द्रउत्तरः ॥ १४॥

उक्ष्णः । हि । मे । पञ्चऽदश । साकम् । पचन्ति । विंशतिम् ।
उत । अहम् । अद्मि । पीवः । इत् । उभा । कुक्षी इति ।
पृणन्ति । मे । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १४ ॥

---

१ नि० १२. ९. ।

अथेन्द्रोब्रवीति मे मदर्थं पञ्चदश पञ्चदशसंख्याकान् विंशतिं विंशतिसंख्याकांश्चोक्षणः वृषभान् साकं सहैव भार्ययेन्द्राण्यामेरितायष्टारः पचन्ति उतापिचाहमत्त्रितान्भक्षयामि जग्ध्वा-चाहंपीवइव स्थूलएव भवामीति शेषः।मे ममोभा उभौच कुक्षी पृणन्ति सोमेन पूरयन्ति यष्टा-रः सोहमिन्द्रः सर्वस्मादुत्तरः ॥ १४ ॥

अथ पञ्चदशी—

वृषभोनतिग्मशृङ्गोन्तर्यूथेषुरोरुवत् ।
मन्थस्तंइन्द्रशंहृदेयंतेसुनोतिभावयुर्विश्वस्मादिन्द्रउत्तरः॥ १५॥ ३॥

वृषभः । न । तिग्मऽशृङ्गः । अन्तः । यूथेषु । रोरुवत् ।
मन्थः । ते । इन्द्र । शम् । हृदे । यम् । ते । सुनोति ।
भावयुः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १५ ॥ ३ ॥

अथेन्द्राणी ब्रवीति—तिग्मशृंगः तीक्ष्णशृंगः वृषभोन यथा वृषभोयूथेषु गोसंघेष्वन्तर्म-ध्ये रोरुवत् शब्दं कुर्वन् गाअभिरमयति तथा हे इन्द्र त्वंमामभिरमयेतिशेषः। किंच हे इन्द्र ते तव हृदेहृदयाय मंथोदध्नोमंथनवेलायां शब्दंकुर्वन् शंकरोभवत्विति शेषः। किंच ते तव यंसोमं भा-वयुर्भावमिच्छन्तीन्द्राणी सुनोत्यभिषुणोति सोपिशंकरोभवत्वित्यर्थः मम पतिरिन्द्रो विश्वस्मा-दुत्तरः ॥ १५ ॥

॥ इत्यष्टमस्य चतुर्थे तृतीयोवर्गः ॥ ३ ॥

अथ षोडशी—

नसेशेयस्यरम्बतेन्तरासक्थ्याकपृत् ।
सेदीशेयस्यरोमशंनिषेदुषोविजृंभतेविश्वस्मादिन्द्रउत्तरः ॥ १६ ॥

न । सः । ईशे । यस्य । रम्बते । अन्तरा । सक्थ्या । कपृत् ।
सः । इत् । ईशे । यस्य । रोमशम् । निऽसेदुषः । विऽजृम्भते ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १६ ॥

हे इन्द्र सजनोनेशे मैथुनं कर्तुं नेष्टे नशक्नोति यस्य जनस्य कपृत् शेपः प्रजननं स-क्थ्या सक्थिनीअन्तरा रंबते लंबते सेत् सएव स्त्रीजने ईशे मैथुनं कर्तुं शक्नोति यस्य जनस्य निषेदुषः शयानस्य रोमशमुपस्थं विजृंभते विवृतं भवति यस्यच पतिरिन्द्रो विश्वस्मादुत्तरः॥१६॥

अथ सप्तदशी—

नसेशेयस्यरोमशंनिषेदुषोविजृम्भते ।
सेदीशेयस्यरंबतेन्तरासक्थ्याऽकपृद्विश्वस्मादिन्द्रउत्तरः ॥ १७ ॥

न । सः । ईशे । यस्य । रोमशम् । निऽसेदुषः । विऽजृम्भते ।
सः । इत् । ईशे । यस्य । रम्बते । अन्तरा । सक्थ्या । कपृत् ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १७ ॥

सजनो नेशे मैथुनं कर्तुं नेष्टे यस्यनिषेदुषः शयानस्य रोमशमुपस्थं विजृंभते विवृतं भ-वति सेत् सएव जनः ईशे ईष्टे मैथुनं कर्तुं शक्नोति यस्य नरस्य कपृत् प्रजननं सक्थ्या स-क्थिनी अन्तरारंबते लंबते सिद्धमन्यत्। पूर्वोक्तव्यतिरेकोत्रद्रष्टव्यः। पूर्वस्यामृचि यियप्सु-रिन्द्राणीन्द्रं वदति अत्र यियप्सुरिन्द्रइन्द्राणीं वदतीत्यविरोधः ॥ १७ ॥

अथाष्टादशी—

अयमिन्द्रवृषाकपिःपरस्वन्तंहतंविदत् ।
असिंसूनांनवंचरुमादेधस्यानआचितंविश्वस्मादिन्द्रउत्तरः॥१८॥

अयम् । इन्द्र । वृषाकपिः । परस्वन्तम् । हतम् । विदत् ।
असिम् । सूनाम् । नवम् । चरुम् । आत् । एधस्य । अनः ।
आऽचितम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १८ ॥

हेइन्द्रायं वृषाकपिः परस्वन्तं परस्वमात्मनो विषये वर्तमानं हतं हिंसितं विदत् विंदतु तथाहतस्य तस्य विशसनायासिं शस्त्रं सूनां उद्धानं पाकार्थं नवं प्रत्यग्रं चरुं भांडं आदन-न्तरं एधस्य काष्ठस्याचितं पूर्णं अनः शकटंच विन्दतु मम पतिरिन्द्रोविश्वस्मादुत्तरः॥१८॥

अथैकोनविंशी—

**अयमेमिविचाकशद्विचिन्वन्दासमार्यम् ।**
**पिबामिपाकसुत्वनोभिधीरमचाकशंविश्वस्मादिन्द्रउत्तरः ॥१९॥**

**अयम् । एमि । विऽचाकशत् । विऽचिन्वन् । दासम् ।**
**आर्यम् । पिबामि । पाकऽसुत्वनः । अभि । धीरम् ।**
**अचाकशम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १९ ॥**

अथेन्द्रोब्रवीति विचाकशत् पश्यन्यजमानान् दासमुपक्षपयितारं असुरमार्यममित्रंविचिन्वन् पृथक्कुर्वन् अयमहमिन्द्रएमि यज्ञंप्रतिगच्छामि गत्वाच पाकसुत्वनः पचतीति पाकः सुनोतीति सुत्वा हविषां पक्तुः सोमस्याभिषोतुर्यजमानस्य पाकेन विपक्केन मनसा सोमस्याभिषोतुर्वा यजमानस्य संबन्धिनं सोमं पिबामि तथा धीरं धीमन्तं यजमानमभिचाकशमभिपश्यामि योहमिन्द्रो विश्वस्मादुत्तरः ॥ १९ ॥

अथ विंशी—

**धन्वचयत्कृन्तत्रंचकतिस्वित्तावियोजना ।**
**नेदीयसोवृषाकपेस्तमेहिगृहाँउपविश्वस्मादिन्द्रउत्तरः ॥ २० ॥**

**धन्व । च । यत् । कृन्तत्रम् । च । कति । स्वित् । ता । वि ।**
**योजना । नेदीयसः । वृषाकपे । अस्तम् । आ । इहि ।**
**गृहान् । उप । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २० ॥**

धन्व निरुदकोरण्यरहितोदेशः कृन्तत्रं कर्तनीयमरण्यं यद्यच्च धन्वच कृन्तत्रंच भवति मृगोद्वासमरण्यमेवंविधं भवति नत्वत्यन्तविपिनं तस्य शत्रुनिलयस्यात्मदीयगृहस्य मध्ये कति स्वित्ता तानि योजना योजनानि स्थितानि नात्यन्तदूरे तद्भवतीत्यर्थः । ततोनेदीयसोतिशयेन समीपस्थाच्छत्रुनिलयात् हेवृषाकपे त्वमस्तमस्माकं गृहं व्येहि विशेषेणागच्छ आगत्यच गृहान् यज्ञगृहानुपगच्छ यतोहमिन्द्रः सर्वस्मादुत्कृष्टः ॥ २० ॥

अथैकविंशी–

पुनरेहि वृषाकपे सुविता कल्पयावहै ।
य एषः स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥ २१ ॥

पुनः । आ । इहि । वृषाकपे । सुविता । कल्पयावहै ।
यः । एषः । स्वप्नऽनंशनः । अस्तम् । एषि । पथा । पुनः ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २१ ॥

आगत्य प्रतिगतं वृषाकपिमिन्द्रोऽब्रवीति–हे वृषाकपे त्वं पुनरेहि अस्मान्प्रति आगच्छ आगते च त्वयि सुविता सुवितानि कल्याणानि त्वच्चित्तप्रीतिकराणि कर्माणि कल्पयावहै इन्द्राण्यहं चावामुभौ पर्यालोच्य कुर्याव। किंच यः स्वप्ननंशनः उदयेन सर्वस्य प्राणिनः स्वप्नानां नाशयितादित्यः स एष त्वं पथा मार्गेणास्तमात्मीयमावासं पुनरेषि गच्छसि। यतोऽहमिन्द्रो विश्वस्मादुत्तरः। तथा च यास्कः–सुप्रसूतानि वः कर्माणि कल्पयावहै य एष स्वप्ननंशनः स्वप्नान्नाशयस्यादित्य उदयेन सोऽस्तमेषि पथा पुनरिति[1] ॥ २१ ॥

अथ द्वाविंशी–

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क्व१ स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥२२॥

यत् । उदञ्चः । वृषाकपे । गृहम् । इन्द्र । अजगन्तन । क्व ।
स्यः । पुल्वघः । मृगः । कम् । अगन् । जनऽयोपनः ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २२ ॥

गत्वा पुनरागतं वृषाकपिमिन्द्रः पृच्छति हे इन्द्र परमैश्वर्यवन् हे वृषाकपे यूयं उदंच उद्गामिनः सन्तो मद्गृहमजगन्तनागच्छ एकस्यापि बहुवचनं पूजार्थं तत्रभवतः संबन्धी पुल्वघो बहूनां

1 नि० १२. २८।

भौमरसानामत्ता स्यः सम्टगः क्वाभूत् जनयोपनोजनानां मोदयिता मृगः कंवा देशं आगन् अगच्छत् सोहमिन्द्रो विश्वस्मादुत्तरः। यद्वेन्द्राणीवाक्यमिदं। अत्र यास्कः—यउदंचोवृषाकपेगृहमिन्द्राजगमत्क्वस्यपुल्वाघोमृगःक्वसवह्वादीमृगोमृगोमार्ष्टेर्गतिकर्मणः कमगमद्देशंजनयोपन इति॥ २२॥

अथ त्रयोविंशी—

पर्शुर्हनाममानवीसाकंससूवविंशतिम्।
भद्रंभलत्यस्याअभूद्यस्याउदरमामयद्विश्वस्मादिन्द्रउत्तरः॥२३॥४॥

पर्शुः। ह। नाम। मानवी। साकम्। ससूव। विंशतिम्।
भद्रम्। भल। त्यस्यै। अभूत्। यस्याः। उदरम्।
आमयत्। विश्वस्मात्। इन्द्रः। उत्ऽतरः॥ २३॥ ४॥

इन्द्रविसृज्यमानं अनेनमंत्रेण वृषाकपिराशास्ते हेभल इन्द्रेण विसृज्यमानशर भलतिभेदनकर्मा पर्शुर्नाम मृगी हेतिपूरणः मानवी मनोर्दुहितेयं विंशतिं विंशतिसंख्याकान् पुत्रान् साकं सह ससूवाजीजनत् त्यस्यै तस्यै भद्रं भजनीयं कल्याणमभूत् भवतु लोडर्थे लुङ् यस्या उदरमामयत् गर्भस्थैर्विंशतिभिः पुत्रैः पुष्टमासीत् ममपितेन्द्रोविश्वस्मादुत्तरः॥ २३॥

॥ इत्यष्टमस्य चतुर्थे चतुर्थोवर्गः॥ ४॥

रक्षोहणमिति पंचविंशत्यृचं तृतीयं सूक्तं पायुर्नाम भारद्वाजऋषिः द्वाविंशाद्याश्चतस्रोनुष्टुभः रक्षोहाग्निर्देवता। तथाचानुक्रान्तं—रक्षोहणं पंचाधिकापायुराग्नेयं राक्षोघ्नं चतुरनुष्टुबन्तं। गतः सूक्तविनियोगः। अंगाराभिविहरणे परित्वाग्नइत्येषा जप्या। सूत्रितंच—यंधिष्णवतामित्यादिना परित्वाग्नेपुरंवयमित्यन्तेन।

तत्र प्रथमा—

रक्षोहणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म।
शिशानोअग्निःक्रतुभिःसमिद्धःसनोदिवासरिषःपातुनक्तम्॥ १॥

1 नि० १२. ३।

रक्षःऽहनम् । वाजिनम् । आ । जिघर्मि । मित्रम् । प्रथिष्ठम् ।
उप । यामि । शर्म । शिशानः । अग्निः । क्रतुऽभिः । सम्ऽइद्धः ।
सः । नः । दिवा । सः । रिषः । पातु । नक्तम् ॥ १ ॥

रक्षोहणं रक्षसां हन्तारं वाजिनं बलवन्तं अन्नवन्तं वाग्निमाजिघर्मि घृतेनाजुहोमि किंच मित्रं यजमानानां सखायं प्रथिष्ठं पृथुतमं शर्मगृहं उपयाम्युपगच्छामि सोयमग्निः शिशानः ज्वालास्तीक्ष्णीकुर्वन् क्रतुभिः कर्मपरैः पुरुषैः समिद्धः प्रज्वालितोभवति किंचसोग्निर्नोस्मान् दिवाहनि रिषोहिंसकाद्रक्षसः पातु रक्षतु सोग्निर्नक्तं रात्रौचास्मान् रक्षसः पातु ॥ १ ॥

अथ द्वितीया—

अयोदंष्ट्रोअर्चिषायातुधानानुपस्पृशजातवेदःसमिद्धः ।
आजिह्वयामूरदेवान्रभस्वक्रव्यादोवृक्त्व्यपिधत्स्वासन् ॥ २ ॥

अयःऽदंष्ट्रः । अर्चिषा । यातुऽधानान् । उप । स्पृश ।
जातऽवेदः । सम्ऽइद्धः । आ । जिह्वया । मूरऽदेवान् ।
रभस्व । क्रव्यऽअदः । वृक्त्वी । अपि । धत्स्व । आसन् ॥ २ ॥

हे जातवेदोजातधन जातप्रज्ञवा त्वं समिद्धः सम्यग्दीप्तः अयोदंष्ट्रोयोमयदंष्ट्रः तीक्ष्णदंष्ट्रः सन्नित्यर्थः यातुधानान् राक्षसान् अर्चिषा ज्वालयोपस्पृश संदहेत्यर्थः । किंच त्वं मूरदेवान् मूढदेवान् मारकव्यापारान् राक्षसान् जिह्वया ज्वालया रभस्व मारयेत्यर्थः । मारयित्वा च क्रव्यादोमांसभक्षकान् राक्षसान् वृक्त्वी छित्वाआसन्नास्ये पिधत्स्वापिधेहि आच्छादयेत्यर्थः॥२॥

अथ तृतीया—

उभोभयाविन्नुपधेहिदंष्ट्राहिंस्रःशिशानोवरंपरंच ।
उतान्तरिक्षेपरियाहिराजञ्जम्भैःसंधेह्यभियातुधानान् ॥ ३ ॥

उभा । उभयाविन् । उप । धेहि । दंष्ट्रा । हिंस्रः । शिशानः ।
अवरम् । परम् । च । उत । अन्तरिक्षे । परि । याहि । राजन् ।
जम्भैः । सम् । धेहि । अभि । यातुऽधानान् ॥ ३ ॥

हेउभयाविन् उभाभ्यां दंष्ट्राभ्यां युक्ताग्ने त्वं हिंस्रः राक्षसानां हिंसकः त्वं उभा उभे दंष्ट्रा दंष्ट्रे शिशानः तीक्ष्णीकुर्वन् उपधेहि वधार्हेषु राक्षसेषु प्रतिष्ठापय। किंच अवरं परंच जगद्रक्ष उतापिच हेराजन् दीप्ताग्ने त्वं अन्तरिक्षस्थितान् राक्षसान् परियाहि परिगच्छ परिगत्यच तान् यातुधानान् राक्षसान् जंभैः भक्षणसाधनभूताभिः दंष्ट्राभिः अभिसंधेहि संयोजय भक्षयेत्यर्थः॥ ३ ॥

अथ चतुर्थी—

यज्ञैरिषूः संनममानो अग्ने वाचा शल्याँ अशनिभिर्दिहानः।
ताभिर्विध्य हृदये यातुधानान्प्रतीचो बाहून्प्रति भङ्ध्येषाम् ॥ ४ ॥

यज्ञैः। इषूः। सम्ऽनमंमानः। अग्ने। वाचा। शल्यान्।
अशनिऽभिः। दिहानः। ताभिः। विध्य। हृदये। यातुऽधानान्।
प्रतीचः। बाहून्। प्रति। भङ्धि। एषाम् ॥ ४ ॥

हेअग्ने त्वं यज्ञैः अस्मदीयैर्बलकरैर्यागैः वाचा अस्मदीयया स्तुत्याच इषूः वक्रान् बाणान् संनममानः संनमयन् शल्यान् तासां शल्यान् अशनिभिः दीप्तिभिः संदिहानः तीक्ष्णीकुर्वन् ताभिरिषुभिः यातुधानान् राक्षसान् हृदये विध्य ततएषां यातुधानानां संबन्धिनः प्रतीचः युद्धाय प्रतिगतान् बाहून् प्रतिभङ्धि प्रत्यामर्दय ॥ ४ ॥

अथ पंचमी—

अग्ने त्वचं यातुधानस्य भिन्धि हिंस्राशनिर्हरसा हन्त्वेनम्।
प्र पर्वाणि जातवेदः शृणीहि क्रव्यात्क्रविष्णुर्वि चिनोतु वृक्णम् ॥ ५ ॥ ५ ॥

अग्ने। त्वचम्। यातुऽधानस्य। भिन्धि। हिंस्रा। अशनिः।
हरसा। हन्तु। एनम्। प्र। पर्वाणि। जातऽवेदः। शृणीहि।
क्रव्यऽअत्। क्रविष्णुः। वि। चिनोतु। वृक्णम् ॥ ५ ॥ ५ ॥

हेजातवेदः जातधन जातप्रज्ञ वाग्ने त्वं यातुधानस्य राक्षसस्य त्वचं भिंधि विदारय एनं भिन्नत्वचं यातुधानं हिंस्रा हिंसनशीला तवाशनिर्वज्रं हरसा तापेन हन्तु हिनस्तुच हतस्य राक्षसस्य पर्वाणि शरीरपर्वाणिच प्रश्रृणीहि छिन्धीत्यर्थः । छिन्नेषु शरीरसंधिषु सत्सु वृक्णं छिन्नसन्धिमेनं यातुधानं क्रविष्णुः मांसमिच्छन् क्रव्यात् मांसभक्षकोवृकादिः विचिनोतु भक्षयत्वित्यर्थः ॥ ५ ॥

॥ इत्यष्टमस्य चतुर्थे पंचमोवर्गः ॥ ५ ॥

अथ षष्ठी—

**यत्रेदानींपश्यसिजातवेदस्तिष्ठन्तमग्नउतवाचरन्तम् ।**
**यद्वान्तरिक्षेपथिभिःपतन्तंतमस्तांविध्यशर्वाशिशानः ॥ ६ ॥**

यत्र । इदानीम् । पश्यसि । जातऽवेदः । तिष्ठन्तम् । अग्ने ।
उत । वा । चरन्तम् । यत् । वा । अन्तरिक्षे । पथिऽभिः ।
पतन्तम् । तम् । अस्ता । विध्य । शर्वा । शिशानः ॥ ६ ॥

हेजातवेदः उत्पन्नप्रज्ञाग्ने त्वं यत्र पृथिव्यां तिष्ठन्तं उतापिच चरन्तं यद्वान्तरिक्षे पथिभिराकाशमार्गैः पतन्तं गच्छन्तं यातुधानमिदानीं संप्रति पश्यसि तं यातुधानमस्ता शराणां क्षेप्ता त्वं शिशानः शरान् तीक्ष्णीकुर्वन् शर्वा शरेण विध्य ॥ ६ ॥

अथ सप्तमी—

**उतालब्धंस्पृणुहिजातवेदआलेभानादृष्टिभिर्यातुधानात् ।**
**अग्नेपूर्वोनिजहिशोशुचानआमादःक्ष्विंकास्तमदन्त्वेनीः ॥ ७ ॥**

उत । आऽलब्धम् । स्पृणुहि । जातऽवेदः । आऽलेभानात् ।
ऋष्टिऽभिः । यातुऽधानात् । अग्ने । पूर्वः । नि । जहि । शोशुचानः ।
आमऽअदः । क्ष्विङ्काः । तम् । अदन्तु । एनीः ॥ ७ ॥

उतापिच हेजातवेदोग्ने त्वं आलब्धं हन्तुं हस्ताभ्यामारब्धं साधुं मां स्तोतारं यष्टारंवा आलेभानान् आलभमानान् यातुधानान् राक्षसान् ऋष्टिभिः आत्मीयैरायुधविशेषैः स्पृणुहि पारय रक्षेत्यर्थः । किंच पूर्वोमुख्यस्त्वं शोशुचानः प्रज्वलन् निजहि मांहन्तुमुद्युक्तं यातुधानं

मारय । किंच तं यातुधानं आमादोऽपक्वस्य मांसस्य भक्षकाः क्ष्विंकाः शब्दकारिण्यः टुक्षु शब्दे यद्वा क्ष्विंकानाम पक्षिविशेषः एनीः गंत्र्यः अदन्तु भक्षयंतु ॥ ७ ॥

अथाष्टमी–

इहप्रब्रूहियतमःसोअंग्नेयोयातुधानोयइदंकृणोति ।
तमारंभस्वसमिधांयविष्ठनृचक्षसश्चक्षुंषेरन्धयैनम् ॥ ८ ॥

इह । प्र । ब्रूहि । यतमः । सः । अग्ने । यः । यातुऽधानः । यः ।
इदम् । कृणोति । तम् । आ । रभस्व । सम्ऽइधा ।
यविष्ठ । नृऽचक्षसः । चक्षुषे । रन्धय । एनम् ॥ ८ ॥

हेयविष्ठ युवतमाग्ने योयातुधानः राक्षसोऽस्मद्यज्ञविघ्नकारी यश्चान्यः पिशाचादिः इदंयज्ञदूषणादि करोति सयतमः तमवधारणार्थं इहास्मिन् त्वद्विषययागकर्मणि वर्तमानाय मह्यं प्रब्रूहि तं पापकारिणं समिधा स्वकीयेन तेजसा रभस्व हन्तुं प्रारभस्व ततएनं पापिष्ठं नृचक्षसः नृणां द्रष्टुः तव चक्षुषे तेजसे रंधय तेजसा संदहेत्यर्थः ॥ ८ ॥

अथ नवमी–

तीक्ष्णेनांग्नेचक्षुंषारक्षयज्ञंप्राञ्चंवसुंभ्यःप्रणंयप्रचेतः ।
हिंस्रंरक्षांस्यभिशोशुंचानंमात्वांदभन्यातुधानांनृचक्षः ॥ ९ ॥

तीक्ष्णेन । अग्ने । चक्षुषा । रक्ष । यज्ञम् । प्राञ्चम् । वसुऽभ्यः । प्र ।
नय । प्रचेत इति प्रऽचेतः । हिंस्रम् । रक्षांसि । अभि । शोशुचानम् ।
मा । त्वा । दभन् । यातुऽधानाः । नृऽचक्षः ॥ ९ ॥

हे अग्ने त्वं तीक्ष्णेन तिग्मेन चक्षुषा तेजसा यज्ञमस्मदीयं यागं रक्ष पालय किंच हेप्रचेतः प्रकृष्टज्ञानाग्ने प्रांचं प्रांचितारं यज्ञं वसुभ्योवसूनामर्थाय प्रणय प्रकर्षेण नय । किंच हे-नृचक्षः नृणां द्रष्टरग्ने रक्षांसि हिंस्रं हिंसनशीलं अभिशोशुचानं अभिप्रदीप्तं त्वा त्वां यातुधानाः राक्षसाः मादभन् माहिंसिषुः ॥ ९ ॥

अथ दशमी—

नृचक्षारक्षःपरिपश्यविक्षुतस्यत्रीणिप्रतिंश्रृणीह्यग्रां ।
तस्यांग्नेपृष्टीर्हरंसाश्रृणीहित्रेधामूलंयातुधानंस्यवृश्च ॥ १०॥६ ॥

नृऽचक्षाः । रक्षः । परि । पश्य । विक्षु । तस्य । त्रीणि ।
प्रति । शृणीहि । अग्रा । तस्य । अग्ने । पृष्टीः । हरसा ।
शृणीहि । त्रेधा । मूलम् । यातुऽधानस्य । वृश्च ॥ १० ॥ ६ ॥

हे अग्ने नृचक्षाः नृणां द्रष्टा त्वं विक्षुः मनुष्येषु हिंसकत्वेन वर्तमानं रक्षः राक्षसं परिपश्य सर्वतोवलोकय अवलोक्यच तस्य रक्षसः त्रीणि अग्राअग्राणि शिरांसि प्रतिश्रृणीहि छिन्धीत्यर्थः ततः तस्य रक्षसः पृष्टीः पार्श्वस्थान् राक्षसानपि हरसा स्वकीयेन तेजसा शृणीहि मारय एवं त्रेधा यातुधानस्य तस्य राक्षसस्य मूलं पादं वृश्च छिन्धि ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थे षष्ठोवर्गः ॥ ६ ॥

अथैकादशी—

त्रिर्यातुधानःप्रसितिंतएत्वृतंयोअंग्नेअनृतेनहन्ति ।
तमर्चिषास्फूर्जयंञ्जातवेदःसमक्षमेनंगृणतेनिवृंङ्धि ॥ ११ ॥

त्रिः । यातुऽधानः । प्रऽसितिम् । ते । एतु । ऋतम् । यः । अग्ने ।
अनृतेन । हन्ति । तम् । अर्चिषा । स्फूर्जयन् । जातऽवेदः ।
समऽअक्षम् । एनम् । गृणते । नि । वृङ्धि ॥ ११ ॥

हेजातवेदः जातप्रज्ञाग्नेते त्वदीयां प्रसितिं ज्वालाप्रबन्धनं यातुधानोराक्षसः त्रिः त्रीन् वारानेतु गच्छतु । त्रिर्बद्धंयत्तत्सुबद्धं भवतिहि । किंच यातुधानः राक्षसः ऋतं सत्यं अनृतेनासत्येन हन्ति हिनस्ति तं यातुधानं अर्चिषा स्वकीयेन तेजसा स्फूर्जयन् निष्पिषन् स्फूर्जतिरत्रनिष्पेषणकर्मा एनं यातुधानं गृणते स्तोत्रं कुर्वते मह्यं समक्षं निवृङ्धि निगृह्य वर्जय वृकेण ॥ ११ ॥

अथ द्वादशी–

तदग्ने चक्षुः प्रति धेहि रेभे शफारुजं येन पश्यसि यातुधानम्।
अथर्ववज्ज्योतिषा दैव्येन सत्यं धूर्वन्तमचितं न्योष ॥ १२ ॥

तत्। अग्ने। चक्षुः। प्रति। धेहि। रेभे। शफऽआरुजम्। येन। पश्यसि। यातुऽधानम्। अथर्वऽवत्। ज्योतिषा। दैव्येन। सत्यम्। धूर्वन्तम्। अचितम्। नि। ओष ॥ १२ ॥

हेअग्ने त्वं रेभे शब्दायमाने राक्षसे तच्चक्षुः तेजः प्रतिधेहि प्रक्षिप येन चक्षुषा शफारुजं शफाभ्यामारुजंतं शफसदृशैर्नखैः साधूनामाभिमुख्येन भंजकं यातुधानं पश्यसि। किंच सत्यं धूर्वन्तं असत्येन हिंसंतं अचितं अज्ञानं दैव्येन दिविभवेन ज्योतिषा तेजसा अथर्ववत् न्योष नितरां दह दध्यङ् अथर्वा रक्षांसि हन्तेति प्रागुक्तं ॥ १२ ॥

अथ त्रयोदशी–

यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयन्त रेभाः।
मन्योर्मनसः शरव्या जायते या तया विध्य हृदये यातुधानान् ॥ १३ ॥

यत्। अग्ने। अद्य। मिथुना। शपातः। यत्। वाचः। तृष्टम्। जनयन्त। रेभाः। मन्योः। मनसः। शरव्या। जायते। या। तया। विध्य। हृदये। यातुऽधानान् ॥ १३

हेअग्ने अद्यास्मिन्नहनि मिथुना स्त्रीपुंसौ शपातः परस्परमाक्रोशतः यद्यदा रेभाः स्तोतारः वाचः संबन्धि तृष्टं कटुकं परस्पराक्रोशलक्षणं अधरं वा जनयन्त परस्परमाक्रोशन्तीत्यर्थः। तदा मन्योर्दीप्तस्य क्रुद्धस्य वा तव। तथाच यास्कः—मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वेति[1]। मनसः सकाशात् या शरव्या शरव्येषु जायते तया शरव्यया यातुधानान् राक्षसान् हृदये विद्ध्य ताडय मारयेत्यर्थः ॥ १३ ॥

---

१ नि० १०. २९।

अथ चतुर्दशी—

परांशृणीहितपंसायातुधानान्परांग्नेरक्षोहरंसाशृणीहि ।
परार्चिषामूरंदेवाञ्छृणीहिपरांसुतृपोंअभिशोशुंचानः ॥ १४ ॥

परां । शृणीहि । तपंसा । यातुऽधानांन् । परां । अग्ने । रक्षंः ।
हरंसा । शृणीहि । परां । अर्चिषां । मूरंऽदेवान् । शृणीहि ।
परां । असुऽतृपंः । अभि । शोशुंचानः ॥ १४ ॥

हेअग्ने यातुधानान् तपसा तापेन पराश्रृणीहि मारय । किंच रक्षः हरसा त्वदीयेनौष्ण्येन पराश्रृणीहि । किंच मूरदेवान् मारयितव्यान् राक्षसानार्चिषा स्वकीयेन तेजसा पराश्रृणीहि अपिच असुतृपः मनुष्याणामसुभिः तृप्ताये तानपि पराश्रृणीहीत्यर्थः ॥ १४ ॥

अथ पंचदशी—

पराद्यदेवावृंजिनंश्रृंणन्तुप्रत्यगेंनंशपथायन्तुतृष्टाः ।
वाचास्तेनंशरंवऋच्छन्तुमर्मन्विश्वंस्यैतुप्रसितियातुधानः ॥१५॥७॥

परां । अद्य । देवाः । वृजिनम् । शृणन्तु । प्रत्यक् । एनम् ।
शपथाः । यन्तु । तृष्टाः । वाचाऽस्तेनम् । शरंवः । ऋच्छन्तु ।
मर्मन् । विश्वंस्य । एतु । प्रऽसितिम् । यातुऽधानंः ॥ १५ ॥ ७ ॥

अद्यास्मिन्नहनि देवाः अग्निपुरोगाः सर्वे देवाः वृजिनं प्राणिनां प्राणैर्वर्जितारं यातुधानं पराश्रृणन्तु पराश्रृणवन्तु । अथैनमायान्तं राक्षसं तृष्टाः कटुकाः अस्माभिरुक्ताः शपथाः प्रत्यक् यन्तु किंच वाचास्तेनं अनृतवचनमेनं यातुधानं शरवः शरामर्मन् मर्मणि ऋच्छन्तु गच्छन्तु विश्वस्य व्याप्तस्याग्नेः प्रसितिं जालं । तथाच यास्कः—प्रसितिः प्रसहनात्तन्तुर्वा जालं वेति[1] । जालं यातुधानोराक्षस एतु गच्छतु ॥१५ ॥

॥ इत्यष्टमस्य चतुर्थे सप्तमोवर्गः ॥ ७ ॥

---

१ नि० ६. १२ ।

अथ षोडशी—

**यःपौरुषेयेणक्रविषासमङ्क्तेयोअश्व्येनपशुनायातुधानः ।**
**योअघ्न्यायाभरतिक्षीरमग्नेतेषांशीर्षाणिहरसापिवृश्च ॥ १६ ॥**

यः । पौरुषेयेण । क्रविषा । सम्ऽअंक्ते । यः । अश्व्येन ।
पशुना । यातुऽधानः । यः । अघ्न्यायाः । भरति । क्षीरम् ।
अग्ने । तेषाम् । शीर्षाणि । हरसा । आपि । वृश्च ॥ १६ ॥

योयातुधानोराक्षसः पौरुषेयेण पुरुषसंबन्धिना क्रविषा मांसेन समङ्क्ते आत्मानं संगमयति । यश्चाश्व्येन अश्वसमूहेन तदीयेन मांसेनेत्यर्थः । आत्मानं संगमयति योवा यातुधानोन्येन पशुनात्मानं संगमयति योवा यातुधानः अघ्न्यायागोः क्षीरं भरति हरति हे अग्ने त्वं तेषां सर्वेषामपि राक्षसानां शीर्षाणि शिरांसि हरसा त्वदीयेन तेजसा वृश्च छिन्धि ॥ १६ ॥

अथ सप्तदशी—

**संवत्सरीणंपयउस्रियायास्तस्यमाशीद्यातुधानोनृचक्षः ।**
**पीयूषमग्नेयतमस्तितृप्सात्तंप्रत्यञ्चमर्चिषाविध्यमर्मन् ॥ १७ ॥**

संवत्सरीणम् । पयः । उस्रियायाः । तस्य । मा । अशीत् ।
यातुऽधानः । नृऽचक्षः । पीयूषम् । अग्ने । यतमः । तितृप्सात् ।
तम् । प्रत्यञ्चम् । अर्चिषा । विध्य । मर्मन् ॥ १७ ॥

हेनृचक्षः नृणां द्रष्टरग्ने उस्रियायाः अस्मदीयायाः गोः उस्रिया अहीति गोनामसु पाठात् संवत्सरीणं संवत्सरेण भवं यत्पयोस्तियातुधानोराक्षसः तस्य माशीत्तत्पयोमाभक्षयतु । किंच यतमोयोराक्षसः पीयूषंपीयूषेण विभक्तिव्यत्ययः अस्मदीयायागोः पयसा तितृप्सात् आत्मानं तर्पयितुमिच्छति तं प्रत्यंचं युद्धायात्मानं प्रतिगतं राक्षसं मर्मन् मर्मणि प्राणवियोगस्थाने अर्चिषा स्वकीयेन तेजसा विद्ध्य ताडय मारयेत्यर्थः ॥ १७ ॥

अथाष्टादशी—

विषंगवांयातुधानाःपिबन्त्वावृश्च्यन्तामदितयेदुरेवाः ।
परैनांदेवःसवितादंदातुपराभागमोषधीनांजयन्ताम् ॥ १८ ॥

विषम् । गवाम् । यातुऽधानाः । पिबन्तु । आ । वृश्च्यन्ताम् ।
अदितये । दुःऽएवाः । परा । एनान् । देवः । सविता । ददातु ।
परा । भागम् । ओषधीनाम् । जयन्ताम् ॥ १८ ॥

हेअग्ने यातुधानाराक्षसाः गवां पशूनां गृहे स्थितं विषं पिबन्तु किंचादितयेदित्यर्थं दुरेवाः दुस्तरायातुधानाः आवृश्च्यन्तां त्वदीयैरायुधैराच्छिद्यन्तां । किंच सविता देवः एतान् राक्षसान् पराददातु हिंस्रेभ्यः प्रयच्छतु अपिच तेमीराक्षसा ओषधीनां स्वभूतं भागं भजनीयं अन्नं पराजयन्तां लभन्तामित्यर्थः ॥ १८ ॥

अथैकोनविंशी—

सनादंग्नेमृणसियातुधानान्नत्वारक्षांसिपृतनासुजिग्युः ।
अनुंदहसहमूरान्क्रव्यादोमातेहेत्यामुक्षतदैव्यायाः ॥ १९ ॥

सनात् । अग्ने । मृणसि । यातुऽधानान् । न । त्वा । रक्षांसि ।
पृतनासु । जिग्युः । अनु । दह । सहऽमूरान् । क्रव्यऽअदः ।
मा । ते । हेत्याः । मुक्षत । दैव्यायाः ॥ १९ ॥

हेअग्ने त्वं सनाच्चिरादेवारभ्य यातुधानान् राक्षसान् मृणसि बाधसे तथापि त्वां पृतनासु संग्रामेषु रक्षांसि राक्षसा नजिग्युः नाजयन् किंच सत्वं अधुना अन्वनुक्रमेण सह मूरान् मूलेन सहितान् मारकव्यापारेण युक्तान् क्रव्यादोमांसभक्षकान् राक्षसान् दह तेजसा भस्मीकुरु । किंच तव संबन्धिनोदैव्यायाः दैव्यात् हेत्याआयुधात् ते यातुधानामामुक्षत मुक्तामाभूवन् ॥१९॥

अथ विंशी—

त्वंनोअग्नेअधरादुदक्तात्त्वंपश्चादुतरक्षापुरस्तात् ।
प्रतितेतेअजरासस्तपिष्ठाअघशंसंशोशुचतोदहन्तु ॥ २० ॥ ८ ॥

त्वम् । नः । अग्ने । अधरात् । उदक्तात् । त्वम् । पश्चात् । उत ।
रक्ष । पुरस्तात् । प्रति । ते । ते । अजरासः । तपिष्ठाः ।
अघऽशंसम् । शोशुचतः । दहन्तु ॥ २० ॥ ८ ॥

हेअग्ने त्वं नोस्मान् अधरात् दक्षिणतः उत्तरादिदिक्समभिव्याहारादधरशब्दोत्र दक्षिणादिक्परइतिविज्ञायते । उदक्तात् उत्तरश्च रक्ष पाहि उतापिच हेअग्ने त्वं पश्चात् पश्चिमतः पुरस्तात्पूर्वतश्च नोस्मान् रक्ष चतसृषु दिक्षु अवस्थितेभ्योराक्षसेभ्योस्मान् पाहीत्यर्थः । किंच तेतव संबन्धिनः ते तपिष्ठाः अतिशयेन तप्यमाना अजरासोजरावर्जिताः शोशुचतो ज्वलन्तः सन्तोरश्मयोऽघशंसं पापशंसकं राक्षसं प्रतिदहन्तु भस्मीकुर्वन्तु ॥ २० ॥

॥ इत्यष्टमस्य चतुर्थेष्टमोवर्गः ॥ ८ ॥

अथैकविंशी—

पश्चात्पुरस्तादधरादुदक्तात्कविःकाव्येनपरिपाहिराजन् ।
सखेसखायमजरोजरिम्णेग्नेमर्ताँअमर्त्यस्त्वंनः ॥ २१ ॥

पश्चात् । पुरस्तात् । अधरात् । उदक्तात् । कविः । काव्येन ।
परि । पाहि । राजन् । सखे । सखायम् । अजरः ।
जरिम्णे । अग्ने । मर्तान् । अमर्त्यः । त्वम् । नः ॥ २१ ॥

हेराजन् दीप्ताग्ने कविः क्रान्तदर्शनस्त्वं काव्येन कविकर्मणा पश्चात् पश्चिमतः पुरस्तात्पूर्वतोधराद्दक्षिणतश्चोदक्तात् उत्तरतश्चास्मान् परिपाहि परितोरक्ष किंच हेसखे मित्रभूताग्ने अजरोजरारहितस्त्वं मां सखायं जरिम्णे जरायै कुरु त्वत्प्रसादादहं चिरंजीवामीत्यर्थः । एतावदेवदर्शयति हेअग्ने अमर्त्योमरणधर्मरहितस्त्वं मर्तान्मरणधर्मवतोनोस्मान् जरिम्णेजरायै कुर्वित्यर्थः ॥ २१ ॥

अथ द्वाविंशी—

परित्वाग्नेपुरंवयंविप्रंसहस्यधीमहि ।
धृषद्वर्णंदिवेदिवेहन्तारंभङ्गुरावताम् ॥ २२ ॥

परिं । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि ।
धृषत्ऽवर्णम् । दिवेऽदिवे । हन्तारम् । भङ्गुरऽवताम् ॥ २२ ॥

हेसहस्य सहसेहित सहसोजात वाग्ने पुरं पूरकं विप्रं मेधाविनं धृषद्वर्णं धर्षकरूपं भंगुरावतां भंगुरकर्मयुक्तानां रक्षसां दिवेदिवे प्रत्यहं हन्तारं हिंसितारं त्वा त्वां वयं पायुनामधेयाः भारद्वाजाः रक्षसां हननाय परिधीमहि ॥ २२ ॥

अथ त्रयोविंशी—

विषेणभंगुरावतःप्रतिष्मरक्षसोदह ।
अग्नेतिग्मेनशोचिषातपुरग्राभिर्ऋष्टिभिः ॥ २३ ॥

विषेण । भङ्गुरऽवतः । प्रति । स्म । रक्षसः । दह । अग्ने । तिग्मेन ।
शोचिषा । तपुःऽअग्राभिः । ऋष्टिऽभिः ॥ २३ ॥

हेअग्ने त्वं भंगुरावतो भंजनकर्मयुक्तान् रक्षसोराक्षसान् विषेण व्याप्तेन तिग्मेन शोचिषा तेजसा प्रतिदह भस्मीकुरु । तथा तपुरग्राभिः तपनशीलाग्राभिः ऋष्टिभिः ऋष्टयआयुधविशेषास्ताभिरपि प्रतिदह ॥ २३ ॥

अथ चतुर्विंशी—

प्रत्यग्नेमिथुनादहयातुधानाकिमीदिना ।
संत्वाशिशामिजागृह्यदब्धंविप्रमन्मभिः ॥ २४ ॥

प्रति । अग्ने । मिथुना । दह । यातुऽधाना । किमीदिना । सम् ।
त्वा । शिशामि । जागृहि । अदब्धम् । विप्र । मन्मऽभिः ॥ २४ ॥

हेअग्ने त्वं मिथुना मिथुनभूतानि किमीदिना किमिदानीमिति येचरन्ति तेकिमीदिनस्तान् । तथाच यास्कः—किमीदिनेकिमिदानीमितिचरतेकिमिदंकिमिदमितिवेति[1] । यातुधानान् राक्षसान् प्रतिदह किंच हेविप्र मेधाविन्नग्ने अदब्धं केनाप्यहिंसितं त्वा त्वां मन्मभिः स्तुतिभिरहं संशिशामि स्तौमीत्यर्थः अतस्त्वं जागृहि निद्रां माकुरु बुध्यस्वेत्यर्थः ॥ २४ ॥

---

१ नि० ६. ११ ।

अथ पंचविंशी—

प्रत्यग्नेहरसाहरःशृणीहिविश्वतःप्रति ।
यातुधानस्यरक्षसोबलंविरुजवीर्यम् ॥ २५ ॥ ९ ॥

प्रति । अग्ने । हरसा । हरः । शृणीहि । विश्वतः । प्रति ।
यातुऽधानस्य । रक्षसः । बलम् । वि । रुज । वीर्यम् ॥ २५ ॥ ९ ॥

हेअग्ने त्वं हरसा त्वदीयेन तेजसा तथाचयास्कः—हरोहरतेज्योतिर्हरउच्यतेइति[1] । यातुधानस्य राक्षसस्य हरोहरणशीलं बलं प्रतिशृणीहि नाशयेत्यर्थः । तथा रक्षसोराक्षसस्य वीर्यंच विरुज भंजय ॥ २५ ॥

॥ इत्यष्टमस्य चतुर्थे नवमोवर्गः ॥ ९ ॥

हविष्पान्तमित्येकोनविंशत्यृचं चतुर्थंसूक्तं त्रैष्टुभं मूर्धन्वानृषिः सचांगिरसोवामदेव्योवा सूर्योवैश्वानरगुणकोग्निश्चसमुदितौदेवता तथाचानुक्रान्तं—हविरेकोनांगिरसोमूर्धन्वान्वामदेव्योवासौर्यवैश्वनरीयमिति । व्यूढस्य दशरात्रस्य पंचमे हन्याग्निमारुते एतद्वैश्वानरीयं निविद्धानं। सूत्रितंच—हविष्पान्तमग्निर्होतागृहपतिःसराजेति ।

तत्र प्रथमा—

हविष्पान्तमजरंस्वर्विदिदिविस्पृश्याहुतंजुष्टमग्नौ ।
तस्यभर्मणेभुवनायदेवाधर्मणेकंस्वधयापप्रथन्त ॥ १ ॥

हविः । पान्तम् । अजरम् । स्वःऽविदि । दिविऽस्पृशि ।
आऽहुतम् । जुष्टम् । अग्नौ । तस्य । भर्मणे । भुवनाय ।
देवाः । धर्मणे । कम् । स्वधया । पप्रथन्त ॥ १ ॥

पान्तं पानीयं सोमात्मकं अजरं जरारहितं जुष्टं देवानां प्रियं यद्धविः स्वर्विदिसूर्यस्यवेदितरि दिविस्पृशि दिविस्पष्टर्यग्नावाहुतमभिहुतं तस्य सोमात्मकस्य हविषोभर्मणे भरणाय भुवनाय भावनायच धर्मणे धारणायच कं सर्वस्य सुखकरमिममग्निं देवाः स्व-

1 नि० ४.१९ ।

धयान्नेन पप्रथन्त प्रथयन्ति । तथाच यास्कः—हविर्यत्पानीयमजरंसूर्यविदिदिविस्पृश्याभिहुतंजुष्टमग्नौतस्यभरणायचभावनायचधारणायचैतेभ्यःसर्वेभ्यःकर्मभ्योदेवाइममग्निमन्नेनापप्रथन्तेति[1] ॥ १ ॥

अथ द्वितीया—

गीर्णंभुवंनंतमसापंगूळ्हमाविःस्वंरभवज्जातेअग्नौ ।
तस्यंदेवाःपृथिवीद्यौरुतापोरंणयन्नोषंधीःसख्येअंस्य ॥ २ ॥

गीर्णम् । भुवंनम् । तमंसा । अपंऽगूळ्हम् । आविः । स्वंः । अभवत् । जाते । अग्नौ । तस्यं । देवाः । पृथिवी । द्यौः । उत । आपंः । अरंणयन् । ओषंधीः । सख्ये । अस्य ॥ २ ॥

गीर्णं पूर्वंनिगीर्णं तमसान्धकारेणापगूढमाच्छादितं स्वः सर्वंभुवनमग्नौ यस्मिन्वैश्वानरे जाते उत्पन्ने सत्याविरभवदाविर्भवति तस्यास्य वैश्वानरस्याग्नेः सख्ये सखिकर्मणि देवाइन्द्रादयः पृथिवीभूमिश्च द्यौश्चापोन्तरिक्षं चोदकानि चोषधीरोषध्यश्चारणयन्नरमन्त प्रीतिं कृतवन्तइत्यर्थः ॥ २ ॥

अथ तृतीया—

देवेभिर्न्विषितोयज्ञियेंभिरग्निंस्तोषाण्यजरंबृहन्तंम् ।
योभानुनांपृथिवींद्यामुतेमामांततानरोदंसीअन्तरिक्षम् ॥ ३ ॥

देवेभिः । नु । इषितः । यज्ञियेंभिः । अग्निम् । स्तोषाणि । अजरंम् । बृहन्तंम् । यः । भानुनां । पृथिवीम् । द्याम् । उत । इमाम् । आऽततानं । रोदंसी इति । अन्तरिक्षम् ॥ ३ ॥

यज्ञियेभिर्यज्ञार्हैर्देवेभिः देवैरिन्द्रादिभिर्नुक्षिप्रमिषितोहमजरं जरारहितं बृहन्तं महान्तमग्निं तं वैश्वानराग्निं स्तोषाणि स्तौमि योवैश्वानराग्निर्भानुना तेजसा पृथिवींभूमिमुतापि चेमां द्यां दिवं चान्तरिक्षंचततानातनोति तदेवदर्शयति रोदसी द्यावापृथिव्यौचाततानातनोति विस्तारयतीत्यर्थः ॥ ३ ॥

---

१ नि० ७. २५ ।

अथ चतुर्थी—

**योहोतासीत्प्रथमोदेवजुंष्टोयंसमाञ्जन्नाज्येनावृणानाः ।**
**सपतत्रीत्वरंस्थाजगद्यच्छ्वात्रमग्निरंकृणोज्जातवेदाः ॥ ४ ॥**

यः । होता । आसीत् । प्रथमः । देवऽजुंष्टः । यम् । सम्ऽआञ्जन् ।
आज्येन । वृणानाः । सः । पतत्रि । इत्वरम् । स्थाः । जगत् ।
यत् । श्वात्रम् । अग्निः । अकृणोत् । जातऽवेदाः ॥ ४ ॥

योवैश्वानरोग्निर्देवजुष्टोदेवैः सेवितः प्रथमोमुख्योहोतासीत् अभूत् यंच वैश्वानराग्निं यजमानावृणाना आज्येन समांजन् समंजन्ति जातवेदाः जातप्रज्ञोजातधनोवा सवैश्वानरोग्निः पतत्रि पतनशीलं पक्षिजातं इत्वरं गमनशीलं सरीसृपादिकं स्थाः स्थावरं वृक्षादिरूपं चजगत् स्थावरं जंगमंच जगदित्यर्थः श्वात्रं क्षिप्रमेवाकृणोदजनयत् । तथाचयास्कः—सपतत्रिचेत्वरंस्थावरंजंगमंचयत्तत्क्षिप्रमग्निरकरोज्जातवेदाइति[1] ॥ ४ ॥

अथ पंचमी—

**यज्जातवेदोभुवनस्यमूर्धन्नतिष्ठोअग्नेसहरोचनेन ।**
**तंत्वाहेममतिभिर्गीर्भिरुक्थैःसयज्ञियोअभवोरोदसिप्राः ॥५॥१०॥**

यत् । जातऽवेदः । भुवनस्य । मूर्धन् । अतिष्ठः । अग्ने । सह ।
रोचनेन । तम् । त्वा । अहेम । मतिऽभिः । गीःऽभिः । उक्थैः ।
सः । यज्ञियः । अभवः । रोदसिऽप्राः ॥ ५ ॥ १० ॥

हे जातवेदोजातप्रज्ञाग्ने यद्यस्त्वं भुवनस्य त्रैलोक्यस्य मूर्धन् मूर्धनि रोचनेनादित्येन सहातिष्ठः स्थितवानसि तं वैश्वानराग्निं त्वा त्वां मतिभिरर्चनीयाभिर्गीर्भिः स्तुतिभिरुक्थशस्त्रैः अहेम प्रपद्यामहे । हिगताविति धातुः सवैश्वानरस्त्वं रोदसिप्राः द्यावापृथिव्योः पूरयिता यज्ञियोयज्ञार्हश्च भवः भवसि ॥ ५ ॥

॥ इत्यष्टमस्य चतुर्थे दशमोवर्गः ॥ १० ॥

---

[1] नि० ५. ३ ।

अथ षष्ठी—

**मूर्धाभुवोभवतिनक्तमग्निस्ततःसूर्योजायतेप्रातरुद्यन् ।**
**मायामूतुयज्ञियानामेतामपोयत्तूर्णिश्चरतिप्रजानन् ॥ ६ ॥**

मूर्धा । भुवः । भवति । नक्तम् । अग्निः । ततः । सूर्यः । जायते ।
प्रातः । उत्ऽयन् । मायाम् । ऊँ इति । तु । यज्ञियानाम् ।
एताम् । अपः । यत् । तूर्णिः । चरति । प्रऽजानन् ॥ ६ ॥

अग्निर्वैश्वानरोग्निर्नक्तं रात्रौ भुवोभूतजातस्य मूर्धा शिरोवत् प्रधानभूतोभवति रात्रौ सर्वप्राणिनामालोकस्य तदधीनत्वात् ततोरात्रेरनन्तरं प्रातरुद्यन् सूर्योजायते अहनि। सएव वैश्वानरोग्निः सूर्योभवतीत्यर्थः । किंच यज्ञियानां यज्ञसंपादिनांदेवानांमायामु प्रज्ञामेवैतां मन्यंते कवयइति शेषः । यत्प्रजानन् प्रज्ञायमानः सूर्यः तूर्णिस्त्वरमाणः सन्नपोन्तरिक्षं कर्मवाचरति । तथाचयास्कः—मूर्धामूर्तमस्मिन्धीयते मूर्धा यःसर्वेषांभूतानां भवतिनक्तमग्निस्ततः सूर्योजायते प्रातरुद्यन् सएवप्रज्ञांत्वेतांमन्यन्ते यज्ञियानांदेवानां यज्ञसंपादिनामपोयत्कर्मचरति प्रजानन् सर्वाणिस्थानान्यनुसंचरतित्वरमाणइति ॥ ६ ॥

अथ सप्तमी—

**दृशेन्योयोमहिनासमिद्धोरोचतदिवियोनिर्विभावा ।**
**तस्मिन्नग्नौसूक्तवाकेनदेवाहविर्विश्वआजुहवुस्तनूपाः ॥ ७ ॥**

दृशेन्यः । यः । महिना । सम्ऽइद्धः । अरोचत । दिविऽयोनिः ।
विभाऽवा । तस्मिन् । अग्नौ । सूक्तऽवाकेन । देवाः । हविः ।
विश्वे । आ । अजुहवुः । तनूऽपाः ॥ ७ ॥

योवैश्वानरोग्निः महिना महत्त्वेन दृशेन्यः सर्वदर्शनीयः समिद्धः सम्यक् दीप्तोदिवि योनिः द्युस्थानोविभावा दीप्तिमांश्च सन्नरोचत दीप्यते तस्मिन् वैश्वानरेग्नौ तनूपाः शरीराणां

१ नि० ७. २७ ।

रक्षकाः विश्वे सर्वे देवाः सूक्तवाकेनेदंद्यावापृथिवीत्यादिनावाक्येन स्तोत्राणां वचनेन वा हविराजुहवुराभिमुख्येनजुहवुः ॥ ७ ॥

अथाष्टमी—

सूक्तवाकंप्रथममादिदग्निमादिद्धविरजनयन्तदेवाः ।
सएषांयज्ञोअभवत्तनूपास्तंद्यौर्वेदतंपृथिवीतमापः ॥ ८ ॥

सूक्तऽवाकम् । प्रथमम् । आत् । इत् । अग्निम् । आत् । इत् ।
हविः । अजनयन्त । देवाः । सः । एषाम् । यज्ञः । अभवत् ।
तनूऽपाः । तम् । द्यौः । वेद । तम् । पृथिवी । तम् । आपः ॥ ८ ॥

सूक्तवाकमिति प्रथमं पूर्वं सूक्तवाकमिदंद्यावापृथिवीत्यादिवाक्यं मनसा निरूपयंति आदिदनन्तरं एवाग्निंमथनेनोत्पादयंति आदिदनन्तरमेव देवाः हविरजनयन्त जनयन्ति सवैश्वानरोग्निरेषां देवानां यज्ञोयष्टव्योभवद्भवति सतनूपाः शरीराणां रक्षिताच भवति तमग्निं द्यौः द्युलोकोवेद जानाति तमग्निं पृथिवी भूमिरपिचजानाति तमग्निमपोन्तरिक्षं च जानाति ॥ ८ ॥

अथ नवमी—

यंदेवासोजनयन्ताग्निंयस्मिन्नाजुहवुर्भुवनानिविश्वा ।
सोअर्चिषापृथिवींद्यामुतेमामृजूयमानोअतपन्महित्वा ॥ ९ ॥

यम् । देवासः । अजनयन्त । अग्निम् । यस्मिन् । आ । अजुहवुः ।
भुवनानि । विश्वा । सः । अर्चिषा । पृथिवीम् । द्याम् । उत ।
इमाम् । ऋजुऽयमानः । अतपत् । महिऽत्वा ॥ ९ ॥

यं वैश्वानरमग्निं देवासोदेवा अजनयन्त उत्पादितवन्तः यस्मिंश्चोत्पन्ने वैश्वानराग्नौ विश्वा विश्वानि भुवनानि भूतान्याजुहवुः आभिमुख्येनाजुहवुः सर्वमेधे वैश्वानरोग्निरर्चिषा तेजसा पृथिवीमन्तरिक्षमपः पृथिवीत्यन्तरिक्षनामसु पाठात् द्यां दिवं चउतापिचेमां भूमिं च ऋजूयमानः ऋजुगमनो महित्वा महत्वेनातपत सर्वं तपति ॥ ९ ॥

अथ दशमी—

स्तोमेनहिदिविदेवासोअग्निमजीजनञ्छक्तिभीरोदसिप्राम् ।
तमूअकृण्वन्त्रेधाभुवेकंसओषधीःपचतिविश्वरूपाः ॥१०॥ ११॥

स्तोमेन । हि । दिवि । देवासः । अग्निम् । अजीजनन् । शक्तिऽभिः ।
रोदसिऽप्राम् । तम् । ऊँ इति । अकृण्वन् । त्रेधा । भुवे । कम् ।
सः । ओषधीः । पचति । विश्वऽरूपाः ॥ १० ॥ ११ ॥

देवासोदेवाः शक्तिभिः कर्मभिः रोदसिप्रां द्यावापृथिव्योरापूरयितारं अग्निं सूर्यात्मकं दिवि द्युलोके स्तोमेन हि स्तुत्या खलु अजीजनन्नुत्पादितवन्तः अपिच तमु तमेव कं सुख करमग्निं यज्ञे त्रेधाभुवेत्रेधाभावायाकृण्वन् कुर्वन्ति सपृथिव्यां वर्तमानोविश्वरूपाः सर्वरूपा ओषधीर्व्रीह्याद्यास्तेन तेनोपकारेण पचति । अत्रयास्कः—स्तोमेनयंहिदिविदेवासोग्निमजनयन् शक्तिभिः कर्मभिर्द्यावापृथिव्योरापूरणंतमकुर्वंस्त्रेधाभावायपृथिव्यामन्तरिक्षेदिवीति शाकपूणिः यदस्यदिवितृतीयंतदसावादित्यइतिहिब्राह्मणमिति ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थे एकादशोवर्गः ॥ ११ ॥

अथैकादशी—

यदेदेनमदधुर्यज्ञियासोदिविदेवाःसूर्यमादितेयम् ।
यदाचरिष्णूमिथुनावभूतामादित्प्रापश्यन्भुवनानिविश्वा ॥ ११ ॥

यदा । इत् । एनम् । अदधुः । यज्ञियासः । दिवि । देवाः ।
सूर्यम् । आदितेयम् । यदा । चरिष्णू इति । मिथुनौ । अभूताम् ।
आत् । इत् । प्र । अपश्यन् । भुवनानि । विश्वा ॥ ११ ॥

यदेद्यदैव मातरादितेयमदितेः पुत्रं सूर्यमेनमग्निं च यज्ञियासोयज्ञार्हाः देवादिवि द्युलोके अदधुः धृतवन्तः यदा चेमौ चरिष्णू चरणशीलौ सूर्यवैश्वानरौ मिथुनावभूतां प्रादुरभूतां आ दिदनन्तरमेव विश्वा विश्वानि भुवनानि भूतजातानि प्रापश्यन्तौ पश्यन्ति । अत्रयास्कः—यदैन

१ नि० ७. २८. ।

मदधुर्यज्ञियाःसर्वेदिविदेवाः सूर्यमादितेयमदितेःपुत्रं यदाचरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्चमिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा थुइतिनामकरणस्थकारोवा नयतिः परोवनिर्वासमाश्रितावन्योन्यं नयतोवनुतोवामनुष्यमिथुनावप्येतस्मादेवमेथन्तावन्योन्यं वनुतइतिवेति ॥ ११ ॥

अथ द्वादशी—

**विश्वस्मा॑अ॒ग्निंभुव॑नायदे॒वावै॑श्वान॒रंके॒तुमह्ना॒मकृ॑ण्वन् ।**
**आयस्त॒तानो॒षसो॑विभा॒तीरपो॑ऊर्णोति॒तमो॑अ॒र्चिषा॒यन् ॥ १२ ॥**

विश्व॑स्मै । अ॒ग्निम् । भुव॑नाय । दे॒वाः । वै॒श्वा॒न॒रम् । के॒तुम् ।
अह्ना॑म् । अकृ॑ण्वन् । आ । यः । त॒तान॑ । उ॒षसः॑ । वि॒ऽभा॒तीः ।
अपो॒ इति॑ । ऊ॒र्णोति॒ । तमः॑ । अ॒र्चिषा॑ । यन् ॥ १२ ॥

देवाइन्द्रादयोविश्वस्मै सर्वस्मै भुवनाय वैश्वानरं विश्वनरहितं अग्निमह्नां दिवसानां केतुं प्रज्ञापकमकृण्वन् अकुर्वन् योवैश्वानराग्निरुषसोविभातीर्विविधं दीप्यमानाआततान विस्तारयति किंच सोयं यन् गच्छन् तमोन्धकारमर्चिषा तेजसापोऊर्णोति अपगमयति ॥ १२ ॥

अथ त्रयोदशी—

**वै॒श्वा॒न॒रंक॒वयो॑य॒ज्ञियासो॒ग्निंदे॒वाअ॑जनयन्नजु॒र्यम् ।**
**नक्ष॑त्रंप्र॒त्नममि॑नच्च॒रिष्णुय॒क्षस्याध्य॑क्षंत॒वि॒षंबृ॒हन्त॑म् ॥ १३ ॥**

वै॒श्वा॒न॒रम् । क॒वयः॑ । य॒ज्ञियासः॑ । अ॒ग्निम् । दे॒वाः । अ॒ज॒न॒य॒न् ।
अ॒जु॒र्यम् । नक्ष॑त्रम् । प्र॒त्नम् । अमि॑नत् । च॒रि॒ष्णु । य॒क्षस्य॑ ।
अधि॑ऽअक्षम् । त॒वि॒षम् । बृ॒हन्त॑म् ॥ १३ ॥

कवयोमेधाविनोयज्ञियासोयज्ञार्हायज्ञसंपादिनोवा देवाअजुर्यं जरावर्जितमहिंस्यं वा वैश्वानरं विश्वनरहितं सूर्यात्मकमग्निं अजनयन्नुत्पादितवन्तः । सच देवैरुत्पादितोग्निर्नक्षत्रं कृत्तिकादि प्रत्नं पुराणं चरिष्णु चरणशीलं यक्षस्य यक्षतिः पूजार्थः प्रयक्षमित्यादौ दर्शनात्

१ नि० ७. २९ ।

यक्षस्य पूज्यस्य देवस्याध्यक्षं प्रत्यक्षंस्वामिनं वा तविषं वृद्धं बृहन्तं महान्तममिनत् हिंसितवान् तेजसाभिभूतवानित्यर्थः ॥ १३ ॥

अथ चतुर्दशी—

**वैश्वानरंविश्वहादीदिवांसंमन्त्रैरग्निंकविमच्छावदामः।**
**योमहिम्नापरिबभूवोर्वीउतावस्तादुतदेवःपरस्तात् ॥ १४ ॥**

वैश्वानरम् । विश्वहा । दीदिऽवांसम् । मन्त्रैः । अग्निम् । कविम् ।
अच्छ । वदामः । यः । महिम्ना । परिऽबभूव । उर्वी इति ।
उत । अवस्तात् । उत । देवः । परस्तात् ॥ १४ ॥

विश्वहा सर्वदा दीदिवांसं दीप्तं कविं क्रान्तप्रज्ञं वैश्वानरमग्निं मंत्रैरच्छावदामोभिष्टुमः। योवैश्वानरोग्निर्महिम्ना महत्त्वेनोर्वी द्यावापृथिव्यौ परिबभूव परिभवति उतापिचायमवस्तात् अधस्तात् तपति उतापिचायं सूर्यात्मकोदेवः परस्तादुपरिष्टाच्च तपतीति शेषः ॥ १४ ॥

अथ पञ्चदशी—

**द्वेस्रुतीअंशृणवंपितॄणामहंदेवानामुतमर्त्यानाम्।**
**ताभ्यामिदंविश्वमेजत्समेतियदन्तरापितरंमातरंच ॥ १५ ॥ १२ ॥**

द्वे इति । स्रुती इति । अशृणवम् । पितॄणाम् । अहम् । देवानाम् ।
उत । मर्त्यानाम् । ताभ्याम् । इदम् । विश्वम् । एजत् । सम् ।
एति । यत् । अन्तरा । पितरम् । मातरम् । च ॥ १५ ॥ १२ ॥

पितॄणां च देवानां च उतापिच मर्त्यानांमनुष्याणां च द्वे स्रुती द्वौ मार्गौ देवयानपितृयाणाख्यौ अहमशृणवमश्रौषं यत् विश्वं पितरं पालकत्वेन पितृभूतं द्यां मातरं च धारकत्वेन मातृभूतां पृथिवीं चान्तरा द्यावापृथिव्योर्मध्ये भवति तदिदं विश्वमग्निना संस्कृतं सदेजद्देवलोकं पितृलोकं गच्छत् ताभ्यां देवयानपितृयाणाख्याभ्यां मार्गाभ्यामेति गच्छति। तौ च मार्गौ भगवदादेशितौ—अग्निर्ज्योतिरहःशुक्लःषण्मासाउत्तरायणं। तत्रप्रयातागच्छन्तिब्रह्मब्रह्मविदोजनाः॥१॥ धूमोरात्रिस्तथाकृष्णःषण्मासादक्षिणायनं। तत्रचान्द्रमसंज्योतिर्योगीप्राप्यनिवर्तते ॥ २ ॥

शुक्लकृष्णेगतीह्येतेजगतःशाश्वतेमते । एकयायात्यनावृत्तिमन्ययावर्ततेपुनः ॥ ३ ॥ नैतेसृतीपार्थजानन्योगीमुह्यतिकश्चनेति[1] ॥ १५ ॥

॥ इत्यष्टमस्य चतुर्थे द्वादशोवर्गः ॥ १२ ॥

अथ षोडशी—

द्वेसमीचीबिभृतश्चरन्तंशीर्षतोजातंमनसाविमृष्टम् ।
सप्रत्यङ्विश्वाभुवनानितस्थावप्रयुच्छन्तरणिर्भ्राजमानः॥ १६॥

द्वे इति । समीची इति सम्ऽईची । बिभृतः । चरन्तम् । शीर्षतः ।
जातम् । मनसा । विऽमृष्टम् । सः । प्रत्यङ् । विश्वा ।
भुवनानि । तस्थौ । अप्रऽयुच्छन् । तरणिः । भ्राजमानः ॥ १६ ॥

समीची संगते द्यावापृथिव्यौ चरन्तं गच्छन्तं शीर्षतःशिरस्तोजातमुत्पन्नं तथाचनिगमान्तरं—उतमन्येहमेनमनयोर्हिशिरस्तोयंप्रातर्जायतइति । यद्वा सर्वशिरोभूतादादित्याज्जातमित्यर्थः । मनसा मन्यतिरर्चतिकर्मा अर्चनीयया स्तुत्या विमृष्टं शोधितं संस्कृतं अग्निं बिभ्रतोधारयतः सोप्रयुच्छन् अप्रमाद्यन् तरणिः क्षिप्रकारी भ्राजमानोदीप्यमानोग्निः विश्वा विश्वानि भुवनानि प्रत्यङ्ङभिमुखस्तस्थौ तिष्ठति । तथाचश्रूयते—तस्मात्सर्वएवमन्यन्तेमांप्रत्युदगादिति ॥ १६ ॥

अथ सप्तदशी—

यत्रावदेतेअवरःपरश्चयज्ञन्योःकतरोनौविवेद ।
आशेकुरित्सधमादंसखायोनक्षन्तयज्ञंकइदंविवोचत् ॥ १७ ॥

यत्र । वदेते इति । अवरः । परः । च । यज्ञऽन्योः । कतरः । नौ ।
वि । वेद । आ । शेकुः । इत् । सधऽमादम् । सखायः ।
नक्षन्त । यज्ञम् । कः । इदम् । वि । वोचत् ॥ १७ ॥

1 भगवद्गीताअ० ८ ।

यत्र यस्मिन्काले अवरःपार्थिवोग्निर्दैव्योहोता परश्च मध्यमोवायुश्चोभौ वदेते विवादं कुर्वाते यज्ञन्योर्यज्ञस्य नेत्रोर्नौ आवयोर्मध्ये कतरोभूयिष्ठं यज्ञं विवेद वेत्ति तत्र सखायः समानख्यानाकृत्विजः सधमादं यज्ञं आशेकुः कर्तुं शक्नुवन्ति तथा यज्ञं नक्षन्ताश्नुवतेनुतिष्ठन्ति च ये तेषां विदुषां यज्ञमश्नुवानानां मध्ये कोविद्वान् अनुष्ठाता वेदमस्यविवादस्य निर्णयरूपं वाक्यं विवोचत् ब्रवीतिमाध्यमिकमिममग्निं ब्रवीति । तथाचयास्कः—यत्रविवदेतेदैव्यौ होतारावयंचाग्निरसौ चमध्यमःकतरोनौ यज्ञे भूयोवेदेत्याशक्नुवन्ति तत्सहमदनंसमानाख्यानाकृत्विजस्तेषां यज्ञंसमश्नुवानानां कोनइदंविवक्ष्यतीति[1] ॥ १७ ॥

अथाष्टादशी—

कत्यग्नयःकतिसूर्यासःकत्युषासःकत्युंस्विदापः ।
नोपस्पिजंवःपितरोवदामिपृच्छामिवःकवयोविद्मनेकम् ॥ १८ ॥

कति । अग्नयः । कति । सूर्यासः । कति । उषसः । कति ।
ऊँ इति । स्वित् । आपः । न । उपऽस्पिजम् । वः । पितरः ।
वदामि । पृच्छामि । वः । कवयः । विद्मने । कम् ॥ १८ ॥

एवं विवदमानावग्निवायू पितॄन् प्रश्नमेयतुः तत्र मध्यमस्तान् पृच्छति कत्यग्नयः अग्नयः कति कतिसंख्याकाः सूर्यासः सूर्याश्च कतिसंख्याकाः उषासः उषसश्च कति आपश्च कति उइति पूरणः स्विच्छब्दोत्र विचारणार्थः । हे पितरोवोयुष्माकं उपस्पिजमुपस्पिजमिति स्पर्धायुक्तं वचनमुच्यते पूर्वोक्तं प्रश्नवचनमेतत् न वदामि नवक्ष्यामि किं तर्ह्यहमजानन् हे कवयोमेधाविनोयुष्मान् विद्मने विज्ञानाय कं वचनमुच्यते पूर्वोक्तं सुखं स्वरूपपर्यालोचनक्लेशमन्तरेण पृच्छामि । अत्रोत्तराणि वालखिल्यसंहितायां[2] दर्शितानि—एकएवाग्निर्बहुधासमिद्धएकःसूर्योविश्वमनुप्रभूतः । एकैवोषाःसर्वमिदंविभात्येकंवाइदंविबभूवसर्वमिति ॥ ॥ १८ ॥

अथैकोनविंशी—

यावन्मात्रमुषसोनप्रतीकंसुपर्ण्योवसंतेमातरिश्वः ।
तावद्दधात्युपयज्ञमायन्ब्राह्मणोहोतुरवरोनिषीदन् ॥१९॥ १३॥

---

१ नि० ७. ३० । २ ऋक्संहितायांषष्ठाष्टकस्य चतुर्थाध्याये त्रयोदशवर्गानन्तरं अष्टादशवर्गात्मकंवालखिल्यंपठ्यते. तत्र षोडशेवर्गेद्वितीयोयं मन्त्रः ।

याव॒त्ऽमा॒त्रम् । उ॒षसः॑ । न । प्रती॑कम् । सु॒ऽप॒र्ण्यः॑ । वस॑ते ।
मा॒त॒रि॒श्व॒ः । ताव॑त् । द॒धा॒ति॒ । उप॑ । य॒ज्ञम् । आ॒ऽयन् ।
ब्रा॒ह्म॒णः । होतुः॑ । अव॑रः । नि॒ऽसीद॑न् ॥ १९ ॥ १३ ॥

प्रकृतस्य वैश्वानरस्य विषये यः प्रश्नः तस्य निर्णयं अनया वदन्ति हे मातरिश्वः मातर्यन्तरिक्षे श्वसन् माध्यमिक वायो यावन्मात्रं यावदेव सुपर्ण्यः सुपतनारात्रयउषसः प्रतीकं मुखं प्रकाशाख्यं दर्शनं वा नेति पूरणः वसतेआच्छादयन्ति तावदेव ब्राह्मणोहोता अवरोनिकृष्टोहोतुरस्याग्नेर्वैश्वानरस्य दैव्यस्य होतुर्ज्ञानं निषीदन् हौत्रं कर्म कर्तुमुपविशन् यज्ञमायन् उपगच्छन् उपदधाति होतृकर्मस्वबुद्धौ धारयति । तथाचयास्कः—यावन्मात्रमुषसःप्रत्यक्तंभवति प्रतिदर्शनमिति वास्त्युपमानस्य संप्रत्यर्थेप्रयोगइहेवनिधेहीति यथासुपर्ण्यःसुपतनाएतारात्रयोवसतेमातरिश्वंज्योतिर्वर्णस्य तावदुपदधाति यज्ञमागच्छन् ब्राह्मणोहोतास्याग्नेर्होतुरवरोनिषीदन् होतृजपस्त्वनग्निर्वैश्वानरीयोभवतीति[1] ॥ १९ ॥

॥ इत्यष्टमस्य चतुर्थे त्रयोदशोवर्गः ॥ १३ ॥

इन्द्रंस्तवेत्यष्टादशर्चं पंचमं सूक्तं वैश्वामित्रस्य रेणोरार्षं त्रैष्टुभमैन्द्रं अनुक्रान्तंच—इन्द्रंस्तव ह्यूना रेणुरिति । सूर्यस्तुन्नाम्न्येकाहे इदं सूक्तं निष्केवल्यनिविद्धानं । सूत्रितंच—सूर्यस्तुतायशस्कामः पिबासोममिन्द्रंस्तवेति माध्यंदिनइति ।

तत्र प्रथमा—

इन्द्रं॒स्तवा॒नृत॑मं॒यस्य॑म॒ह्नाविब॑बा॒धेरो॑च॒नाविज्मोअन्ता॑न् ।
आयःप॒प्रौच॑र्षणी॒धृद्वरो॑भि॒ःप्रसिन्धु॑भ्योरिरिचा॒नोम॑हि॒त्वा ॥ १ ॥

इन्द्र॑म् । स्तव॒ । नृऽत॑मम् । यस्य॑ । म॒ह्ना । वि॒ऽब॒बा॒धे । रो॒च॒ना ।
वि । ज्मः । अन्ता॑न् । आ । यः । प॒प्रौ । च॒र्ष॒णि॒ऽधृत् । वरः॑ऽभिः ।
प्र । सिन्धु॑ऽभ्यः । रि॒रि॒चा॒नः । म॒हि॒ऽत्वा ॥ १ ॥

---

१ नि० ७. ३१ ।

हे स्तोतस्त्वं नृतमं नेतृतममिन्द्रं स्तव स्तुहि यस्येन्द्रस्य मह्ना महत्त्वं विभक्तिव्यत्ययः रोचना परेषां तेजांसि विबबाधे विबाधते अभिभवतीत्यर्थः विज्मः पृथिव्याश्चान्तान् पर्यन्तान-भिभवति यश्चेन्द्रश्चर्षणीधृन्मनुष्याणां धर्ता सिन्धुभ्यः समुद्रेभ्योपि महित्वा महत्वेन प्ररिरिचानः प्रवर्धमानश्च सन् वरोभिस्तमसां वारकैस्तेजोभिरापप्रौ द्यवापृथिव्यावापूरयति ॥ १ ॥

अथ द्वितीया—

**ससूर्यःपर्युरुवरांस्येन्द्रोववृत्याद्रथ्येवचक्रा ।**
**अतिष्ठन्तमपस्यंनसर्गंकृष्णातमांसित्विष्याजघान ॥ २ ॥**

सः । सूर्यः । परि । उरु । वरांसि । इन्द्रः । ववृत्यात् । रथ्याऽइव ।
चक्रा । अतिष्ठन्तम् । अपस्यम् । न । सर्गम् । कृष्णा ।
तमांसि । त्विष्या । जघान ॥ २ ॥

सूर्यः सुवीर्यः सः प्रसिद्धः इन्द्रः उरु बहूनि वरांसि तेजांसि पर्याववृत्यात्पर्यावर्तयति । तत्र दृष्टन्तः—रथ्येव यथासारथी रथसंबन्धीनि चक्रा चक्राण्यावर्तयति तद्वदित्यर्थः । किंच सोयमतिष्ठन्तं शीघ्रं गच्छन्तमपस्यं न कर्मण्यमिव सर्गं सृज्यतइति सर्गोश्वस्तं कृष्णा कृष्णानि तमांसि त्विष्या दीप्त्या जघान हन्ति ॥ २ ॥

अथ तृतीया—

**समानमस्माअनपावृदर्चक्ष्मयादिवोअसमंब्रह्मनव्यम् ।**
**वियःपृष्ठेवजनिमान्यर्यइन्द्रश्चिकायनसखायमीषे ॥ ३ ॥**

समानम् । अस्मै । अनपऽवृत् । अर्च । क्ष्मया । दिवः ।
असमम् । ब्रह्म । नव्यम् । वि । यः । पृष्ठाऽइव । जनिमानि ।
अर्यः । इन्द्रः । चिकाय । न । सखायम् । ईषे ॥ ३ ॥

हे स्तोतस्त्वं समानं मया सहानपावृदपगतिरहितं क्ष्मया दिवोदिवः पृथिव्याश्चासमं अत्यन्तमतिरिक्तं महदित्यर्थः । नव्यं नवतरमन्यैरकृतपूर्वं ब्रह्म स्तोत्रमस्माइन्द्रायार्चोच्चारय ।

इन्द्रोजनिमानि यज्ञे यज्ञेषु जातानि पृष्ठेव पृष्ठसंज्ञकानि स्तोत्राणि वार्योरीन् शत्रून् विचिकाय विचिनोति सखायं च नेषे नेच्छति ॥ ३ ॥

अथ चतुर्थी—

**इन्द्रा॑य॒गिरो॒अनि॑शितसर्गाअ॒पः प्रेर॑यं॒सग॑रस्य॒बु॒ध्नात् ।**
**योअक्षे॑णेव॒च॒क्रिया॒शची॑भि॒र्विष्व॑क्त॒स्तम्भ॑पृथि॒वीमु॒तद्याम् ॥ ४॥**

**इन्द्रा॑य । गिर॑: । अनि॑शितऽसर्गा: । अ॒प: । प्र । ई॒र॒य॒म् ।**
**सग॑रस्य । बु॒ध्नात् । य: । अक्षे॑णऽइव । च॒क्रिया॑ । शची॑भि: ।**
**विष्व॑क् । त॒स्तम्भ॑ । पृ॒थि॒वीम् । उ॒त । द्याम् ॥ ४ ॥**

इन्द्रायेन्द्रार्थं अनिशितसर्गाअतनूकृतविसर्गाउपर्युपरिवर्तमानायागिरः स्तुतयस्ताभिर्गीर्भिः सगरस्यान्तरिक्षस्य सगरः समुद्रइत्यन्तरिक्षनामसु पाठात् बुध्नात् प्रदेशात् अपउदकानि प्रेरयं प्रेरयामि इन्द्रः शचीभिः कर्मभिः पृथिवीमुतापिच द्यां दिवं च चक्रिया रथचक्राण्यक्षेणेव यथा रथाक्षेण तद्वद्विष्वक् सर्वतस्तस्तंभास्तभ्नात् ॥ ४ ॥

अथ पंचमी—

**आपा॑न्तमन्युस्तृ॒पल॑प्रभर्मा॒धुनि॒: शिमी॑वा॒ञ्छरु॑माँ ऋजी॒षी ।**
**सोमो॒विश्वा॑न्यत॒सावना॑नि॒नार्वा॒गिन्द्रं॑प्रति॒माना॑निदे॒भुः ॥५॥१४॥**

**आपा॑न्तऽमन्यु: । तृ॒पल॑ऽप्रभर्मा । धुनि॑: । शिमी॑ऽवान् । शरु॑ऽमान् ।**
**ऋ॒जी॒षी । सोम॑: । विश्वा॑नि । अ॒त॒सा । वना॑नि । न ।**
**अ॒र्वाक् । इन्द्र॑म् । प्र॒ति॒ऽमाना॑नि । दे॒भु॒: ॥ ५ ॥ १४ ॥**

आपान्तमन्युरापातितमन्युः तृपलप्रभर्मा ग्रावादिभिः क्षिप्रप्रहारी धुनिः शत्रूणां कंपयियिता शिमीवान् कर्मवान् शरुमानायुधवान् ऋजीषी ऋजीषवान् सोमोविश्वानि सर्वाणि अतसा अतसमयानि वनान्यरण्यानि वर्धयतीतिशेषः । प्रतिमानानि प्रतिमानभूतानि समानद्रव्याणीत्यर्थः इन्द्रं अर्वाक् देभुः दभ्नोतिरत्राकर्षणकर्मा तुलया मीयमानानि आत्माभिमुखत-

या नाकर्षयन्ति लघूनि भवन्तीत्यर्थः। अन्यत्र प्रतिनिधीयमानानि गुरूणि तान्यात्माभिमुख-
माकर्षन्ति नैवमिन्द्रं कुर्वंतीति सर्वेभ्योमहानिन्द्रइत्यर्थः। त्रयः पादाः सौम्याः तुरीयस्त्वैन्द्रः।
तथाचयास्कः। आपातितमन्युस्तृपप्रहारी क्षिप्रप्रहारी सृप्रप्रहारी सोमोवेन्द्रोवा धुनिर्धुनोतेः
शमीति कर्मनाम शमयतेर्वा शक्नोतेर्वर्जीषी सोमोयत्सोमस्य पूयमानस्यातिरिच्यते तदृजीष-
मपार्जितं भवति तेनर्जीषी सोमोथाप्यैन्द्रोनिगमोभवत्यृजीषी वज्रीतिसोमः सर्वाण्यतसानि व-
नानि नार्वागिन्द्रंप्रतिमानानिदभ्नुवन्ति यैरेनं प्रतिमिमते नैनंतानि दभ्नुवन्तीति ॥ ५ ॥

॥ इत्यष्टमस्य चतुर्थे चतुर्दशोवर्गः ॥ १४ ॥

अथ षष्ठी—

नयस्यद्यावापृथिवीनधन्वनान्तरिक्षन्नाद्रयःसोमोअक्षाः।
यदस्यमन्युरधिनीयमानःशृणातिवीळुरुजतिस्थिराणि ॥ ६ ॥

न। यस्य। द्यावापृथिवी इति। न। धन्व। न। अन्तरिक्षम्। न।
अद्रयः। सोमः। अक्षारिति। यत्। अस्य। मन्युः।
अधिऽनीयमानः। शृणाति। वीळु। रुजति। स्थिराणि ॥ ६ ॥

द्यावापृथिवी द्यावापृथिव्यौ यस्येन्द्रस्य प्रतिमानभूते न भवतः नधन्वउदकमपिप्रतिमान
भूतंनभवतिनान्तरिक्षं अन्तरिक्षमपिप्रतिमानभूतंनभवतिनअद्रयः पर्वताश्च प्रतिमानभूतान भव
न्ति तस्येन्द्रस्य सोमोअक्षाः क्षरति। किंच यद्यदास्येन्द्रस्य मन्युः क्रोधोधिनीयमानः शत्रूणा
मुपरिप्राप्यमाणोभवति तदानीमयमिन्द्रोवीळु दृढं शृणाति हिनस्ति स्थिराणि रुजति भिन
त्तिच ॥ ६ ॥

अथ सप्तमी—

जघानवृत्रंस्वधितिर्वनेवरुरोजपुरोअरदन्नसिन्धून्।
बिभेदगिरिंनवमिन्नकुम्भमागाइन्द्रोअकृणुतस्वयुग्भिः ॥ ७ ॥

---

१ नि० ५. १२।

जघान॑ । वृ॒त्रम् । स्व॒ऽधि॑तिः । वना॑ऽइव । रु॒रोज॑ । पुरः॑ । अर॑दत् ।
न । सिन्धू॑न् । बि॒भेद॑ । गि॒रिम् । नवम् । इत् । न । कु॒म्भम् ।
आ । गाः । इन्द्र॑ः । अ॒कृ॒णु॒त॒ । स्व॒यु॒क्ऽभिः॑ ॥ ७ ॥

इन्द्रोवृत्रमसुरं जघान हतवान् अपिच स्वधितिः परशुर्वनेव वनानीव पुरः शत्रुनगरीरु रोज रुजति भिनत्ति शत्रुनगरीर्भित्वा च सिन्धून् नदीररदत् वृष्ट्युदकेनालिखत् नेति संप्रत्यर्थे किंच गिरिं मेघं नवं न नवमिव कुंभं कलशं बिभेदेत् भिनत्त्येव किंचेन्द्रः स्वयुग्भिः स्वयं युज्यमानैर्मरुद्भिः गाउदकान्याकृणुत अस्मदभिमुखं करोति ॥ ७ ॥

अथाष्टमी—

त्वंह॒त्यदृ॑ण॒याइ॑न्द्र॒धीरो॒सिर्न॒पर्व॑वृ॒जि॒ना॑शृ॒णा॒सि ।
प्रयेमि॒त्रस्य॒वरु॑णस्य॒धाम॑यु॒जन्न॒जना॑मि॒नन्ति॑मि॒त्रम् ॥ ८ ॥

त्वम् । ह॒ । त्यत् । ऋ॒ण॒ऽयाः । इ॒न्द्र॒ । धीर॑ः । अ॒सिः । न । पर्व॑ ।
वृ॒जि॒ना । शृ॒णा॒सि॒ । प्र । ये । मि॒त्रस्य॑ । वरु॑णस्य । धाम॑ ।
युज॑म् । न । जना॑ः । मि॒नन्ति॑ । मि॒त्रम् ॥ ८ ॥

हे इन्द्र धीरः प्राज्ञस्त्वं ह त्वं खलु त्यत्तदृणयाः स्तोतृविषयाणां ऋणानां प्रापयितासि किंच त्वमसिर्न शस्त्रमिव पर्व पशूनां पर्वाणि वृजिना वृजिनानि स्तोतॄणामुपद्रवाणि शृणासि हंसि। किंच मित्रस्य वरुणस्य मित्रावरुणयोर्धाम धारकं कर्म युजंन युक्तमिव मित्रं ये अज्ञा-नृशंसाजनाः प्रमिनन्ति प्रकर्षेण हिंसन्ति तानपि शृणासीत्यर्थः ॥ ८ ॥

अथ नवमी—

प्रयेमि॒त्रंप्रार्य॒मणं॑दु॒रेवा॒ःप्रस॒ङ्गिर॒ःप्रवरु॑णंमि॒नन्ति॑ ।
न्य१॒॑मित्रे॑षु॒वध॒मिन्द्र॒तुम्रं॒वृष॒न्वृषा॑णमरु॒षंशि॑शीहि ॥ ९ ॥

प्र । ये । मि॒त्रम् । प्र । अ॒र्य॒मण॑म् । दुः॒ऽएवा॑ः । प्र । स॒म्ऽगिर॑ः ।
प्र । वरु॑णम् । मि॒नन्ति॑ । नि । अ॒मित्रे॑षु । व॒धम् । इ॒न्द्र॒ ।
तुम्र॑म् । वृष॑न् । वृषा॑णम् । अ॒रु॒षम् । शि॒शी॒हि॒ ॥ ९ ॥

ये दुरेवादुष्टगमनाजनाः मित्रं देवं प्रमिनन्ति हिंसन्ति अर्यमणं च देवं प्रमिनन्ति प्रसंगिरः समीचीनस्तुतिमन्तोमरुतश्च प्रमिनन्ति वरुणं च देवं प्रमिनन्ति तेष्वमित्रेषु शत्रुषु तानुद्दिश्येत्यर्थः हे वृषन् कामानां वर्षकेन्द्र त्वं तुम्रं गमनशीलं वृषणं कामानां वर्षकं अरुषमारोचमानं वधं वज्रं वधः वज्रइति वज्रनामसु पाठात् निशिशीहि तीक्ष्णीकुरु ॥ ९ ॥

अथ दशमी—

इन्द्रोदिवइन्द्रईशेपृथिव्याइन्द्रोअपामिन्द्रइत्पर्वतानाम् ।
इन्द्रोवृधामिन्द्रइन्मेधिराणामिन्द्रःक्षेमेयोगेहव्यइन्द्रः॥१०॥१५॥

इन्द्रः । दिवः । इन्द्रः । ईशे । पृथिव्याः । इन्द्रः । अपाम् । इन्द्रः ।
इत् । पर्वतानाम् । इन्द्रः । वृधाम् । इन्द्रः । इत् । मेधिराणाम् ।
इन्द्रः । क्षेमे । योगे । हव्यः । इन्द्रः ॥ १० ॥ १५ ॥

दिवोद्युलोकस्येन्द्रईशे ईष्टे पृथिव्याभूमेरपीन्द्रईशेईश्वरोभवति अपामुदकानामपीन्द्रईश्वरोभवतिपर्वतानां मेघानामपीन्द्रएवेश्वरोभवति वृधां वृद्धानामपीन्द्रएवेश्वरः मेधिराणां प्रज्ञानामपीन्द्रएवेश्वरोभवति किंचेन्द्रः क्षेमेलब्धस्य धनस्य परिपालने हव्योह्वातव्योयोगे अलब्धस्य लाभेपीन्द्रएव ह्वातव्योभवति ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थे पंचदशोवर्गः ॥ १५ ॥

अथैकादशी—

प्राक्तुभ्यइन्द्रःप्रवृधोअहभ्यःप्रान्तरिक्षात्प्रसमुद्रस्यधासेः ।
प्रवातस्यप्रथसःप्रज्मोअन्तात्प्रसिन्धुभ्योरिरिचेप्रक्षितिभ्यः॥ ११॥

प्र । अक्तुऽभ्यः । इन्द्रः । प्र । वृधः । अहःऽभ्यः । प्र । अन्तरिक्षात् ।
प्र । समुद्रस्य । धासेः । प्र । वातस्य । प्रथसः । प्र । ज्मः । अन्तात् ।
प्र । सिन्धुऽभ्यः । रिरिचे । प्र । क्षितिऽभ्यः ॥ ११ ॥

इन्द्रःअक्तुभ्योरात्रिभ्यः प्रवृधः प्रवृद्धः अहभ्योदिवसेभ्योपि प्रवृधोधिकः अन्तरिक्षादपि प्रवृद्धः समुद्रस्याब्धेः धासेर्धारकात् स्थानादपि प्रवृद्धः वातस्य वायोः प्रथसः प्रथिम्नो-

पि प्रवृद्धः ज्मः पृथिव्याअन्तात् पर्यन्तादपि प्रवृद्धः सिन्धुभ्यः नदीभ्यश्च प्ररिरिचे अतिरिच्यते महान्भवतीत्यर्थः क्षितिभ्योमन्युष्येभ्योपि प्ररिरिचे ॥ ११ ॥

अथ द्वादशी–

प्रशोशुचत्याउषसोनकेतुरसिन्वातेवर्ततामिन्द्रहेतिः ।
अश्मेवविध्यदिवआसृजानस्तपिष्ठेनहेषसाद्रोघमित्रान् ॥ १२॥

प्र । शोशुचत्याः । उषसः । न । केतुः । असिन्वा । ते । वर्तताम् ।
इन्द्र । हेतिः । अश्माऽइव । विध्य । दिवः । आ । सृजानः ।
तपिष्ठेन । हेषसा । द्रोघऽमित्रान् ॥ १२ ॥

हे इन्द्र ते तव असिन्वा भेदनरहिताहेतिर्वज्राख्यमायुधं शोशुचत्याः ज्वलन्त्याः उषसोन यथा उषसः केतुः पताकस्थानीयोरश्मिः तद्वत् शत्रुषुप्रवर्ततां । किंच तपिष्ठेन अतिशयेन शत्रूणां तापयित्र्या हेषसा शब्दकारिण्या हेत्या द्रोघमित्रान् द्रुग्धानि मित्राणि येषां ते द्रोघमित्राः तान् शत्रून् विध्य ताडय । तत्र दृष्टान्तः—दिवआसृजानः सृज्यमानोश्मेव यथा अशनिः वृक्षान् विध्यति तद्वदित्यर्थः ॥ १२ ॥

अथ त्रयोदशी–

अन्वहमासाअन्विद्वनान्यन्वोषधीरनुपर्वतासः ।
अन्विन्द्रंरोदसीवावशानेअन्वापोअजिहतजायमानम् ॥ १३ ॥

अनु । अह । मासाः । अनु । इत् । वनानि । अनु । ओषधीः ।
अनु । पर्वतासः । अनु । इन्द्रम् । रोदसी इति । वावशाने इति ।
अनु । आपः । अजिहत । जायमानम् ॥ १३ ॥

जायमानं प्रादुर्भवन्तं इन्द्रं मासाश्चैत्रादयः अन्वजिहत अनुगच्छन्ति अहेतिपूरणः वनान्यरण्यान्यपि इन्द्रमन्वजिहत इदितिपूरणः ओषधीरोषध्योपीन्द्रमनुगच्छन्ति पर्वतासः पर्वताअपीन्द्रमनुगच्छन्ति वावशाने कामयमाने रोदसी द्यावापृथिव्यावपीन्द्रमनुगच्छतः आपः उदकान्यपि इन्द्रमनुगच्छन्ति मासाद्यधिष्ठातृदेवताः प्रादुर्भवन्तमिन्द्रमनुगच्छन्तीत्यर्थः ॥१३॥

अथ चतुर्दशी—

कर्हिस्वित्सातइन्द्रचेत्यासदघस्ययद्भिनदोरक्षएषत् ।
मित्रक्रुवोयच्छसनेनगावःपृथिव्याआपृगमुयाशयन्ते ॥ १४ ॥

कर्हि । स्वित् । सा । ते । इन्द्र । चेत्या । असत् । अघस्य । यत् ।
भिनदः । रक्षः । आऽईषत् । मित्रऽक्रुवः । यत् । शसने । न ।
गावः । पृथिव्याः । आऽपृक् । अमुया । शयन्ते ॥ १४ ॥

हे इन्द्र ते तव सा हेतिः इषुर्वा चेत्या चेतयितव्या शत्रुषु क्षेप्तव्या कर्हिस्वित् कदावा असत् भविष्यति यद्यदा हेत्या त्वमघस्य द्वितीयार्थेषष्ठी अहतमेषत् युद्धार्थमागच्छद्रक्षोभिनदोभिनत् यद्यदा च शक्त्या मित्रक्रुवः मित्राणां क्रूरस्य कर्मणः कर्तारोजनाः पृथिव्याः संबन्धिनि शसने विशसनस्थाने गावोन पशवइव आपृक् आपर्चना हताः सन्तः अमुया अनया पृथिव्यासंगतायुद्धेशयन्ते शेरते ॥ १४ ॥

अथ पञ्चदशी—

शत्रूयन्तोअभियेनस्ततस्रेमहिव्राधन्तओगणासइन्द्र ।
अन्धेनामित्रास्तमसासचन्तांसुज्योतिषोअक्तवस्ताँअभिष्युः॥१५॥

शत्रुऽयन्तः । अभि । ये । नः । ततस्रे । महि । व्राधन्तः ।
ओगणासः । इन्द्र । अन्धेन । अमित्राः । तमसा । सचन्ताम् ।
सुऽज्योतिषः । अक्तवः । तान् । अभि । स्युरिति स्युः ॥ १५ ॥

हे इन्द्र शत्रूयन्तः महि अत्यन्तं व्राधन्तोस्मान् बाधमानाओगणासः संघीभूताः ये शत्रवोनोस्मान् अभिततस्रे निक्षिपन्ति ते अमित्राः शत्रवः अन्धेन तमसा महतान्धकारेण सचन्तां संगच्छन्तां किंच तानमित्रान् सुज्योतिषः दिवसाः अक्तवोरात्रयश्चाभिष्युः अभिभवन्तु ॥१५॥

अथ षोडशी—

पुरूणिहित्वासवनाजनानांब्रह्माणिमन्दन्गृणतामृषीणाम् ।
इमामाघोषन्नवसासहूतिंतिरोविश्वाँअर्चतोयाह्यर्वाङ् ॥ १६ ॥

पुरूणि । हि । त्वा । सवना । जनानाम् । ब्रह्माणि । मन्दन् ।
गृणताम् । ऋषीणाम् । इमाम् । आऽघोषन् । अवसा ।
सहूतिम् । तिरः । विश्वान् । अर्चतः । याहि । अर्वाङ् ॥ १६ ॥

हे इन्द्र त्वा त्वां जनानां संबन्धीनि पुरूणि बहूनि सवना सवनानि ब्रह्माणि स्तोत्राणि च मन्दन् स्तुवन्ति मोदयन्ति वा गृणतां स्तुवतां ऋषीणां इमां सहूतिं स्तुतिं त्वमाघोषन् महती शब्दवती चेयं स्तुतिरितिवदन् अर्चतः स्तुवतोन्यान् विश्वान् सर्वानपि तिरः तिरस्कृत्य अवसा रक्षणेन सह अर्वांगस्मदभिमुखं याहिगच्छ ॥ १६ ॥

अथ सप्तदशी—

एवातेवयमिन्द्रभुञ्जतीनांविद्यामसुमतीनांनवानाम् ।
विद्यामवस्तोरवसागृणन्तोविश्वामित्राउततइन्द्रनूनम् ॥ १७ ॥

एव । ते । वयम् । इन्द्र । भुञ्जतीनाम् । विद्याम । सुऽमतीनाम् ।
नवानाम् । विद्याम । वस्तोः । अवसा । गृणन्तः ।
विश्वामित्राः । उत । ते । इन्द्र । नूनम् ॥ १७ ॥

हे इन्द्र ते तव एव एवं भुंजतीनां रक्षन्तीः प्रियावयं विश्वामित्रपुत्रारेणवोविद्याम लभेमहि उतापिच हे इन्द्र ते तव नवानां नूतनाः सुमतीनामनुग्रहबुद्धीः वस्तोरहनि अवसा रक्षणार्थं गृणन्तः नूनं त्वां स्तुवन्तएव विश्वामित्राः विश्वामित्रपुत्राः वयं विद्याम लभेम ॥ १७ ॥

अथाष्टादशी—

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥ १८ ॥ १६ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् ।
वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १८ ॥ १६ ॥

अस्मिन् भरे संग्रामे शुनं वृद्धं मघवानं धनवन्तं शृण्वन्तं अस्मदीयस्याह्वानस्य श्रोतारं उग्रं उद्गूर्णं समत्सु संग्रामेषु वृत्राणि शत्रून् घ्नन्तं मारयन्तं धनानां शत्रुधनानां संजितं सम्यगेवजेतारं इन्द्रं वाजसातावन्नस्य लाभाय ऊतये रक्षणाय च हुवेमाह्वयेम ॥ १८ ॥

॥ इत्यष्टमस्य चतुर्थे षोडशोवर्गः ॥ १६ ॥

सहस्रशीर्षेति षोडशर्चं षष्ठं सूक्तं नारायणोनामऋषिरंत्या त्रिष्टुप् शिष्टानुष्टुभः अव्यक्तमहदादिविलक्षणश्चेतनोयः पुरुषः पुरुषान्नापरंकिंचिदित्यादिश्रुतिषुप्रसिद्धः सदेवता । तथाचानुक्रान्तं—सहस्रशीर्षा षोळश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तंत्विति । गतोविनियोगः ।

तत्र प्रथमा—

सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ।
सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

सहस्रऽशीर्षा । पुरुषः । सहस्रऽअक्षः । सहस्रऽपात् । सः ।
भूमिम् । विश्वतः । वृत्वा । अति । अतिष्ठत् । दशऽअङ्गुलम् ॥ १ ॥

सर्वप्राणिसमष्टिरूपोब्रह्माण्डदेहोविराडाख्योयःपुरुषःसोयं सहस्रशीर्षा सहस्रशब्दस्य उपलक्षणत्वादनन्तैः शिरोभिर्युक्तइत्यर्थः । यानिसर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वं एवं सहस्राक्षित्वं सहस्रपादत्वं च । सपुरुषोभूमिं ब्रह्मांडगोलकरूपां विश्वतः सर्वतोवृत्वा परिवेष्ट्य दशांगुलंदशांगुलपरिमितं देशमत्यतिष्ठत् अतिक्रम्य व्यवस्थितः । दशांगुलमित्युपलक्षणं ब्रह्मांडाद्बहिरपि सर्वतोव्याप्यावस्थितइत्यर्थः ॥ १ ॥

अथ द्वितीया—

पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यम् ।
उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥

पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भव्यम् ।
उत । अमृतऽत्वस्य । ईशानः । यत् । अन्नेन । अतिऽरोहति ॥ २ ॥

यदिदं वर्तमानं जगत्तत्सर्वं पुरुषएव यच्च भूतमतीतं जगत् यच्च भव्यं भविष्यज्जगत् तदपि पुरुषएव यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। उतापिच अमृतत्वस्य देवत्वस्यायमीशानः स्वामी यद्यस्मात् कारणात् अन्नेन प्राणिनामन्नेन भोग्यने निमित्तेनातिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात् प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुतत्वमित्यर्थः ॥ २ ॥

अथ तृतीया—

एतावानस्यमहिमातोज्यायाँश्चपूरुषः ।
पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ ३ ॥

एतावान् । अस्य । महिमा । अतः । ज्यायान् । च । पुरुषः । पादः । अस्य । विश्वा । भूतानि । त्रिऽपात् । अस्य । अमृतम् । दिवि ॥ ३ ॥

अतीतानागतवर्तमानरूपं जगद्यावदस्ति एतावान् सर्वोप्यस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः नतु तस्य वास्तवं स्वरूपं वास्तवस्तु पुरुषः अतोमहिम्नोपि ज्यायानतिशयेनाधिकः।एतच्चोभयं स्पष्टीक्रियते—अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादश्चतुर्थोंशः अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपममृतं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे व्यवतिष्ठतइति शेषः। यद्यपि सत्यंज्ञानमनन्तंब्रह्मेत्याम्नातस्य तस्य परब्रह्मणइयत्तायाअभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ॥ ३ ॥

अथ चतुर्थी—

त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ।
ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ ४ ॥

त्रिऽपात् । ऊर्ध्वः । उत् । ऐत् । पुरुषः । पादः । अस्य ।
इह । अभवत् । पुनरिति । ततः । विष्वङ् । वि ।
अक्रामत् । साशनानशने इति । अभि ॥ ४ ॥

योयं त्रिपात्पुरुषः संसारस्पर्शरहितः ब्रह्मस्वरूपः योयमूर्ध्वः उदैत् अस्मादज्ञानकार्यात्सं-साराद्बहिर्भूतः अत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान् तस्यास्य सोयं पादोलेशः सोय-मिह मायायां पुनरभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति । अस्य सर्वस्य जगतः परमात्म-लेशत्वं भगवताप्युक्तं—विष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगदिति । ततः मायायामागत्यान-न्तरं विष्वङ् देवतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान् । किं कृत्वा साशनानशने अभिलक्ष्य साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातं लक्ष्यते अनशनं तद्रहितमचेतनं गिरिनद्यादिकं तदुभयं यथा स्यात् तथा स्वयमेव विविधोभूत्वा व्याप्तवानित्यर्थः ॥ ४ ॥

अथ पंचमी—

तस्मा॑द्विरा॒ळ॑जायत वि॒राजो॒ अधि॒ पूरु॑षः ।
स जा॒तो अत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः ॥ ५ ॥ १७ ॥

तस्मा॑त् । वि॒ऽराट् । अ॒जा॒य॒त॒ । वि॒ऽराजः॑ । अधि॑ ।
पुरु॑षः । सः । जा॒तः । अति॑ । अ॒रि॒च्य॒त॒ ।
प॒श्चात् । भूमि॑म् । अथो॒ इति॑ । पु॒रः ॥ ५ ॥ १७ ॥

विष्वङ्व्यक्रामदिति यदुक्तं तदेवात्र प्रपंच्यते तस्मादादिपुरुषात् विराट् ब्रह्मांडदेहः अ-जायत उत्पन्नः विविधानि राजन्ते वस्तून्यत्रेतिविराट्विराजोधि विराट् देहस्योपरि तमेव देह-मधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित् पुमानजायत सोयं सर्ववेदान्तवेद्यः परमात्मा सएव स्वकीयया मायया विराड्देहं ब्रह्मांडरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्मांडाभिमानी देवतात्मा जीवोभवत् । एतच्चाथर्वणिकाउत्तरतापनीये विस्पष्टमामनन्ति—सवाएषभूतानीन्द्रि-याणि विराजंदेवताःकोशांश्च सृष्ट्वा प्रविश्यामूढोमूढइव व्यवहरन्नास्तेमाययेति । सजातोवि-राट्पुरुषःअत्यरिच्यत अतिरिक्तोभूत् विराड्व्यतिरिक्तोदेवतिर्यङ्मनुष्यादिरूपोभूत् पश्चाद्देवा-दिजीवभावादूर्ध्वं भूमिंससर्जेतिशेषः अथो भूमेः सृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज पूर्य-न्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥ ५ ॥

॥ इत्यष्टमस्य चतुर्थे सप्तदशोवर्गः ॥ १७ ॥

---

१ भ० गी० अ० १० ।

अथ षष्ठी–

यत्पुरुषेणहविषादेवायज्ञमतन्वत ।
वसन्तोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ ६ ॥

यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत । वसन्तः ।
अस्य । आसीत् । आज्यम् । ग्रीष्मः । इध्मः । शरत् । हविः ॥ ६ ॥

यद्यदा पूर्वोक्तक्रमेणैवशरीरेषूत्पन्नेषु सत्सु देवाउत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासंभवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वत अतनिषत तदानीमस्य यज्ञस्य वसन्तोवसन्तर्तुरेवाज्यमासीत्अभूत्तमेवाज्यत्वेन संकल्पितवन्तइत्यर्थः एवं ग्रीष्मइध्मआसीत् तमेवेध्मत्वेन संकल्पितवन्तः तथा शरद्धविरासीत् तामेव पुरोडाशाभिधहविष्ट्वेन संकल्पितवन्तइत्यर्थः एवंपुरुषस्य हविःसामान्यरूपत्वेन संकल्पः अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन संकल्पइति द्रष्टव्यं ॥ ६ ॥

अथ सप्तमी–

तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ।
तेनदेवाअयजन्तसाध्याऋषयश्चये ॥ ७ ॥

तम् । यज्ञम् । बर्हिषि । प्र । औक्षन् । पुरुषम् । जातम् । अग्रतः ।
तेन । देवाः । अयजन्त । साध्याः । ऋषयः । च । ये ॥ ७॥

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः कीदृशमित्यत्राहाग्रतःसर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नं एतच्च प्रागेवोक्तं तस्माद्विराळजायतविराजोअधिपूरुषइति । तेन पुरुषरूपेण पशुना देवाअयजन्त मानसयागं निष्पादितवन्तइत्यर्थः केते देवाइत्यत्राह साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूलाऋषयोमंत्रद्रष्टारश्च ये सन्ति ते सर्वेप्ययजन्तइत्यर्थः ॥ ७ ॥

अथाष्टमी—

तस्मा॑द्य॒ज्ञात्स॑र्व॒हुत॒: संभृ॑तं पृषदा॒ज्यम् ।
प॒शून्ताँश्च॑क्रे वाय॒व्या॑नार॒ण्यान्ग्रा॒म्याश्च॒ ये ॥ ८ ॥

तस्मा॑त् । य॒ज्ञात् । स॒र्व॒ऽहुत॑: । सम्ऽभृ॑तम् । पृ॒ष॒त्ऽआ॒ज्यम् ।
प॒शून् । तान् । च॒क्रे॒ । वा॒य॒व्या॑न् । आ॒र॒ण्यान् । ग्रा॒म्याः । च॒ । ये ॥८॥

सर्वहुतः सर्वात्मकः पुरुषोयस्मिन्यज्ञे हूयते सोयं सर्वहुतः तादृशात्तस्मात् पूर्वोक्तात् मानसाद्यज्ञात्पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितं दधि चाज्यं चेत्येवमादिभोग्यजातं सर्वं संपादितमित्यर्थः तथा वायव्यान् वायुदेवताकान् लोकप्रसिद्धान् आरण्यान् पशूंश्चक्रे उत्पादितवान् आरण्याहरिणादयः । तथा ये च ग्राम्यागवाश्वादयस्तानपि चक्रे । पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणेसमाम्नायते—वायवस्थेत्याह वायुर्वाअन्तरिक्षस्याध्यक्षाः अन्तरिक्षदेवत्याःखलुवैपशवः वायवएवैनान्परिददातीति[1] ॥ ८ ॥

अथ नवमी—

तस्मा॑द्य॒ज्ञात्स॑र्व॒हुत॒ ऋच॒: सामा॑नि जज्ञिरे ।
छन्दां॑सि जज्ञिरे॒ तस्मा॒द्यजु॒स्तस्मा॑दजायत ॥ ९ ॥

तस्मा॑त् । य॒ज्ञात् । स॒र्व॒ऽहुत॑: । ऋच॑: । सामा॑नि । ज॒ज्ञि॒रे॒ ।
छन्दां॑सि । ज॒ज्ञि॒रे॒ । तस्मा॑त् । यजु॑: । तस्मा॑त् । अ॒जा॒य॒त॒ ॥ ९ ॥

सर्वहुतस्तस्मात्पूर्वोक्ताद्यज्ञात् ऋचः सामनि च जज्ञिरे उत्पन्नाः तस्माद्यज्ञात् छन्दांसिगायत्र्यादीनि जज्ञिरे तस्माद्यज्ञात् यजुरप्यजायत ॥ ९ ॥

अथ दशमी—

तस्मा॒दश्वा॑ अजायन्त॒ ये के चो॑भ॒याद॑तः ।
गावो॑ ह जज्ञिरे॒ तस्मा॒त्तस्मा॑ज्जा॒ता अ॑जा॒वय॑: ॥ १० ॥१८॥

---

1 तै० ब्रा० ३. २. १ ।

तस्मा॑त् । अश्वाः॑ । अ॒जा॒य॒न्त॒ । ये । के । च॒ । उ॒भ॒याद॑तः । गावः॑ ।
ह॒ । ज॒ज्ञि॒रे॒ । तस्मा॑त् । तस्मा॑त् । जा॒ताः । अ॒जा॒वयः॑ ॥ १०॥१८॥

तस्मात्पूर्वोक्ताद्यज्ञात् अश्वाअजायन्त उत्पन्नाः तथा ये के चाश्वव्यतिरिक्ता गर्दभाअश्वतराश्चोभयादतऊर्ध्वाधोभागयोः उभयोर्दन्तयुक्ताः सन्ति येषां तेपि तस्मादजायन्त तथा तस्माद्यज्ञात् गावश्च जज्ञिरे किंच तस्माद्यज्ञादजाअवयवश्च जाताः ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थेष्टादशोवर्गः ॥ १८ ॥

अथैकादशी—

यत्पुरु॑षं॒व्यद॑धुःकति॒धाव्य॑कल्पयन् ।
मुखं॒किम॑स्य॒कौबा॒हूकाऊ॒रूपादा॑उच्येते ॥ ११ ॥

यत् । पुरु॑षम् । वि । अद॑धुः । क॒ति॒धा । वि । अ॒क॒ल्प॒य॒न् ।
मुख॑म् । किम् । अ॒स्य॒ । कौ । बा॒हू इति॑ । कौ । ऊ॒रू
इति॑ । पादौ॑ । उ॒च्ये॒ते॒ इति॑ ॥ ११ ॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्नाउच्यन्ते प्रजापतेः प्राणरूपाः देवाः यद्यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तः तदानीं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः अस्य पुरुषस्य मुखं किमासीत् कौ बाहू अभूतां काऊरू कौचपादौ उच्येते प्रथमं सामान्यरूपप्रश्नः पश्चात् मुखंकिमित्यादिना विशेषविषयाः प्रश्नाः॥११॥

अथ द्वादशी—

ब्रा॒ह्म॒णो॑ऽस्य॒मुख॑मासीद्बा॒हूरा॑ज॒न्यः॑कृ॒तः ।
ऊ॒रूतद॑स्य॒यद्वैश्यः॑प॒द्भ्यांशू॒द्रोअ॑जायत ॥ १२ ॥

ब्रा॒ह्म॒णः । अ॒स्य॒ । मुख॑म् । आ॒सी॒त् । बा॒हू इति॑ । रा॒ज॒न्यः॑ ।
कृ॒तः । ऊ॒रू इति॑ । तत् । अ॒स्य॒ । यत् । वैश्यः॑ । प॒त्ऽभ्याम् ।
शू॒द्रः । अ॒जा॒य॒त॒ ॥ १२ ॥

इदानीं पूर्वोक्तप्रश्नानामुत्तराणि दर्शयति अस्य प्रजापतेर्ब्राह्मणोब्राह्मणत्वजातिविशिष्टः पुरुषोमुखमासीत् मुखादुत्पन्नइत्यर्थः योयं राजन्यः क्षत्रियत्वजातिविशिष्टः सबाहूकृतः बाहुत्वेन निष्पादितः बाहुभ्यामुत्पादितइत्यर्थः तत्तदानीमस्य प्रजापतेः यद्यौ ऊरू तद्रूपोवैश्यः संपन्नः ऊरुभ्यामुत्पन्नइत्यर्थः तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषोजायत इयं तु मुखादिभ्योब्राह्मणादीनामुत्पत्तिः यजुःसंहितायां सप्तमकांडे—समुखतस्त्रिवृतंनिरमिमीतइत्यादौविस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परत्वेनैव योजनीये ॥ १२ ॥

अथ त्रयोदशी—

चन्द्रमामनसोजातश्चक्षोःसूर्योअजायत ।
मुखादिन्द्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ १३ ॥

चन्द्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत । मुखात् ।
इन्द्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥ १३ ॥

यथा दध्याज्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदाः ब्राह्मणादयोमनुष्याश्च तस्मादुत्पन्नाएवं चन्द्रादयोदेवाअपि तस्मादेवोत्पन्नाइत्याह प्रजापतेर्वै मनसः सकाशात् चन्द्रमा जातश्चक्षोश्चक्षुषः सूर्योप्यजायत अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ अस्य प्राणाद्वायुरजायत ॥ १३ ॥

अथ चतुर्दशी—

नाभ्याआसीदन्तरिक्षंशीर्ष्णोद्यौःसमवर्तत ।
पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँअकल्पयन् ॥ १४ ॥

नाभ्याः । आसीत् । अन्तरिक्षम् । शीर्ष्णः । द्यौः । सम् ।
अवर्तत । पत्ऽभ्याम् । भूमिः । दिशः । श्रोत्रात् । तथा ।
लोकान् । अकल्पयन् ॥ १४ ॥

यथा चन्द्रादीन्प्रजापतेर्मनःप्रभृतिभ्योकल्पयन् तथान्तरिक्षादीन् लोकान् प्रजापतेर्नाभ्यादिभ्योदेवाअकल्पयन् उत्पादितवन्तः एतदेवदर्शयति नाभ्याः प्रजापतेर्नाभेरन्तरिक्षमासीत्

शीर्ष्णः शिरसो द्यौः समवर्ततोत्पन्नाअस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना अस्य श्रोत्राद्दिशउत्पन्नाइति ॥ १४ ॥

अथ पञ्चदशी—

सप्तास्यांसन्परिधयस्त्रिःसप्तसमिधंकृताः ।
देवायद्यज्ञंतन्वानाअबंध्नन्पुरुषंपशुम् ॥ १५ ॥

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । सम्ऽइधः ।
कृताः । देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥ १५ ॥

अस्य सांकल्पिकस्य यज्ञस्य गायत्र्यादीनि सप्तच्छन्दांसि परिधयआसन् ऐष्टिकस्याहवनीयस्य त्रयः परिधयः उत्तरवेदिकास्त्रयः आदित्यश्च सप्तमःपरिधिः प्रतिनिधिरूपाः अतएवाम्नायते नपुरस्तात्परिदध्यादित्यादित्योह्येवोद्यन्पुरस्ताद्रक्षांस्यपहन्तीति । ततएते आदित्यसहिताः सप्तपरिधयोत्र सप्तच्छन्दोरूपाः तथा समिधः त्रिःसप्त त्रिगुणिताः सप्तसंख्याकाएकविंशतिः कृताः । द्वादशमासाःपंचर्तवस्त्रयइमेलोकाअसावादित्यएकविंशइति[1] । एते पदार्थाः एकविंशतिदारुयुक्तेध्मत्वेन भाविताः यद्यः पुरुषोवैराजोस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः एतदेवाभिप्रेत्य पूर्वत्र पुरुषेण हविषेत्युक्तं ॥ १५ ॥

अथ षोडशी—

यज्ञेनंयज्ञमंयजन्तदेवास्तानिधर्माणिप्रथमान्यासन् ।
तेहनाकंमहिमानंःसचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ॥ १६ ॥ १९ ॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि ।
आसन् । ते । ह । नाकम् । महिमानः । सचन्त । यत्र ।
पूर्वे । साध्याः । सन्ति । देवाः ॥ १६ ॥ १९ ॥

---

१ ऐ० ब्रा० १. ३०.

पूर्वं प्रपंचेनोक्तमर्थं संक्षिप्यात्र दर्शयति देवाः प्रजापतिप्राणरूपाः यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः तस्मात्पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणांधारकाणि प्रथमानि मुख्यभूतान्यासन् एतावता सृष्टिप्रतिपादितसूक्तभागार्थः संगृहीतः । अथोपासनतत्फलानुवादकभागार्थः संगृह्यते यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातनाविराडुपास्तिसाधकादेवाः सन्ति तिष्ठन्ति तन्नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानः तदुपासकामहात्मानः सचन्त समवयन्ति प्राप्नुवन्ति ॥ १६ ॥

॥ इत्यष्टमस्य चतुर्थे एकोनविंशोवर्गः ॥ १९ ॥

॥ इति दशमे मण्डले सप्तमोनुवाकः ॥ ७ ॥

अष्टमेनुवाके नव सूक्तानि संजागृवद्भिरिति पंचदशर्चं प्रथमं सूक्तं वीतहव्यपुत्रस्यारुणनाम्नआर्षं अग्निदैवत्यं अंत्यात्रिष्टुप् शिष्टाजगत्यः तथाचानुक्रान्तं—संजागृवद्भिः पंचोनारुणोवैतहव्यआग्नेयमिति । प्रातरनुवाकाश्विनशस्त्रयोर्जागतेछन्दसीदं सूक्तं । सूत्रितंच—संजागृवद्भिश्चित्रइच्छिशोर्वसुं नचित्रमहसमिति जागतमिति ।

तत्र प्रथमा—

**संजा॑गृ॒वद्भि॒र्जर॑माण इध्यते॒ दमे॒ दमू॑ना इ॒षय॑न्नि॒ळस्प॒दे ।**
**विश्व॑स्य॒ होता॑ ह॒विषो॒ वरे॑ण्यो वि॒भुर्वि॒भावा॑ सु॒षखा॑ सखीय॒ते ॥ १ ॥**

सम् । जा॒गृ॒वत्ऽभिः॑ । जर॑माणः । इ॒ध्य॒ते॒ । दमे॑ । दमू॑नाः ।
इ॒षय॑न् । इ॒ळः । प॒दे । विश्व॑स्य । होता॑ । ह॒विषः॑ । वरे॑ण्यः ।
वि॒ऽभुः । वि॒भाऽवा॑ । सु॒ऽसखा॑ । स॒खि॒ऽय॒ते ॥ १ ॥

हे अग्ने जागृवद्भिः जागरणशीलैः स्तोतृभिर्जरमाणः स्तूयमानोदमूनाः दममनादान्तमनाः दानमनावा इळस्पदे इळायाः पदे स्थाने उत्तरवेद्यामिषयन्नन्नमिच्छन् विश्वस्य सर्वस्य हविषोहोता वरेण्योवरणीयोविभुर्व्याप्तः विभावा दीप्तिमान् सुषखा शोभनसखा भवान् सखीयते सखित्वमिच्छते यजमानाय समिध्यते सम्यग्दीप्यते ॥ १ ॥

अथ द्वितीया—

**सदर्शतश्रीरतिथिर्गृहेगृहेवनेवनेशिश्रियेतक्ववीरिव ।**
**जनंजनंजन्योनातिमन्यतेविशआक्षेतिविश्योविशंविशम् ॥ २॥**

सः । दर्शतऽश्रीः । अतिथिः । गृहेऽगृहे । वनेऽवने । शिश्रिये ।
तक्ववीःऽइव । जनम्ऽजनम् । जन्यः । न । अति । मन्यते ।
विशः । आ । क्षेति । विश्यः । विशम्ऽविशम् ॥ २ ॥

दर्शतश्रीर्दर्शनीयविभूतिरतिथिभूतः सोग्निः गृहेगृहे यजमानानां गृहेषु वनेवने सर्वेषु वनेषु च शिश्रिये श्रयति । किंच जन्योजनहितः सोग्निः जनंजनं सर्वजनं तक्ववीरिव गच्छन्निव नातिमन्यते नविसृज्य गच्छतीत्यर्थः । तदेव दर्शयति विश्योविड्भ्योहितः सोग्निः विशोमनुष्यानाक्षेति अभिगच्छति । किंच विशंविशं सर्वाविशःप्रजाः अधितिष्ठतीति शेषः ॥ २ ॥

अथ तृतीया—

**सुदक्षोदक्षैःक्रतुनासिसुक्रतुरग्नेकविःकाव्येनासिविश्ववित् ।**
**वसुर्वसूनांक्षयसित्वमेकइद्यावाचयानिपृथिवीचपुष्यतः ॥ ३ ॥**

सुऽदक्षः । दक्षैः । क्रतुना । असि । सुऽक्रतुः । अग्ने । कविः ।
काव्येन । असि । विश्वऽवित् । वसुः । वसूनाम् । क्षयसि । त्वम् ।
एकः । इत् । द्यावा । च । यानि । पृथिवी इति । च । पुष्यतः ॥ ३॥

हे अग्नेत्वंदक्षैर्बलैः सुदक्षः सुबलोसि भवसि किंच क्रतुना कर्मणा सुक्रतुः शोभनकर्मा- किंच काव्येन मेधाविकर्मणाकविर्मेधाव्यसि किंच विश्ववित् सर्वज्ञोसि किंच वसूनां धनानां वसुर्वासयितासि किंच हे अग्ने त्वमेकइदेकएव क्षयसि निवससि किंच द्यावा च पृथिवी च द्यावाभूमी यानि वसूनि पुष्यतः संवर्धयतः तेषां दिव्यानां पार्थिवानां च धनानामीशिषइति शेषः ॥ ३ ॥

अथ चतुर्थी—

प्रजानन्नग्ने तव योनिमृत्वियमिळायास्पदे घृतवन्तमासदः ।
आ ते चिकित्र उषसामिवेतयोऽरेपसः सूर्यस्येव रश्मयः ॥ ४ ॥

प्रऽजानन् । अग्ने । तव । योनिम् । ऋत्वियम् । इळायाः । पदे ।
घृतऽवन्तम् । आ । असदः । आ । ते । चिकित्रे । उषसाम्ऽइव ।
एतयः । अरेपसः । सूर्यस्यऽइव । रश्मयः ॥ ४ ॥

हे अग्ने तव ऋत्वियं ऋतौ भवं घृतवन्तं घृतेन सहितं योनिं निवासस्थानं इळायास्पदे उत्तरवेद्यां प्रजानन् त्वमासदः आसीदसि किंच ते तव रश्मयः उषसामिव यथोषसामेतयः प्रज्ञाः प्रकाशलक्षणाआगतयोवा सूर्यस्येव यथा सूर्यस्यारेपसः पापरहितानिर्गतारश्मयोदृश्यन्ते तद्वदाचिकित्रे आज्ञायन्ते ॥ ४ ॥

अथ पंचमी—

तव श्रियो वर्ष्यस्येव विद्युतश्चित्राश्चिकित्र उषसां न केतवः ।
यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमास्ये ॥ ५ ॥ २० ॥

तव । श्रियः । वर्ष्यस्यऽइव । विऽद्युतः । चित्राः । चिकित्रे ।
उषसाम् । न । केतवः । यत् । ओषधीः । अभिऽसृष्टः । वनानि ।
च । परि । स्वयम् । चिनुषे । अन्नम् । आस्ये ॥ ५ ॥ २० ॥

हे अग्ने तव श्रियोरश्मिलक्षणाविभूतयश्चित्राश्चिकित्रे प्रज्ञायन्ते । तत्रदृष्टान्तः—स्तोत्रपर्यायवर्षितुर्मेघस्य संबन्धिन्योविद्युतउषसां न यथाचोषसां केतवः प्रज्ञानाः तत्स्थाः प्रकाशाः प्रज्ञायन्ते तद्वदित्यर्थः कदेत्यत्राह यद्यदा त्वं ओषधीर्व्रीहियवाद्यावनान्यरण्यानिचाभिसृष्टोदग्धुं विसृष्टः सन् स्वयमात्मनास्येअन्नमदनीयं स्थावरलक्षणं परिचिनुषे परिक्षिपसीत्यर्थः ॥ ५ ॥

॥ इति पंचमस्य चतुर्थे विंशोवर्गः ॥ २० ॥

अथ षष्ठी—

तमोषधीर्दधिरेगर्भमृत्वियंतमापोअग्निंजनयन्तमातरः।
तमित्समानंवनिनश्चवीरुधोन्तर्वतीश्चसुवतेचविश्वहा ॥ ६ ॥

तम् । ओषधीः । दधिरे । गर्भम् । ऋत्वियम् । तम् । आपः ।
अग्निम् । जनयन्त । मातरः । तम् । इत् । समानम् । वनिनः ।
च । वीरुधः । अन्तःऽवतीः । च । सुवते । च । विश्वहा ॥ ६ ॥

ऋत्वियं ऋतौ प्राप्तं गर्भं गर्भभूतं तं प्रकृतमग्निं ओषधीरोषध्योदधिरे धारयन्ति तमेवाग्निं मातरोधारकत्वेन मातृस्थानीयाआपश्च जनयन्तजनयन्ति किंच वनिनोवनस्पतयश्च समानं गर्भभावेन प्रवेशात्स्वतुल्यं तमित्तमेवाग्निं जनयन्ति किंच तमेवाग्निमन्तर्वतीर्गर्भवत्यो वीरुधओषधयश्च विश्वहा सर्वदा सुवते जनयन्ति ॥ ६ ॥

अथ सप्तमी—

वातोपधूतइषितोवशाँअनुतृषुयदन्नावेविषद्वितिष्ठसे ।
आतेयतन्तेरथ्योयथापृथक्शर्धांस्यग्नेअजराणिधक्षतः ॥ ७ ॥

वातऽउपधूतः । इषितः । वशान् । अनु । तृषु । यत् । अन्ना ।
वेविषत् । विऽतिष्ठसे । आ । ते । यतन्ते । रथ्यः । यथा ।
पृथक् । शर्धांसि । अग्ने । अजराणि । धक्षतः ॥ ७ ॥

हे अग्ने त्वं यद्यदा वातोपधूतोवायुना कंपितोवशान् कान्तान् वनस्पतीन् अनु प्रति तृषु क्षिप्रमिषितः प्रेरितश्चसन् अन्नाअदनीयानि वनस्पत्यादीनि स्थावराणि वेविषत् व्याप्नुवन् वितिष्ठसे इतस्ततोगच्छसि तदानीं धक्षतः काष्ठानिदहतः ते तव अजराणि जरारहितानि शर्धांसि तेजांसि यथा रथ्योरथिनस्तद्वत् पृथक् पृथगायतन्ते आगच्छन्ति ॥ ७ ॥

अथाष्टमी—

मेधाकारंविदथस्यप्रसाधनमग्निंहोतारंपरिभूतमंमतिम् ।
तमिदर्भेहविष्यासमानमित्तमिन्महेवृणतेनान्यंत्वत् ॥ ८ ॥

मेधाकारम् । विदथस्य । प्रऽसाधनम् । अग्निम् । होतारम् ।
परिऽभूतमम् । मतिम् । तम् । इत् । अर्भे । हविषि । आ । समानम् ।
इत् । तम् । इत् । महे । वृणते । न । अन्यम् । त्वत् ॥ ८ ॥

मेधाकारं प्रज्ञायाः कर्तारं विदथस्य यज्ञस्य प्रसाधनं प्रकर्षेण साधकं होतारं देवानामाह्वातारं परिभूतममतिशयेन शत्रूणां परिभावितारं मतिं मन्तारं यं त्वामग्निं वयं वृणीमहइति शेषः तमित्तमेवाग्निमर्भेल्पेहविषिचरुपुरोडाशादिके हविषि समानमित् सहैव ऋत्विजः आवृणते प्रार्थयन्ते महेमहतिसोमात्मके हविष्यपि तमित्तमेवाग्निंवृणते त्वत् त्वत्तोन्यमतिरिक्तं देवं नवृणते ॥ ८ ॥

अथ नवमी—

त्वामिदत्रवृणतेत्वायवोहोतारमग्नेविदथेषुवेधसः ।
यद्देवयन्तोदधतिप्रयांसितेहविष्मन्तोमनवोवृक्तबर्हिषः ॥ ९ ॥

त्वाम् । इत् । अत्र । वृणते । त्वाऽयवः । होतारम् । अग्ने ।
विदथेषु । वेधसः । यत् । देवऽयन्तः । दधति । प्रयांसि । ते ।
हविष्मन्तः । मनवः । वृक्तऽबर्हिषः ॥ ९ ॥

हे अग्ने होतारंदेवानामाह्वातारं अग्निं त्वामित् त्वामेव त्वायवस्त्वत्कामावावेधसः कर्मणां कर्तारऋत्विजः अत्रास्मिन् लोके विदथेषु यज्ञेषु वृणते प्रार्थयन्ति कदेत्यत्राह यद्यदा देवयन्तो-देवान् यष्टुमिच्छन्तोवृक्तबर्हिषः छिन्नबर्हिषोहविष्मन्तः संस्कृतहविष्काः सहविष्कामनवोमनुष्याऋत्विजस्ते तुभ्यं प्रयांसि हवींषि दधति धारयन्ति प्रयच्छन्तीत्यर्थः ॥ ९ ॥

अथ दशमी—

तवाग्नेहोत्रंतवपोत्रमृत्वियंतवनेष्ट्रंत्वमग्निदृतायतः ।
तवप्रशास्त्रंत्वमध्वरीयसिब्रह्माचासिगृहपतिश्चनोदमे ॥१०॥२१॥

तवं । अग्ने । होत्रम् । तवं । पोत्रम् । ऋत्वियम् । तवं । नेष्ट्रम् ।
त्वम् । अग्नित् । ऋतऽयतः । तवं । प्रऽशास्त्रम् । त्वम् । अध्वरिऽयसि ।
ब्रह्मा । च । असि । गृहऽपतिः । च । नः । दमे ॥ १० ॥ २१ ॥

हे अग्ने तव होत्रं होतृकर्म त्वया विना तस्याभावात् किंच तवैव ऋत्वियं ऋतौ भवं प्राप्तानुष्ठानकालं पोत्रं पोतृकर्म त्वया विना तस्याप्यभावात् किंच तवैव नेष्ट्रं नेष्टृकर्म किंच ऋतायतः ऋतंयज्ञं कर्तुमिच्छतोयजमानस्य त्वमेवाग्निर्नान्यः कश्चित् । किंच तवप्रशास्त्रं प्रशास्तृकर्म किंच हे अग्ने त्वमेवाध्वरीयसि अध्वरं यज्ञं कर्तुमिच्छसि तव हेतुत्वात्त्वत्कर्तृत्वं किंच त्वमेव ब्रह्मासि त्वां विना तस्याभावात् किंचनोस्माकं दमे गृहे गृहपतिर्यजमानोसि त्वया विनास्माकं यजमानत्वाभावात् ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थे एकविंशोवर्गः ॥ २१ ॥

अथैकादशी—

**यस्तुभ्यमग्नेअमृतायमर्त्यःसमिधादाशदुतवाहविष्कृति ।**
**तस्यहोताभवसियासिदूत्य१मुपब्रूषेयजस्यध्वरीयसि ॥ ११ ॥**

यः । तुभ्यम् । अग्ने । अमृताय । मर्त्यः । समऽइधा । दाशत् । उत ।
वा । हविःऽकृति । तस्य । होता । भवसि । यासि । दूत्यम् ।
उप । ब्रूषे । यजसि । अध्वरिऽयसि ॥ ११ ॥

हे अग्ने अमृताय मरणधर्मरहिताय तुभ्यं योमर्त्योमनुष्यः समिधा समिधं सुपांसुलुगित्याकारः दाशत् ददाति प्रयच्छति उतवा अपिवा हविष्कृति हविषां कृतकरणं यस्मिन्त्सहविष्कृत् तस्मिन्यज्ञे हवींषि ददातीति संस्कृतं यस्मिन् तद्यज्ञमनुतिष्ठतीतिशेषः । अस्य मनुष्यस्य होता देवानामाह्वाता भवसि । किंच त्वं दूत्यं देवान् प्रति दूतकर्म कर्तुं यासि गच्छसि किंच त्वं ब्रह्मा भूत्वास्मिन्कर्मणि युष्मभ्यमिमानि हवींषि यजमानेन प्रहितानीत्युपब्रूषे उपक्रम्य ब्रवीषि किंच त्वं यजसि यजमानोभूत्वा देवेभ्योहवींषि ददासि किंच त्वं यथा पूर्वोक्त प्रकारेणाध्वरीयसि अध्वर्युरिवाचरसि अन्यथा यज्ञं कर्तुमिच्छसि ॥ ११ ॥

अथ द्वादशी—

इमाअस्मैमतयोवाचोअस्मदाँऋचोगिरःसुष्टुतयःसमग्मत ।
वसूयवोवसवेजातवेदसेवृद्धासुचिद्वर्धनोयासुचाकनत् ॥ १२ ॥

इमाः । अस्मै । मतयः । वाचः । अस्मत् । आ । ऋचः । गिरः ।
सुऽस्तुतयः । सम् । अग्मत । वसुऽयवः । वसवे । जातऽवेदसे ।
वृद्धासु । चित् । वर्धनः । यासु । चाकनत् ॥ १२ ॥

जातवेदसे जातप्रज्ञाय वसवे वासयित्रेस्माअग्नये मतयः पूजयित्र्यः इमावाचोवसूयवोस्मदर्थं धनकामाःसत्यः अस्मदस्मत्तोनिर्गत्यासमग्मताभिमुख्येन संगच्छन्ते तमिममग्निंप्रीणयन्त्वित्यर्थः काः पुनस्ताः सुष्टुतयः शोभनस्तुतिरूपाऋचोऋगात्मिकागिरोवाचः तथा यासु वृद्धासु चित् स्वतएव प्रवृद्धास्वपि वर्धनः पुनरपि वर्धयिता सन् अग्निश्चाकनत् स्तोतॄन् कामयते इमामतयइत्यन्वयः ॥ १२ ॥

अथ त्रयोदशी—

इमांप्रत्नायसुष्टुतिंनवीयसींवोचेयमस्माउशतेशृणोतुनः ।
भूयाअन्तराहृद्यस्यनिस्पृशेजायेवपत्यउशतीसुवासाः ॥ १३ ॥

इमाम् । प्रत्नाय । सुऽस्तुतिम् । नवीयसीम् । वोचेयम् । अस्मै ।
उशते । शृणोतु । नः । भूयाः । अन्तरा । हृदि । अस्य ।
निःऽस्पृशे । जायाऽइव । पत्ये । उशती । सुऽवासाः ॥ १३ ॥

प्रत्नाय पुराणायोशते स्तोत्रं कामयमानायास्माअग्नये नवीयसीं नवतरामन्यैरकृतपूर्वां सुष्टुतिं वोचेयमहंवक्ष्यामि सोग्निरस्मदीयां स्तुतिं शृणोतु किंचाहमस्याग्नेर्हृदि हृदये तत्राप्यन्तरा मध्ये निस्पृशे संस्पर्शनाय गुणैरनुरंजनायेत्यर्थः भूयाः भूयासं व्यत्ययेन मध्यमः अग्नेर्हृदिस्पृगहं स्यामित्यर्थः । अथवा मम सुष्टुतेरनुप्रवेष्टाभवेति योज्यं समानं अन्यत् । तत्रदृष्टान्तः— पत्येपत्युर्हृदयस्य मध्ये सुवासाः शोभनवस्त्रादिना मंडिता जाया उशती कामयमाना जाया इष्टतमा भवति तद्वदित्यर्थः ॥ १३ ॥

अथ चतुर्दशी–

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नये ॥ १४ ॥

यस्मिन् । अश्वासः । ऋषभासः । उक्षणः । वशाः । मेषाः ।
अवऽसृष्टासः । आऽहुताः । कीलालऽपे । सोमऽपृष्ठाय ।
वेधसे । हृदा । मतिम् । जनये । चारुम् । अग्नये ॥ १४ ॥

यस्मिन्नग्नौउक्षणः वासपूर्वस्यनिगमइति दीर्घविकल्पः सेचनसमर्थाअश्वासोश्वाः ऋषभासोवृषभाश्च वशाः स्वभाववंध्याश्च मेषाश्चावसृष्टासोदेवतार्थमवसृष्टाः परित्यक्ताः सन्तोश्वमेधेआहुता आभिमुख्येन हुताभवन्ति कीलालपेसौत्रामण्यां सुरां पिबते कीलालमित्युदकनामसु पाठात् उदकं पिबते सोमपृष्ठायसोमयुक्तः पृष्ठः उपरिभागोयस्य तस्मै सोमपृष्ठाय वेधसे विधात्रे तस्माअग्नये हृदा हृदयेन चारुं कल्याणीं मतिं स्तुतिं जनये जनयाम्युत्पादयामि ॥ १४ ॥

अथ पंचदशी–

अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः ।
वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥ १५ ॥ २२ ॥

अहावि । अग्ने । हविः । आस्ये । ते । स्रुचिऽइव । घृतम् ।
चम्विऽइव । सोमः । वाजऽसनिम् । रयिम् । अस्मे इति ।
सुऽवीरम् । प्रऽशस्तम् । धेहि । यशसम् । बृहन्तम् ॥ १५ ॥ २२ ॥

हे अग्ने तेतवास्ये मुखे हविःपुरोडाशादिहविरस्माभिरहावि सततं प्रक्षिप्यते तत्रदृष्टान्तौ– घृतमाज्यं स्रुचीव यथास्रुचि । चम्वीव सोमः यथा चमसे सोमः तद्वदित्यर्थः । तथा त्वं वाजसनिं अन्नस्य दातारं सुवीरं शोभनपुत्रोपेतं प्रशस्तं सुवर्णादिकं यशसं यशस्विनं कीर्तिमन्तं बृहन्तमपरिमितं महान्तं वा रयिं रमणीयं धनमस्मभ्यं धेहि देहि ॥ १५ ॥

॥ इत्यष्टमस्य चतुर्थे द्वाविंशोवर्गः ॥ २२ ॥

यज्ञस्येति पंचदशर्चं द्वितीयं सूक्तं मनोः पुत्रस्य शार्यातस्यार्षं जागतं बहुदेवताकं तथाचानुक्रान्तं—यज्ञस्य शार्यातोमानवोवैश्वदेवं तु जागतमिति । चातुर्विंशिके आरंभणीयेहनि वैश्वदेवशस्त्रे इदं वैश्वदेवनिविद्धानं । सूत्रितंच—तेहिद्यावापृथिवी यज्ञस्यवोरथ्यमिति । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेहन्यपीदं वैश्वदेवनिर्विद्धानं चातुर्विंशिकेनतृतीयसवनमिति सूत्रकृदादिष्टत्वात् ।

तत्र प्रथमा—

यज्ञस्यवोरथ्यंविश्पतिंविशांहोतारमक्तोरतिथिंविभावसुम् ।
शोचञ्छुष्कासुहरिणीषुजर्भुरद्वृषाकेतुर्यजतोद्यामशायत ॥ १ ॥

यज्ञस्य । वः । रथ्यम् । विश्पतिम् । विशाम् । होतारम् । अक्तोः ।
अतिथिम् । विभाऽवसुम् । शोचन् । शुष्कासु । हरिणीषु ।
जर्भुरत् । वृषा । केतुः । यजतः । द्याम् । अशायत ॥ १ ॥

हे देवावोयूयं यज्ञस्य रथ्यं नेतारं विश्पतिं मनुष्याणां पालकं स्वामिनं वा विशां देवानां होतारं अक्तोरात्रेरतिथिमतिथिभूतं विभावसुंविविधदीप्तिधनमग्निं परिचरतेति शेषः शुष्कासु शुष्कभूतास्वोषधीषु शोचन् ज्वलन् हरिणीषु हरितवर्णास्वार्द्रास्वोषधीषुजर्भुरत् भक्षयन् कुटिलं गच्छन् वा वृषा कामानां वर्षिता केतुः प्रज्ञापकोयजतोयष्टव्योग्निः द्यां दिवमशायत प्रतिशेते ॥ १ ॥

अथ द्वितीया—

इममञ्जस्पामुभयेअकृण्वतधर्माणमग्निंविदथस्यसाधनम् ।
अक्तुंनयह्वमुषसःपुरोहितंतनूनपातमरुषस्यनिंसते ॥ २ ॥

इमम् । अञ्जःऽपाम् । उभये । अकृण्वत । धर्माणम् । अग्निम् ।
विदथस्य । साधनम् । अक्तुम् । न । यह्वम् । उषसः ।
पुरःऽहितम् । तनूऽनपातम् । अरुषस्य । निंसते ॥ २ ॥

उभये देवमनुष्याअंजस्पां अंजसारक्षकं धर्माणं धारयितारमिममग्निं विदथस्य यज्ञस्य साधनं साधयितारमकृण्वताकुर्वत किंचारुषस्यारोचमानस्य वायोस्तनूनपातं पुत्रं यह्वंमहान्तं पुरोहितमिममग्निं उषसः अर्कं न स्वरश्मिभीरंजकमादित्यमिव निंसते चुंबयन्ति आश्र-यन्तइत्यर्थः ॥ २ ॥

अथ तृतीया—

बळस्यनीथाविपणेश्चंमन्महेवयाअस्यप्रहुताआसुरत्तवे ।
यदाघोरासोअमृतत्वमाशतादिज्जनस्यदैव्यस्यचर्किरन् ॥ ३ ॥

बट् । अस्य । नीथा । वि । पणेः । च । मन्महे । वयाः । अस्य । प्रऽहुताः । आसुः । अत्तवे । यदा । घोरासः । अमृतऽत्वम् । आशत । आत् । इत् । जनस्य । दैव्यस्य । चर्किरन् ॥ ३ ॥

विपणेरस्माभिर्विविधं पणितव्यस्य स्तुत्यस्याग्नेः नीथा नीथान्यस्मत्संबन्धीनि प्रज्ञानानि बट् सत्यानि स्युरिति मन्महे वयं कामयामहे । किंचास्याग्नेर्वयाअस्मदीयाअन्नाहुतयोत्तवे भक्षणाय प्रहुताआसुः भवेयुरिति कामयामहे किंच यदा यस्मिन्काले घोरासोघोराभयंकरा-अग्नेर्ज्वालाअमृतत्वमविनाशत्वमाशत प्राप्नुवन्ति आदिदनन्तरमेवास्माकमृत्विजोदैव्यस्य देवेषु भवस्य जनस्याग्नेरर्थाय चर्किरन् प्रकिरेयुरग्नौ हवींषि प्रक्षिपेयुरित्यर्थः ॥ ३ ॥

अथ चतुर्थी—

ऋतस्यहिप्रसितिर्द्यौरुरुव्यचोनमोमह्य१रमतिःपनीयसी ।
इन्द्रोमित्रोवरुणःसंचिकित्रिरेथोभगःसवितापूतदक्षसः ॥ ४ ॥

ऋतस्य । हि । प्रऽसितिः । द्यौः । उरु । व्यचः । नमः । मही । अरमतिः । पनीयसी । इन्द्रः । मित्रः । वरुणः । सम् । चिकित्रिरे । अथो इति । भगः । सविता । पूतऽदक्षसः ॥ ४ ॥

ऋतस्य यज्ञस्य संबन्धिनमेनमाग्निं प्रति प्रसितिर्विस्तृता द्यौरुरुविस्तीर्णं व्यचोव्याप्तमन्तरिक्षं च पनोयसी स्तुत्यतरा अरमतिः पर्यन्तरहिता मही पृथिवीच नमोनमनं कुर्वन्तीति शेषः अथापिच एनमाग्निं इन्द्रोमित्रश्च वरुणश्च भगश्च सविता पूतदक्षसः शुद्धबलाएते देवाएनमग्निं संचिकित्रिरे ज्यैष्ठ्यायसंजानते ॥ ४ ॥

अथ पंचमी—

प्ररुद्रेणययिनायन्तिसिन्धवस्तिरोमहीमरमतिंदधन्विरे ।
येभिःपरिज्मापरियन्नुरुज्रयोविरोरुवज्जठरेविश्वमुक्षते ॥५॥२३॥

प्र । रुद्रेणं । ययिनां । यन्ति । सिन्धवः । तिरः । महीम् ।
अरमतिम् । दधन्विरे । येभिः । परिऽज्मा । परिऽयन् । उरु ।
ज्रयः । वि । रोरुवत् । जठरे । विश्वम् । उक्षते ॥ ५ ॥ २३ ॥

सिन्धवः स्यन्दनशीलाआपोययिना गमनशीलेन रुद्रेण रुद्रपुत्रेण मरुद्गणेन सह प्रयन्ति । अथ बहुवदाह—तेमी मरुतोरमतिं रमतिर्विरामोवसानं तद्रहितां अपर्यन्तां महीं पृथिवीं तिरः दधन्विरे तिरस्कुर्वन्तीत्यर्थः परिज्मापरितोगन्तेन्द्रः परियन् परितोगच्छन् येभिर्यैर्मरुद्गणैः सहोरुज्रयोबहुवेगंकरोतीतिशेषः किंच जठरेन्तरिक्षे रोरुवत् शब्दं कुर्वन् पर्जन्योयैर्मरुद्गणैः सह विश्वं भुवनमुक्षते सिंचते ॥ ५ ॥

॥ इत्यष्टमस्य चतुर्थे त्रयोविंशोवर्गः ॥ २३ ॥

अथ षष्ठी—

क्राणारुद्रामरुतोविश्वकृष्टयोदिवःश्येनासोअसुरस्यनीळयः ।
तेभिश्चष्टेवरुणोमित्रोअर्यमेन्द्रोदेवेभिरर्वशेभिरर्वशः ॥ ६ ॥

क्राणाः । रुद्राः । मरुतः । विश्वऽकृष्टयः । दिवः । श्येनासः ।
असुरस्य । नीळयः । तेभिः । चष्टे । वरुणः । मित्रः ।
अर्यमा । इन्द्रः । देवेभिः । अर्वशेभिः । अर्वशः ॥ ६ ॥

असुरस्य मेघस्य नीळयःआवासभूतादिवोन्तरिक्षस्य संबन्धिनः श्येनासः श्येनाः शंसनीयगतयोविश्वकृष्टयोव्याप्तमनुष्यारुद्रारुद्रपुत्रायेमरुतः ऋाणाः स्वाधिकारकर्मणि कुर्वाणाआसतइति शेषः तेभिस्तैरश्वेभिरश्ववद्भिः सोमवद्भिर्वा देवेभिर्देवैः सहार्वशोश्ववान् सोमवान् वेन्द्रश्चष्टेपश्यति वरुणश्च मित्रश्चार्यमाच सोमवद्भिर्मरुद्भिः सह पश्यन्ति ॥ ६ ॥

अथ सप्तमी—

इन्द्रे॑भु॒जं॑शशमा॒नास॑आशत॒सूरो॒दृशी॑के॒वृष॑णश्च॒पौंस्ये॑ ।
प्रयेन्व॑स्या॒र्हणा॑ततक्षि॒रेयु॒जं॑वज्रं॑नृ॒षद॑नेषुका॒रवः॑ ॥ ७ ॥

इन्द्रे॑ । भु॒जम् । श॒श॒मा॒नासः॑ । आ॒श॒त॒ । सूरः॑ । दृशी॑के ।
वृष॑णः । च॒ । पौंस्ये॑ । प्र । ये । नु । अ॒स्य॒ । अ॒र्हणा॑ ।
त॒त॒क्षि॒रे । यु॒जम् । वज्र॑म् । नृ॒ऽसद॑नेषु । का॒रवः॑ ॥ ७ ॥

ये शशमानासःशशामानाः शंसमानाः स्तोतारः इन्द्रे स्तुते सति भुजं पालनमाशत प्राप्नुवन्ति सूरः सूर्ये स्तुते सति दृशीके दर्शनं सर्ववस्तुविषयं प्राप्नुवन्ति वृषणोवर्षितरीन्द्रे स्तुते पौंस्ये पौंस्यं बलं च प्राप्नुवन्ति किंच कारवः स्तोतारः अस्येन्द्रस्यार्हणा पूजनानि नु क्षिप्रं ततक्षिरे प्रकृष्टानि कुर्वन्ति ते स्तोतारोनृषदनेषु नरः कर्तृत्वेन येषु सीदन्ति तिष्ठन्ति तेषु यज्ञेषु युजं सहायमिन्द्रस्य वज्रं प्राप्नुवन्ति ॥ ७ ॥

अथाष्टमी—

सूर॑श्चि॒दाह॒रितो॑अस्यरीरम॒दिन्द्रा॒दाकश्चि॑द्भयते॒तवी॑यसः ।
भी॒मस्य॒वृष्णो॑ज॒ठरा॑दभि॒श्वसो॑दि॒वेदि॑वे॒सहु॑रिस्त॒न्नबा॑धितः ॥ ८ ॥

सूरः॑ । चि॒त् । आ । ह॒रितः॑ । अ॒स्य॒ । री॒र॒म॒त् । इन्द्रा॑त् । आ ।
कः । चि॒त् । भ॒य॒ते॒ । तवी॑यसः । भी॒मस्य॑ । वृष्णः॑ । ज॒ठरा॑त् ।
अ॒भि॒ऽश्वसः॑ । दि॒वेऽदि॑वे । सहु॑रिः । स्तन् । अबा॑धितः ॥ ८ ॥

सूरः सूर्योप्यस्येन्द्रस्य परमेश्वरस्य परमात्मनः आज्ञां परिपालयितुं मन्वानोहरितोश्वान् प्रेरयतीति शेषः प्रेरयन्नध्वनिआरीरमत् आभिमुख्येन रमति यः कश्चिद्देवोपि सृष्टौ भयते बिभेति सदेवः तवीयसः प्रवृद्धात् इन्द्रात्परमात्मनोभयादेव बिभेति । तथाच तैत्तिरीयैःपठितं— भीषास्माद्वातः पवतइत्यादिना । किंच वृष्णः कामानां वर्षितुर्भीमस्य सर्वभयंकरस्य परमात्मनोदिवेदिवेन्वहमभिश्वसः आभिमुख्येन श्वसतः जठरादुदरादन्तरिक्षात् सहुरिः सहनशीलः सन् बाधितोबाधारहितः स्तन् स्तनयति शब्दं करोति ॥ ८ ॥

अथ नवमी—

स्तोमंवोअ॒द्यरु॒द्राय॒शिक्व॑सेक्ष॒यद्वी॑राय॒नम॑सादिदिष्टन ।
येभिः॑शि॒वः॒स्ववाँ॑एव॒याव॑भि॒र्दि॒वः॒सिष॑क्ति॒स्वय॑शा॒निका॑मभिः ॥९॥

स्तोम॑म् । व॒ः । अ॒द्य । रु॒द्राय॑ । शिक्व॑से । क्ष॒यत्ऽवी॑राय । नम॑सा । दि॒दि॒ष्ट॒न॒ । येभिः॑ । शि॒वः । स्वऽवा॑न् । ए॒व॒याव॑ऽभिः । दि॒वः । सिस॑क्ति । स्वऽय॑शाः । निका॑मऽभिः ॥ ९ ॥

एवयावभिरश्वैरागच्छद्भिर्येभिर्यैः मरुद्भिः सह स्ववान् ज्ञातिमान् स्वयशाः स्वभूतकीर्तिः शिवः सुखकरः परमेश्वरोदिवोद्युलोकात् यजमानान् सिषक्ति सेवते हे ऋत्विजोयूयमद्यास्मिन्यागे निकामभिर्नियताभिलाषैः तैर्मरुद्भिः सहिताय क्षयद्वीराय क्षितशत्रवे शिक्वसे रणे शक्ताय रुद्राय नमसा नमस्कारेण वा सह स्तोमं स्तोत्रं दिदिष्टन दिशत सृजत गमयतेत्यर्थः ॥९॥

अथ दशमी—

तेहि॒प्र॒जाया॒अभ॑रन्त॒विश्रवो॒बृह॒स्पति॑र्वृष॒भः॒सोम॑जामयः ।
य॒ज्ञैरथ॒र्वा॒प्र॒थ॒मोविधा॑रय॒द्दे॒वादक्षै॒र्भृग॑व॒ःसंचि॑कित्रिरे ॥१०॥२४॥

ते । हि । प्र॒ऽजाया॑ः । अभ॑रन्त । वि । श्रव॑ः । बृ॒ह॒स्पति॑ः । वृ॒ष॒भः । सोम॑ऽजामयः । य॒ज्ञैः । अथ॑र्वा । प्र॒थ॒मः । वि । धा॒र॒य॒त् । दे॒वाः । दक्षैः॑ । भृग॑वः । सम् । चि॒कि॒त्रि॒रे ॥ १० ॥ २४ ॥

हि यस्मात् कारणात् वृषभः कामानां वर्षिता बृहस्पतिः सोमजामयोन्येसोमबन्धुकास्ते विश्वे देवाः प्रजायाअर्थाय श्रवोन्नं व्यभरन्त विभरन्ति वृष्टिद्वारेण पोषयन्ति तस्मात्कारणात्तासां प्रजानां मध्ये अथर्वानाम ऋषिः प्रथमः प्रथममेव क्रियमाणैर्यज्ञैर्विधारयत् देवान् कर्मयोग्यान् विधृतान् अकरोत् । तत्रनिगमः—यज्ञैरथर्वाप्रथमःपथस्ततेइति । अथ दक्षैर्बलैः सह देवाविश्वे भृगवोऋषयश्च संचिकित्रिरे अथर्वणाकृतं यज्ञं गत्वा पशून् संज्ञातवन्तः ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थे चतुर्विंशोवर्गः ॥ २४ ॥

अथैकादशी—

तेहिद्यावापृथिवीभूरिरेतसानराशंसश्चतुरङ्गोयमोदितिः ।
देवस्त्वष्टाद्रविणोदाऋभुक्षणःप्ररोदसीमरुतोविष्णुरर्हिरे ॥ ११ ॥

ते इति । हि । द्यावापृथिवी इति । भूरिऽरेतसा । नराशंसः ।
चतुःऽअङ्गः । यमः । अदितिः । देवः । त्वष्टा । द्रविणःऽदाः ।
ऋभुक्षणः । प्र । रोदसी इति । मरुतः । विष्णुः । अर्हिरे ॥ ११ ॥

भूरिरेतसा बहूदके द्यावापृथिवी द्यावापृथिव्यौ यमोदेवः अदितिश्च त्वष्टा देवश्च द्रविणोदाअग्निश्चऋभुक्षणःऋभवश्च रोदसी रुद्रस्य पत्न्यौ च मरुतोदेवाश्च रुद्राश्च एते विश्वेदेवाश्चतुरंगश्चतुर्भिरग्निभिर्युक्तोग्निस्तस्मिन्नराशंसोनराशंसनामधेये यज्ञे विष्णुरस्माभिः स्तोतृभिरर्हिरे प्रपूज्येत ॥ ११ ॥

अथ द्वादशी—

उतस्यनंउशिजामुर्वियाकविरहिःशृणोतुबुध्न्योहवीमनि ।
सूर्यामासाविचरन्तादिविक्षिताधियाशमीनहुषीअस्यबोधतम् ॥ १२ ॥

उत । स्यः । नः । उशिजाम् । उर्विया । कविः । अहिः । शृणोतु ।
बुध्न्यः । हवीमनि । सूर्यामासा । विऽचरन्ता । दिविऽक्षिता ।
धिया । शमीनहुषी इति । अस्य । बोधतम् ॥ १२ ॥

---

१ ऋ० सं० २. १. ११. ।

उतापिच नोस्माकं उशिजां कामयमानानामृत्विजां उर्विया उर्वी बह्वीं स्तुतिं कविर्मेधावी बुध्न्योबुध्नेन्तरिक्षे भवः सोहिर्देवोहवीमनि हूयन्ते यत्र देवेभ्योहवींषि तस्मिन्यज्ञे शृणोतु दिविक्षिता दिविवसन्तौ विचरन्ता विशेषेण चरन्तौ सूर्यामासा सूर्याचन्द्रमसौ धिया बुद्ध्या स्तोत्रमिदं बोधतं बुध्येतां शमी कर्मवती पृथिवी शमीति कर्मनामसु पाठात् नहुषी द्यौः अत्रवाजसनेयकं—द्यौर्नहुषीयंवैशमीतस्याएषगर्भइति । हे द्यावापृथिव्यौ युवां स्तोत्रं धिया स्वीयया प्रज्ञया बोधतंबुध्येतं अवगच्छतमित्यर्थः ॥ १२ ॥

अथ त्रयोदशी—

प्रनःपूषाचरथंविश्वदेव्योपांनपादवतुवायुरिष्टये ।
आत्मानंवस्योअभिवातमर्चततदश्विनासुहवायामनिश्रुतम् ॥ १३ ॥

प्र । नः । पूषा । चरथम् । विश्वऽदेव्यः । अपाम् । नपात् ।
अवतु । वायुः । इष्टये । आत्मानम् । वस्यः । अभि । वातम् ।
अर्चत । तत् । अश्विना । सुऽहवा । यामनि । श्रुतम् ॥ १३ ॥

पूषा देवोनोस्माकं संबन्धि चरथं जंगमं च प्रावतु प्रकर्षेण रक्षतु किंच विश्वदेव्यो विश्वदेवहितोपान्नपाद्वायुरिष्टये यज्ञस्य निष्कृत्यर्थं प्रावतु किंच आत्मानं सर्वेषामात्मभूतं वातं वायुं वस्योवसोयः प्रज्ञया बुध्येतां अवगच्छतमित्यर्थः । प्रशस्यतरमन्नं प्राप्तुंअस्मभ्यमन्नं कामयमानइतिशेषः हे अश्विनाश्विनौ सुहवा स्वाह्वानौ युवां यामनि यागगमने तदिदं स्तोत्रं श्रुतं शृणुतं ॥ १३ ॥

अथ चतुर्दशी—

विशामासामभयानामधिक्षितंगीर्भिरुस्वयशसंगृणीमसि ।
ग्नाभिर्विश्वाभिरदितिमनर्वणमक्तोर्युवानंनृमणाअधापतिम् ॥ १४ ॥

विशाम् । आसाम् । अभयानाम् । अधिऽक्षितम् । गीःऽभिः ।
ऊँ इति । स्वऽयशसम् । गृणीमसि । ग्नाभिः । विश्वाभिः ।
अदितिम् । अनर्वणम् । अक्तोः । युवानम् । नृऽमनाः ।
अध । पतिम् ॥ १४ ॥

अभयानां संसारभयरहितानां आर्सां विशां मनुष्याणां अधिक्षितमन्तर्निवसन्तंस्वयशस मुपार्जितकीर्तिमेनमाग्निं गीर्भिः स्तुतिभिः गृणीमसि वयं स्तुमः किंचानर्वणमप्रत्यृतां पत्युरप्रत्यृतत्वेनाप्रतिगतां अदितिमदीनां देवमातरं विश्वाभिः सर्वाभिः ग्नाभिर्देवपत्नीभिः सहितां स्तुमः किंचाक्तोरात्रेर्युवानं स्वतेजसा मिश्रयितारं चन्द्रमसं स्तुमः किंच नृमणाः नृषु मनुष्येषु अनुग्राहकमनायस्तमादित्यं स्तुमः अधाथपतिं सर्वस्य पालकमिन्द्रं स्तुमः ॥ १४ ॥

अथ पंचदशी—

**रेभदत्रंजनुषापूर्वोअङ्गिराग्रावाणऊर्ध्वाअभिचक्षुरध्वरम् ।**
**येभिर्विहायाअभवद्विचक्षणःपाथःसुमेकंस्वधितिर्वनन्वति॥१५॥२५॥**

रेभत् । अत्र । जनुषा । पूर्वः । अङ्गिराः । ग्रावाणः । ऊर्ध्वाः ।
अभि । चक्षुः । अध्वरम् । येभिः । विऽहायाः । अभवत् ।
विऽचक्षणः । पाथः । सुऽमेकम् । स्वऽधितिः । वनन्ऽवति ॥१५॥२५॥

अंगिरानाम ऋषिरार्त्विज्येन वृतः सन् देवान् स्तौति अत्रास्मिन्यज्ञे जनुषा जन्मना पूर्वः प्रत्नोंगिरानामऋषिः रेभत् देवान् स्तौति ग्रावाणश्चोर्ध्वाउद्यताः सन्तःअध्वरं यज्ञस्य साधनं सोमं अभिचक्षुरभिपश्यन्ति विचक्षणोविद्रष्टेन्द्रोयेभिर्यैर्ग्रावभिरभिषवसंबन्धिभिः शब्दैर्विहाया-महानभवत् हृष्टोभूदित्यर्थः अस्येन्द्रस्य स्वधितिर्वज्रोवनन्वति उदकवति मार्गे पाथोन्नसाध-नं सुमेकं शोभनमुदकं निरगमयदिति शेषः ॥ १५ ॥

॥ इत्यष्टमस्य चतुर्थे पंचविंशोवर्गः ॥ २५ ॥

महीति पंचदशर्चं तृतीयं सूक्तं तान्वोनाम पृथोः पुत्रऋषिः द्वितीया तृतीया त्रयोदशी-चेति तिस्रोनुष्टुभः नवमी अक्षरसंख्ययापंक्तिः एकादशीन्यंकुसारिणी अष्टकद्वादशकव्यष्टक-वती पंचदशी पुरस्ताद्बृहती आद्यद्वादशकत्र्यष्टका शिष्टानव प्रस्तारपंक्तिच्छन्दस्काः आद्यौद्वौ-जागतौततोद्वौगायत्रौसाप्रस्तारपंक्तिः विश्वेदेवा देवता । तथाचानुक्रान्तं—महि तान्वः पार्थ्यः प्रस्तारपंक्तिः पुरस्ताद्बृहत्यन्तं त्रयोदश्युपाद्येचानुष्टुभोनवम्यक्षरैः पंक्तिरेकादशी न्यंकुसारिणी-ति गतोविनियोगः ।

तत्र प्रथमा—

महिंद्यावापृथिवीभूतमुर्वीनारीयह्वीनरोदंसीसदंनः ।
तेभिंर्नःपातंसह्यंसएभिर्नःपातंशूषणि ॥ १ ॥

महिं । द्यावापृथिवी इतिं । भूतम् । उर्वी इतिं । नारी इतिं ।
यह्वी इतिं । न । रोदंसी इतिं । सदंम् । नः । तेभिः । नः ।
पातम् । सह्यंसः । एभिः । नः । पातम् । शूषणि ॥ १ ॥

हे द्यावापृथिवी द्यावापृथिव्यौ युवां महि अत्यन्तं यथा भवति तथा उर्वी विस्तीर्णे भूतं भवतं किंच यह्वी महत्यौ रोदसी द्यावापृथिव्यौनारीन स्त्रियाविव नोस्माकं सदं सदाभवतं किंच युवां शूषणि नोस्माकं शत्रुबलेयुष्मदीयैरेभिःपालनैः पातंरक्षतं। किंच युष्मदीयैस्तेभिः तैः पालनैर्नोस्माकं सह्यसोतिशयेनास्मानभिभवितुः शत्रोरपि पातं रक्षतं ॥ १ ॥

अथ द्वितीया—

यज्ञेयंज्ञेसमर्त्योदेवान्संपर्यति । यःसुम्नैर्दीर्घश्रुत्तंमआविवांसात्येनान् ॥२॥

यज्ञेऽयंज्ञे । सः । मर्त्यः । देवान् । सपर्यति । यः । सुम्नैः ।
दीर्घश्रुत्ऽतंमः । आऽविवांसाति । एनान् ॥ २ ॥

समर्त्योमनुष्यः यज्ञेयज्ञे सर्वेषु यज्ञेषु सर्वान् देवान् सपर्यति परिचरति योदीर्घश्रुत्तमःअतिशयेन दीर्घस्य बहोः शास्त्रस्य श्रोतायोमनुष्यः सुम्नैः सुखकरैर्हविर्भिः एनान् देवान् आविवासति परिचरति असुखकरैर्हविर्भिः कृतमपि कर्म सपर्यायै नभवतीत्यर्थः ॥ २ ॥

अथ तृतीया—

विश्वेषामिरज्यवोदेवानांवार्महः ।
विश्वेहिविश्वमंहसोविश्वेयज्ञेषुयज्ञियाः ॥ ३ ॥

विश्वेषाम् । इरज्यवः । देवानाम् । वाः । महः । विश्वे । हि ।
विश्वऽमंहसः । विश्वे । यज्ञेषु । यज्ञियाः ॥ ३ ॥

हे विश्वेषामिरज्यवोभुवनानामीश्वरादेवानां द्योतमानानां द्योतनादिगुणयुक्तानां भवतां महः महत् वाः वरणीयं धनं विद्यते इतिशेषः तदस्मभ्यं दत्तेतिभावः किंच सर्वे विश्वे यूयं विश्वमहसोव्याप्ततेजस्काः किंच विश्वे हि यूयं यज्ञेषु यज्ञियाः यष्टव्याः ॥ ३ ॥

अथ चतुर्थी—

तेघाराजानोअमृतस्यमन्द्राअर्यमामित्रोवरुणःपरिज्मा ।
कद्रुद्रोनृणांस्तुतोमरुतःपूषणोभगः ॥ ४ ॥

ते । घ । राजानः । अमृतस्य । मन्द्राः । अर्यमा ।
मित्रः । वरुणः । परिऽज्मा । कत् । रुद्रः । नृणाम् ।
स्तुतः । मरुतः । पूषणः । भगः ॥ ४ ॥

अर्यमादेवः मित्रश्च परिज्मासर्वतोगामी सर्वत्राप्रतिहतगतिर्वरुणोदेवश्च ऋत्विग्भिः स्तुतो-रुद्रश्च पूषणः सर्वस्य पोषयितारोमरुतश्च भगश्च एते देवामन्द्राः सर्वे स्तुत्याः सन्तोनृणां मनुष्या-णां कत् सुखं प्रयच्छतेति शेषः ते सर्वे अमृतस्यामृतसदृशस्य हविषोराजानोघ ईश्वराः खलु॥४॥

अथ पञ्चमी—

उतनोनक्तमपांवृषण्वसूसूर्यामासासदनायसधन्या ।
सचायत्साद्येषामहिर्बुध्नेषुबुध्न्यः ॥ ५ ॥ २६ ॥

उत । नः । नक्तम् । अपाम् । वृषण्वसू इति । वृषण्ऽवसू ।
सूर्यामासा । सदनाय । सऽधन्या । सचा । यत् । सादि ।
एषाम् । अहिः । बुध्नेषु । बुध्न्यः ॥ ५ ॥ २६ ॥

उतापिच वृषण्वसू वर्षणधनावश्विनौ युवां अपामुदकानां संबन्धिनौ सधन्या सधन्यौ-समानधनौ सूर्यामासा सूर्याचन्द्रमसौ बुध्नेष्वन्तरिक्षेषु निवासस्थानेषु मेघेषु योहिर्बुध्न्योदेवोसा-दिसीदति तिष्ठति तैरेषामेभिः सचा सह युवां नक्तं रात्रावहनि चोरुष्यतामिति वक्ष्यमाणेन संबन्धः ॥ ५ ॥

॥ इत्यष्टमस्य चतुर्थे षड्विंशोवर्गः ॥ २६ ॥

अथ षष्ठी—

उतनोदेवावश्विनाशुभस्पतीधामभिर्मित्रावरुणाउरुष्यताम् ।
महःसरायएषतेतिधन्वेवदुरिता ॥ ६ ॥

उत । नः । देवौ । अश्विना । शुभः । पती इति । धामऽभिः ।
मित्रावरुणौ । उरुष्यताम् । महः । सः । रायः । आ । ईषते ।
अति । धन्वऽइव । दुःऽइता ॥ ६ ॥

उतापिच शुभस्पती अश्विना अश्विनौ देवौ नोस्मान् धामभिरात्मीयैः शरीरैः उरुष्यतां रक्षतां किंच मित्रावरुणावात्मीयैः शरीरैः रक्षतां यं यजमानं पुरुषममीदेवारक्षन्ति समहोमहान्ति रायोधनान्याईषते आभिमुख्येन गच्छति प्राप्नोति । किंच दुरिता दुरितानि शीघ्रमत्यतिगन्तातिक्रान्ता च भवति । तत्रदृष्टान्तः—धन्वेव यथा पथिकोनिरुदकान् देशान् अतिक्रामति तद्वदित्यर्थः ॥ ६ ॥

अथ सप्तमी—

उतनोरुद्राचिन्मृळतामश्विनाविश्वेदेवासोरथस्पतिर्भगः ।
ऋभुर्वाजऋभुक्षणःपरिज्माविश्ववेदसः ॥ ७ ॥

उत । नः । रुद्रा । चित् । मृळताम् । अश्विना । विश्वे ।
देवासः । रथःपतिः । भगः । ऋभुः । वाजः ।
ऋभुक्षणः । परिऽज्मा । विश्वऽवेदसः ॥ ७ ॥

उतापिच रुद्रारुद्रपुत्राअश्विनाश्विनौ नोस्मान् मृळतां सुखयतां किंच रथस्पतिः रथस्यपतिः पूषा ऋभुर्वाजोन्नवान् भगश्च परिज्मा परितोगन्ता वायुश्चैते विश्वे सर्वे देवाः सुखयन्तु हे विश्ववेदसोविश्ववेदाः सर्वप्रज्ञाः सर्वधनावा हे ऋभुक्षणोमहान्तोब्रह्मादयोदेवायूयं सुखयत ॥७॥

अथाष्टमी—

ऋभुर्ऋभुक्षाऋभुर्विधतोमदआतेहरीजूजुवानस्यवाजिना ।
दुष्टरंयस्यसामचिदृधग्यज्ञोनमानुषः ॥ ८ ॥

ऋभुः । ऋभुक्षाः । ऋभुः । विधतः । मदः । आ । ते ।
हरी इति । जूजुवानस्य । वाजिना । दुस्तरम् । यस्य ।
साम । चित् । ऋधक् । यज्ञः । न । मानुषः ॥ ८ ॥

ऋभुक्षा महानिन्द्रः ऋभुर्यज्ञेन भाति किंच विधतः त्वां परिचरतोयजमानस्य मदोहर्षोपि ऋभुर्यज्ञेन भाति हे इन्द्र आजूजुवानस्य प्रतिशीघ्रमागच्छतस्ते तव हरी अश्वावपि वाजिना वाजिनौ बलवन्तौ किंच यस्येन्द्रस्य संबन्धि सामचिद्गीयमानं सामापि दुष्टरं रक्षोभिरप्रापणीयं एषयज्ञः मानुषः मनुष्यसाधारणोन किंतु ऋधक् पृथक् दिव्यइत्यर्थः ॥ ८ ॥

अथ नवमी—

कृधीनोअह्रयोदेवसवितःसचंस्तुषेमघोनाम् ।
सहोनइन्द्रोवह्निभिर्न्येषांचर्षणीनांचक्रंरश्मिनयोयुवे ॥ ९ ॥

कृधि । नः । अह्रयः । देव । सवितरिति । सः । च । स्तुषे ।
मघोनाम् । सहो इति । नः । इन्द्रः । वह्निऽभिः । नि । एषाम् ।
चर्षणीनाम् । चक्रम् । रश्मिम् । न । योयुवे ॥ ९ ॥

हे सवितः प्रेरक नोस्मान् अह्रयःअनवनतवदनानलज्जितान् कृधि कुरु किंच सत्वं मघोनां धनवतां यजमानानां संबन्धिभिः ऋत्विग्भिः सुखं स्तुषेस्तूयसे इन्द्रोवह्निभिः वोढृभिर्मरुद्भिः सहसहो बलं चर्षणीनां मनुष्याणां नोस्माकं नियोयुवे भृशं निमिश्रयतु तत्रदृष्टान्तः—चक्रं रथस्य चक्रं रश्मिं न यथा रश्मिचक्रादिकं तद्वदित्यर्थः ॥ ९ ॥

अथ दशमी—

ऐषुंद्यावापृथिवीधातंमहदस्मेवीरेषुविश्वचर्षणिश्रवः ।
पृक्षंवाजस्यसातयेपृक्षंरायोततुर्वणे ॥ १० ॥ २७ ॥

आ । एषु । द्यावापृथिवी इति । धातम् । महत् । अस्मे इति ।
वीरेषु । विश्वऽचर्षणि । श्रवः । पृक्षम् । वाजस्य ।
सातये । पृक्षम् । राया । उत । तुर्वणे ॥ १० ॥ २७ ॥

हे द्यावापृथिवी द्यावापृथिव्यौ युवामस्मेस्माकंसबन्धिष्वेषु वीरेषु पुत्रेषुविश्वचर्षणि सर्वमनुष्योपेतं महत् श्रवोयशः आधातमाधत्तं किंच वाजस्य बलस्य सातये संभजनाय पृक्षं पालकमन्नं दत्तं उतापिच तुर्वणे शत्रूणां तरणाय राया धनेन पृक्षं अन्नं दत्तं ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थे सप्तविंशोवर्गः ॥ २७ ॥

अथैकादशी—

एतंशंसमिन्द्रास्मयुष्ट्वंकूचित्सन्तंसहसावन्नभिष्टये सदापाह्यभिष्टये।
मेदतांवेदतावसो ॥ ११ ॥

एतम्। शंसम्। इन्द्र। अस्मऽयुः। त्वम्। कूऽचित्।
सन्तम्। सहसाऽवन्। अभिष्टये। सदा। पाहि।
अभिष्टये। मेदताम्। वेदता। वसो इति ॥ ११ ॥

हे वसो वासयितः सहसावन् बलवन्निन्द्रास्मयुरस्मान्कामयमानस्त्वं कूचित् क्वचित् अपि सन्तं स्थितं एतमिमं शंसं स्तोतारमभिष्टये अभिलषितसिध्यर्थं अपिचाभिष्टये यागार्थं सदा सर्वदा पाहि रक्ष किंच मेदतां त्वदीयेन प्रज्ञानेन स्तोतारं मां वेदताबुध्यस्व ॥ ११ ॥

अथ द्वादशी—

एतंमेस्तोमंतनानसूर्येद्युतद्यामानंवावृधन्तनृणाम्।
संवननंनाश्व्यंतष्टेवानपच्युतम् ॥ १२ ॥

एतम्। मे। स्तोमम्। तना। न। सूर्ये। द्युतत्ऽयामानम्।
ववृधन्त। नृणाम्। सम्ऽवननम्। न। अश्व्यम्।
तष्टाऽइव। अनपऽच्युतम् ॥ १२ ॥

नृणां नेतॄणां देवानां शत्रूणां संवननंनसंभजनं सम्यक्हिंसनमेवावस्थितं मे मदीयमेतमिमं स्तोमं स्तोत्रं ववृधन्त ऋत्विजोवर्धयन्तु। तत्रदृष्टान्तः सूर्येद्युतद्यामानं दीप्तगमनं तनान विस्तृतान्रश्मीन् वर्धयन्ति तद्वदित्यर्थः अनपच्युतं च्युतिरहितं अश्व्यं अश्वार्हं रथं तष्टेव यथा वर्धकीरथिष्वागतेषु संस्कृतं रथं संस्कारस्थानात् प्रेरयति तद्वदित्यर्थः ॥ १२ ॥

अथ त्रयोदशी—

वा॒व॒र्तयेषां॒रा॒या यु॒क्तैषां॑हि॒र॒ण्ययी॑। ने॒म॒धिता॒न पौंस्या॒ वृथे॑व वि॒ष्टान्ता॑॥ १३॥

व॒व॒र्त। येषा॑म्। रा॒या। यु॒क्ता। ए॒षा॒म्। हि॒र॒ण्ययी॑। ने॒म॒ऽधिता। न। पौंस्या॑। वृथा॑ऽइव। वि॒ष्टऽअ॑न्ता॥ १३॥

येषां देवानां स्वभूतेन रायास्मभ्यं दातव्येन धनेन युक्ता स्तुतिः आववर्त वर्तते तेषामेषामर्थाय हिरण्ययी हिरणमयी हिरण्यालंकारवत् प्रीतिकरास्मन्मुखात् पुनः पुनरावर्ततइत्यर्थः। तत्रदृष्टान्तः—पौंस्या पौंस्यानि बलानि नेमधिता नेमधितौ संग्रामे विष्टान्ता व्याप्तावसाना वृथेव यथाघटिकायंत्रमालातद्वदित्यर्थः॥ १३॥

अथ चतुर्दशी—

प्र तद्दुःशीमे॒ पृथ॑वाने वे॒ने प्र रा॒मे वो॑च॒मसु॑रे म॒घव॑त्सु।
ये यु॒क्त्वाय॒ पञ्च॑ श॒तास्म॒यु प॒था वि॒श्राव्ये॑षाम्॥ १४॥

प्र। तत्। दु॒ःऽशी॑मे। पृथ॑वाने। वे॒ने। प्र। रा॒मे। वो॒च॒म्। असु॑रे। म॒घव॑त्ऽसु। ये। यु॒क्त्वाय॑। पञ्च॑। श॒ता। अ॒स्म॒ऽयु। प॒था। वि॒ऽश्रावि॑। ए॒षा॒म्॥ १४॥

ये देवाः पंच शता शतानि रथान् युक्त्वायाश्वैर्युक्त्का अस्मयुरस्मत्कामाः सन्तः पथा यज्ञमार्गेणागच्छन्ति तेषामेषां देवानां विश्राविदेवानां लोके वाविशेषेण श्रावकगुणयुक्तं तत्स्तोत्रं दुःशीमे दुःशीमनाम्नि पृथवाने पृथवानः पृथिस्तस्मिन् वेनेच असुरे बलवति रामे चैतेषु राजसु प्रवोचं प्रब्रवीमि प्रख्यापयामीत्यर्थः मघवत्सु अन्येषु धनवत्सु च प्रख्यापयामीत्यर्थः॥ १४॥

अथ पञ्चदशी—

अधी॒न्वत्र॑ सप्त॒तिं च॑ स॒प्त च॑।
स॒द्यो दि॑दिष्ट॒ तान्वः॑ स॒द्यो दि॑दिष्ट पा॒र्थ्यः स॒द्यो दि॑दिष्ट माय॒वः॥ १५॥ २८॥

अधि । इत् । नु । अत्रं । सप्ततिम् । च । सप्त । च ।
सद्यः । दिदिष्ट । तान्वः । सद्यः । दिदिष्ट । पार्थ्यः ।
सद्यः । दिदिष्ट । मायवः ॥ १५ ॥ २८ ॥

अत्रैपुराजसु तान्वोनामऋषिः गवां सप्तसप्ततिं च नु क्षिप्रंसद्य इत् सद्यएवाधिदिदिष्ट अधिपूर्वोदिशिर्याचनार्थः ययाचे किंच पार्थ्योनामयुवनाश्वनामकस्य कुले पृथेः पुत्रः कश्चित् सद्यएव गवां सप्तसप्ततिं अधिदिदिष्ट मायवोपिसद्यएवाधिदिदिष्ट ॥ १५ ॥

॥ इत्यष्टमस्य चतुर्थेष्टाविंशोवर्गः ॥ २८ ॥

प्रैतइति चतुर्दशर्चं चतुर्थं सूक्तं कद्रूाःपुत्रस्य सर्पस्यार्बुदस्यार्षं पञ्चमी सप्तमी चतुर्दशी त्रिष्टुभः शिष्टाएकादशजगत्यः सोमाभिषवार्थाग्रावाणोत्र देवताः । तथाचानुक्रांतं—प्रैतेषळूना सर्पोर्बुदः काद्रवेयोग्राव्णोस्तौत् पञ्चम्यन्त्येत्रिष्टुभौ सप्तमीचेति । ग्रावस्तोत्रे एतत्सूक्तं । सूत्रितंच—प्रैतेवदन्त्यर्बुदं प्रागुत्तमायाआवर्क्तंजसेप्रवोग्रावाणइति सूक्तयोरिति । यद्वेदमेव सूक्तं ग्रावस्तोत्रं । सूत्रितंच—अर्बुदमेवेत्येके प्रवोग्रावाणइत्येके ।

तत्र प्रथमा—

प्रैतेवंदन्तुप्रवयंवंदामग्रावंभ्योवाचंवदतावदंद्भ्यः ।
यदंद्रयःपर्वताःसाकमाशवःश्लोकंघोषंभरथेन्द्रांयसोमिनंः ॥ १ ॥

प्र । एते । वदन्तु । प्र । वयम् । वदाम । ग्रावंऽभ्यः । वाचंम् ।
वदत । वदंत्ऽभ्यः । यत् । अद्रयः । पर्वताः । साकम् । आशवंः ।
श्लोकंम् । घोषंम् । भरंथ । इन्द्राय । सोमिनंः ॥ १ ॥

एते ग्रावाण उपलाः प्रवदन्तु अभिषवशब्दं कुर्वन्तु वयं यजमानाः वदद्भ्योभिषवशब्दं कुर्वद्भ्योग्रावभ्योग्राव्णामर्थाय वाचं प्रवदाम किंच हे ऋत्विजः स्तुतिलक्षणां वाचं वदत पठत यद्यदा अद्रयः आदरणीयादृढाः आशवः सोमाभिषवार्थं प्रकारिताः पर्वताः ग्रावाणः सर्वे यूयं साकं सहेन्द्रायेन्द्रार्थं श्लोकं श्रोतव्यं घोषं अभिषवशब्दं भरथ पोषयथ तदानीं सोमिनः सोमवन्तः सोमेन तृप्ताभवथ ॥ १ ॥

अथ द्वितीया—

एतेवदन्तिशतवंत्सहस्रंवदभिक्रंन्दन्तिहरितेभिरासभिः ।
विष्ट्वीग्रावाणःसुकृतःसुकृत्ययाहोतुश्चित्पूर्वेहविरद्यमाशत ॥ २ ॥

एते । वदन्ति । शतऽवंत् । सहस्रंऽवत् । अभि । क्रन्दन्ति ।
हरितेभिः । आसऽभिः । विष्ट्वी । ग्रावाणः । सुऽकृतः । सुऽकृत्यया ।
होतुः । चित् । पूर्वे । हविःऽअद्यम् । आशत ॥ २ ॥

शतवत्सहस्रवद्यथा शतं मनुष्यासहवदन्ति सहस्रवदपरिमितामनुष्याश्च तद्वदेते ग्रावाणोवदन्ति शब्दं कुर्वन्ति किंच हरितेभिः सोमसंसर्गाद्धरितवर्णैः आसभिः आस्यैरभिक्रन्दंति सोममभिलक्ष्य देवानाह्वयन्तीत्यर्थः किंच सुकृतः शोभनकर्माणो ग्रावाणोविष्ट्वी यज्ञंप्राप्य होतुर्देवानामाह्वातुरग्नेः पूर्वेचित् पूर्वमेवाद्यं भक्षणीयं हविराशत प्राप्नुवन्ति ॥ २ ॥

अथ तृतीया—

एतेवदन्त्यविदन्ननामधुन्यूंङ्खयन्तेअधिपक्कआमिषि ।
वृक्षस्यशाखांमरुणस्यबप्संतस्तेसूभर्वावृषभाःप्रेमराविषुः ॥ ३ ॥

एते । वदन्ति । । अविदन् । अना । मधु । नि । ऊङ्खयन्ते ।
अधि । पक्के । आमिषि । वृक्षस्य । शाखाम् । अरुणस्य । बप्संतः ।
ते । सूभर्वाः । वृषभाः । प्र । ईम् । अराविषुः ॥ ३ ॥

अरुणस्यारुणवर्णस्य वृक्षस्य शाखां बप्सतोभक्षयन्तस्ते सुभर्वाः शोभनभक्षावृषभाः प्रेमराविषुः प्ररुवन्ति यथा पक्के आमिषि अध्यामिषे क्रव्यादोमांसभक्षकाश्च मांसविषये यथा न्यूंखयन्ते शब्दविशेषं कुर्वन्ति किंच मधु मदकरं सोमं अना आस्येनाविदत् लभन्ते ॥ ३ ॥

अथ चतुर्थी—

बृहद्वंदन्तिमदिरेणमन्दिनेन्द्रंक्रोशंन्तोविदन्ननामधु ।
संरभ्याधीरास्वसृभिरनर्तिषुराघोषयन्तःपृथिवीमुपब्दिभिः ॥ ४ ॥

बृहत् । वदन्ति । मदिरेण । मन्दिना । इन्द्रम् । क्रोशन्तः ।
अविदन् । अना । मधु । सम्ऽरभ्य । धीराः । स्वसृऽभिः ।
अनर्तिषुः । आऽघोषयन्तः । पृथिवीम् । उपब्दिऽभिः ॥ ४ ॥

मदिरेण मदकरेण मन्दिना अभिषूयमाणेन सोमेन इन्द्रं क्रोशन्तः आह्वयन्तः एते ग्रावाणोबृहद्रथन्तरं वदन्ति शब्दयन्ति किंच अना आस्येन मधु मदकरं सोममविदन् अलभन्त किंच संरभ्य संरब्धाभूत्वा धीराः धृष्टाः सन्तः उपब्दिभिः शब्दैः पृथिवीमाघोषयन्तः पूरयन्तः स्वसृभिरंगुलीभिः सहानर्तिषुः नृत्यन्ति ॥ ४ ॥

अथ पंचमी—

**सुपर्णावाचमक्रतोपद्यव्यारवरेकृष्णाइषिराअनर्तिषुः ।**
**न्यं१ङ्नियन्त्युपरस्यनिष्कृतंपुरूरेतोदधिरेसूर्यश्वितः ॥ ५ ॥ २९ ॥**

सुऽपर्णाः । वाचम् । अक्रत । उप । द्यवि । आऽखरे । कृष्णाः ।
इषिराः । अनर्तिषुः । न्यक् । नि । यन्ति । उपरस्य । निःऽकृतम् ।
पुरु । रेतः । दधिरे । सूर्यऽश्वितः ॥ ५ ॥ २९ ॥

सुपर्णाः सुपतनाः ग्रावाणः उपउपलक्ष्य समीपे द्यव्यन्तरिक्षे वाचमभिषवशब्दं अक्रत कुर्वन्ति किंच आखरे मृगाणां व्रजआखरस्तस्मिन् इषिरा गमनशीलाः कृष्णाः कृष्णमृगाइव सूर्यश्वितः सूर्यवत् श्वेतवर्णाद्रप्साः अनर्तिषुः नृत्यन्ति निष्कृतं ग्रावभिः पीडितं सत् उपरस्योपलस्य न्यक् अधोमुखं सोमं नियन्ति निगमयन्ति किंच पुरु बहु रेतः सोमलक्षणमुदकं दधिरे धारयन्ति ॥ ५ ॥

॥ इत्यष्टमस्य चतुर्थे एकोनत्रिंशोवर्गः ॥ २९ ॥

अथ षष्ठी—

**उग्राइवप्रवहन्तःसमायमुःसाकंयुक्तावृषणोबिभ्रतोधुरः ।**
**यच्छ्वसन्तोजग्रसानाअराविषुःशृण्वएषांप्रोथथोअर्वतामिव ॥ ६ ॥**

उग्राःऽइव । प्रऽवहन्तः । सम्ऽआयमुः । साकम् । युक्ताः ।
वृषणः । बिभ्रतः । धुरः । यत् । श्वसन्तः । जग्रसानाः । अराविषुः ।
शृण्वे । एषाम् । प्रोथथः । अर्वताम्ऽइव ॥ ६ ॥

वृषणः फलं वर्षतीति वृषा यज्ञः तस्य धुरः धुरं भारं बिभ्रतोधारयन्तः एते ग्रावाणः साकं सोमेन सह युक्ताः सन्तः प्रवहन्तः रथं प्रकर्षेण वोढारउग्राउद्गूर्णाअश्वाइव समाययुः समागच्छन्ति आयताभवन्तीत्यर्थः यद्यदा श्वसन्तोभिषवसमये उत्पतननिपतनव्यापारजनितेन वायुना श्वसन्तइव स्थिताग्रावाणः जग्रसानाः सोमं ग्रसमानाः अराविषुः शब्दायन्ते तदानीमेषां ग्राव्णां संबन्धि प्रोथथोमुखात् शब्दः शृण्वे श्रूयते । तत्रदृष्टान्तः—अर्वतामिव अश्वानां संबन्धिनोमुखाद्धेषाशब्दोयथा तद्वदित्यर्थः ॥ ६ ॥

अथ सप्तमी—

दशावनिभ्योदशकक्ष्येभ्योदशयोक्त्रेभ्योदशयोजनेभ्यः ।
दशाभीशुभ्योअर्चताजरेभ्योदशधुरोदशयुक्तावहद्भ्यः ॥ ७ ॥

दशावनिऽभ्यः । दशऽकक्ष्येभ्यः । दशऽयोक्त्रेभ्यः । दशऽयोजनेभ्यः ।
दशाभीशुऽभ्यः । अर्चत । अजरेभ्यः । दश । धुरः । दश ।
युक्ताः । वहत्ऽभ्यः ॥ ७ ॥

दशावनिभ्यः कर्माण्यवन्तिगच्छन्तीत्यवनयः दशावनयोङ्गुलयोयेषां ग्राहकत्वेन संबन्धिनः ते दशावनयः तान् ग्राव्णःद्वितीयार्थे चतुर्थी दशकक्ष्येभ्यः कक्ष्याःप्रकाशकाअंगुलयोयेषांते दशकक्ष्याः तान्दशयोक्त्रेभ्योयोक्त्रवत् बन्धने साधनभूतादशांगुलयोयेषां तान् दशयोजनेभ्यः सोमेन सह योजने साधनभूतादशाङ्गुलयोयेषां तान् दशाभीशुभ्यः कर्माण्यभितोव्याप्नुवन्तीत्यभीशवोङ्गुलयोदशयेषां तान् अजरेभ्यः जरावर्जितान्दश दशभिः धुरः धूर्भिः हिंसितृभिः तृतीयार्थे प्रथमा युक्ता युक्तान् द्वितीयार्थे प्रथमा वहद्भ्योवहतोभिषवाख्ये कर्मणि व्याप्रियमाणानर्चत स्तुत हे ऋत्विजइतिशेषः । अत्रयास्कः—अवनयोङ्गुलयोभवन्त्यवन्तिकर्माणि कक्ष्याः

प्रकाशयन्तिकर्माणियोक्त्राणि योजयन्तीति व्याख्यातमभीशवोभ्यश्नुवतेकर्माणि दशधुरोद-शयुक्तावहद्भ्यः धूर्धूर्वतेर्वधकर्मणइयमपीतराधूरेतस्मादेवविहन्ति वहन्ति धारयतेर्वेति' ॥ ७ ॥

अथाष्टमी—

तेअद्रयोदशयन्त्रासआशवस्तेषामाधानंपर्येतिहर्यतम् ।
तऊंसुतस्यसोम्यस्यान्धसोंशोःपीयूषंप्रथमस्यभेजिरे ॥ ८ ॥

ते । अद्रयः । दशऽयन्त्रासः । आशवः । तेषाम् । आऽधानम् ।
परि । एति । हर्यतम् । ते । ऊँ इति । सुतस्य । सोम्यस्य ।
अन्धसः । अंशोः । पीयूषम् । प्रथमस्य । भेजिरे ॥ ८ ॥

अद्रयः आदरणीयाआशवः क्षिप्रकारिणस्ते एते प्रकृताग्रावाणोदशयन्त्रासोदशयन्त्रास्ते षामेषां ग्राव्णां संबन्धि यदाधानप्रक्षेपणमभिषवकर्म हर्यतंस्पृहणीयं पर्येति परितोगच्छति तउ ते ग्रावाणएव सुतस्याभिषुतस्य सोमस्य सोमसंबन्धिनःअंशोः खंडस्वरूपस्यान्धसोन्नस्य पीयूषममृतं प्रथमस्य भेजिरे इति ॥ ८ ॥

अथ नवमी—

तेसोमादोहरीइन्द्रस्यनिंसतेंशुंदुहन्तोअध्यासतेगवि ।
तेभिर्दुग्धंपपिवान्त्सोम्यंमध्विन्द्रोवर्धतेप्रथतेवृषायते ॥ ९ ॥

ते । सोमऽअदः । हरी इति । इन्द्रस्य । निंसते । अंशुम् ।
दुहन्तः । अधि । आसते । गवि । तेभिः । दुग्धम् । पपिऽवान् ।
सोम्यम् । मधु । इन्द्रः । वर्धते । प्रथते । वृषऽयते ॥ ९ ॥

ते सोमादः सोमस्यात्तारः ते प्रकृताः ग्रावाणइन्द्रस्य हरी अश्वौ निंसतेनिक्षंति चुंबन्ति प्राप्नुवन्तीत्यर्थः किंच गवि गव्ये अधिषवणचर्मण्यंशुं सोमं दुहन्तः अध्यासते किंचेन्द्रस्तेभिस्तैर्दुग्धं सोम्यं सोममयं मधु अमृतं पपिवान् पीतवान् वर्धते वृद्धशरीरोभवति प्रथते विस्तीर्णशरीरश्च भवति वृषायते वृषेवाचरति ॥ ९ ॥

---

१ नि० ३. ९ ।

अथ दशमी—

वृषावोअंशुर्नकिलारिषाथनेळावन्तःसदमित्स्थनाशिताः ।
रैवत्येवमहसाचारवःस्थनयस्यग्रावाणोअजुषध्वमध्वरम् ॥ १० ॥ ३० ॥

वृषा । वः । अंशुः । न । किल । रिषाथन । इळाऽवन्तः ।
सदम् । इत् । स्थन । आशिताः । रैवत्याऽइव । महसा । चारवः ।
स्थन । यस्य । ग्रावाणः । अजुषध्वम् । अध्वरम् ॥ १० ॥ ३० ॥

अंशुः सोमोवोयुष्माकं वृषा यज्ञे वर्षिता भविष्यति यूयमपिनरिषाथन नरिष्यथ न शीर्णाभवथ किल । किंच इळावन्तोन्नवन्ताइव यूयं सदमित् सदैवाशिताः भोजयिताः स्थन भवथ किंच रैवत्येव यथारेवन्तः तेजसा युक्ताभवन्ति तद्वत् महसा तेजसा युक्ताश्चारवः कल्याणाः स्थन भवथ हे ग्रावाणोयूयं यस्य यजमानस्याध्वरं यज्ञमजुषध्वं सेवध्वं ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थे त्रिंशोवर्गः ॥ ३० ॥

अथैकादशी—

तृदिलाअतृदिलासोअद्रयोश्रमणाअशृथिताअमृत्यवः ।
अनातुराअजराःस्थामविष्णवःसुपीवसोअतृषिताअतृष्णजः ॥ ११ ॥

तृदिलाः । अतृदिलासः । अद्रयः । अश्रमणाः । अशृथिताः ।
अमृत्यवः । अनातुराः । अजराः । स्थ । अमविष्णवः ।
सुऽपीवसः । अतृषिताः । अतृष्णऽजः ॥ ११ ॥

अश्रमणाः श्रमवर्जिताः अशृथिताः अन्यैरशिथिलीकृताः अमृत्यवः अमारिताः अनातुरा अरोगाअजरा जरारहिताः स्थ भवथ किंचामविष्णवः उत्क्षेपणापक्षेपणगत्योपेताहे ग्रावाणस्तृदिलाअन्येषां भेदका अतृदिलासः स्वयमन्येनाभिन्नाः सुपीवसःसुबलाअतृषितास्तृष्णारहिताः अतृष्णजः निःस्पृहाभवथ ॥ ११ ॥

अथ द्वादशी—

ध्रुवाएववःपितरोयुगेयुगेक्षेमंकामासःसदसोनयुंजते ।
अजुर्यासोहरिषाचोहरिद्रवआद्यांरवेणपृथिवीमशुश्रवुः ॥ १२ ॥

ध्रुवाः । एव । वः । पितरः । युगेऽयुगे । क्षेमऽकामासः । सदसः ।
न । युंजते । अजुर्यासः । हरिऽसाचः । हरिद्रवः ।
आ । द्याम् । रवेण । पृथिवीम् । अशुश्रवुः ॥ १२ ॥

हे ग्रावाणोयुगेयुगे सर्वेषु युगेषु ध्रुवाएव वोयुष्माकं पितरः पितृभूताः पर्वताः क्षेमकामासः क्षेमकामाः सदसः सदांसि आत्मना नयुंजते न संयोजयन्ति अजुर्यासोजरारहिता हरिषाचः सोमस्य संभक्तारः हरिद्रवः सोमसंसर्गाद्धरितवर्णाः द्यां दिवं पृथिवीं च रवेणाभिषवशब्देनाशुश्रवुः श्रावयन्ति ॥ १२ ॥

अथ त्रयोदशी—

तदिद्वदन्त्यद्रयोविमोचनेयामन्नंजस्पाइवघेदुपब्दिभिः ।
वपन्तोबीजमिवधान्याकृतःपृंचन्तिसोमंनमिनन्तिबप्सतः ॥ १३ ॥

तत् । इत् । वदन्ति । अद्रयः । विऽमोचने । यामन् । अंजःपाःऽइव ।
घ । इत् । उपब्दिऽभिः । वपन्तः । बीजम्ऽइव । धान्यऽकृतः ।
पृंचन्ति । सोमम् । न । मिनन्ति । बप्सतः ॥ १३ ॥

अद्रयः आदरणीयाः ग्रावाणोयामन् यामनि अंजस्पा अंजसा पान्ति रक्षन्तीत्यंजस्पाः तेषां रथानामिवोपब्दिभिः तदित् तदेवाभिषवकर्म विमोचनेघेत् तत्सोमरसविमोचनवेलायामपिवदन्ति प्रकाशयन्ति । बप्सतः सोमं भक्षयन्तोग्रावाणएव वपन्तोधान्याकृतः कृषीवलाः बीजमिव यथा पृंचंति संपर्चयन्ति तद्वत्सोमंपृंचंतिसंपर्चयन्तीत्यर्थः नएनंमिनन्ति नहिंसन्तीत्यर्थः ॥ १३ ॥

अथ चतुर्दशी--

सुतेअंध्वरेअधिवाचंमक्रताक्रीळयोनमातरंतुदन्तंः।
विषूमुंञ्चासुषुवुषोंमनीषांविवंर्तन्तामद्रंयश्चायंमानाः॥ १४॥३१॥

सुते। अध्वरे। अधि। वाचंम्। अक्रत। आ। क्रीळयंः। न।
मातरंम्। तुदन्तंः। वि। सु। मुञ्च। सुसुऽवुषंः। मनीषाम्।
वि। वर्तन्ताम्। अद्रंयः। चायंमानाः॥ १४॥ ३१॥

चायमानाः पूज्यमानाः अद्रयः आदरणीयाग्रावाणः अध्वरे अधियज्ञे सुते सोमेभिषुते मातरं तुदन्तोहस्तेन ताडयन्तआक्रीडयोनाक्रीडकाः कुमाराः शब्दं यथा कुर्वन्ति तथा वाचं शब्दमक्रत कुर्वन्ति सुषुवुषः सोममभिषुवतोग्राव्णोमनीषां स्तुतिं विमुंच विशेषेण मुंच किंच अद्रयोविवर्तन्तां अभिषवशब्दं मुंचन्तु॥ १४॥

॥ इत्यष्टमस्य चतुर्थे एकत्रिंशोवर्गः॥ ३१॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः॥ १॥
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येष्टमाष्टके चतुर्थोध्यायः॥ ४॥

## ॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदायोवेदेभ्योखिलं जगत्। निर्ममेतमहं वन्दे विद्यातीर्थमहेश्वरं ॥ १ ॥
अथाष्टमेष्टकेध्यायश्चतुर्थः संप्रदर्शितः । धीमता सायणार्येण पंचमोयं प्रदर्श्यते ॥ २ ॥

तत्र हयेजायइत्यष्टादशर्चं पंचमं सूक्तं त्रैष्टुभं । अत्रानुक्रमणिका—हयेव्यूनोर्वशीमैळः पुरूरवाः पूर्वोषितात्कामात्पुनरासाद्यावरोद्धुमैच्छत् सा तमनिच्छन्ती प्रत्याचष्टे हयइषुर्यांकदासुदेवोन्तरिक्षप्रांसचेति तिस्रश्चैळवाक्यं शिष्टाउर्वश्या इति। हयेइति हयइषुर्नश्रियइषुधेर्यासुजूर्णिः कदासूनुः सुदेवोअद्यान्तरिक्षप्रां सचायदासुजहतीष्वित्याद्यास्तिस्रश्चेति नवर्चऐळस्य पुरूरवसोवाक्यानि अतस्तासांसऋषिः शिष्टानवोर्वश्यावाक्यानि अतस्तासु सा ऋषिका । उभयोर्वाक्येषु योर्थः प्रतिपाद्यते सा देवता । गतोविनियोगः ॥ ऐलोर्वशीतिहासोत्र वैशद्यार्थंप्रवर्ण्यते । मित्रश्चवरुणश्चोभौदीक्षितौप्रेक्ष्यचोर्वशीं ॥ १॥ रेतःसिषिचतुःसद्यस्तत्कुंभेन्यदधुस्तदा तांशप्तवन्तौमनुजभोग्याभूमौभवेतितौ ॥ २ ॥ अत्रान्तरइलोराजामनोःपुत्रैश्चसंयुतः ।मृगयांसंचरन्साश्वोदेवीक्रीडंविवेशह ॥ ३ ॥ यत्रदेवंगिरिसुतासर्वैर्भावैरतोषयत् । अत्राविशन्पुमांस्त्रीस्यादित्युक्त्वातत्रचाविशत् ॥४॥ स्त्रीभूत्वाक्रीडितःसोगाच्छरणंशिवमंजसा । इयंप्रसाद्यतांराजन्नित्युक्तःशंभुनानृपः ॥५॥ जगामशरणंदेवीमात्मनःपुंस्त्वसिद्धये । अकरोत्सानृपंदेवीषण्मासात्प्राप्तपुंस्त्वकं ॥ ६॥ ततःकदाचित्स्त्रीकालेबुधःसौंदर्यमोहितः ।अप्सरोभ्योविशिष्टांतामिळांसंगतवान्मुदा ॥ ७ ॥ तदेलायांसोमपुत्राज्जातोराजापुरूरवाः । तमुर्वशीतुचकमेप्रतिष्ठानपुरेस्थितं ॥ ८ ॥ तल्पादन्यत्रननग्नंत्वांद्रष्टास्मियथागतं। सुतावुरणकौत्वंचसमीपंकुरुमेद्रुतं ॥ ९ ॥ इतिसासमयंकृत्वारमयामासतंनृपं । चतुरब्देगतेरात्रौदेवैरुरणकद्वयं ॥ १० ॥ हृतंतस्यध्वनिं श्रुत्वानग्नएवसभूपतिः । उत्थायजित्वातावागच्छेत्येवंजल्पकोनृपः ॥ ११ ॥ विद्युतादर्शितोस्यैसनग्नएवपुरूरवाः । अथसादृष्टसमयाद्युर्वशीतुदिवंययौ ॥ १२ ॥ ततउन्मत्तवद्राजादिदृक्षुस्तामितस्ततः । कुर्वन्नन्वेषणंतीरेसरसोमानसस्यतां ॥ १३ ॥ विहरन्तीमप्सरोभिः सहापश्यत्पुरूरवाः । पुनःसचकमेभोक्तुमुर्वशींचपुरूरवाः ॥ १४ ॥साब्रवीत्सापश्यदुक्त्वाचप्रत्याचष्टेव्रजेतितं । इत्युर्वश्यैलसंवादमिममेषोप्यसूचयदिति ॥ १५ ॥ अत्रवाजसनेयकं—उर्वशीहाप्सराः पुरूरवसमैलंचकमे तꣳहविन्दमानोवाच त्रिःस्ममाह्नोवैतसेनदंडेन हतादकामास्ममानिपद्यासैमास्मत्वानग्नंदर्शमेषवैनः स्त्रीणामुपचारइति साहास्मिन् ज्योगुवासापिहास्माद्गर्भिण्यास-

तावज्ज्योग्घास्मिन्नुवासततोहगंधर्वाः समूदिरे ज्योग्वाइयमुर्वशीमनुष्येष्ववात्सीदुपजानीत यथेयंपुनरागच्छेदिति तस्यैहाविर्द्धुरणाशयनउपबद्धास ततोहगंधर्वाअन्यतरमुरणंप्रमेथुः साहोवाचावीरइव बतमेजनइवपुत्रंहरन्तीति द्वितीयंप्रमेथुः साहतथैवोवाचाथहायमीक्षांचक्रे कथंनुतदवीरं कथमजनंस्याद्यत्राहंस्यामिति सनग्नएवानूत्पपातचिरंतन्मेनेयद्वासःपर्यधास्यत ततोहगंधर्वाविद्युतंजनयांचक्रुस्तं यथादिवैवंनग्नंददर्श ततोहैवेयंतिरोबभूवपुनरैनमीत्येत्तिरोभूताःसआध्याजल्पन्कुरुक्षेत्रंसमयाचचारान्यतः प्लक्षेति बिसवतीतस्यैहाध्यन्तेनवव्राज तद्धताअप्सरसआतयोभूत्वा परिपुप्लुविरेतंहेयंज्ञात्वोवाचायंवै समनुष्योयस्मिन्नहमवात्समिति ताहोचुस्तस्मैवाआविरसामेति तथेतितस्मैहाविरासुस्ताःहायं ज्ञात्वाभिपरोवादहयेजायेमनसेत्यादि ।

तत्र प्रथमा—

**ॐम् हयेजायेमनसातिष्ठघोरेवचांसिमिश्राकृणवावहैनु ।**
**ननौमन्त्राअनुदितासएतेमयस्करन्परतरेचनाहन् ॥ १ ॥**

हये । जाये । मनसा । तिष्ठ । घोरे । वचांसि । मिश्रा । कृणवावहै ।
नु । न । नौ । मन्त्राः । अनुऽदितासः । एते । मयः । करन् ।
परऽतरे । चन । अहन् ॥ १ ॥

हयेजाये पुरूरवसोवाक्यं । जायां पश्यन्वदति हये हे घोरे अस्माकं दुःखजनकत्वात् घोरकारिणि जाये मनसा अस्मदुपर्यनुरागवता मनसा युक्ता सती तिष्ठ क्षणमात्रं संनिधावेव निवस हयइत्यस्यनिघाताभावश्छान्दसः । किमर्थं संस्थानमिति तत्राह वचांसि वाक्यानि मिश्राणि उक्तिप्रत्युक्तिरूपाणि नुअद्य क्षिप्रं वा कृणवावहै करवावहै कृविहिंसाकरणयोश्च धिन्विकृण्व्योरचेत्युप्रत्ययः । किमर्थं वचसः करणमिति चेत् उच्यते नौ आवयोः मंत्रारहस्यार्थाः एतेविवक्षिताअनुदितासः अव्याह्रियमाणाः परस्परमसंभाष्यमाणाः गुंफिताः सन्तः परतरेचनाहन् चनेति निपातसमुदायश्चार्थे अनेकेषु दिवसेषु चरमेप्यहनि मयः सुखनामैतत् सुखं न करन् कुर्वन्ति अतः कृणवावहाइति ॥ १ ॥

अथ द्वितीया—

किमेताव़ाचाकृणवातवाहंप्राक्रमिषमुषसांमग्रियेव ।
पुरूरवःपुनरस्तंपरेहिदुरापनावातइवाहमस्मि ॥ २ ॥

किम् । एता । वाचा । कृणव । तव । अहम् । प्र । अक्रमिषम् ।
उषसाम् । अग्रियाऽइव । पुरूरवः । पुनः । अस्तम् । परा । इहि ।
दुःऽआपना । वातःऽइव । अहम् । अस्मि ॥ २ ॥

अनया तं उर्वशी प्रत्युवाच—एता एतया वाचा केवलया पुनः संभोगरहितया किंकृणव किंकरवाव अहं त्विदानीं त्वत्सकाशात् प्राक्रमिषं अतिक्रान्तवत्यस्मि । अतिक्रमे दृष्टान्तः—उषसामग्रियेव बह्वीनामुषसां मध्ये अग्रिया अग्रेभवा पूर्वा पूर्वोषाः प्राक्रमीद्यथाहमपीति । यस्मादेवं तस्मात् हे पुरूरवः त्वं पुनरस्मत्सकाशादस्तं गृहं परेहि परागच्छ मय्यभिलाषं माकार्षीः । स्वस्याग्रहत्वमाह अहं वातइव वायुरिव दुरापना दुष्प्रापा दुरापा वा अस्मि । दुरापावा अहं त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनंतदुवाचेतिवाजसनेयकं ॥ २ ॥

अथ तृतीया—

इषुर्नश्रियइषुधेरसनागोषाःशतसानरंहिः ।
अवीरेक्रतौविदविद्युतन्नोरानमायुंचितयन्तधुनयः ॥ ३ ॥

इषुः । न । श्रिये । इषुऽधेः । असना । गोऽसाः । शतऽसाः । न ।
रंहिः । अवीरे । क्रतौ । वि । दविद्युतत् । न । उरा । न ।
मायुम् । चितयन्त । धुनयः ॥ ३ ॥

अनया पुरूरवाःस्वस्यविरहजनितं वैक्लव्यं तां प्रति ब्रूते—इषुधेः इषवोधीयन्ते अत्रेतीषुधिर्निषंगः ततः सकाशादिषुरसना असनायै प्रक्षेप्तुं नभवति श्रिये विजयार्थं त्वद्विरहाद्युद्धस्यबुद्धावप्यनिधानात् तथा रंहिर्वेगवानहं शत्रुसकाशाद्गोषाः तेषां शत्रूणां गवां संभक्तानाभवं तथा शतसाः शतानामपरिमितानां शत्रुधनानां संभक्तानाभवं किंचावीरे वीरवर्जिते क्रतौ

राजकर्मणि सति नविद्‌विद्युतव्‌ न विद्योतते मत्सामर्थ्यं किंच धुनयः कंपयितारोस्मदीयानराः उरा उरौ सुपांसुलुगिति सप्तम्याडादेशः विस्तीर्णेसंग्रामे मायुं मीयते प्रक्षिप्यते इतिमायुः शब्दः कृवापाजीत्यादिना उण्‌ सिंहनादं न चितयन्त न बुध्यन्ते । चिती संज्ञाने अस्माण्णिचि संज्ञा-पूर्वकस्य विधेरनित्यत्वाल्लघूपधगुणाभावः छान्दसोलङ् ॥ ३ ॥

अथ चतुर्थी—

**सावसुदधंतीश्वशुरायवयउषोयदिवष्ट्यन्तिगृहात्‌ ।**
**अस्तंननक्षेयस्मिंञ्चाकन्दिवानक्तंश्नथितावैतसेन ॥ ४ ॥**

**सा । वसु । दधंती । श्वशुराय । वयः । उषः । यदि । वष्टि । अन्तिऽगृहात्‌ । अस्तम्‌ । ननक्षे । यस्मिन्‌ । चाकन्‌ । दिवा । नक्तम्‌ । श्नथिता । वैतसेन ॥ ४ ॥**

इयमुत्तराचोर्वशीवाक्ये—आद्येन पुरात्मना कृतं उषसे निवेदयति हे उषः सेयमुर्वशी वसु वासकं वयोन्नं श्वशुराय भर्तुः पुरूरवसः पित्रे दधती प्रयच्छन्ती तत्र गृहे स्थिता यदि पतिंवष्टि कामयते तदान्तिगृहात्‌ स्वभर्तृभोगगृहान्तिके यत्‌ श्वशुरस्य भोजनगृहं तदन्तिगृहं तस्माद्गृहात्सोर्वशी अस्तं पतिगृहं ननक्षे व्याप्नोति तस्मिन्‌ गृहे चाकन्‌ कामयते उर्वशी सा-चोर्वशी दिवानक्तं अहनि रात्रौ च वैतसेन शेपोवैतसइतिपुंस्प्रजननस्येति निरुक्तं। पुंस्प्रजननेन श्नथिता ताडिता भवति ।एवमुर्वशी आत्मानं परोक्षेणनिर्दिदेश ॥ ४ ॥

अथ पञ्चमी—

**त्रिःस्ममाह्नःश्नथयोवैतसेनोतस्ममेव्यत्यैपृणासि ।**
**पुरूरवोनुतेकेतमायंराजामेवीरतन्व१स्तदासीः ॥ ५ ॥ १ ॥**

**त्रिः । स्म । मा । अह्नः । श्नथयः । वैतसेन । उत । स्म । मे । अव्यत्यै । पृणासि । पुरूरवः । अनु । ते । केतम्‌ । आयम्‌ । राजा । मे । वीर । तन्वः । तत्‌ । आसीः ॥ ५ ॥ १ ॥**

---

१ नि० ३.२१ ।

अनेन पुरूरवसमेव संबोध्योक्तवती हे पुरूरवस्त्वं मा मां अह्नः अहनि वैतसेन दंडेन पुंव्यंजनेन त्रिः त्रिवारं द्वित्रिचतुर्भ्यः सुच् श्नथयःस्म अश्नथयः अताडयः कृत्वोर्थप्रयोगे इति कालवाचिनोहःशब्दात् अधिकरणे षष्ठी उतापिच स्मेति पूरणः अव्यत्यै सपत्नीभिः सह पर्यायेण पतिमागच्छति साव्यती नतादृशी अव्यती तस्यै मे मह्यं पृणासि पूरयसि एवं बुध्या हे पुरूरवः ते केतं गृहमन्वायं अन्वगमं। पूर्वं हे वीर राजा त्वं मे मम तन्वः शरीरस्य तत्तदा आसीः अभवः सुखयितेति शेषः। परमप्येवं मन्तव्यं किमिति कातरोभवसीत्युवाच ॥ ५॥

॥ इत्यष्टमस्य पञ्चमे प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

**यासुंजूर्णिःश्रेणिःसुम्नआपिर्ह्रदेचक्षुर्नग्रन्थिनीचरण्युः ।**
**ताअञ्जयोरुणयोनसंस्रुःश्रियेगावोनधेनवोनवन्त ॥ ६ ॥**

या । सुऽजूर्णिः । श्रेणिः । । सुम्नेऽआपिः । ह्रदेऽचक्षुः । न । ग्रन्थिनी । चरण्युः । ताः । अञ्जयः । अरुणयः । न । सस्रुः । श्रिये । गावः । न । धेनवः । अनवन्त ॥ ६ ॥

पुरूरवसोवाक्यं यासुजूर्णिः सुजवा एतन्नामिकास्ति तथा या श्रेणिः यासुम्नआपिः या ह्रदेचक्षुः नकारः समुच्चये ताभिश्चतसृभिरालिभूताभिर्मानिनीभिः सहिता ग्रंथिनी ग्रथनवती संदर्भवती चरण्युश्चरणशीला उर्वश्याजगाम यद्वा ग्रंथिनीत्येतत् सखिभूताप्सरोनामधेयं या सुजूर्णिः सुजवा उर्वशी सा ताभिः सह जगाम ताअप्सरसोंजयआभरणोपेताअरुणयोरुणवर्णान सस्रुः पूर्ववन्न गच्छन्ति श्रिये श्रयणाय धेनवः नवप्रसूतागावोन गावइव आशिरार्थं यथा गावो नवन्त शब्दायन्ते तथा न शब्दयन्तीति व्यतिरेके दृष्टान्तः ॥ ६ ॥

अथ सप्तमी—

**समस्मिञ्जायमानआसतग्ना उतेमवर्धन्नद्यः१स्वगूर्ताः ।**
**महेयत्त्वापुरूरवोरणायावर्धयन्दस्युहत्यायदेवाः ॥ ७ ॥**

सम् । अस्मिन् । जायमाने । आसत । ग्नाः । उत । ईम् ।
अवर्धन् । नद्यः । स्वऽगूर्ताः । महे । यत् । त्वा । पुरूरवः । रणाय ।
अवर्धयन् । दस्युऽहत्याय । देवाः ॥ ७ ॥

अनयैताभिः संसर्गस्त्वयानुभूतइत्युर्वशीवदति अस्मिन्पूरूरवसि जायमाने ग्नाअप्सरसो-देववेश्याः अपि समासत संगताअभवन् अथवा जायमाने यज्ञार्थं प्रवर्धमाने सति ग्नाः देव-पत्न्योपि समासत समभवन् उतापिच ईमेनं पुरूरवसं स्वगूर्ताः स्वयं गामिन्योनद्यस्तासामाश्र-यभूता अवर्धयन् । किंच हे पुरूरवोयद्यस्मात् त्वा त्वां महे महते रणाय रमणीयाय संग्रामाय दस्युहत्याय दस्युहननाय देवास्त्वामवर्धयन् ॥ ७ ॥

अथाष्टमी—

सचायदासुजहतीष्वत्कममानुषीषुमानुषोनिषेवे ।
अपस्ममत्तरसन्तीनभुज्युस्ताअत्रसन्नथस्पृशोनाश्वाः ॥ ८ ॥

सचा । यत् । आसु । जहतीषु । अत्कम् । अमानुषीषु । मानुषः ।
निऽसेवे । अप । स्म । मत् । तरसन्ती । न । भुज्युः । ताः ।
अत्रसन् । रथऽस्पृशः । न । अश्वाः ॥ ८ ॥

इदमादित्रीण्यैलवाक्यानि तत्रादितोद्वाभ्यामुर्वशीमन्याश्च सह स्तौति यद्यदा सचा सहायभूतः पुरूरवः अत्कं स्वकीयं रूपं अत्कइति रूपनाम जहतीषु परित्यजन्तीषु अमानुषीषु देवताभूतास्व-प्सरसःसु मानुषः सन् निषेवे अभिमुखं गच्छति तदानीं ताअप्सरसोमत् मत्तः अप अपसृत्या-त्रसन् त्रसिर्गतिकर्मा गच्छन्ति । पलायने दृष्टान्तः—तरसंती भुज्युर्न तरसं नाममृगः तस्य स्त्री भुज्युः भोगसाधनभूता स्त्री मृगी सा यथा व्याधाद्भीता पलायते । किंच रथस्पृशोनाश्वाः रथे नियुक्ताअश्वाइव ते यथा पलायन्ते तद्वत्पलायन्तइति उर्वश्याअनेकाभिरस्माभिः सह भोगमनुभुक्तवानसीत्युक्तः प्रत्याचष्टे ॥ ८ ॥

अथ नवमी—

यदासुमर्तोअमृतासुनिस्पृक्संक्षोणीभिःक्रतुभिर्नपृङ्क्ते ।
ताआतयोनतन्वःशुम्भतस्वाअश्वासोनक्रीळयोदन्दशानाः ॥ ९ ॥

यत् । आसु । मर्तः । अमृतासु । निऽस्पृक् । सम् । क्षोणीभिः ।
क्रतुऽभिः । न । पृङ्क्ते । ताः । आतयः । न । तन्वः । शुंभत ।
स्वाः । अश्वासः । न । क्रीळयः । दन्दशानाः ॥ ९ ॥

यद्यदा आसु अमृतास्वप्सरस्सु मर्तोमनुष्यः पुरूरवानिस्पृक् निःशेषेण स्पृशन् क्षोणीभिर्वाग्भिः क्रतुभिर्न कर्मभिश्च संपृंक्ते संपर्कं करोति नकारः समुच्चयार्थीयः । ताअप्सरसः आतयः आधिभूतास्तदानीं स्वास्तन्वः आत्मीयानि रूपाणि न शुंभत न प्रकाशयन्ति अश्वासोन अश्वाइव क्रीळयः संक्रीडमानादंदशानाः दंदशूकाः जिह्वाभिरात्मीयाः सृक्काभक्षयन्तः ते यथा तदानीं स्वचापल्येन धावन्तः स्वरूपं न प्रयच्छन्ति रथिकाय तद्वदिति दुःखाद्ब्रूते ॥९॥

अथ दशमी—

विद्युन्नयापतन्तीदविद्योद्भरन्तीमेअप्याकाम्यानि ।
जनिष्टोअपोनर्यःसुजातःप्रोर्वशीतिरतदीर्घमायुः ॥ १० ॥ २ ॥

विऽद्युत् । न । या । पतन्ती । दविद्योत् । भरन्ती । मे । अप्या ।
काम्यानि । जनिष्टोइति । अपः । नर्यः । सुऽजातः । प्र ।
उर्वशी । तिरत । दीर्घम् । आयुः ॥ १० ॥ २ ॥

अनयोर्वशीं स्तौति योर्वशी विद्युन्न विद्युदिव पतन्ती गच्छन्ती दविद्योत् द्योतते किं कुर्वती अप्या आपइत्यन्तरिक्षनाम तत्संबन्धीनि अप्यानि काम्यान्यस्मदभिमतानि उदकानि मे मह्यं भरन्ती संपादयन्ती यदा आगतायास्तस्याः सकाशादपोव्यात्तः कर्मसु नर्योनरेभ्योहितः सुजातः सुजननः पुत्रोजनिष्टो अजनिष्ट उत्पद्यते तदानीं ममोर्वशी दीर्घमायुः प्रतिरत प्रवर्धयति । प्रजामनुप्रजायसेतदुतेमर्त्यामृतमितिहिमंत्रः ॥ १० ॥

॥ इत्यष्टमस्य पंचमे द्वितीयोवर्गः ॥ २ ॥

---

१ तै० ब्रा० १. ५. ५ ।

अथैकादशी—

जज्ञिषइत्थागोपीथ्यायहिदधाथतत्पुरूरवोमओजः ।
अशासन्त्वाविदुषीसस्मिन्नहन्नमआशृणोःकिमभुग्वदासि ॥ ११ ॥

जज्ञिषे । इत्था । गोऽपीथ्याय । हि । दधाथ । तत् । पुरूरवः ।
मे । ओजः । अशासम् । त्वा । विदुषी । सस्मिन् । अहन् । न ।
मे । आ । अशृणोः । किम् । अभुक् । वदासि ॥ ११ ॥

इत्था इत्थं गोपीथ्याय गौः पृथिवी पीथं पालनं स्वार्थिकस्तद्धितः भूमेरक्षणाय जज्ञिषे हि जातोसि खलु पुत्ररूपेण आत्मावैपुत्रनामेतिश्रुतेः । पुनर्देव्याह हे पुरूरवः मे ममोदरेमयि ओजः अपत्योत्पादनसामर्थ्यं दधाथ निदधाथ मयि निहितवानसि तत्तथास्तु अथापि स्थातव्यमिति चेत्तत्राह विदुषी भाविकार्यं जानती सस्मिन्नहन् सर्वस्मिन्नहनि त्वया यत्कर्तव्यं त्वा त्वां अशासं शिक्षितवत्यस्मि त्वं मे मम वचनं नाश्रृणोः नश्रृणोषि किं त्वं अभुक् अभोक्ता अपालयिता प्रतिज्ञातार्थमपालयन् वदासि हयेजायेइत्यादिरूपं प्रलापं । वदेर्लेट्याडागमः। अहन् अहनि दिवसे त्रिवारं यभस्व एडकद्वयमस्माकं पुत्रत्वेन परिकल्पय पुत्रोत्पादनपर्यन्तं वसामि नग्नं त्वां यदाद्राक्षं तदागच्छामीत्येवं रूपोमिथः समयः ॥ उर्वशीहाप्सराःपुरूरवसमैळंचकमे तꣳहविन्दमानोवाच त्रिःस्ममाह्नोवैतसेनदण्डेनेत्यादि वाजसनेयकमुदाहृतं ॥ ११ ॥

अथ द्वादशी—

कदासूनुःपितरंजातइच्छाच्चक्रंनाश्रुवर्तयद्विजानन् ।
कोदम्पतीसमनसावियूयोदधयदग्निःश्वशुरेषुदीदयत् ॥ १२ ॥

कदा । सूनुः । पितरम् । जातः । इच्छात् । चक्रम् । न । अश्रु ।
वर्तयत् । विऽजानन् । कः । दम्पती इति दम्ऽपती । सऽमनसा ।
वि । यूयोत् । अध । यत् । अग्निः । श्वशुरेषु । दीदयत् ॥ १२ ॥

इदं पुरूरवसोवाक्यं कदा कस्मिन्काले सूनुस्तवोदरजातः सन् पितरं मामिच्छात इच्छेत् इषु इच्छायां लेटि शपि इषुगमियमामिति छादेशः लेटोडाटाविति अडागमः कदा वा

विजानन् पितरं मामधिगच्छन् चक्रन् क्रन्दमानः अश्रुवर्तयत् नेतिचार्थे किंच कः किंविधः सन् सूनुः समनसा समनसौ दंपती जायापती त्वां मां च वियूयोत् विश्लेषयेत् युमिश्रणामिश्रणयोः यौतेश्छान्दसः शपः श्लुः तुजादित्वादभ्यासदीर्घः अधाधुना यद्यदाग्निस्तव हृदयस्थितस्तेजोरूपोगर्भः श्वशुरेषु दीदयत् दीप्यते दीदयतिर्दीप्तिकर्मेतिनैरुक्तोधातुः ॥ १२ ॥

अथ त्रयोदशी—

प्रतिब्रवाणिवर्तयते अश्रुंचक्रन्नक्रंददाध्येशिवायै ।
प्रतत्तेहिनवायत्तेअस्मेपरेह्यस्तंनहिमूरमापः ॥ १३ ॥

प्रति । ब्रवाणि । वर्तयते । अश्रु । चक्रन् । न । क्रन्दत् । आऽध्ये । शिवायै । प्र । तत् । ते । हिनव । यत् । ते । अस्मे इति । परा । इहि । अस्तम् । नहि । मूर । मा । आपः ॥ १३ ॥

इदमुर्वशीवाक्यं—हे पुरूरवस्त्वां प्रति ब्रवाणि प्रतिवच्मि त्वदपत्यं अश्रु बाष्पं वर्तयते वर्तयिष्यति आध्ये आध्याते वस्तुनि शिवायै शिवे कल्याणे उपस्थिते सति चक्रन् रुदन् अश्रूणि विमुंचन् न क्रन्दत् नकारश्चार्थे रोत्स्यतिचेत्यर्थः तत् तदपत्यं ते तुभ्यं हिनव प्रहिणोमि यदपत्यं ते तव संबन्धि अस्मे अस्मासु निहितं । त्वं परेह्यस्तं अस्तमिति गृहनाम स्वगृहं प्रतिगच्छ हे मूर मूढ मा मां नह्यापः नप्राप्नोषि हि नवेत्यत्र हिनोतेश्छन्दसिलुङ्लङ्लिटइति भविष्यति लङि मिपआमादेशः गुणः अन्त्यलोपश्छान्दसः बहुलवचनादडभावः । आपः आप्लृव्याप्तौ लिटि तिङांतिङोभवन्तीति लङोलोट् ॥ १३ ॥

अथ चतुर्दशी—

सुदेवोअद्यप्रपतेदनावृत्परावतंपरमांगन्तवाउ ।
अधाशयीतनिर्ऋतेरुपस्थेधैनंवृकारभसासोअद्युः ॥ १४ ॥

सुऽदेवः । अद्य । प्रऽपतेत् । अनावृत् । पराऽवतम् । परमाम् । गन्तवै । ॐ इति । अध । शयीत । निःऽऋतेः । उपऽस्थे । अध । एनम् । वृकाः । रभसासः । अद्युः ॥ १४ ॥

अथ परिदूनः पुरूरवाउवाच सुदेवः त्वया सह सुक्रीडः पतिरद्य प्रपतेत् अत्रैव प्रपततु अथवा अनावृत् अनावृतः सन् परमां परावतं दूरादपि दूरदेशं गन्तवै गन्तुं महाप्रस्थानगमनं कुर्यात् अधाथवा यत्र कुत्रापि गन्तुं समर्थः सन् निर्ऋतेः पृथिव्याउपस्थे शयीत शयनं कुर्यात् यद्वा निर्ऋतिः पापदेवता तस्याउपस्थे उत्संगे संनिधौ म्रियतामित्यर्थः अध अथवैनं वृकाअरण्यश्वानोरभसासोवेगवन्तः अद्युर्भक्षयन्तु । अत्रवाजसनेयकं—सुदेवोद्योद्वाबध्नीतप्रवापतेत्तदेनंवृकाः श्वानोवाद्युरिति हैवतदुवाचेति ॥ १४ ॥

अथ पंचदशी--

**पुरूरवोमामृंथामाप्रपंसोमात्वावृकासोअशिवासउक्षन् ।**
**नवैस्त्रैणानिसख्यानिसन्तिसालावृकाणांहृदयान्येता ॥ १५ ॥३॥**

**पुरूरवः । मा । मृथाः । मा । प्र । पप्तः । मा । त्वा । वृकासः ।**
**अशिवासः । ऊँ इति । क्षन् । न । वै । स्त्रैणानि । सख्यानि ।**
**सन्ति । सालावृकाणाम् । हृदयानि । एता ॥ १५ ॥ ३ ॥**

तमितरा प्रत्युवाच—हे पुरूरवः त्वं मामृथाः मृतिं माप्राप्नुहि म्रियतेर्लुङि थासि ह्रस्वादंगादिति सिचोलोपः । तथा माप्रपप्तः अत्रैव पतनं माकार्षीः पातेर्लुङि लृदित्वात्पुषादीत्यादिना च्लेरङ् पतःपुमिति पुम् । तथा त्वा त्वां अशिवासोशुभावृकासोवृकामोक्षन् उइत्येवकारार्थः अक्षन् माभ्यवहरन्तु किमित्येवमस्मदुपर्याग्रहं करोषि माकार्षीरित्यर्थः अदेर्लुङि लुङ्सनोर्घस्लृ इति घस्लादेशः मंत्रेघसेति च्लेर्लुक् गमहनेत्युपधालोपः शासिवसीत्यादिना षत्वं खरिचेति चर्त्वं बाहुलकादडभावः । अथास्व स्नेहस्यासारतामाह स्त्रैणानि स्त्रीणां कृतानि सख्यानि नवै सन्ति नसन्ति खलु । अभावे कारणमाह एता एतानि सख्यानि सालावृकाणां हृदयानि तेषां हृदयानि यथा वत्सादीनां विश्वासापन्नानां घातुकानि तद्वत् । अत्र वाजसनेयकं मैतदाद्दथानवैस्त्रैणश्सख्यमस्ति पुनर्गृहानैहीति हैवैनंतदुवाचेति ॥ १५ ॥

॥ इत्यष्टमस्य पंचमे तृतीयोवर्गः ॥ ३ ॥

अथ षोडशी—

यद्विरूपाचरंमर्त्येष्ववसंरात्रीःशरदश्चतस्रः ।
घृतस्यस्तोकंसकृदह्नआश्नांतादेवेदन्तातृपाणाचरामि ॥ १६ ॥

यत् । विऽरूपा । अचरम् । मर्त्येषु । अवसम् । रात्रीः । शरदः ।
चतस्रः । घृतस्य । स्तोकम् । सकृत् । अह्नः । आश्नाम् ।
तात् । एव । इदम् । ततृपाणा । चरामि ॥ १६ ॥

यद्यदा विरूपा परं मनुष्यस्य संपर्कात् विगतसहजभूतदेवरूपा पत्यानुकूल्येन नानारूपावा मर्त्येषु मनुष्येषु अचरं तदानीं रात्रीः पूरयित्रीश्चतस्रः शरदः अवसं न्यवसं अत्यन्तसंयोगे द्वितीया तदानीं घृतस्य स्तोकं सकृदह्नआश्नां तादेव तेनैव स्तोकेनाहमिदं संप्रति तातृपाणा तृप्ता सती चरामि ॥ १६ ॥

अथ सप्तदशी—

अन्तरिक्षप्रांरजसोविमानीमुपशिक्षाम्युर्वशींवसिष्ठः ।
उपत्वारातिःसुकृतस्यतिष्ठान्निवर्तस्वहृदयंतप्यतेमे ॥ १७ ॥

अन्तरिक्षऽप्राम् । रजसः । विऽमानीम् । उप । शिक्षामि ।
उर्वशीम् । वसिष्ठः । उप । त्वा । रातिः । सुऽकृतस्य ।
तिष्ठात् । नि । वर्तस्व । हृदयम् । तप्यते । मे ॥ १७ ॥

अन्तरिक्षप्रां स्वतेजसान्तरिक्षस्य पूरयित्रीं तथा रजसोरंजकस्योदकस्य विमानीं निर्मात्रीं उर्वशीं वसिष्ठः समानानां मध्येतिशयेन वासयिताहं उपशिक्षामि वशंनयामि सुकृतस्य शोभनकर्मणोरातिर्दाता पुरूरवाः त्वा त्वां उपतिष्ठात् उपतिष्ठतु मे हृदयं तप्यते अतोनिवर्तस्व एवं राजोवाच ॥ १७ ॥

अथाष्टादशी–

इतित्वादेवाइमआहुरैळयथेमेतद्भवसिमृत्युबन्धुः ।
प्रजातेदेवान्हविषायजातिस्वर्गउत्वमपिमादयासे ॥ १८ ॥ ४ ॥

इति । त्वा । देवाः । इमे । आहुः । ऐळ । यथा । ईम् । एतत् ।
भवसि । मृत्युऽबन्धुः । प्रऽजा । ते । देवान् । हविषा । यजाति ।
स्वःऽगे । ऊँ इति । त्वम् । अपि । मादयासे ॥ १८ ॥ ४ ॥

हे ऐल पुरूरवस्त्वा त्वां इमे देवाइत्याहुः मृत्युबन्धुर्मृत्योर्बन्धकोमृत्योर्बन्धुभूतोवा मृत्युवशमापामुवंस्त्वं यथाई एतद्भवसि प्रजाः प्रकर्षेण जायमानस्त्वं तव संबन्धिनोयष्टव्यान् देवान् हविषा यजासि यजसि स्वर्गउ स्वर्गेएव त्वमपि मादयासे मदयसि अस्माभिः सह एवमाहुरित्यर्थः यस्मादेवं करोषि तस्मादभिलाषं हित्वा सुखीभवेति सेयं पुरूरवसं प्रत्युवाच॥१८॥

॥ इत्यष्टमस्य पञ्चमे चतुर्थोवर्गः ॥ ४ ॥

प्रतेमहइति त्रयोदशर्चं षष्ठं सूक्तं वरुर्नामांगिरसऋषिः इन्द्रस्य पुत्रः सर्वहरिर्वा नाम द्वादशीत्रयोदश्यौ त्रिष्टुभौ शिष्टाएकादश जगत्यः इन्द्रस्याश्वौ हरी तयोरत्र स्तूयमानत्वात्तद्देवताकमिदं तथाचानुक्रान्तं–प्रतेसप्तोना वरुः सर्वहरिर्वैन्द्रोहरिस्तुतिर्द्वित्रिष्टुबन्तं । अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिनएतत्सूक्तं सूत्रितंच–प्रतेमहऊतीशचीवस्तववीर्येणेति याज्येति । षोडशिशस्त्रेप्याद्यस्तृचः शंसनीयः । सूत्रितंच–प्रतेमहेविदथेशंसिषंहरीइति तिस्रोजगत्यइति ।

तत्र प्रथमा–

प्रतेमहेविदथेशंसिषंहरीप्रतेवन्वेवनुषोहर्यतंमदम् ।
घृतंनयोहरिभिश्चारुसेचतआत्वाविशन्तुहरिवर्पसंगिरः ॥ १ ॥

प्र । ते । महे । विदथे । शंसिषम् । हरी इति । प्र । ते । वन्वे ।
वनुषः । हर्यतम् । मदम् । घृतम् । न । यः । हरिऽभिः । चारु ।
सेचते । आ । त्वा । विशन्तु । हरिऽवर्पसम् । गिरः ॥ १ ॥

हे इन्द्र ते तव हरी अश्वौ महे महति विदथे यज्ञे प्रशंसिषं अशंसिषं अस्ताविषं । तथा वनुषः वनु हिंसायां हिंसकस्य ते तव हर्यतं हर्य गतिकान्त्योः तस्यौणादिकः अतच् चित्स्वरेणा-न्तोदात्तः कमनीयं मदं प्रवन्वे प्रयाचे अस्मदभिमतं । वनु याचने यइन्द्रोहरिभिः हरितवर्णैः अश्वैर्मध्यागंगत्वा चारु चरणीयं घृतं न घृतमिव सुपूतं उदकं सेचते वर्षति तं तादृशं हरिव-र्पसं वर्पइति रूपनाम हरितरूपं त्वा त्वां आविशन्तु गिरोस्मदीयाः स्तुतिवाचस्तव मदाय॥१॥

अथ द्वितीया—

**हरिं॒हि॒योनि॑म॒भि॒येस॒मस्व॑रन्हि॒न्वन्तो॒हरी॑दि॒व्यंय॒थासदः॑ ।**
**आयंपृ॒णन्ति॒हरि॑भि॒र्नधे॒नव॒इन्द्रा॑यशू॒षंहरि॑वन्तमर्चत ॥ २ ॥**

हरि॑म् । हि । योनि॑म् । अ॒भि । ये । स॒म्ऽअस्व॑रन् । हि॒न्वन्तः॑ ।
हरी॒ इति॑ । दि॒व्यम् । यथा॑ । सदः॑ । आ । यम् । पृ॒णन्ति॑ ।
हरि॑ऽभिः । न । धे॒नवः॑ । इन्द्रा॑य । शू॒षम् । हरि॑ऽवन्तम् । अ॒र्च॒त ॥ २ ॥

ये पूर्वे स्तोतारऋषयोयोनिं इन्द्रस्य स्थानभूतं हरिं अश्वं अभिसमस्वरन् स्वृशब्दोपता-पयोः अभिसंस्तुवन्ति किंकुर्वन्तः दिव्यं देवसंबन्धि सदोयागगृहं यथा प्रेरयन्तीन्द्रं तथा हरी अश्वौ हिन्वन्तः प्रेरयन्तः सोमेभिषुते सति स्वयमेवेन्द्रोरथेश्वौ प्रेरयति अतः स्तोतॄणां हरि-प्रेरणत्वं । यद्वा दिव्यं सदः इन्द्रः प्राप्नुयात्तथा हरिं रथाय स्तुतिभिर्हिन्वन्तः प्रेरयन्तः यमिन्द्रं धेनवः नवप्रसूतागावोयथा पृणन्ति क्षीरादिभिः । अत्र पुरस्तादुपचारोपि नकारउपमार्थीयः । हरिभिः हरितवर्णैः सोमैरापृणन्ति पूरयन्ति तथा यूयमपीन्द्रायेन्द्रस्य हरिवन्तं शूषं बलं अर्चत पूजयत हे स्तोतारः स्तुतिभिः ॥ २ ॥

अथ तृतीया—

**सो अ॑स्य॒वज्रो॒हरि॑तो॒यआ॑य॒सोह॒रि॒र्निका॑मो॒हरि॒रागभ॑स्त्योः ।**
**द्यु॒म्नीसु॑शि॒प्रोहरि॑मन्युसायक॒इन्द्रे॒निरू॒पाहरि॑तामिमिक्षिरे ॥ ३ ॥**

सः । अ॒स्य॒ । वज्रः॑ । हरि॑तः । यः । आ॒य॒सः । हरिः॑ । निःऽका॑मः ।
हरिः॑ । आ । गभ॑स्त्योः । द्यु॒म्नी । सु॒ऽशि॒प्रः । हरि॑मन्युऽसायकः ।
इन्द्रे॑ । नि । रू॒पा । हरि॑ता । मि॒मि॒क्षि॒रे ॥ ३ ॥

अस्येन्द्रस्य वज्रोहरितोहरितवर्णः यआयसः अयसःसारभूतोस्ति निर्मितः सच हरिर्हरितवर्णो-वज्रोनिकामः नितरां कमनीयः सआहन्ता शत्रूणां तादृशोवज्रोगभस्त्योःहस्तयोर्वर्तते इतिशेषः। अयमिन्द्रोद्युम्नी द्युम्नं द्योतमानं धनं तद्वान् सुशिप्रः शोभनहनुः हरिमन्युसायकः यस्य मन्युः सायकः शत्रुहन्ताभिगन्तावा भवति यद्वा शत्रुहन्ता कोपः सायकश्च यस्य सतादृशोभवति। किंच बहूनां इन्द्रे रूपा रूपाणि सर्वाणि हरिता हरितानि निमिमिक्षिरे निषिक्तानि बभूवुः मिहेः सन्नन्तात्कर्मणि लिटि रूपं ॥ ३ ॥

अथ चतुर्थी—

दिविनकेतुरधिधायिहर्यतोविव्यचद्वज्रोहरितोनरंह्या।
तुदद्हिंहरिशिप्रोयआयसःसहस्रशोकाअभवद्धरिंभरः ॥ ४ ॥

दिवि। न। केतुः। अधि। धायि। हर्यतः। विव्यचत्। वज्रः।
हरितः। न। रंह्या। तुदत्। अहिम्। हरिऽशिप्रः। यः।
आयसः। सहस्रऽशोकाः। अभवत्। हरिम्ऽभरः ॥ ४ ॥

दिव्यन्तरिक्षे केतुः प्रकाशेन सर्वस्य प्रज्ञापकआदित्यइव सयथा अधिनिहितः एवमयमिन्द्रः अधिधायि अध्यधायि स्तोतृभिरधिनिहितः किंचेन्द्रस्य वज्रः हर्यतः स्पृहणीयः सन् विव्यचत् विव्याप्नोति व्याप्तव्यं शत्रुसंघं। तत्र दृष्टान्तः—हरितोन हरितवर्णाअश्वा हर्तारोवा अश्वाआदित्यसंबन्धिनस्ते यथा रंह्या रंहणेन वेगेन व्याप्नुवन्ति व्याप्तव्यं योस्य वज्रः आयसः अयोविकारः अहिं वृत्रं मेघंवा तुदत् हिनस्ति योयं महानुभावोहरिशिप्रः सोमपानरभसेन हरितवर्णनासिकः तद्वर्णहनुर्वा हरिंभरः हर्योर्भर्ताइन्द्रः सहस्रशोकाः अभवत् शुच दीप्तौ अपरिमितदीप्तिर्भवति ॥ ४ ॥

अथ पंचमी—

त्वंत्वमहर्यथाउपस्तुतःपूर्वेभिरिन्द्रहरिकेशयज्वभिः।
त्वंहर्यसितवविश्वमुक्थ्यं१मसामिगिराधोहरिजातहर्यतम् ॥ ५ ॥५॥

त्वम्ऽत्वम् । अहर्यथाः । उपऽस्तुतः । पूर्वेभिः । इन्द्र ।
हरिऽकेश । यज्वऽभिः । त्वम् । हर्यसि । तव । विश्वम् ।
उक्थ्यम् । असामि । राधः । हरिऽजात । हर्यतम् ॥ ५ ॥५ ॥

हे इन्द्र हे हरिकेश हरितरोमवदश्व त्वं त्वमेव सर्वत्र यज्ञे अहर्यथाः अकामयथाः स्तोत्रं हविर्वा ।कीदृशस्त्वं पूर्वेभिः पूर्वतनैर्यज्वभिर्यजमानैरुपस्तुतः सन् हे हरिजात हरितवर्णः सन् प्रादुर्भूत हारकप्रादुर्भाव वा शत्रुवधार्थं प्रादुर्भूतेत्यर्थः हे तादृशेन्द्र त्वं तव स्वभूतमिति शेषः विश्वं व्याप्तं सोमचरुपुरोडाशादिरूपं सर्वं वा यद्वा यत्र यानि यानि हवींषि दीयन्ते तत्सर्वं वा तथा उक्थ्यं प्रशस्यं असामि असाधारणं असमं कृत्स्नं हर्यतं कान्तं राधोन्नं हविर्लक्षणं हर्यसि कामयसे ॥ ५ ॥

॥ इत्यष्टमस्य पञ्चमे पञ्चमोवर्गः ॥ ५ ॥

अथ षष्ठी—

**ताव॒ज्रिणं॑म॒न्दिनं॒स्तोम्यं॒मद॒इन्द्रं॒रथे॑वहतोहर्य॒ताहरी॑ ।**
**पु॒रूण्य॑स्मै॒सव॑नानि॒हर्य॑त॒इन्द्रा॑य॒सोमा॒हर॑योदधन्वि॒रे ॥ ६ ॥**

ता । व॒ज्रिण॑म् । म॒न्दिन॑म् । स्तोम्य॑म् । मदे॑ । इन्द्र॑म् । रथे॑ ।
व॒ह॒तः । ह॒र्य॒ता । हरी॒ इति॑ । पु॒रूणि॑ । अ॒स्मै॒ । सव॑नानि ।
हर्य॑ते । इन्द्रा॑य । सोमाः॑ । हर॑यः । द॒ध॒न्वि॒रे ॥ ६ ॥

ता तौ प्रसिद्धौ हर्यता हर्यतौ गन्तारौ कान्तौ वा हरी हरितवर्णौ अश्वौ मन्दिनं मोदमानं स्तोम्यं स्तुत्यर्हं वज्रिणमिन्द्रं मदे निमित्ते रथे वहतः धारयतः यज्ञमस्मदीयं प्रापयतः अस्मै हर्यते कान्तायेन्द्राय पुरूणि बहूनि सवनानि प्रातरादीनि हरयो हरितवर्णाः सोमाद-धन्विरे निधीयन्ते ॥ ६ ॥

अथ सप्तमी—

**अरं॒कामा॑यहर॑योदधन्वि॒रेस्थि॒राय॑हिन्व॒न्हर॑यो॒हरी॑तु॒रा ।**
**अर्व॑द्भि॒र्योहरि॑भि॒र्जोष॒मीय॑ते॒सो अ॑स्य॒कामं॒हरि॑वन्तमानशे ॥ ७ ॥**

अरम् । कामाय । हरयः । दधन्विरे । स्थिराय । हिन्वन् । हरयः ।
हरी इति । तुरा । अर्वत्ऽभिः । यः । हरिऽभिः । जोषम् ।
ईयते । सः । अस्य । कामम् । हरिऽवन्तम् । आनशे ॥ ७ ॥

अरमलं पर्याप्तं कामायेन्द्रकामनाय हरयो हरितवर्णाः सोमाद्धन्विरे ते च हरयः स्थिराय युद्धे अपालितायेन्द्राय तुरा तुरौ त्वरमाणौ हरी अश्वौ हिन्वन् प्रेरयन्ति यःअर्वद्भिररणकुशलै र्हरिभिरश्वैर्जोषं शूरैः सेव्यं संग्राममीयते गच्छति सरथोस्येन्द्रस्य स्वभूतं कामं कमनीयं हरि वन्तं सोमवन्तं यज्ञं आनशे व्याप्नोति ॥ ७ ॥

अथाष्टमी—

हरिश्मशारुर्हरिकेशआयसस्तुरस्पेयेयोहरिपाअवर्धत ।
अर्वद्भिर्योहरिभिर्वाजिनीवसुरतिविश्वादुरितापारिषद्धरी ॥ ८ ॥

हरिऽश्मशारुः । हरिऽकेशः । आयसः । तुरःऽपेये । यः ।
हरिऽपाः । अवर्धत । अर्वत्ऽभिः । यः । हरिऽभिः । वाजिनीऽवसुः ।
अति । विश्वा । दुःऽइता । पारिषत् । हरी इति ॥ ८ ॥

हरिश्मशारुर्हरितवर्णश्मश्रुः हरिकेशः हरितवर्णकेशः आयसः अयोमयहृदयोस्य शत्रू णां घातकइत्यर्थः एतादृशोयइन्द्रः तुरस्पेये तूर्णं पातव्ये सोमे हरिपाः हरितवर्णसोमपाः अव र्धत वर्धते यश्चार्वद्भिर्गन्तृभिर्हरिभिरश्वैः सोमैर्वा वाजिनीवसुः वाजिनमन्नं हविर्लक्षणं तद स्यास्तीति वाजिनी क्रिया सैव वसु धनं यस्य सतथोक्तः यज्ञधनइत्यर्थः। यद्वावाजिनमेव वा जिनी तदेव धनं यस्य सएवमुक्तलक्षणइन्द्रोहरी रथे योजयित्वा विश्वा विश्वानि सर्वाणि दुरिता अस्माकं दुरितानि पारिषत् पारयतु पारयतेर्लेटि सिप्यडागमः ॥ ८ ॥

अथ नवमी—

स्रुवेवयस्यहरिणीविपेततुःशिप्रेवाजायहरिणीदविध्वतः ।
प्रयत्कृतेचमसेमर्मृजद्धरीपीत्वामदस्यहर्यतस्यान्धसः ॥ ९ ॥

स्रुवांऽइव । यस्यं । हरिंणी इतिं । विऽपेततुः । शिप्रे इतिं ।
वाजाय । हरिंणी इतिं । दविंध्वतः । प्र । यत् । कृते । चमसे ।
मर्मृंजत् । हरी इतिं । पीत्वा । मदंस्य । हर्यतस्यं । अन्धंसः ॥ ९ ॥

यस्येन्द्रस्य हरिणी हरितवर्णावश्वौ विपेततुः रथे इन्द्रमारोप्य विपततोयज्ञमस्मदीयं । यद्वा यस्य हरिणी हरितवर्णे कनीनिके विपेततुः सोमं प्रति विपततः तत्रदृष्टान्तः—स्रुवेव यथा स्रुवा स्रुवौ हविषा पूर्णौ पात्रविशेषौ होमार्थं विपततः तद्वत् । तथा यस्य च हरिणी हरितवर्णे शिप्रे हनू वाजाय सोमलक्षणायान्नाय दविध्वतः कंपयतः पुरतः मत्तस्य सोमस्य प्रीत्या चलतः तथा यद्यदा कृते संस्कृते चमसेवर्तमानं मदस्य मदकरं हर्यतस्य कान्तं अन्धसोन्नं सोमं पीत्वा हरी अश्वौ प्रमर्मृजत् प्रमार्ष्टि तदानीं स्तुतइत्यर्थः ॥ ९ ॥

अथ दशमी—

उतस्मसद्मंहर्यतस्यंपस्त्योऽरत्योनवाजंहरिवाँअचिक्रदत् ।
महीचिद्धिधिषणाहर्यदोजसाबृहद्वयोदधिषेहर्यतश्चिदा ॥ १० ॥ ६ ॥

उत । स्म । सद्मं । हर्यतस्यं । पस्त्योः । अत्यः । न । वाजम् ।
हरिंऽवान् । अचिक्रदत् । मही । चित् । हि । धिषणां । अहर्यत् ।
ओजंसा । बृहत् । वयः । दधिषे । हर्यतः । चित् । आ ॥ १० ॥ ६ ॥

उतापिच हर्यतस्य कमनीयस्येन्द्रस्य सद्म सदनं पस्त्योः द्यावापृथिव्योः संबन्धि सोय-मत्योन अश्वइव वाजं संग्रामं हरिवान् अश्ववान् अचिक्रदत् गच्छति । तथा हि यस्मात् हे इन्द्र त्वां मही महती धिषणा स्तुतिरोजसा बलेन युक्तमिन्द्रं अहर्यत् कामयते चिदिति पूरणः अतोवाजमचिक्रदत् तथासति हे इन्द्र हर्यतः कामयमानस्य यजमानस्य बृहत् महत् वयोन्नं आदधिषे आप्रयच्छसि । चिदितिपूरणः ॥ १० ॥

॥ इत्यष्टमस्य पंचमे षष्ठोवर्गः ॥ ६ ॥

अथैकादशी—

आरोदंसीहर्यमाणोमहित्वानव्यंनव्यंहर्यसिमन्मनुप्रियम् ।
प्रपस्त्यंमसुरहर्यतंगोराविष्कृधिहरंयेसूर्याय ॥ ११ ॥

आ । रोदसी इति । हर्यमाणः । महिऽत्वा । नव्यम्ऽनव्यम् । हर्यसि ।
मन्म । नु । प्रियम् । प्र । पस्त्यम् । असुर । हर्यतम् । गोः ।
आविः । कृधि । हरये । सूर्याय ॥ ११ ॥

हे इन्द्र हर्यमाणः कामयमानोमहित्वा महत्वेन रोदसी द्यावापृथिव्यौ आपूरयसीति शेषः । तथा नव्यंनव्यं नवतरं प्रियं प्रियकरं मन्म मननीयं स्तोत्रं नुक्षिप्रं हर्यसि कामयसे हे असुर बलवन् असुः प्राणः तद्वन् मत्वर्थीयोरः तादृशेन्द्र गोः जातावेकवचनं गवां हर्यतं स्पृहणीयं पस्त्यं गृहं गोरुदकस्योक्तगुणकं स्थानं वा हरये उदकस्य हर्त्रे सूर्याय प्र-प्रकर्षेण आविष्कृधि प्रकटीकुरु ॥ ११ ॥

अथ द्वादशी—

आत्वाहर्यन्तंप्रयुजोजनानांरथेवहन्तुहरिशिप्रमिन्द्र ।
पिबायथाप्रतिभृतस्यमध्वोहर्यन्यज्ञंसधमादेदशोणिम् ॥ १२ ॥

आ । त्वा । हर्यन्तम् । प्रऽयुजः । जनानाम् । रथे । वहन्तु ।
हरिऽशिप्रम् । इन्द्र । पिब । यथा । प्रतिऽभृतस्य । मध्वः ।
हर्यन् । यज्ञम् । सधऽमादे । दशऽओणिम् ॥ १२ ॥

हे इन्द्र हरिशिप्रं हरितवर्णशिप्रं त्वा त्वां हर्यतं यज्ञं कामयमानं प्रयुजोरथे प्रयुक्ताअश्वारथे स्थापयित्वा जनानां ऋत्विग्यजमानानां अन्तिकं प्रति वहन्तु प्रापयन्तु यथा येन प्रकारेण प्रतिभृतस्य गृहादिषु संभृतं मध्वोमधु सोमरसं यज्ञं यागसाधनं दशोणिं ओणयोंगुलयः दशभिरंगुलीभिः संपादितं सोमं हर्यन् कामयमानः सन् पिब पिबसि सधमादे संग्रामेज-यार्थं तथा वहन्त्वित्यर्थः ॥ १२ ॥

अपाःपूर्वेषामित्येषा षोडशिशस्त्रस्य याज्या । सूत्रियंच—एवाहिशक्रोवशीहिशक्रइति ज-पित्वापाःपूर्वेषांहरिवःसुतानामिति यजतीति ।

सैषा त्रयोदशी—

अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते ।
ममद्धि सोमं मधुमन्तमिन्द्र सत्रा वृषञ्जठर आ वृषस्व ॥ १३ ॥ ७ ॥

अपाः । पूर्वेषाम् । हरिऽवः । सुतानाम् । अथो इति । इदम् ।
सवनम् । केवलम् । ते । ममद्धि । सोमम् । मधुऽमन्तम् । इन्द्र ।
सत्रा । वृषन् । जठरे । आ । वृषस्व ॥ १३ ॥ ७ ॥

हे इन्द्र त्वं सुतानामभिषुतानां पूर्वेषां प्रातःसवने संपादितानां कर्मणि षष्ठ्यावेते अभिषुतान् प्रातःसवनिकान् सोमानित्यर्थः तानपाः अपिबः हे हरिवइतीन्द्रसंबोधनं हरिभ्यामश्वाभ्यां तद्वन् यद्वा ऋक्सामात्मकाभ्यां हरिभ्यां युक्त । ऋक्सामेवाइन्द्रस्यहरी । ताभ्यामेषहरतीति ब्राह्मणं अथो अपिचेदं माध्यंदिनं सवनं केवलं ते तवैवासाधारणं । माध्यंदिनं सवनं केवलं तइति हिमंत्रान्तरं । तस्मिन् हे इन्द्र मधुमन्तं माधुर्योपेतं सोमं ममद्धि पिब आस्वादयेत्यर्थः मदिरत्रास्वादनकर्मा पिबन्तु मदन्तु वियंत्विति च मंत्रः । सत्रावृषन् सत्राशब्दोभूयिष्ठवचनः हे भूयिष्ठं वर्षितरिन्द्र जठरे आवृषस्व आसिंचस्व ॥ १३ ॥

॥ इत्यष्टमस्य पंचमे सप्तमोवर्गः ॥ ७ ॥

याओषधीरिति त्रयोविंशत्यृचं सप्तमं सूक्तं अथर्वणपुत्रस्य भिषङ्नाम्नआर्षं आनुष्टुभमोषधिदेवताकं । तथाचानुक्रान्तं—याओषधीरूयधिकाथर्वणोभिषगोषधिस्तुतिरानुष्टुभमिति । दीक्षितानां ज्वराद्युपतापे संजाते अनेन सूक्तेन मार्जयेत् । सूत्रितंच— ओषधिसूक्तेन चाप्लाव्यानुमृजेदिति ।

तत्र प्रथमा—

याओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥ १ ॥

---

१ ऐ० ब्रा० २. २४. ।   २ ऋ०सं० ३. ७. ६ ।

याः । ओषधीः । पूर्वाः । जाताः । देवेभ्यः । त्रिऽयुगम् । पुरा ।
मनै । नु । बभ्रूणाम् । अहम् । शतम् । धामानि । सप्त । च ॥ १ ॥

याओषधीरोषधयः पूर्वाः पुरातन्योजाताउत्पन्नाः केभ्यः सकाशात् देवेभ्यो जगन्निर्मातृभ्यः यद्वा देवाद्योतमानाऋतवः तेभ्यः कस्मिन्काले त्रियुगं त्रिषु युगेषु विशेषेणप्रादुर्भावापेक्षया कृतादियुगत्रयमुक्तं कलौ त्वत्यन्ताल्पत्वादुपेक्षितं अथवा त्रिषु युगेषु वसन्ते प्रावृषि शरदि चेत्यर्थः । अहं बभ्रूणां बभ्रुवर्णानां सोमाद्योषधीनां शतं सप्त च धामानि अनुलेपसंमार्जनाभिषेकादिरूपेणाश्रयभूतानि स्थानानि नु क्षिप्रं मनै मन्ये संभावयामीत्यर्थः । अत्रवाजसनेयकं—याओषधीः पूर्वाजातादेवेभ्यस्त्रियुगं पुरेति ऋतवोवै देवास्तेभ्यएतास्त्रिःपुराजायन्ते वसन्ते प्रावृषि शरदि मनैनुबभ्रूणामहमिति सोमोवैबभ्रुःसोम्याओषधयऔषधः पुरुषः शतंधामानीति यदिदंशतायुःशतार्घःशतवीर्यएताभिर्हास्यशतंधामानिसप्तचेति यएवमेवसप्तशीर्षन्प्राणास्तानेतदाहेति । अत्रनिरुक्तंच—याओषधयः पूर्वाजातादेवेभ्यस्त्रीणि युगानि पुरामन्येनुतद्बभ्रूणामहंबभ्रुवर्णानांहरणानांभरणानामिति वा शतंधामानिसप्तचेति धामानि त्रयाणिभवन्ति स्थानानिनामानिजन्मानीति जन्मान्यत्राभिप्रेतानि सप्तशतानि सप्तशतंपुरुषस्य मर्मणांतेष्वेनाद्धातीति[1] ॥ १ ॥

अथ द्वितीया—

शतंवोअम्बधामानिसहस्रमुतवोरुहः ।
अधाशतक्रत्वोयूयमिमंमेअगदंकृत ॥ २ ॥

शतम् । वः । अम्ब । धामानि । सहस्रम् । उत । वः । रुहः ।
अध । शतऽक्रत्वः । यूयम् । इमम् । मे । अगदम् । कृत ॥ २ ॥

हे अंब मातरः ओषधयोवोयुष्माकं धामानि स्थानानि जन्मानि वा शतं अपरिमितानि उतापिच वोयुष्माकं रुहः प्ररोहः प्रोद्गमः सहस्रं अपरिमितं अथ अपिच हे शतक्रत्वः शतकर्माणोयूयमिमं मे मां मदीयं वा जनमामयग्रस्तमगदं गदोरोगः तद्रहितं कृत कुरुत ॥ २ ॥

---

१ नि० ९. २८. ।

अथ तृतीया—

ओषधीःप्रतिमोदध्वंपुष्पवतीःप्रसूवरीः ।
अश्वाइवसजित्वरीर्वीरुधःपारयिष्णवः ॥ ३ ॥

ओषधीः । प्रति । मोदध्वम् । पुष्पऽवतीः । प्रऽसूवरीः ।
अश्वाःऽइव । सऽजित्वरीः । वीरुधः । पारयिष्णवः ॥ ३ ॥

हे ओषधीरोषधयः प्रतिमोदध्वं इमं रुग्णं प्रति मुदिताहृष्टाभवत कीदृश्योयूयं पुष्पवतीः पुष्पवत्यः प्रसूवरीः प्रकर्षेण सूयन्तउपभोगायेति प्रसवाः फलानि तद्वत्यः किंचाश्वाइव अश्वुवानाहयाइव सजित्वरीः सह रोगं जयंत्यः वीरुधोविरोहन्त्यः पारयिष्णवः पुरुषं पारयन्त्योरोगात् ॥ ३ ॥

अथ चतुर्थी—

ओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे ।
सनेयमश्वंगांवासआत्मानंतवपूरुष ॥ ४ ॥

ओषधीः । इति । मातरः । तत् । वः । देवीः । उप । ब्रुवे ।
सनेयम् । अश्वम् । गाम् । वासः । आत्मानम् । तव । पुरुष ॥ ४ ॥

हे ओषधीरोषधयः देवीर्देव्योद्योतनादिगुणकाहे मातरोजनानां मातृभूतामातृवद्धितकारित्वान्मातृत्वोपचारः अथवा मातरश्चारोग्यनिर्मात्र्योवोयुष्माकं संबन्धिनं भिषजं तद्वक्ष्यमाणं इतीत्थं उपब्रुवे उपब्रवीमि । किंतदिति चेत् उच्यते—ओषध्यर्थं अहं अश्वं गां वासोंशुकं किंबहुना आत्मानमपि हेपुरुष चिकित्सक तव तुभ्यं सनेयं ददामि ॥ ४ ॥

अथ पंचमी—

अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ।
गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ ५ ॥ ८ ॥

अश्वत्थे । वः । निऽसदनम् । पर्णे । वः । वसतिः । कृता ।
गोऽभाजः । इत् । किल । असथ । यत् । सनवथ । पुरुषम् ॥ ५ ॥ ८ ॥

हे ओषधिदेवताः वोयुष्माकमश्वत्थे निषदनं नितरां वर्तनं तथा वोयुष्माकं पर्णे पलाशे वसतिर्निवासः कृता । तृतीयस्यामितोदिविसोमआसीत्तंगायत्र्याहरत्तस्य पर्णमाच्छिद्यत तत्पर्णोभवत्तत्पर्णस्यपर्णत्वमिति[1] ब्राह्मणात् । पलाशस्य पर्णत्वप्रसिद्धिः अश्वत्थपलाशयोर्यज्ञयोग्यत्वप्राधान्यापेक्षयोपादानं । किंच गोभाजइत् किल गवां भाजयित्र्यएवासथ भवथ खलु यद्यदि सनवथ संभजध्वे पुरुषं तर्ह्येवं भवथेति । वनषणसंभक्तौ लेट्यडागमः व्यत्ययेन उप्रत्ययः यद्वा औत्सर्गिकः शप्चेति विकरणता ॥ ५ ॥

॥ इत्यष्टमस्य पंचमेष्टमोवर्गः ॥ ८ ॥

अथ षष्ठी—

**यत्रौषधीःसमग्मतराजानःसमिताविव ।**
**विप्रःसउच्यतेभिषग्रक्षोहामीवचातनः ॥ ६ ॥**

यत्र । ओषधीः । सम्ऽअग्मत । राजानः । समितौऽइव । विप्रः ।
सः । उच्यते । भिषक् । रक्षःऽहा । अमीवऽचातनः ॥ ६ ॥

यत्र यस्मिन्देशे ओषधीरोषध्यः समग्मत संगच्छन्ते राजानः समिताविव संग्रामे यथा तत्र यथा संगताभवन्ति तद्वत् तासां नानाविधानामोषधीनां संगमनं यस्मिन्देशेस्ति तत्र विप्रः प्राज्ञोब्राह्मणः सभिषगुच्यते रक्षोहा रक्षोहन्ता अमीवचातनःअमीवा व्याधिः तस्य चातनश्चातयिता च भवति तदानीम् ॥ ६ ॥

अथ सप्तमी—

**अश्वावतींसोमावतीमूर्जयन्तीमुदोजसम् ।**
**आवित्सिसर्वाओषधीरस्माअरिष्टतातये ॥ ७ ॥**

अश्वऽवतीम् । सोमऽवतीम् । ऊर्जयन्तीम् । उत्ऽओजसम् ।
आ । अवित्सि । सर्वाः । ओषधीः । अस्मै । अरिष्टऽतातये ॥ ७ ॥

---

[1] तै० ब्रा० १. १. ३ ।

अश्वावत्यादयः प्रधानभूताः ओषध्यश्चतस्रः ताः सर्वाओषधीराविवित्सि आजाने स्तौमीत्यर्थः अस्माअरिष्टतातये अस्मै रोगाय अमुं रोगं विनाशयितुमित्यर्थः ॥ ७ ॥

अथाष्टमी—

उच्छुष्मा॒ओष॑धीनां॒गावो॒गो॒ष्ठादि॑वेरते ।
धनं॑सनि॒ष्यन्ती॑नामा॒त्मानं॒तव॑पूरुष ॥ ८ ॥

उत् । शुष्माः॑ । ओष॑धीनाम् । गावः॑ । गो॒स्थात्ऽइ॑व । ई॒र॒ते॒ ।
धन॑म् । स॒नि॒ष्यन्ती॑नाम् । आ॒त्मान॑म् । तव॑ । पु॒रु॒ष॒ ॥ ८ ॥

ओषधीनां शुष्मा बलानि उदीरते उद्गच्छन्ति रुग्णे स्ववीर्यं प्रोद्गमयन्तीत्यर्थः । गोवोगाष्ठादिव ता यथा ततः सकाशादुदीरते तद्वत् कोदृशानामोषधीनां उच्यते धनं स्वसामर्थ्यंलक्षणं सनिष्यन्तीनां दातुमिच्छन्तीनां किंप्रतीतिउच्यते हेपूरुष पुरुष रोगग्रस्त तवात्मानं शरीरं प्रति । यद्वा परोहन्तीरोषधीर्दृष्ट्वा वदति हे पुरुष प्रियंग्वाद्योषधिस्वामिन् तव आत्मानं वर्धयितुं धनं सनिष्यन्तीनां व्रीह्याद्योषधीनां शुष्माउदीरते ॥ ८ ॥

अथ नवमी—

इष्कृ॑ति॒र्नाम॑वोमा॒ताथो॑यू॒यंस्थ॒निष्कृ॑तीः ।
सीराः॑पत॒त्रिणीः॑स्थन॒यदा॒मय॑ति॒निष्कृ॑थ ॥ ९ ॥

इष्कृ॑तिः । नाम॑ । वः॒ । मा॒ता । अथो॒ इति॑ । यू॒यम् । स्थ॒ ।
निःऽकृ॑तीः । सीराः॑ । प॒त॒त्रिणीः॑ । स्थ॒न॒ । यत् ।
आ॒मय॑ति । निः । कृ॒थ॒ ॥ ९ ॥

हे ओषधयोवोमाता जननी इष्कृतिर्नाम सर्वेषां रुग्णानां निष्कर्त्रीतिप्रसिद्धा यस्मा त्सारुग्णं निष्करोति अथो अतोयूयमपि निष्कृतीः निष्कृतयः स्थ भवथ किंच यूयं सीराः सरणशीलाः पतत्रिणीः पतनवत्यश्च स्थन भवथ तप्तनबितिथनादेशः । किंच पुरुषोयद्यदि आमयति व्याधितोभवति तं निष्कृथ संस्कुरुथ ॥ ९ ॥

हे ओषधिदेवताः वोयुष्माकमश्वत्थे निषदनं नितरां वर्तनं तथा वोयुष्माकं पर्णे पलाशे वसतिर्निवासः कृता । तृतीयस्यामितोदिवि सोमआसीत्तंगायत्र्याहरत्तस्य पर्णमाच्छिद्यत तत्पर्णोभवत्तत्पर्णस्यपर्णत्वमिति[1] ब्राह्मणात् । पलाशस्य पर्णत्वप्रसिद्धिः अश्वत्थपलाशयोर्यज्ञयोग्यत्वप्राधान्यापेक्षयोपादानं । किंच गोभाजइत् किल गवां भाजयित्र्यएवासथ भवथ खलु यद्यदि सनवथ संभजध्वे पुरुषं तर्ह्येवं भवथेति । वनषणसंभक्तौ लेटयडागमः व्यत्ययेन उप्रत्ययः यद्वा औत्सर्गिकः शप्चेति विकरणता ॥ ५ ॥

॥ इत्यष्टमस्य पंचमेष्टमोवर्गः ॥ ८ ॥

अथ षष्ठी—

यत्रौषधीःसमग्मतराजानःसमिताविव ।
विप्रःसउच्यतेभिषग्रक्षोहामीवचातनः ॥ ६ ॥

यत्र । ओषधीः । सम्ऽअग्मत । राजानः । समितौऽइव । विप्रः ।
सः । उच्यते । भिषक् । रक्षःऽहा । अमीवऽचातनः ॥ ६ ॥

यत्र यस्मिन्देशे ओषधीरोषध्यः समग्मत संगच्छन्ते राजानः समिताविव संग्रामे यथा तत्र यथा संगताभवन्ति तद्वत् तासां नानाविधानामोषधीनां संगमनं यस्मिन्देशेस्ति तत्र विप्रः प्राज्ञोब्राह्मणः सभिषगुच्यते रक्षोहा रक्षोहन्ता अमीवचातनःअमीवा व्याधिः तस्य चातनश्चातयिता च भवति तदानीम् ॥ ६ ॥

अथ सप्तमी—

अश्वावतींसोमावतीमूर्जयन्तीमुदोजसम् ।
आवित्सिसर्वाओषधीरस्माअरिष्टतातये ॥ ७ ॥

अश्वऽवतीम् । सोमऽवतीम् । ऊर्जयन्तीम् । उत्ऽओजसम् ।
आ । अवित्सि । सर्वाः । ओषधीः । अस्मै । अरिष्टऽतातये ॥ ७॥

---

1 तै० ब्रा० १.१.३ ।

अश्वावत्यादयः प्रधानभूताः ओषध्यश्चतस्रः ताः सर्वाओषधीराविति आजाने स्तौमीत्यर्थः अस्माअरिष्टतातये अस्मै रोगाय अमुं रोगं विनाशयितुमित्यर्थः ॥ ७ ॥

अथाष्टमी—

उच्छुष्माओषधीनांगावोगोष्ठादिवेरते ।
धनंसनिष्यन्तीनामात्मानंतवपूरुष ॥ ८ ॥

उत् । शुष्माः । ओषधीनाम् । गावः । गोस्थात्ऽइव । ईरते ।
धनम् । सनिष्यन्तीनाम् । आत्मानम् । तव । पुरुष ॥ ८ ॥

ओषधीनां शुष्मा बलानि उदीरते उद्गच्छन्ति रुग्णे स्ववीर्यं प्रोद्गमयन्तीत्यर्थः । गोवोगाष्ठादिव ता यथा ततः सकाशादुदीरते तद्वत् कीदृशानामोषधीनां उच्यते धनं स्वसामर्थ्यलक्षणं सनिष्यन्तीनां दातुमिच्छन्तीनां किंप्रतीतिउच्यते हेपूरुष पुरुष रोगग्रस्त तवात्मानं शरीरं प्रति । यद्वा प्ररोहन्तीरोषधीर्दृष्ट्वा वदति हे पुरुष प्रियंग्वाद्योषधिस्वामिन् तव आत्मानं वर्धयितुं धनं सनिष्यन्तीनां व्रीह्याद्योषधीनां शुष्माउदीरते ॥ ८ ॥

अथ नवमी—

इष्कृतिर्नामवोमाताथोयूयंस्थनिष्कृतीः ।
सीराःपतत्रिणीःस्थनयदामयतिनिष्कृथ ॥ ९ ॥

इष्कृतिः । नाम । वः । माता । अथो इति । यूयम् । स्थ ।
निःऽकृतीः । सीराः । पतत्रिणीः । स्थन । यत् ।
आमयति । निः । कृथ ॥ ९ ॥

हे ओषधयोवोमाता जननी इष्कृतिर्नाम सर्वेषां रुग्णानां निष्कर्त्रीतिप्रसिद्धा यस्मा त्सारुग्णं निष्करोति अथो अतोयूयमपि निष्कृतीः निष्कृतयः स्थ भवथ किंच यूयं सीराः सरणशीलाः पतत्रिणीः पतनवत्यश्च स्थन भवथ तप्तनविति थनादेशः । किंच पुरुषोयद्यदि आमयति व्याधितोभवति तं निष्कृथ संस्कुरुथ ॥ ९ ॥

अथ दशमी—

अतिविश्वाःपरिष्ठाःस्तेनइंवव्रजमंक्रमुः ।
ओषंधीःप्राचुंच्यवुर्यत्किञ्चंतन्वोऽरपः ॥ १० ॥ ९ ॥

अतिं । विश्वाः । परिऽस्थाः । स्तेनःऽइंव । व्रजम् । अक्रमुः ।
ओषंधीः । प्र । अचुच्यवुः । यत् । किम् । च । तन्वंः । रपंः ॥१०॥९॥

विश्वाव्याप्ताःपरिष्ठाः परितः स्थिताः ओषधयः अत्यक्रमुः व्याधीन् अतिक्रान्तवत्यः स्तेनइव व्रजं यथास्तेनोव्रजं अत्यक्रमीत् तद्वत् तथाकृत्वा ओषधीरोषधयः प्राचुच्यवुः प्रच्याव यन्ति यत्किंच तन्वोरुग्णशरीरस्य रपः पापं व्याधिलक्षणमस्तितदिति ॥ १० ॥

॥ इत्यष्टमस्य द्वितीये नवमोवर्गः ॥ ९ ॥

अथैकादशी—

यदिमावाजयंन्नहमोषंधीर्हस्तंआदधे ।
आत्मायक्ष्मंस्यनश्यतिपुराजीवगृभोंयथा ॥ ११ ॥

यत् । इमाः । वाजयंन् । अहम् । ओषंधीः । हस्तें । आऽदधे ।
आत्मा । यक्ष्मंस्य । नश्यति । पुरा । जीवऽगृभंः । यथा ॥ ११ ॥

अहं यद्यदीमाओषधीर्हस्ते आदधे आधारयामि किंकुर्वन् वाजयन् रुग्णं बलिनं कुर्वन् ततः पुरा यक्ष्मस्य रोगस्यात्मा नश्यति । जीवगृभोयथा जीवानां शकुन्यादीनां ग्राहकात् व्याधाद्यथा जीवानश्यन्ति तद्वत् । यद्वा जीवगृभोमृत्योः सकाशात् जीवोवध्यते तद्वत् ॥ ११ ॥

अथ द्वादशी—

यस्यौषधीःप्रसर्पथाङ्गंमङ्गंपरुंष्परुः ।
ततोयक्ष्मंविबांधध्वउग्रोमंध्यमशीरिंव ॥ १२ ॥

यस्यं । ओषधीः । प्रऽसर्पथ । अङ्गंम्ऽअङ्गम् । परुंःऽपरुः । ततंः ।
यक्ष्मंम् । वि । बाधध्वे । उग्रः । मध्यमशीःऽइंव ॥ १२ ॥

हे ओषधीः ओषधयोयस्य रुग्णस्यांगमंगं यद्यदंगं परुःपरुः यद्यत्पर्वं प्रसर्पथ प्रकर्षेणाश्रयथ ततोङ्गात् पर्वणश्च यक्ष्मं व्याधिं विबाधध्वे उग्रउद्गूर्णबलोमध्यमशीः मध्यमस्थाने वर्तमानोराजा यथोपद्रवकारिणः समनन्तरं शत्रून् पदेपदे विबाधते तद्वत् ॥ १२ ॥

अथ त्रयोदशी—

साकंयक्ष्मप्रपंतचाषेणकिकिदीविना ।
साकंवातंस्यध्राज्यांसाकंनंश्यनिहाकया ॥ १३ ॥

साकम् । यक्ष्म । प्र । पत । चाषेण । किकिदीविना । साकम् ।
वातस्य । ध्राज्या । साकम् । नश्य । निऽहाकया ॥ १३ ॥

हेस्मदीयस्य पुरुषस्य शरीराधिष्ठायिन् यक्ष्म व्याधे त्वं साकं सहैव प्रपत प्रकर्षेण शीघ्रं गच्छ केन साकमिति उच्यते—चाषेण अतिशीघ्रं पतता चाषाख्येन पक्षिणा सह तथा किकिदीविना पक्षिणा च सह तथा वातस्य शीघ्रं गच्छतोवायोर्ध्राज्या ध्रजगतौ गत्या वेगेन सह गच्छ तथा निहाकया गोधिकया साकं नश्य नाशं प्राप्नुहि ॥ १३ ॥

अथ चतुर्दशी—

अन्यावोअन्यामंवत्वन्यान्यस्याउपांवत ।
ताःसर्वाःसंविदानाइदंमेप्रावंतावचंः ॥ १४ ॥

अन्या । वः । अन्याम् । अवतु । अन्या । अन्यस्याः । उप । अवत ।
ताः । सर्वाः । समऽविदानाः । इदम् । मे । प्र । अवत । वचः ॥ १४ ॥

---

१ तैत्तिरीयशाखायां तु—साकंयक्ष्मप्रपतश्येनेनकिकिदीविना । साकंवातस्यध्राज्यासाकंनश्यनिहाकयेति । श्लेष्मावरुद्धकंठजन्यध्वनेरनुकरणार्थोयं किकिशब्दः तेन किकिना ध्वनिविशेषेण दीव्यति व्यवहरतीति रोगविशेषः सच श्लेष्मजन्यः श्येनवत्तीव्रतरत्वात्पित्तजन्योरोगः श्येनः हे यक्ष्म राजयक्ष्मादिरोग त्वं पित्तजन्येन श्लेष्मजन्येन च रोगेण साकं प्रपत प्रकर्षेण नष्टोभव तथा वातस्य ध्राज्या वातरोगस्य गत्या व्याप्त्या साकं नष्टोभव तथा यया पीडया निहतोस्मि हाकष्टमिति शब्दं करोमि सानिहाका तया सह नष्टोभवेति ॥

हे ओषधयोवोयुस्माकं मध्ये अन्याओषधिरन्यामोषधिमवतु प्राप्नोतु अवतिरत्रगत्यर्थः। तथान्यान्यस्याः समीपमुपावत उपगच्छत एवं याः सन्ति क्षित्यामोषधयः ताः सर्वाः संविदानाः परस्परमैकमत्यं प्राप्ताः सत्यइदं मे मदीयं वचः प्रार्थनालक्षणं वचनं प्रावत प्ररक्षत ॥१४॥

अथ पंचदशी—

याःफलिनीर्याअंफलाअंपुष्पायाश्चंपुष्पिणीः।
बृहस्पतिंप्रसूतास्तानोंमुञ्चन्त्वंहंसः ॥ १५ ॥ १० ॥

याः। फलिनीः। याः। अफलाः। अपुष्पाः। याः। च। पुष्पिणीः। बृहस्पतिऽप्रसूताः। ताः। नः। मुञ्चन्तु। अंहसः॥ १५ ॥ १० ॥

याः फलिनीः फलवत्यः याः अफलाः फलवर्जितायाअपुष्पाः पुष्परहितायाश्च पुष्पिणीः पुष्पवत्यः बृहस्पतिप्रसूताः बृहस्पतिर्मंत्राभिमानी देवः तेनानुज्ञातास्तानोस्मानंहसोमुंचन्तु मोचयन्तु ॥ १५ ॥

॥ इत्यष्टमस्य पंचमे दशमोवर्गः ॥ १० ॥

अथ षोडशी—

मुञ्चन्तुंमाशपथ्याउदथोंवरुण्यांदुत।
अथोंयमस्यपड्बींशात्सर्वंस्माद्देवकिल्बिषात् ॥ १६ ॥

मुञ्चन्तुं। मा। शपथ्यांत्। अथो इतिं। वरुण्यांत्। उत। अथो इतिं। यमस्यं। पड्बींशात्। सर्वंस्मात्। देवऽकिल्बिषात् ॥ १६ ॥

मा मां ओषधयः शपथ्यात् शपथसंजातादेनसः पापात् मुंचन्तु अथो अपिच वरुण्यात् वरुणसंभवात् मां मुंचन्तु वरुणोपि स्वपाशेन जातमात्रं पुरुषं बध्नाति उतेति पूरणः अथो अपिच यमस्य पड्बीशात् पादबन्धनात् निगडात् मुंचन्तु न केवलं वरुणादेः पापात् सर्वस्मात् देवकिल्बिषात् देवैः कृतात्पापात् मुंचन्तु ॥ १६ ॥

अथ सप्तदशी—

अवपतन्तीरवदन्दिवओषधयस्परि ।
यंजीवमश्नवामहैनसरिष्यातिपूरुषः ॥ १७ ॥

अवऽपतन्तीः । अवदन् । दिवः । ओषधयः । परि । यम् । जीवम् ।
अश्नवामहै । न । सः । रिष्याति । पुरुषः ॥ १७ ॥

दिवोद्युलोकादवपतन्तीरवपतन्त्यओषधयइत्थं पर्यवदन् किमिति उच्यते यं जीवं जीवन्तमश्नवामहै व्याप्नुमोन सपूरुषः पुरुषोरिष्याति रिष्यति न हिंस्यते ॥ १७ ॥

अथाष्टादशी—

याओषधीःसोमराज्ञीर्बह्वीःशतविचक्षणाः ।
तासांत्वमस्युत्तमारंकामायशंहृदे ॥ १८ ॥

याः । ओषधीः । सोमऽराज्ञीः । बह्वीः । शतऽविचक्षणाः । तासाम् ।
त्वम् । असि । उत्ऽतमा । अरम् । कामाय । शम् । हृदे ॥ १८ ॥

याओषधीरोषधयः सोमराज्ञीः सोमोराजा स्वामी यासां तास्तथोक्ताः बह्वीः असंख्याताः शतविचक्षणाः बहुदर्शनाः हे सोमाख्यओषधे तासामोषधीनां त्वमुत्तमासि यस्मादेवं तस्मात् अरमलं पर्याप्तं कामाय कान्ताय हृदे हृदयाय शं सुखकरी भवेति शेषः ॥ १८ ॥

अथैकोनविंशी—

याओषधीःसोमराज्ञीर्विष्ठिताःपृथिवीमनु ।
बृहस्पतिप्रसूताअस्यैसंदत्तवीर्यम् ॥ १९ ॥

याः । ओषधीः । सोमऽराज्ञीः । विऽस्थिताः । पृथिवीम् । अनु ।
बृहस्पतिऽप्रसूताः । अस्यै । सम् । दत्त । वीर्यम् ॥ १९ ॥

हे ओषधयोवोयुस्माकं मध्ये अन्याओषधिरन्यामोषधिमवतु प्राप्नोतु अवतिरत्रगत्यर्थः। तथान्यान्यस्याः समीपमुपावत उपगच्छत एवं याः सन्ति क्षित्यामोषधयः ताः सर्वाः संविदानाः परस्परमैकमत्यं प्राप्ताः सत्यइदं मे मदीयं वचः प्रार्थनालक्षणं वचनं प्रावत प्ररक्षत ॥१४॥

अथ पंचदशी—

याःफलिनीर्याअंफलाअंपुष्पायाश्चंपुष्पिणीः।
बृहस्पतिंप्रसूतास्तानोंमुञ्चन्त्वंहसः॥ १५ ॥ १० ॥

याः। फलिनीः। याः। अफलाः। अपुष्पाः। याः। च। पुष्पिणीः।
बृहस्पतिऽप्रसूताः। ताः। नः। मुञ्चन्तु। अंहसः॥ १५ ॥ १० ॥

याः फलिनीः फलवत्यः याः अफलाः फलवर्जितायाअपुष्पाः पुष्परहितायाश्च पुष्पिणीः पुष्पवत्यः बृहस्पतिप्रसूताः बृहस्पतिर्मंत्राभिमानी देवः तेनानुज्ञातास्तानोस्मानंहसोमुंचन्तु मोचयन्तु ॥ १५ ॥

॥ इत्यष्टमस्य पंचमे दशमोवर्गः ॥ १० ॥

अथ षोडशी—

मुञ्चन्तुंमाशपथ्याऽदथोंवरुण्यांदुत।
अथोंयमस्यपड्वींशात्सर्वस्माद्देवकिल्बिषात्॥ १६ ॥

मुञ्चन्तु। मा। शपथ्यात्। अथो इति। वरुण्यात्। उत। अथो इति। यमस्य। पड्वींशात्। सर्वस्मात्। देवऽकिल्बिषात्॥ १६ ॥

मा मां ओषधयः शपथ्यात् शपथसंजातादेनसः पापात् मुंचन्तु अथो अपिच वरुण्यात् वरुणसंभवात् मां मुंचन्तु वरुणोपि स्वपाशेन जातमात्रं पुरुषं बध्नाति उतेति पूरणः अथो अपिच यमस्य पड्वीशात् पादबन्धनात् निगडात् मुंचन्तु न केवलं वरुणादेः पापात् सर्वस्मात् देवकिल्बिषात् देवैः कृतात्पापात् मुंचन्तु ॥ १६ ॥

अथ सप्तदशी–

अवपतन्तीरवदन्दिवओषधयस्परि ।
यंजीवमश्नवामहैनसरिष्यातिपूरुषः ॥ १७ ॥

अवऽपतन्तीः । अवदन् । दिवः । ओषधयः । परि । यम् । जीवम् ।
अश्नवामहै । न । सः । रिष्याति । पुरुषः ॥ १७ ॥

दिवोद्युलोकादवपतन्तीरवपतन्त्यओषधयइत्थं पर्यवदन् किमिति उच्यते यं जीवं जीवन्तमश्नवामहै व्याप्नुमोन सपूरुषः पुरुषोरिष्याति रिष्यति न हिंस्यते ॥ १७ ॥

अथाष्टादशी–

याओषधीःसोमराज्ञीर्बह्वीःशतविचक्षणाः ।
तासांत्वमस्युत्तमारंकामायशंहृदे ॥ १८ ॥

याः । ओषधीः । सोमऽराज्ञीः । बह्वीः । शतऽविचक्षणाः । तासाम् ।
त्वम् । असि । उत्ऽतमा । अरम् । कामाय । शम् । हृदे ॥ १८ ॥

याओषधीरोषधयः सोमराज्ञीः सोमोराजा स्वामी यासां तास्तथोक्ताः बह्वीः असंख्याताः शतविचक्षणाः बहुदर्शनाः हे सोमाख्यओषधे तासामोषधीनां त्वमुत्तमासि यस्मादेवं तस्मात् अरमलं पर्याप्तं कामाय कान्ताय हृदे हृदयाय शं सुखकरी भवेति शेषः ॥ १८ ॥

अथैकोनविंशी–

याओषधीःसोमराज्ञीर्विष्ठिताःपृथिवीमनु ।
बृहस्पतिप्रसूताअस्यैसंदत्तवीर्यम् ॥ १९ ॥

याः । ओषधीः । सोमऽराज्ञीः । विऽस्थिताः । पृथिवीम् । अनु ।
बृहस्पतिऽप्रसूताः । अस्यै । सम् । दत्त । वीर्यम् ॥ १९ ॥

याओषधीः सोमराज्ञीः पृथिवीमनुविष्ठिताः विविधं स्थितादिवः सकाशात् आगत्य पृथिव्या नानाभेदेन स्थिताः बृहस्पतिप्रसूताबृहस्पतिनानुज्ञाताः सत्योयूयं अस्यै रुग्णतनवे वीर्यं सन्दत्त सन्धत्त ॥ १९ ॥

अथ विंशी—

मावोरिषत्खनितायस्मैचाहंखनामिवः ।
द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरम् ॥ २० ॥

मा । वः । रिषत् । खनिता । यस्मै । च । अहम् । खनामि । वः ।
द्विऽपत् । चतुःऽपत् । अस्माकम् । सर्वम् । अस्तु । अनातुरम् ॥२०॥

हे ओषधयोवोयुष्मान् मारिषत् माहिंस्यात् कः खनिता भूमेः खननकर्ता यस्मै रुग्णायचाहं खनामि वोयुष्मान् किंचास्माकं संबन्धि द्विपत् पुत्रभृत्यादिकं चतुष्पत् गोमहिष्यादिकं यदस्ति तत्सर्वमनातुरमरोगमस्तु ॥ २० ॥

अथैकविंशी—

याश्चेदमुपशृण्वन्तियाश्चदूरंपरागताः ।
सर्वाःसंगत्यवीरुधोस्यैसंदत्तवीर्यम् ॥ २१ ॥

याः । च । इदम् । उपऽशृण्वन्ति । याः । च । दूरम् । पराऽगताः ।
सर्वाः । सम्ऽगत्य । वीरुधः । अस्यै । सम् । दत्त । वीर्यम् ॥ २१ ॥

याश्चोषधयः इदं स्तोत्रमुपशृण्वन्ति याश्चोषधयोदूरं परागताः सर्वावीरुधः संगत्य संगताः सत्योहे वीरुधोस्यै रुग्णतन्वे वीर्यं सन्दत्त ॥ २१ ॥

अथ द्वाविंशी—

ओषधयःसंवदन्तेसोमेनसहराज्ञा ।
यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ॥ २२ ॥

ओषधयः । सम् । वदन्ते । सोमेन । सह । राज्ञा । यस्मै । कृणोति ।
ब्राह्मणः । तम् । राजन् । पारयामसि ॥ २२ ॥

ओषधयः सर्वाः सोमेन राज्ञा सह संवदन्ते संवादं कुर्वन्ति किमिति तदुच्यते—यस्मै रुग्णाय ब्राह्मणः ओषधिसामर्थ्यज्ञोब्राह्मणोवैद्यः कृणोति करोति चिकित्सां तं रुग्णं हे राजन् पारयामसि पारयाम इदंतोमसिः ॥ २२ ॥

अथ त्रयोविंशी—

त्वमुत्तमास्योषधेतववृक्षाउपस्तयः ।
उपस्तिरस्तुसोऽस्माकंयोअस्माँअभिदासति ॥ २३ ॥ ११ ॥

त्वम् । उत्ऽतमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः । उपस्तिः ।
अस्तु । सः । अस्माकम् । यः । अस्मान् । अभिऽदासति ॥ २३ ॥ ११ ॥

हे ओषधे सोमाख्ये त्वं ओषधीनामन्यासामुत्तमासि तव वृक्षाः सर्वे उपस्तयः अधः शायिनएव तथासति सउपस्तिरस्तु अधःशायीभवतु योस्मानभिदासति अभिहिनस्ति भ्रातृव्यइति ॥ २३ ॥

॥ इत्यष्टमस्य पंचमे एकादशोवर्गः ॥ ११ ॥

बृहस्पतेप्रतीति द्वादशर्चमष्टमं सूक्तं त्रैष्टुभं बृहस्पतिमित्रादिसर्वदेवताकं ऋष्टिषेणपुत्रोदेवापिर्नामऋषिः । तथाचानुक्रान्तं—बृहस्पतेद्वादशार्ष्टिषेणोदेवापिर्वृष्टिकामोदेवांस्तुष्टाव । गतःसूक्तविनियोगः । अस्य सूक्तस्याख्यानं निरुक्तकारः प्रदर्शयति—देवापिश्चार्ष्टिषेणः शन्तनुश्चकौरव्यौ भ्रातरौ बभूवतु. सशन्तनुः कनीयानभिषेचयांचक्रे सदेवापिस्तपःप्रतिपेदे ततः शन्तनोराज्येद्वादशवर्षाणि देवोनववर्ष तमूचुर्ब्राह्मणाअधर्मस्त्वयाचरितो ज्येष्ठंभ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवोनवर्षतीति शन्तनुर्देवापिं शिशिक्षराज्येन तमुवाचदेवापिः पुरोहितस्तेसानि याजयानि चत्वेतितस्यैतद्वर्षकामसूक्तमिति[1] ।

तत्र प्रथमा—

बृहस्पतेप्रतिमेदेवतामिहिमित्रोवायद्वरुणोवासिपूषा ।
आदित्यैर्वायद्वसुभिर्मरुत्वान्त्सपर्जन्यंशन्तनवेवृषाय ॥ १ ॥

---

१ नि० २. १० ।

बृहस्पते । प्रति । मे । देवताम् । इहि । मित्रः । वा । यत् । वरुणः ।
वा । असि । पूषा । आदित्यैः । वा । यत् । वसुऽभिः ।
मरुत्वान् । सः । पर्जन्यम् । शम्ऽतनवे । वृषय ॥ १ ॥

तत्र ब्रह्मत्वे प्रवृत्तोबृहस्पतिमनुधावति हे बृहस्पते मे मम वृष्ट्यर्थं प्रतिदेवतां प्रतीहि प्रतिगच्छ यष्टव्यादेवताः प्रतिगच्छ यदि त्वं मित्रोवासि वा अथवा वरुणोसि यद्वा पूषासि अथवा आदित्यैर्द्वादशादित्यैः अरुणादिभिर्वसुभिर्वा एकैरष्टवसुभिर्धरध्रुवादिभिः सह मरुत्वान् मरुतोदेवास्तद्वानसि सत्वं पर्जन्यं तर्पयितारं मेघं शन्तवे राज्ञे वृषाय वर्षय छन्दसिशायजपीति व्यत्ययेन शपोपि शायजादेशः ॥ १ ॥

अथ द्वितीया—

आदेवोदूतोअजिरश्चिकित्वान्त्वद्देवापेअभिमामगच्छत् ।
प्रतीचीनःप्रतिमामावर्त्स्वदधामितेद्युमतींवाचमासन् ॥ २ ॥

आ । देवः । दूतः । अजिरः । चिकित्वान् । त्वत् । देवऽआपे ।
अभि । माम् । अगच्छत् । प्रतीचीनः । प्रति । माम् । आ ।
वर्त्स्व । दधामि । ते । द्युऽमतीम् । वाचम् । आसन् ॥ २ ॥

देवः कश्चिद्दूतः अजिरोगमनशीलश्चिकित्वान चेतनावान् हे देवापे त्वत् त्वत्तः सकाशात त्वया प्रेषितः सन् मामभ्यागच्छत् अभ्यागच्छतु हे बृहस्पते प्रतीचीनोस्मदभिमुखोमां प्रत्या वर्त्स्व मां प्रत्यागच्छ तेतुभ्यं त्वदर्थं द्युमतीं दीप्तियुक्तां वाचं स्तुतिरूपां दधामि आसन्नास्ये स्मदीये ॥ २ ॥

अथ तृतीया—

अस्मेधेहिद्युमतींवाचमासन्बृहस्पतेअनमीवामिषिराम् ।
ययावृष्टिंशन्तनवेवनावदिवोद्रप्सोमधुमाँआविवेश ॥ ३ ॥

अस्मे इति । धेहि । द्युऽमतीम् । वाचम् । आसन् । बृहस्पते ।
अनमीवाम् । इषिराम् । यया । वृष्टिम् । शम्ऽतनवे ।
वनाव । दिवः । द्रप्सः । मधुऽमान् । आ । विवेश ॥ ३ ॥

हे बृहस्पते त्वं अस्मे अस्मासु द्युमतीं दीप्तिमतीं वाचं स्तोत्रात्मिकां आसन्नास्ये स्म दीये धेहि स्थापय। कीदृशीं वाचं अनमीवां अमीवारहितां वाचः अमीवानाम गद्गदादिदोषः तथा इषिरां गमनशीलां यया वाचा स्तुत्यात्मिकया देवानिष्टा शन्तनवे वृष्टिकामाय वनाव संभजेवहि वृष्टिं त्वं चाहंच दिवो द्युलोकात् त्वयाधिष्ठितोद्रप्सउदकस्यन्दः मधुमान् माधुर्योपेतः आविवेश आविशति तां वाचमिति समन्वयः ॥ ॥ ३ ॥

अथ चतुर्थी—

आनोद्रप्सामधुमन्तोविशन्त्विन्द्रदेह्यधिरथंसहस्रम् ।
निषीदहोत्रमृतुथायजस्वदेवान्देवापेहविषासपर्य ॥ ४ ॥

आ । नः । द्रप्साः । मधुऽमन्तः । विशन्तु । इन्द्र । देहि ।
अधिऽरथम् । सहस्रम् । नि । सीद । होत्रम् । ऋतुऽथा ।
यजस्व । देवान् । देवऽआपे । हविषा । सपर्य ॥ ४ ॥

नोस्मान् द्रप्साः वृष्टिसंस्त्यायाः मधुमन्तोमाधुर्योपेताः आविशन्तु हे इन्द्रपरमेश्वर बृहस्पते अधिरथं रथस्याध्युपरि वर्तमानं सहस्रं सहस्रसंख्याकं धनं धेहि यद्वा रथमधिकं यस्य सहस्रस्य तादृशं गोसहस्रं हे देवापे निषीद होत्रं आर्त्विज्ये निषीद निषण्णश्च त्वमृतुथा कालेकाले यजस्व यष्टव्यान् देवान् स्तुत्या हविषा च सपर्य परिचर ॥ ४ ॥

अथ पंचमी—

आर्ष्टिषेणोहोत्रमृषिर्निषीदन्देवापिर्देवसुमतिंचिकित्वान् ।
सउत्तरस्मादधरंसमुद्रमपोदिव्याअसृजद्वर्ष्याअभि ॥ ५ ॥

आर्ष्टिषेणः । होत्रम् । ऋषिः । निऽसीदन् । देवऽआपिः ।
देवऽसुमतिम् । चिकित्वान् । सः । उत्ऽतरस्मात् । अधरम् ।
समुद्रम् । अपः । दिव्याः । असृजत् । वर्ष्याः । अभि ॥ ५ ॥

आर्ष्टिषेणऋष्टिषेणस्य पुत्रोदेवापिर्ऋषिः देवसुमतिं देवानां कल्याणीं मतिं स्तुतिं चिकित्वान् जानन् होत्रं होतृकर्म कर्तुं निषीदन् निषण्णोभवति सउत्तरस्मादुपरिवर्तमानादन्तरिक्षाख्यात् समुद्रात् अधरमधोवर्तमानं पार्थिवं समुद्रमभि दिव्या दिविभवा वर्ष्या वर्षभवा आपः असृजत् सृजतु । अत्रार्ष्टिषेणऋष्टिषेणस्यपुत्रइत्यादिनिरुक्तंद्रष्टव्यं ॥ ५ ॥

अथ षष्ठी—

**अस्मिन्त्समुद्रेअध्युत्तरस्मिन्नापोदेवेभिर्निवृताअतिष्ठन् ।**
**ताअद्रवन्नार्ष्टिषेणेनसृष्टादेवापिनाप्रेषितामृक्षिणीषु ॥ ६ ॥ १२ ॥**

अस्मिन् । समुद्रे । अधि । उत्ऽतरस्मिन् । आपः । देवेभिः ।
निऽवृताः । अतिष्ठन् । ताः । अद्रवन् । आर्ष्टिषेणेन । सृष्टाः ।
देवऽआपिना । प्रऽइषिताः । मृक्षिणीषु ॥ ६ ॥ १२ ॥

अस्मिन्पार्थिवे समुद्रे पूरणीये सति अधीति सप्तम्यर्थानुवादी उत्तरस्मिन् समुद्रे अन्तरिक्षाख्ये आपउदकानि देवेभिर्द्योतमानैः निवृता निरुद्धाअतिष्ठन् ताआपः आर्ष्टिषेणेन ऋष्टिषेणपुत्रेण देवापिना सृष्टाः प्रेषिताः प्रकर्षेणेच्छां प्राप्ताः कांक्षिताः मृक्षिणीषु मृष्टवतीषु परिमृष्टासु स्थलीषु अद्रवन् स्रवन्ति ॥ ६ ॥

॥ इत्यष्टमस्य पंचमे द्वादशोवर्गः ॥ १२ ॥

अथ सप्तमी—

**यद्देवापिःशन्तनवेपुरोहितोहोत्रायवृतःकृपयन्नदीधेत् ।**
**देवश्रुतंवृष्टिवनिंरराणोबृहस्पतिर्वाचमस्माअयच्छत् ॥ ७ ॥**

---

१ नि० ७. २७ ।

यत् । देवऽआपिः । शम्ऽतनवे । पुरःऽहितः । होत्राय । वृतः ।
कृपयन् । अदीधेत् । देवऽश्रुतम् । वृष्टिऽवनिम् । रराणः ।
बृहस्पतिः । वाचम् । अस्मै । अयच्छत् ॥ ७ ॥

यद्यदा देवापिरार्ष्टिषेणः शन्तनवे स्वभ्रात्रे कौरव्याय पुरोहितः सन् होत्राय होत्रार्थं वृतः सन् देवश्रुतं देवाएनं श्रृण्वन्तीति देवश्रुत तं तथा वृष्टिवनिं वृष्टियाचनं बृहस्पतिं अदीधेद् अन्वाध्यायत् सच रराणोरममाणोबृहस्पतिर्देवोस्मै देवापये वाचमयच्छत् ॥ ७ ॥

अथाष्टमी—

यंत्वादेवापिःशुशुचानोअग्नआर्ष्टिषेणोमनुष्यःसमीधे ।
विश्वेभिर्देवैरनुमद्यमानःप्रपर्जन्यमीरयावृष्टिमन्तम् ॥ ८ ॥

यम् । त्वा । देवऽआपिः । शुशुचानः । अग्ने । आर्ष्टिषेणः ।
मनुष्यः । सम्ऽईधे । विश्वेभिः । देवैः । अनुऽमद्यमानः ।
प्र । पर्जन्यम् । ईरय । वृष्टिऽमन्तम् ॥ ८ ॥

हे अग्ने यं त्वा त्वां शुशुचानः स्तोत्रेण ज्वलन् मनुष्यः आर्ष्टिषेणोदेवापिः समीधे सम्यक् दीपयति सत्वं विश्वेभिः सर्वैर्देवैरनुमद्यमानः अनुमाद्यमानः सन् पर्जन्यं मेघं वृष्टिमन्तं वर्षणवन्तं प्रेरय गमय ॥ ८ ॥

अथ नवमी—

त्वांपूर्वऋषयोगीर्भिरायन्त्वामध्वरेषुपुरुहूतविश्वे ।
सहस्राण्यधिरथान्यस्मेआनोयज्ञंरोहिदश्वोपयाहि ॥ ९ ॥

त्वाम् । पूर्वे । ऋषयः । गीःऽभिः । आयन् । त्वाम् । अध्वरेषु ।
पुरुऽहूत । विश्वे । सहस्राणि । अधिऽरथानि । अस्मे इति ।
आ । नः । यज्ञम् । रोहित्ऽअश्व । उप । याहि ॥ ९ ॥

हे अग्ने त्वां पूर्वे ऋषयोगीर्भिः स्तुतिभिरायन् आगच्छन् तथा हे पुरुहूत बहुभिराहू-
ाग्ने विश्वे सर्वेपीदानींतनायजमानाअध्वरेषु यज्ञेषु स्तुतिभिर्गच्छन्तीतिशेषः। किंच सहस्राणि
ाहस्रसंख्याकानि गोयूथानि अधिरथानि रथाधिकानि अस्मे अस्माकं शन्तनुना दक्षिणा-
वेन संकल्पितानि भवंत्वितिशेषः। हे रोहिदश्व नोयज्ञमुपयाहि उपागच्छ ॥ ९ ॥

अथ दशमी—

एतान्यग्नेनवतिर्नवत्वेआहुंतान्यधिरथासहस्रा।
तेभिर्वर्धस्वतन्वःशूरपूर्वीर्दिवोनोवृष्टिमिषितोरिरीहि ॥ १० ॥

एतानि। अग्ने। नवतिः। नव। त्वे इति। आऽहुंतानि।
अधिऽरथा। सहस्रा। तेभिः। वर्धस्व। तन्वः। शूर।
पूर्वीः। दिवः। नः। वृष्टिम्। इषितः। रिरीहि ॥ १० ॥

हे अग्ने गवां नवतिर्नवच तथा एतानि अधिरथानि सहस्रा सहस्राणि च रथाधिकानि
गवां सहस्राणि च त्वे त्वयि आहुतानि त्वयि प्रीणयितव्ये सति आहुतानि यद्वा त्वे
त्वय्याहुतानि समर्थितानीत्यर्थः तेभिस्तैः प्रत्तैः पूर्वीर्बह्वीः तन्वः तनूर्युष्मदीयावर्धस्व वर्धय
नोस्मदर्थं दिवोद्युलोकाद् वृष्टिमिषितः प्रार्थितः सन् रिरीहि पूरय ॥ १० ॥

अथैकादशी—

एतान्यग्नेनवतिंसहस्रासंप्रयच्छवृष्णइन्द्रायभागम्।
विद्वान्पथऋतुशोदेवयानानप्यौलानंदिविदेवेषुधेहि ॥ ११ ॥

एतानि। अग्ने। नवतिम्। सहस्रा। सम्। प्र। यच्छ। वृष्णे।
इन्द्राय। भागम्। विद्वान्। पथः। ऋतुऽशः। देवऽयानान्।
अपि। औलानम्। दिवि। देवेषु। धेहि ॥ ११ ॥

हे अग्ने गवां एतानि नवतिं सहस्रा सहस्राणि च वृष्णे वर्षित्रे इन्द्राय भागं संप्रयच्छ
तत्प्रीत्यर्थमृत्विग्भ्योदेहि किंच देवयानान् पथोदेवयानान् मार्गान् विद्वांस्त्वं ऋतुशः कालेकाले
औलानमपि कुरुकुलजातमपि शान्तनवं देवेषु मध्येधेहि निधेहि स्थापय ॥ ११ ॥

अथ द्वादशी—

अग्नेबाधस्वविमृधोविदुर्गहापामीवामपरक्षांसिसेध ।
अस्मात्समुद्राद्बृहतोदिवोनोपांभूमानमुपनःसृजेह ॥१२ ॥ १३॥

अग्ने । बाधस्व । वि । मृधः । वि । दुःऽगहा । अप । अमीवाम् ।
अप । रक्षांसि । सेध । अस्मात् । समुद्रात् । बृहतः । दिवः ।
नः । अपाम् । भूमानम् । उप । नः । सृज । इह ॥ १२ ॥ १३ ॥

हे अग्ने दुर्गहा दुर्गहाणि दुःखेन गाहितव्यानि शत्रुपुराणि विबाधस्व तथा अमीवां रोगं अपसेध तथा रक्षांस्यपसेध अपवारय अस्मात्समुद्रात् समुद्रवणसाधनात् बृहतोमहतोदिवोद्युलोकादन्तरिक्षाद्वापामुदकानां भूमानं बहुभावं वृष्टिसंस्त्यायं इहास्मिन् लोके उपसृज प्रयच्छेत्यर्थः ॥ १२ ॥

॥ इत्यष्टमस्य पञ्चमे त्रयोदशोवर्गः ॥ १३ ॥

कंनइति द्वादशर्चं नवमं सूक्तं वैखानसस्य वम्रस्यार्षं त्रैष्टुभमैन्द्रं । तथाचानुक्रान्तं—कंनोवम्रोवैखानसइति । गतोविनियोगः ।

तत्र प्रथमा—

कंनश्चित्रमिषण्यसिचिकित्वान्पृथुग्मानंवाश्रंवावृधध्यै ।
कत्तस्यदातुशवसोव्युष्टौतक्षद्वज्रंवृत्रतुरमपिन्वत् ॥१ ॥

कम् । नः । चित्रम् । इषण्यसि । चिकित्वान् । पृथुऽग्मानम् ।
वाश्रम् । ववृधध्यै । कत् । तस्य । दातु । शवसः । विऽउष्टौ ।
तक्षत् । वज्रम् । वृत्रऽतुरम् । अपिन्वत् ॥ १ ॥

हे इन्द्र नोस्माकं चित्रं चायनीयं कं धनविशेषं इषण्यसि प्रेरयसि चिकित्वान् सर्वथाप्रेरणीयमिति जानन् कीदृशं तं पृथुग्मानं पृथुभावं प्राप्नुवन्तं वाश्रं शब्दनीयं स्तुत्यं किमर्थं

ववृधध्यै अस्माकं वर्धनाय । किंच तस्येन्द्रस्य शवसोबलस्य व्युष्टौ व्युच्छने सति कद्दातु किं-दानं अस्माकं भवतीतिशेषः यंवज्रं वृत्रतुरं वृत्रस्यावरकस्य पापस्य हिंसकं त्वष्टा तक्षद् अतक्षद् साधुसंपादितवान् अपिन्वद् आसिंचच्च तस्य शवसोव्युष्टाविति संबन्धः । यद्वा हे इन्द्र कद् किं तस्य वज्रस्य दानं भवति यं वज्रमिन्द्रार्थं तक्षदिति योजनं । मह्यं त्वष्टा वज्रमतक्षदितिमंत्रान्तरं ॥ १ ॥

अथ द्वितीया—

सहिद्युताविद्युतावेतिसामंपृथुंयोनिमसुरत्वाससाद ।
ससनीळेभिःप्रसहानोअस्यभ्रातुर्नऋतेसप्तथस्यमायाः ॥ २ ॥

सः । हि । द्युता । विऽद्युता । वेति । साम । पृथुम् । योनिम् ।
असुरऽत्वा । ससाद । सः । सऽनीळेभिः । प्रऽसहानः ।
अस्य । भ्रातुः । न । ऋते । सप्तथस्य । मायाः ॥ २ ॥

सहि सखल्विन्द्रोद्युता द्योतमानेन विद्युता एतन्नामकेनायुधेन युक्तः सन् साम स्तोत्रात्मकं यज्ञसंबन्धि वेति गच्छति तथा असुरत्वा असुरत्वेन बलेन युक्तः सन् पृथुंविस्तीर्णं योनिं फलस्योत्पादकं यज्ञं ससाद संगातोभवति सइन्द्रः सनीळेभिः नीडं विमानं सविमानैर्मरुद्भिर्युक्तः सन् प्रसहानः अभिभवन् भवति तस्य सप्तथस्य आदित्यानां धात्रादीनां मध्ये सप्तमस्येन्द्रस्य भ्रातुः भार्गैर्भकव्यस्य मायाआसुरीः ऋतेयज्ञेन संभवतीति शेषः ॥ २ ॥

अथ तृतीया—

सवाजंयातापदुष्पदायन्त्स्वर्षातापरिषदत्सनिष्यन् ।
अनर्वायच्छतदुरस्यवेदोघ्नञ्छिश्नदेवाँअभिवर्पसाभूत् ॥ ३ ॥

सः । वाजम् । याता । अपदुःऽपदा । यन् । स्वःऽसाता । परि ।
सदत् । सनिष्यन् । अनर्वा । यत् । शतऽदुरस्य । वेदः ।
घ्नन् । शिश्नऽदेवान् । अभि । वर्पसा । भूत् ॥ ३ ॥

१ ऋ० सं० ८. १. ५.

वाजं शूरैर्गन्तव्यं संग्रामं याता सइन्द्रः नलोकाव्ययेति षष्ठीप्रतिषेधः अपदुष्पदा अपगत-दुष्टपतनेन यन् गच्छन् सनिष्यन् तत्र शत्रुधनानि संभक्तुमिच्छन् परिषदत परिषीदति कुर्वेति उच्येते स्वर्षाता स्वर्षातौ सर्वलाभोपेते संग्रामे। किंचानर्वा युद्धे अप्रत्यृतइन्द्रः शतदुरस्य शत-द्वारस्य शत्रुपुरस्यान्तर्निहितं यद्वेदोधनमस्तितद्धनं वर्पसा आवरकेण बलेन अभिभूत् अ-भिभवति। किंकुर्वन् शिश्नदेवान् अब्रह्मचर्यान् शतद्वारेषु शत्रुपुरसंबन्धिषु वर्तमानान् घ्नन् हिंसन्॥ ३ ॥

अथ चतुर्थी—

सयह्व्योऽवनीर्गोष्वर्वाजुहोतिप्रधन्यासुसस्रिः।
अपादोयत्रयुज्यासोरथाद्रोण्यश्वासईरतेघृतंवाः॥ ४ ॥

सः। यह्व्यः। अवनीः। गोषु। अर्वा। आ। जुहोति। प्रऽधन्यासु।
सस्रिः। अपादः। यत्र। युज्यासः। अरथाः।
द्रोणिऽअश्वासः। ईरते। घृतम्। वारिति वाः॥ ४ ॥

सइन्द्रः अर्वा मेघेषु अभिगन्ता सस्रिः सरणकुशलः प्रधन्यासु प्रकृष्टधननिमित्तासु गोषु भू-मिषु यह्वः महन्नामैतत् महतीरवनीः अवन्तीत्यवनयः आपः ताआजुहोति आक्षिपति यत्र यासु भूमिषु अपादः पादरहिताः अरथारथवर्जिताः पादरहिताः केचन रथेन गच्छन्ति केचापि शून्याः द्रोण्यश्वासः द्रुतव्यापनायुज्यासोयुज्याः इन्द्रस्य सख्योनद्योवाः वारकं घृतमुदकं ईरते प्रेरयन्ति तत्राजुहोति॥ ४ ॥

अथ पञ्चमी—

सरुद्रेभिरशस्तवारऋभ्वाहित्वीगयमारेअवद्यआगात्।
वम्रस्यमन्येमिथुनाविवव्रीअन्नमभीत्यारोदयन्मुषायन्॥ ५ ॥

सः। रुद्रेभिः। अशस्तऽवारः। ऋभ्वा। हित्वी। गयम्।
आरेऽअवद्यम्। आ। अगात्। वम्रस्य। मन्ये। मिथुना।
विवव्री इति विऽवव्री। अन्नम्। अभिऽइत्य। अरोदयत्। मुषायन्॥५॥

सइन्द्रोरुद्रेभीरुद्रपुत्रैर्मरुद्भिः सहितआगादागच्छतु । कीदृशःअशस्तवारःस्तोतृभिरप्रार्थितधनः स्वयमेव प्रदातेत्यर्थः तथा ऋभ्वा महान् गयं हित्वी हित्वा स्वस्थानं परित्यज्यआगादागच्छतु तत्र संबन्धः आरे अवद्यः दूरेगतगर्ह्यः किंच वम्रस्यैतन्नामकस्य ऋषेर्मम मिथुनौ मातापितरौ विवव्री विगतज्वरौ मन्ये अवगच्छामि अयं वम्रः अन्नं शत्रुसंबन्धि अभीत्य अभिप्राप्य मुषायन् मुष्णन् अरोदयन् रोदयति छन्दसिशायजपीत्यहावपि मुषेः श्नः शायजादेशः ॥ ५ ॥

अथ षष्ठी—

सइद्दासंतुवीरवंपतिर्दन्षळक्षंत्रिशीर्षाणंदमन्यत् ।
अस्यत्रितोन्वोजसावृधानोविपावराहमयोअग्रयाहन् ॥६॥१४॥

सः । इत् । दासम् । तुविऽरवम् । पतिः । दन् । षट्ऽअक्षम् ।
त्रिऽशीर्षाणम् । दमन्यत् । अस्य । त्रितः । नु । ओजसा ।
वृधानः । विपा । वराहम् । अयःऽअग्रया । हन् ॥ ६ ॥ १४ ॥

सइत् सएवेन्द्रः पतिः सर्वस्य स्वामी दासं उपक्षपयितारं तुवीरवं बहुशब्दं संग्रामे भयंकरं शब्दं कुर्वाणं वृत्रं दन् दमयन् षळक्षं अक्षिषट्कोपेतं त्रिशीर्षाणं त्रिशिरस्कं त्वष्टुः पुत्रं विश्वरूपं दमन्यत् दमितुं प्रहर्तुमैच्छत् अवधीदित्यर्थः यद्वादमयतीति दमनः नन्द्यादित्वाल्ल्युः सइवाचरति उपमानादाचारइति क्यचि अंत्यलोपश्छान्दसः ततोलङि बहुलंछन्दसीत्यडभावः । किंच त्रितएतन्नामामहर्षिरस्येन्द्रस्योजसा बलेन वृधानोवर्धमानोविपा अंगुल्या कीदृश्या अयोग्रया अयोवत्कठिननखया वराहं उदकवन्तं मेघं व्यहन् विहतवान् ॥ ६ ॥

॥ इत्यष्टमस्य पञ्चमे चतुर्दशोवर्गः ॥ १४ ॥

अथ सप्तमी—

सद्रुह्वणेमनुषऊर्ध्वसानआसाविषदर्शसानायशरुम् ।
सनृतमोनहुषोस्मत्सुजातःपुरोभिनदर्हन्दस्युहत्ये ॥ ७ ॥

सः । द्रुह्वणे । मनुषे । ऊर्ध्वऽसानः । आ । साविषत् ।
अर्शसानाय । शरुम् । सः । नृऽतमः । नहुषः । अस्मत् ।
सुऽजातः । पुरः । अभिनत् । अर्हन् । दस्युऽहत्ये ॥ ७ ॥

सइन्द्रोद्रुह्वणे द्रुह्वणाय दृढं शत्रुभिर्ह्वातव्याय मनुषे मनुष्याय योद्धे स्वभक्ताय ऊर्ध्वसानः ऊर्ध्वमुच्छ्रितः शौर्यादिभिर्गुणैरधिकः सन् स्यति शत्रूणामन्तं करोतीत्यूर्ध्वसा सइवाचरन् ऊर्ध्वशब्दादाचारार्थे क्विबन्तादसानच् अर्शसानाय शत्रूणां हिंसित्रेशरुं हिंसकमायुधमासाविषत् आभिमुख्येन प्रसौति यच्छति । यद्वा द्रुह्वणे मनुषे द्रोग्धव्याय मनुष्यायार्शसानाय स्वभक्तहिंसित्रे तस्य वधार्थं ऊर्ध्वसानः सन् शरुमासाविषत् वज्रं प्रेरयति सएवेन्द्रोनहुषोमनुष्यान् नृतमः मनुष्याणां नेतृतमः संग्रामे शूराणां गमयितृतमः यद्वा नृतमोनहुषोबन्धकश्च अस्मत् अस्मदर्थं सुजातः सुष्ठुप्रादुर्भूतः अर्हन् पूज्यःसन् दस्युहत्ये दस्यवउपक्षपयितारः शत्रवः तेषां हत्यं हननं यस्मिन् सतादृशे संग्रामे पुरः शत्रूणां शरीराण्यभिनत् भिन्नवान् ॥ ७ ॥

अथाष्टमी–

**सोअभ्रियोनयवसउदन्यन्क्षयायगातुंविदन्नोअस्मे ।**
**उपयत्सीददिन्दुंशरीरैःश्येनोयोपाष्टिर्हन्तिदस्यून् ॥ ८ ॥**

सः । अभ्रियः । न । यवसे । उदन्यन् । क्षयाय । गातुम् ।
विदत् । नः । अस्मे इति । उप । यत् । सीदत् । इन्दुम् ।
शरीरैः । श्येनः । अयःऽअपाष्टिः । हन्ति । दस्यून् ॥ ८ ॥

सइन्द्रः अभ्रियोन नभ्राजन्ते अपोबिभ्रतीति वा अभ्राणि मेघाः तेषां संघोभ्रियः सइव यवसे गवादिभक्षणसाधनाय तृणाय उदन्यन् उदकं दातुमिच्छन् तथा क्षयाय गमनाय निवासाय वा अस्मे अस्माकं गातुं मार्गं विदत् अलभत नइतिपूरणः तादृशः सन् यद्यदा इन्दुं सोमं शरीरैः स्वशरीरावयवैः अंगैरुपसीदत् उपगच्छति यच्छब्दयोगादनिघातः तदानीं श्येनः सादृश्यप्रधानोयंनिर्देशः श्येनसदृशः श्येनवच्छंसनीयगमनः अयोपाष्टिः अपपष्टिर्व्याप्तिर्यस्य सप्रदेशः अपाष्टिः पार्ष्णिः अयोमयः अपाष्टिः पार्ष्णिर्यस्य सः दस्यून् शत्रून् हन्ति हिनस्ति ॥ ८ ॥

अथ नवमी—

सव्राधतःशवसानेभिरस्यकुत्सायशुष्णंकृपणेपरादात् ।
अयंकविमनयच्छस्यमानमत्कंयोअस्यसनितोतनृणाम् ॥ ९ ॥

सः । व्राधतः । शवसानेभिः । अस्य । कुत्साय । शुष्णम् ।
कृपणे । परा । अदात् । अयम् । कविम् । अनयत् । शस्यमानम् ।
अत्कम् । यः । अस्य । सनिता । उत । नृणाम् ॥ ९ ॥

सइन्द्रोव्राधतः महन्नामैतत् महतोपि शत्रून् शवसानेभिः बलमाचरद्भिः आयुधैरस्य अ-स्यतु असुक्षेपणे व्यत्ययेन मध्यमः कुत्साय एतन्नामकाय कृपणे स्तोत्रे कृपतिः स्तुतिकर्मा शुष्णं शोषकमेतन्नामकमसुरं परादात् पराभूय खंडितवान् । कुत्सायशुष्णमशुषंनिबर्हीरितिमंत्रा न्तरं । किंचायमिन्द्रः कविमुशनसं कविरिति पितुर्नाम्नापुत्रस्यापि व्यवहारः उपचारात् शस्यमा नं स्तुवन्तं अनयत् वशंप्रापयत् तस्यविरोधिनं यद्वा कविंभार्गवमेव स्तोतृभिः शस्यमानं स्वव शमनयत् यः कविरस्येन्द्रस्य अत्कं रूपं सनिता संभक्ता भवति नलोकाव्ययेति षष्ठीप्रतिषेधः उतापिच नृणां वृष्ट्यादिनेतॄणां इन्द्रानुचराणां मरुतां यः कविः सनिता तमनयदिति ॥ ९ ॥

अथ दशमी—

अयंदशस्यन्नर्येभिरस्यदस्मोदेवेभिर्वरुणोनमायी ।
अयंकनीनऋतुपाअवेद्यमिमीतारुंयश्चतुष्पात् ॥ १० ॥

अयम् । दशस्यन् । नर्येभिः । अस्य । दस्मः । देवेभिः । वरुणः ।
न । मायी । अयम् । कनीनः । ऋतुऽपाः । अवेदि ।
अमिमीत । अररुम् । यः । चतुःऽपात् ॥ १० ॥

अयमिन्द्रोदशस्यन् स्तोतृभ्योधनं प्रयच्छन् दशस्यतिर्दानकर्मा सनर्येभिर्नर्यैः नृहितै र्मरुद्भिः अस्य अस्यति छान्दसस्तिलोपः यद्वा व्यत्ययेन लोण्मध्यमः तथा देवेभिर्द्योतमानैः स्वतेजोभिर्दस्मोदर्शनीयः वरुणोन वरुणइव वरुणस्तमोवारकआदित्योवरुणएव वा सइव

१ ऋ० सं० ३. ५. १९ ।

मायी मायावान् प्रज्ञावान् तथायं कनीनः कमनीयः ऋतौपाता ऋतुपा अवेदि अज्ञायि तथा अररुमसुरं एतन्नामानं अमिमीत अमिनात् योररुश्चतुष्पात् पादचतुष्टयोपेतः। मीङ् हिंसायां लङि बहुलंछन्दसीति विकरणस्य श्लुः ॥ १० ॥

अथैकादशी—

अस्यस्तोमेभिरौशिजऋजिश्वाव्रजंदरयद्वृषभेणपिप्रोः।
सुत्वायद्यजतोदीदयद्गीःपुरइयानोअभिवर्पसाभूत् ॥ ११ ॥

अस्य। स्तोमेभिः। औशिजः। ऋजिश्वा। व्रजम्। दरयत्। वृषभेण। पिप्रोः। सुत्वा। यत्। यजतः। दीदयत्। गीः। पुरः। इयानः। अभि। वर्पसा। भूत् ॥ ११ ॥

अस्येन्द्रस्य स्तोमेभिः स्तोत्रैः औशिजः उशिजः पुत्रऋजिश्वा एतन्नामा वृषभेण वज्रेण वृषभेणवा युक्तं व्रजं गोष्ठं पिप्रोः एतन्नामकस्यासुरस्य संबन्धिनं तेनापहृत्य पालितं दरयत् अदारयत् यद्यदा सुत्वा सोमस्य सोता सुयजोर्ङ्वनिप् इतिवनिप् ह्रस्वस्यपितीति तुक् यजतो यष्टौशिजोगीः स्तुतिवाचोदीदयत् दीपितवान् तथा यद्यदेयानोगच्छन् पुरः शत्रुपुराणि यद्वा पुरः पुरइव संघीभूतानि पापानि अभिभूत् अभिभवति केन साधनेन वर्पसा रूपनामैतत् रूपेण इन्द्रानुगृहीतेन यदेवमकरोत्तदा व्रजं दरयदिति संबन्धः ॥ ११ ॥

अथ द्वादशी—

एवामहोअसुरवक्षथायवम्रकःपड्भिरुपसर्पदिन्द्रम्।
सइयानःकरतिस्वस्तिमस्माइषमूर्जंसुक्षितिंविश्वमाभाः॥१२॥१५॥

एव। महः। असुर। वक्षथाय। वम्रकः। पट्ऽभिः। उप। सर्पत्। इन्द्रम्। सः। इयानः। करति। स्वस्तिम्। अस्मै। इषम्। ऊर्जम्। सुऽक्षितिम्। विश्वम्। आ। अभाः। इत्यभाः ॥ १२ ॥ १५ ॥

अनया स्तुतिमुपसंहृत्याभिमतं वम्रकः प्रार्थयते हे असुर बलवन्निन्द्र त्वां एव एवमुक्तप्रकारेण महोमहतोहविषः स्तोत्रस्य वावक्षथाय वहनाय महतः स्वर्गादेः प्रापणाय वा पड्भिः

पदैः उपसर्पद उपागमत् सइयानः उपगम्यमानः सन् करति करोतु स्वस्ति अविनाशं अस्मै वम्रकाय तथा इषमन्नं ऊर्जरसं सुक्षितिं सुनिवासं सम्यक् विश्वं सर्वमाभाः आहरतु ॥१२॥

॥ इत्यष्टमस्य द्वितीये पञ्चदशोवर्गः ॥ १५ ॥

॥ इति दशमे मण्डलेष्टमोनुवाकः ॥८॥

नवमेनुवाके त्रयोदशसूक्तानि तत्रेन्द्रदृह्येति द्वादशर्चं प्रथमं सूक्तं वन्दनपुत्रस्य दुवस्योरार्षं वैश्वदेवं द्वादशी त्रिष्टुप् शिष्टाजगत्यः । तथाचानुक्रान्तं—इन्द्रदुवस्युर्वान्दनोवैश्वदेवं त्वन्त्यात्रिष्टुबिति । गतोविनियोग: ।

तत्र प्रथमा—

इन्द्र॒दृह्य॑मघवन्त्वाव॒दिद्भु॒जइ॒हस्तु॒तःसु॒त॒पाबो॑धिनो॒वृ॒धे ।
दे॒वेभि॑र्नःसवि॒ताप्राव॑तुश्रु॒तमास॒र्वता॑ति॒मदि॑तिंवृणीमहे ॥ १ ॥

इन्द्र॑ । दृह्य॑ । म॒घ॒ऽव॒न् । त्वाऽव॑त् । इत् । भु॒जे । इ॒ह । स्तु॒तः ।
सु॒त॒ऽपाः । बो॒धि॒ । नः॒ । वृ॒धे । दे॒वेभिः॑ । नः॒ । स॒वि॒ता । प्र ।
अ॒व॒तु॒ । श्रु॒तम् । आ । स॒र्व॑ऽता॑तिम् । अदि॑तिम् । वृ॒णी॒म॒हे॒ ॥ १ ॥

हे इन्द्र मघवन् धनवन् त्वं त्वावदित् त्वत्सदृशमेव शत्रुबलं दृह्य मारय किमर्थं भुजे अस्माकं भोगाय तदर्थमिहास्मिन्यज्ञे स्तुतः सन् सुतपाः सुतस्याभिषुतस्य सोमस्य पाता बोधि बुध्यस्व भवेत्यर्थः किमर्थं नोस्माकं वृधे वर्धनाय किंच देवेभिर्देवैः सह नोस्माकं श्रुतं विश्रुतं यज्ञं सविता सर्वस्य स्वस्वकर्मसु प्रेरकोदेवः प्रावतु प्ररक्षतु । किंच सर्वतातिं स्वार्थिकस्तातिल् सर्वां सर्वात्मिकां यद्वा सर्वेतायन्ते अस्यामिति सर्वतातिः तां छान्दसोदीर्घः तादृशीमदितिं अखंडनीयां देवमातरमावृणोमहे ॥ १ ॥

अथ द्वितीया—

भ॒राय॒सुभ॑रत॒भा॒गमृ॒त्वियं॒प्रवा॒यवे॑शु॒चि॒पेक्र॒न्दद॑िष्टये ।
गौ॒रस्य॒यःपय॑सःपी॒तिमा॑न॒शआस॒र्वता॑ति॒मदि॑तिंवृणीमहे ॥ २ ॥

भरांय । सु । भरत । भागम् । ऋत्वियंम् । प्र । वायवें ।
शुचिऽपे । क्रन्दत्ऽईष्टये । गौरस्यं । यः । पयंसः । पीतिम् ।
आनशे । आ । सर्वऽतांतिम् । अदिंतिम् । वृणीमहे ॥ २ ॥

भराय संग्रामकारिणे सर्वेषां पोषकाय वा इन्द्राय ऋत्वियं कालेजातं प्रातःकालं भागं सुभरत सुष्ठु संपादयत हे ऋत्विजः तथा शुचिपे शुद्धस्य सोमस्य पात्रे क्रन्ददिष्टये शब्दितगमनाय वायोः शीघ्रगमने हि शब्दः प्रत्यक्षः तादृशाय वायवे देवाय प्रभरत भागमितिशेषः योदेवोगौरस्य गौरवर्णस्य पशोः पयसः पीतिं पानमानशे प्राप्नोति तस्मै वायवे शिष्टमुक्तं ॥ २॥

अथ तृतीया—

आनोंदेवःसंवितासांविषद्वयंऋजूयतेयजंमानायसुन्वते ।
यथांदेवान्प्रंतिभूषेंमपाकवदासर्वतांतिमदिंतिंवृणीमहे ॥ ३ ॥

आ । नः । देवः । सविता । साविषत् । वयः । ऋजुऽयते ।
यजंमानाय । सुन्वते । यथां । देवान् । प्रतिऽभूषेम ।
पाकऽवत् । आ । सर्वऽतांतिम् । अदिंतिम् । वृणीमहे ॥ ३ ॥

सविता सर्वस्य प्रेरकः सूर्योनोस्माकं संबन्धिने ऋजूयते ऋजुकामाय सुन्वतेभिषवं कुर्वते यजमानाय वयोन्नं पाकवत् पाकोपेतं व्यवहितमप्येतदत्रसंबध्यते आसाविषत् आभिमुख्येन प्रसौति सौतेण्यन्ताल्लेटि रूपं यथा येन प्रकारेण देवान् प्रतिभूषेम प्रतिभवेम भवतेर्लिङि सिप्शपौ द्विविकरणता यद्वा भूषअलंकारे भौवादिकः भूषयेमेत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

इन्द्रोंअस्मेसुमनांअस्तुविश्वहाराजासोमःसुवितस्याध्येतुनः ।
यथांयथामित्रधितानिसंदधुरासर्वतांतिमदिंतिंवृणीमहे ॥ ४ ॥

इन्द्रः । अस्मे इति । सुऽमनाः । अस्तु । विश्वहा । राजा । सोमः ।
सुवितस्यं । अधि । एतु । नः । यथाऽयथा । मित्रऽधितानि ।
सम्ऽदधुः । आ । सर्वऽतांतिम् । अदिंतिम् । वृणीमहे ॥ ४ ॥

इन्द्रोदेवोस्मे अस्माकं सुमनाः सुमनस्कोनुग्रहचेताअस्तु भवतु विश्वहा सर्वेष्वप्यहस्सु राजा सोमश्च नोस्माकं सुवितस्य सुवितं स्तोत्रं अध्येतु अधिगच्छतु यथायथा येनयेनप्रकारेणास्माकं मित्रधितानि मित्रनिहितानि धनानि सन्दधुः तथाधिगच्छतु सोमः तथेन्द्रोपि सुमनाअस्त्विति समन्वयः ॥ ४ ॥

अथ पंचमी—

इन्द्रंउक्थेनशवंसापरुंर्दधेबृहंस्पतेप्रतरीतास्यायुंषः ।
यज्ञोमनुःप्रमंतिर्नःपिताहिकमासर्वतांतिमदिंतिंवृणीमहे ॥ ५ ॥

इन्द्रंः । उक्थेनं । शवंसा । परुंः । दधे । बृहंस्पते । प्रऽतरीता ।
असि । आयुंषः । यज्ञः । मनुंः । प्रऽमंतिः । नः । पिता । हि । कम् ।
आ । सर्वऽतांतिम् । अदिंतिम् । वृणीमहे ॥ ५ ॥

अयमिन्द्रउक्थेन शवसा स्तुत्येन बलेन परुः पर्व यज्ञियमस्मदीयं वा दधे धारयति हे बृहस्पते आयुषोममायुष्यस्य प्रतरीता प्रवर्धयितासि भव तथा यज्ञोमनुर्मन्ता प्रमतिः प्रकृष्टामतिर्यस्य सः नः पिता पालकः सन् कं सुखं प्रयच्छतु यद्वा यज्ञोमंत्रोबुद्धिश्च प्रत्येकं सुखं प्रयच्छतु ॥ ५ ॥

अथ षष्ठी—

इन्द्रंस्यनुसुकृंतंदैव्यंसहोग्निर्गृहेजंरिताभेधिरःकविः ।
यज्ञश्चंभूद्विदथेचारुरन्तंमआसर्वतांतिमदिंतिंवृणीमहे ॥६॥१६॥

इन्द्रंस्य । नु । सुऽकृंतम् । दैव्यंम् । सहंः । अग्निः । गृहे । जरिता ।
मेधिरः । कविः । यज्ञः । च । भूत् । विदथें । चारुंः । अन्तंमः ।
आ । सर्वऽतांतिम् । अदिंतिम् । वृणीमहे ॥ ६ ॥ १६ ॥

दैव्यं देवानां हितं सहोबलं यदस्ति तदिन्द्रस्य नु सुकृतं इन्द्रेण खलु सुष्ठु संपादितं यद्वा यत्सुकृतं दैव्यं सहोबलं मरुत्संज्ञकमस्ति तदिन्द्रस्य नु इन्द्रसंबन्धि खलु अथवा इन्द्रस्य नु इन्द्रस्य संबन्धि सुकृतं दैव्यं सहोदेवार्हं बलमग्निर्गृहे अस्मदीये यागगृहे वर्तते इतिशेषः इन्द्र-

स्य संबन्धि सुष्टु संपादितोदेवानां बलभूतोग्निर्गार्हपत्यः सन् वर्तते इत्यर्थः सचाग्निर्जरितादेवानां स्तोतामेधिरः मेधोयज्ञोहविर्वा तद्वान् कविः क्रान्तप्रज्ञो यज्ञोयष्टव्यश्च भूत् भवति कुत्र विदथे यज्ञे । किंच सोग्निश्चारुश्चरणीयः अन्तमः अस्माकमन्तिकतमश्च ॥ ६ ॥

॥ इत्यष्टमस्य पञ्चमेषोडशोवर्गः १६ ॥

अथ सप्तमी—

नवोगुहांचकृमभूरिदुष्कृतंनाविष्ट्यंवसवोदेवहेळनम् ।
माकिर्नोदेवाअनृतस्यवर्पसआसर्वतातिमदितिंवृणीमहे ॥ ७ ॥

न । वः । गुहा । चकृम । भूरि । दुःऽकृतम् । न । आविःऽत्यम् । वसवः । देवऽहेळनम् । माकिः । नः । देवाः । अनृतस्य । वर्पसः । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ७ ॥

हे देवावो युष्माकं गुहा गुहायां प्रच्छन्ने देशे भूरि प्रभूतं दुष्कृतं पापं द्रोहमित्यर्थः न चकृम तथा आविष्ट्यं आविः संभूतं देवहेळनं देवानां क्रोधनं तन्निमित्तं द्रोहं नचकृम हे वसवो वासकादेवाः । किंच हे देवानोस्माकं अनृतस्य वर्पसोरूपस्य प्राप्तिर्माकिर्माभूत् इतः परं मानुषं रूपं माभूदित्यर्थः शिष्टमुक्तं ॥ ७ ॥

अथाष्टमी—

अपामीवांसवितासाविषन्न्यंग्वरीयइदपसेधन्त्वद्रयः ।
ग्रावायत्रमधुषुदुच्यतेबृहदासर्वतातिमदितिंवृणीमहे ॥ ८ ॥

अप । अमीवाम् । सविता । साविषत् । न्यक् । वरीयः । इत् । अप । सेधन्तु । अद्रयः । ग्रावा । यत्र । मधुऽसुत् । उच्यते । बृहत् । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ८ ॥

सविता सर्वस्य प्रेरकः सवितृदेवोनोस्माकं संबन्धिनममीवां रोगं अपसाविषत् अपप्रेरयतु अपगमयत्वित्यर्थः । तथावरीयइत् उरुतरमपि पापं न्यक् नीचीनमपसेधन्त्वद्रयः पर्वताभिमानिनोदेवाः अभिषवाश्मानोवा एतत्सर्वं कुत्र भवत्विति चेत् उच्यते यत्र यस्मिन्प्रदेशे यस्मिन्यागे वा मधुरस्य सोमस्य सोता ग्रावा बृहत्प्रवृद्धमुच्यते स्तूयते तत्र ॥ ८ ॥

अथ नवमी—

ऊर्ध्वोग्रावावसवोस्तुसोतरिविश्वाद्वेषांसिसनुतर्युयोत ।
सनोदेवःसविताप्रायुरीड्यआसर्वतातिमदितिंवृणीमहे ॥ ९ ॥

ऊर्ध्वः । ग्रावा । वसवः । अस्तु । सोतरि । विश्वा । द्वेषांसि ।
सनुतः । युयोत । सः । नः । देवः । सविता । पायुः । ईड्यः ।
आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ९ ॥

हे वसवो देवाः सोतरि सोमाभिषवकर्तरि मयि ग्रावा ऊर्ध्वः उन्नतोस्तु तेनोच्छ्रितेनविश्वा द्वेषांसि सर्वानपि द्वेष्टॄन् सनुतः निगूढान् युयोतपृथक्कुरुत ससविता देवोनोस्माकं पायुः पालयिता कृवापाजीत्यादिनाउण् प्रत्ययः सईड्यः स्तोतव्यश्च ॥ ९ ॥

अथ दशमी—

ऊर्जंगावोयवसेपीवोअत्तनऋतस्ययाःसदनेकोशेअङ्ध्वे ।
तनूरेवतन्वोअस्तुभेषजमासर्वतातिमदितिंवृणीमहे ॥ १० ॥

ऊर्जम् । गावः । यवसे । पीवः । अत्तन । ऋतस्य । याः । सदने ।
कोशे । अङ्ध्वे । तनूः । एव । तन्वः । अस्तु । भेषजम् ।
आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ १० ॥

हे गावः आशिरार्थायूयं यवसे तृणवति देशे पीवः प्रवृद्धं ऊर्जंरसं अत्तन अत्त याऋतस्य यज्ञस्य सदने गृहे कोशेगोष्ठे दोहनस्थाने अङ्ध्वे व्यंजयथ ताअत्तन तनूरेव जन्ये जनकशब्दः तनूरेवक्षीरमेव तन्वः सोमरसस्य भेषजमस्तु यद्वा पृथगेव वाक्यं अस्माकं तन्वोभेषजमस्तु किंच तनूरेव पशुशरीरमेव पशुना यागे सति स्वर्गस्य संपादयितुं शक्यत्वात् ॥ १० ॥

अथैकादशी—

क्रतुप्रावाजरिताशश्वतामवइन्द्रइद्भद्राप्रमतिःसुतावताम् ।
पूर्णमूधर्दिव्यंयस्यसिक्तयआसर्वतातिमदितिंवृणीमहे ॥ ११ ॥

क्रतुऽप्रावा । जरिता । शश्वताम् । अवः । इन्द्रः । इत् । भद्रा ।
प्रऽमतिः । सुतऽवताम् । पूर्णम् । ऊधः । दिव्यम् । यस्य ।
सिक्तये । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ११ ॥

क्रतुप्रावा कर्मणां पूरकः प्रापूरणे आतोमनिन्नित्यादिना वनिप् जरिता स्तोता यजमानं साधु सोमः कृतइति स्तौति यद्वा शश्वतां सर्वेषां जरयिता इन्द्रइत् इन्द्रएव सुतावतां सोमवतां यजमानानां अवोरक्षकोभद्रा भद्रया स्तुत्या प्रमतिः यस्येन्द्रस्य सिक्तये सेकाय पानाय ऊधः उद्धततरं द्रोणकलशं पूर्णं सोमेनपूर्णं भवति सएवावः सएव प्रमतिरिति ॥ ११ ॥

अथ द्वादशी—

चित्रस्तेभानुःक्रतुप्राअभिष्टिःसन्तिस्पृधोजरणिप्राअधृष्टाः ।
रजिष्ठयारज्यापश्वआगोस्तूतूर्षतिपर्यग्रंदुवस्युः ॥ १२ ॥ १७ ॥

चित्रः । ते । भानुः । क्रतुऽप्राः । अभिष्टिः । सन्ति । स्पृधः ।
जरणिऽप्राः । अधृष्टाः । रजिष्ठया । रज्या । पश्वः । आ ।
गोः । तूतूर्षति । परि । अग्रम् । दुवस्युः ॥ १२ ॥ १७ ॥

हे इन्द्र ते भानुः प्रकाशश्चित्रः आश्चर्यभूतः चायनीयोवा तथा क्रतुप्राः सभानुरस्माकं कर्मणां पूरकः अभ्यष्टिरभ्येषणीयः हे इन्द्र ते जरणिप्राः स्तोतॄणां धनस्य पूरयित्र्यः अधृष्टाः अन्यैरप्रधृष्याः स्पृधः स्पर्धाः सन्ति यस्मादेवं तस्मात् रजिष्ठया ऋजुतमया रज्या रज्वा गोः पश्वः पशोः अग्रं दुवस्युः परिचरणमिच्छन् एतन्नामा ऋषिः परितूतूर्षति अभित्वरयति ॥ १२॥

॥ इत्यष्टमस्य पञ्चमे सप्तदशोवर्गः ॥ १७ ॥

उद्बुध्यध्वमिति द्वादशर्चं द्वितीयं सूक्तं सोमपुत्रस्य बुधस्यार्षं आवोधियइति नवमी कृपन्नरइत्यंत्या च द्वे जगत्यौ चतुर्थीषष्ठ्यौ गायत्र्यौ निराहावानिति पञ्चमी बृहती शिष्टास्त्रिष्टुभः विश्वेदेवादेवता ऋत्विक्स्तुतिरूपोर्थोवा देवता । तथाचानुक्रान्तं—उद्बुध्यध्वं बुधः सौम्यऋत्विक्स्तुतिर्वा नवम्यन्त्येजगत्यौ गायत्र्योर्मध्ये पञ्चमी बृहती । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

उद्बुध्यध्वंसमनसःसखायःसमग्निमिन्ध्वंबहवःसनीळाः ।
दधिक्रामग्निमुषसंचदेवीमिन्द्रावतोवसेनिह्वयेवः ॥ १ ॥

उत् । बुध्यध्वम् । सऽमनसः । सखायः । सम् । अग्निम् ।
इन्ध्वम् । बहवः । सऽनीळाः । दधिऽक्राम् । अग्निम् । उषसम् ।
च । देवीम् । इन्द्रऽवतः । अवसे । नि । ह्वये । वः ॥ १ ॥

अग्निं चेष्यमाणऋत्विजोवदन्ति हे सखायः सखिभूताऋत्विजः समनसः समानमनस्काः परस्परमद्रोग्धारः अन्योन्यं कर्मानुकूलाइत्यर्थः तादृशायूयं उत् उत्कृष्टं बुध्यध्वं जानीध्वं उत्तरत्र युष्माकं कर्तव्यमेवोपदिशति तथाग्निं समिंध्वं सम्यक् दीपयध्वं ञिइन्धी दीप्तौ रौधादिकः लोटि श्नसोरल्लोपइत्यल्लोपः बहवोनेके सनीळाः समाननिवासाः एकस्यामेव शालायां निवसन्तः अहं च दधिक्रां एतन्नामिकां देवतां अग्निमुषसं च देवीं एतांस्त्रीन् देवानिन्द्रावतः इन्द्रेण युक्तान् वोयुष्मानवसे अस्माकं रक्षणाय नि नितरां ह्वये आह्वयामि ॥ १ ॥

अथ द्वितीया—

मन्द्राकृणुध्वंधियआतनुध्वंनावमरित्रपरणींकृणुध्वम् ।
इष्कृणुध्वमायुधारंकृणुध्वंप्राञ्चंयज्ञंप्रणयतासखायः ॥ २ ॥

मन्द्रा । कृणुध्वम् । धियः । आ । तनुध्वम् । नावम् ।
अरित्रऽपरणीम् । कृणुध्वम् । इष्कृणुध्वम् । आयुधा । अरम् ।
कृणुध्वम् । प्राञ्चम् । यज्ञम् । प्र । नयत । सखायः ॥ २ ॥

मन्द्रा मन्द्राणि मदकराणि स्तोत्राणि कृणुध्वं कुरुध्वं हे सखायः कृवि हिंसाकरणयोश्च धिन्विकृण्व्योरचेत्युप्रत्ययः अकारश्चान्तादेशः यद्वा करोतेर्व्यत्ययेन श्नुः तथा धियः कर्माणि चयनप्रदेशकर्षणादीनि चातनुध्वं विस्तारयत तथा अरित्रपरणीं कर्षणादिरूपेणारित्रेण पारयितव्यां नावं चयनाख्यां कृणुध्वं कुरुध्वं तथा आयुधा आयुधानि सीरयुगादीनि अरं अलं कृणुध्वं हे सखायः ऋत्विजः प्रांचं प्रागंचनं यज्ञं यष्टव्यं अग्निं प्रणयत प्रकर्षेण नयत आदौ कर्षणं प्रांचं कुरुतेत्यर्थः ॥ २ ॥

अथ तृतीया–

युनक्तसीराावियुगातनुध्वंकृतेयोनौवपतेहबीजम् ।
गिराचंश्रुष्टिःसभंराअसन्नोनेदीयइत्सृण्यःपक्कमेयात् ॥ ३ ॥

युनक्त । सीरा । वि । युगा । तनुध्वम् । कृते । योनौ । वपत ।
इह । बीजम् । गिरा । च । श्रुष्टिः । सऽभरा । असत् । नः ।
नेदीयः । इत् । सृण्यः । पक्कम् । आ । इयात् ॥ ३ ॥

हे सखायोयूयं सीरा सीराणि युनक्त युङ्ध्वं अनडुद्भिः सह युजेर्लोटि तप्तनप्तनथनाश्चेति तनबादेशः अतएवाङित्वाच्छसोरल्लोपइत्यल्लोपाभावः तदर्थं युगा युगानि वितनुध्वं विस्तारयध्वं कृते च योनौ इह सीतायां बीजं ग्राम्यमारण्यं च वपत निधत्त तिलमाषव्रीह्यादिकं ग्राम्यसप्तकं वेणुश्यामाकनीवारादिकं आरण्यबीजसप्तकं चाकृष्टाकृष्टयोर्निवपतेत्यर्थः । सप्तग्राम्याः कृष्टे सप्तारण्या अकृष्टे इत्यापस्तंबः । तथा नोस्माकं गिरा स्तुत्या प्रशस्त्या सहास्माकं श्रुष्टिरन्नं सभराः सभरं असत भवति भवतु तथा नेदीयइत् अन्तिकएव सृण्यः सृणिरंकुशः अंकुशवद्वक्रोलवित्रः पक्कं स्तंबमेयात् आभिमुख्येन गच्छति श्रुष्टिः सभराअसत् सृण्यः पक्कमेयादिति चब्दानुवृत्तेश्चवायोगेप्रथमेति प्रथमस्य निघाताभावः ॥ ३ ॥

अथ चतुर्थी–

सीरायुञ्जन्तिकवयोयुगावितन्वतेपृथक् । धीरादेवेषुसुम्नया ॥ ४ ॥

सीरा । युञ्जन्ति । कवयः । युगा । वि । तन्वते ।
पृथक् । धीराः । देवेषु । सुम्नऽया ॥ ४ ॥

कवयोमेधाविनऋत्विजः सीरा सीराणि कर्षणसाधनानि नियुंजन्ति योजयन्ति युगा युगान्यपि पृथक् परस्परं वितन्वते भिन्नप्रदेशानि कुर्वन्ति कीदृशाः कवयः देवेषु विषये धीराः धीमन्तः किमर्थं सुम्नयासुम्नमिति सुखनाम सुखेच्छया सुम्नशब्दात्क्यजन्ताद्भावे अप्रत्ययादित्यकारप्रत्ययः सुपांसुलुगिति तृतीयायाआकारः अथवा धीराधीमन्तः देवेषु सुम्नया सुम्नेन देवेषु सुखं भूयादिति सुपांसुलुगित्यादिना विभक्तेर्याजादेशः ॥ ४ ॥

अथ पंचमी—

निरा॑हा॒वान्कृ॑णोतन॒सं व॑र॒त्रा द॑धातन ।
सि॒ञ्चाम॑हा अव॒तमु॒द्रिणं॑ व॒यं सु॒षेक॒मनु॑पक्षितम् ॥ ५ ॥

निः । आ॒ऽहा॒वान् । कृ॒णो॒त॒न॒ । सम् । व॒र॒त्राः । द॒धा॒त॒न॒ ।
सि॒ञ्चाम॑है । अ॒व॒तम् । उ॒द्रिण॑म् । व॒यम् ।
सु॒ऽसेक॑म् । अनु॑पऽक्षितम् ॥ ५ ॥

हे सखायआहावान् आहूयन्ते पानार्थं गावोत्रेत्याहावा निपानानि अत्रौचित्यादग्निचयनप्रदेशकर्षणार्थं गोपानसाधनद्रुममयपानपात्राण्युच्यते तानाहावान्निष्कृणोतन निष्कुरुत आह्वयतेर्निपानमाहावइति निपातितः थाथादिस्वरः कृणोतन तप्तनबित्यादिना तनप् तेनाङित्वाद्गुणः श्नाभ्यस्तयोरातइत्याकारलोपः । किमर्थमाहावकरणं वरत्रस्थापनं चेति अत्रोच्यते वयं अवतमवटं सिंचामहै कीदृशमवटं उद्रिणं उदकवन्तं सुषेकं सुष्ठु सेक्तुं शक्यंअनुपक्षितं अनुपक्षीणं कदाचिदप्युदकोपक्षयरहितं ॥ ५ ॥

अथ षष्ठी—

इष्कृ॑ताहावमव॒तं सु॑व॒रत्रं॑ सुषेच॒नम् । उ॒द्रिणं॑ सिञ्चे॒ अक्षि॑तम् ॥ ६ ॥ १८ ॥

इष्कृ॑तऽआहावम् । अ॒व॒तम् । सु॒ऽव॒र॒त्रम् । सु॒ऽसे॒च॒नम् ।
उ॒द्रिण॑म् । सि॒ञ्चे॒ । अक्षि॑तम् ॥ ६ ॥ १८ ॥

इष्कृताहावं संस्कृताहावं अवतं अवटं द्रोणं सिंचे सेचयामि पुनः कीदृशमवतं सुवरत्रं शोभनवरत्रोपेतं सुषेचनं शोभनोदकसेकोपेतं उद्रिणं उदकवन्तं अक्षितमक्षीणं ॥ ६ ॥

॥ इत्यष्टमस्य पंचमेष्टादशोवर्गः ॥ १८ ॥

अथ सप्तमी—

प्री॒णी॒ताश्वा॑न्हि॒तं ज॑याथ स्वस्ति॒वाहं॒ रथ॒मित्कृ॑णुध्वम् ।
द्रोणा॑हावमव॒तमश्म॑चक्र॒मंस॑त्रकोशं सिञ्चता नृ॒पाण॑म् ॥ ७ ॥

प्री॒णी॒त । अश्वा॑न् । हि॒तम् । ज॒या॒थ॒ । स्व॒स्ति॒ऽवाह॑म् । रथ॑म् ।
इत् । कृ॒णु॒ध्व॒म् । द्रो॒ण॑ऽआहावम् । अ॒व॒तम् । अश्म॑ऽचक्रम् ।
अंस॑त्रऽकोशम् । सि॒ञ्च॒त॒ । नृ॒ऽपान॑म् ॥ ७ ॥

हे ऋत्विजो यूयं अश्वान् व्यापनशीलान् बलीवर्दान् प्रीणीत उचितघासोदकादिप्रदानेन प्रीणयत यथा क्षेत्रकर्षणाय प्रभवन्ति तथाकुरुतेत्यर्थः तथाकृत्वा हितं वपनायोचितं कर्षणं जयाथ जयथ संपादयथ तथा रथं चयनाख्यं हलाख्यं वा स्वस्तिवाहमित् सुखस्य वाहकमेव कृणुध्वं कुरुध्वं तदर्थं द्रोणाहावं आह्वयन्त्यत्र पानार्थं बलीवर्दानित्याहावोजलाधारः पात्रविशेषः सच द्रोणमयोद्रुममयआहावोयस्य तादृशं अवतं अवटवन्निम्नभूतं अश्मचक्रं व्याप्तक्रमणं अश्ममयचक्रं वा अंसत्रकोशंअंसत्रं कवचं यथा कायं रक्षति तद्वदुदकस्य कोशं कोशस्थानीयं नृपाणं नृणांकर्मनेतॄणां पानयोग्यं ईदृशंअवतं सिंचत हेऋत्विजः एवमृत्विक्स्तुतिपक्षे। सूक्तस्यवैश्वदेवपक्षे एवं योजना । प्रीणीत प्रीणयताश्वान् स्नानपानयोग्यान्नैः संग्रामयोग्यान् कुरुतेत्यर्थः हितं जयाथ हितमिति क्रियाविशेषणं कथं जयाथ बन्धुसुहृद्भ्योयथाहितं भवति तथा जयथ संग्रामं स्वस्तिवाहं स्वस्तीत्यविनाशनाम अविनाशवाहनं रथमित् रथं च कृणुध्वं इदिति चार्थे अश्वं रथं च दृढं कृत्वा संग्रामभूमिं गत्वा द्रोणाहावमित्यादीनि द्वितीयान्तानि कूपाख्यसंग्रामविशेषणानि सिंचतेत्यनेन संबध्यंते द्रोणः द्रुममयः सएव रथ आहावआहावस्थानीयोयस्य संग्रामस्य तं अवतं कूपनामैतत् कूपं संग्रामाख्यं अश्मचक्रं कूपप्रान्तनिबद्धाश्मसदृशप्रहरणायुधवन्तं असनानि वाक्षेपणानिवा चक्राख्यायुधविशेषायस्मिन् तं व्याप्तचरणवन्तं व्याप्तक्रमणवन्तं वा चक्रं चकतेर्वा चरतेर्वाक्रमतेर्वाक्रमयतेर्वेति[1] निरुक्तं । अंसत्रकोशं अंसत्राणि धनूंषि कवचानि च कोशस्थानानि यस्मिन् तं सिंचत उत्सिंचत नृपानं यस्मिन् योद्धारउदकवत्पीयन्ते मार्यन्ते तं ईदृशं कूपसदृशं संग्रामं सिंचत हे अस्मदीयायोद्धारः सूक्तस्य वैश्वदेवत्वात् हे सैनिकाविश्वेषां देवानां प्रसादेन सर्वमेतत्कुरुतेत्यर्थः एवं निराहावानित्यादिषु कूपरूपव्याजेन संग्रामवर्णनमवगन्तव्यं ॥ ७ ॥

---

१ नि० ४. २७ ।

अथाष्टमी–

व्रजंकृणुध्वंसहिवोनृपाणोवर्मसीव्यध्वंबहुलापृथूनि ।
पुरःकृणुध्वमायसीरधृष्टामावःसुस्रोच्चमसोदृंहतानम् ॥ ८ ॥

व्रजम् । कृणुध्वम् । सः । हि । वः । नृऽपानः । वर्म । सीव्यध्वम् ।
बहुला । पृथूनि । पुरः । कृणुध्वम् । आयसीः । अधृष्टाः ।
मा । वः । सुस्रोत् । चमसः । दृंहत । तम् ॥ ८ ॥

हे ऋत्विजोव्रजं कृणुध्वं व्रजं गोष्ठं कुरुध्वं आशिरदोहार्थं गोस्थानं कुरुत सहि सखलु वोनृपानः नेतृणां देवानां पातव्यः देवपानसाधनइति सान्नायरूपेण वा आशिररूपेण वा गोः पयआदिकं देवाः पिबन्ति खलु वर्म वर्माणि सीव्यध्वं वर्मवत् प्रधानस्योभयतआच्छादकत्वात् प्रयाजादीनि प्राच्यानि प्रतीच्यानि चांगानि वर्माणि तानि सीव्यध्वं दृलयध्वं कुरुध्वमित्यर्थः। कीदृशानि वर्माणि बहुला बहुलानि अनेकानि तानि च पृथूनि विस्तीर्णानि तथा पुरः पुराणि धिष्ण्यादीनि यष्टव्यानां देवानां वा पुरः शरीराणि आयसीः अयोमयवत् सारभूताः अधृष्टाः अन्यैरधृष्याः पूरणीयाग्रहावा पुरइत्युच्यन्ते तानुक्तलक्षणान् कुरुत वोयुष्मदीयश्चमसोयज्ञाख्योभक्षणसाधनश्चमसएव वा चमसपक्षे सामान्येनैकवचनं मासुस्रोत् मास्रवेत् स्रवतेर्लङि बहुलंछन्दसीति शपःश्लुः तं दृंहत दृढीकुरुत यथाविकलोन भवति तथा कुरुत दृहदृहिवृद्धौ भौवादिकः तस्माल्लोटि इदित्वान्नुम् ऋत्विक्स्तुतिपक्षे एवं । वैश्वदेवपक्षे अस्मदीयायोद्धारोयूयं नरोयोद्धारः पिबन्ति प्रत्यर्थिनां प्राणानिति नृपाणः सतादृशोयुष्मदीयः खलु गोष्ठपक्षे नराणां पानसाधनः सखलु पातेः करणाधिकरणयोश्चेतिल्युट् वर्म वर्माणि कवचानि सीव्यध्वं बहुलानिपृथूनिच यथाभवन्ति तथा पुरः पुरीः कृणुध्वमायसीरन्यैरधृष्टाश्च वश्चमसः अदनसाधनमासुस्रोत् मास्रवेत् तं दृंहतेतिदेवतानुग्रहलब्धबलोवदति ॥ ८ ॥

अथ नवमी–

आवोधियंयज्ञियांवर्तऊतयेदेवादेवींयजतांयज्ञियामिह ।
सानोदुहीयद्यवसेवगत्वीरुहस्रधारापयसामहीगौः ॥ ९ ॥

आ । वः । धियम् । यज्ञियाम् । वर्ते । ऊतये । देवाः । देवीम् । यजताम् । यज्ञियाम् । इह । सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥ ९ ॥

हे देवाः स्तोतारऋत्विजोवोयुष्माकमूतये यज्ञियां यज्ञार्हां धियं बुद्धिं आवर्ते प्रवर्तये यद्वा हे देवाऋत्विजोवोयज्ञियां धियं युष्माकं कर्तव्यत्वेन संबन्धिनोमस्माकं ऊतये रक्षणायावर्ते अपिवा देवाएव संबोध्याः हे देवावोयुष्माकं धियं बुद्धिं आवर्ते आवर्तयामि किमर्थं ऊतयेस्माकं रक्षणाय कीदृशीं धियं यज्ञियां यज्ञार्हां देवीं द्योतमानां यजतां पूज्यां इहास्मिन्यागे अस्यां भूमौ वा एकोयज्ञियामितिशब्दः पूरणः सा धीर्नोस्माकं दुहीयत् दुह्यात् । तत्रदृष्टान्तः— यवसेवा यवसानि भक्षयित्वेव गत्वी पुनर्गोष्ठं गत्व पीत्वीतिवत् पयसा सहस्रधारा मही महती गौर्यथा दुग्धे तद्वत् ॥ ९ ॥

अथ दशमी—

आतूषिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।
परिष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥ १० ॥

आ । तु । सिञ्च । हरिम् । ईम् । द्रोः । उपऽस्थे । वाशीभिः । तक्षत । अश्मन्ऽमयीभिः । परि । स्वजध्वम् । दश । कक्ष्याभिः । उभे इति । धुरौ । प्रति । वह्निम् । युनक्त ॥ १० ॥

हे अध्वर्यो त्वं एनं हरिंहरितवर्णं सोमं द्रोः द्रुमविकारस्य पात्रस्योपस्थउपरि आसिंच आसेकं कुरु तुइति पूरणः। तदर्थं हे पात्रसंपादिनः अश्मन्मयीभिः अयःशिलासारभूताभिः वाशीभिस्तक्षत पात्राणि । नकारोपजनश्छान्दसः मयटः टित्वात् ङीप् । तानि पात्राणि सोमपूर्णानि दश दशसंख्याकानि कक्ष्याभिः प्रकारैः पर्यायेण परिष्वजध्वं संस्कुरुध्वं आसादयत यद्वा वाशीभिरश्मन्मयीभिर्हविर्धानशकटे तक्षत तेच दशकक्ष्याभिर्दशसंख्याकाभीरज्जुभिः परिष्वजध्वं उभे धुरौ युगसंबन्धिन्यौ वह्नी वाहकावनड्वाहौ युनक्त अथवायं मंत्रश्चयनक्षेत्रकर्षणसाधनहलविषयतयाव्याख्येयः ॥ १० ॥

अथैकादशी—

उभेधुरौवह्निरापिब्दमानोन्तर्योनेवचरतिद्विजानिः ।
वनस्पतिंवनआस्थापयध्वंनिषूदधिध्वमखनन्तउत्सम् ॥ ११ ॥

उभे इति । धुरौ । वह्निः । आऽपिब्दमानः । अन्तः । योनाऽइव ।
चरति । द्विऽजानिः । वनस्पतिम् । वने । आ । अस्थापयध्वम् ।
नि । सु । दधिध्वम् । अखनन्तः । उत्सम् ॥ ११ ॥

हविर्धानशकटस्योभे धुरौ आपिब्दमानः आशब्दमानोवह्निर्वाहकोनड्वान् योनावन्तरिव द्विजानिः द्विजायः तयोन्तश्चरति तंवनस्पतिं वनस्पतिविकारं शकटं वने वनसंबन्धिनि वृक्षे मेथीभूते इत्यर्थः तत्रास्थापयध्वं यद्वा वने वननीये देशे आस्थापयध्वं आस्थापयत पश्चात्तत्रस्थं सोमं सु सुष्ठु निदधिध्वं सुखं यथा भवति तथा स्थापयतासंधां अभिषवप्रदेशे वा पश्चादुत्सं तद्रसंअखनन्त संपादयतेत्यर्थः । अथवायमपि मंत्रः कर्षणपरोव्याख्येयः । यस्य लांगलस्योभे धुरावपिब्दमानः शब्दमानोवह्निरनड्वान् अन्तर्योनाविवेत्यादि समानं तादृशं वनस्पतिं वनस्पतिविकारं लांगलं वने वननीये वपनार्थकर्षणप्रदेशे आस्थापयध्वं सु सुष्ठु सर्वत्र तं लांगलं निदधिध्वं उत्सं सेकसाधनंगर्तं सिक्तंवा प्रदेशं अखनन्तः ॥ ११ ॥

षष्ठेहनिब्राह्मणाच्छंसिशस्त्रे कपृन्नरइत्येषा—कपृन्नरोयद्धप्राचीरजगन्तेतिचैतेइति ।

सैषा द्वादशी—

कपृन्नरःकपृथमुद्दधातनचोदयतखुदतवाजसातये ।
निष्टिग्र्यःपुत्रमाच्यावयोतयइन्द्रंसबाधइहसोमपीतये॥१२॥१९॥

कपृत् । नरः । कपृथम् । उत् । दधातन । चोदयत । खुदत ।
वाजऽसातये । निष्टिग्र्यः । पुत्रम् । आ । च्यवय । ऊतये ।
इन्द्रम् । सऽबाधः । इह । सोमऽपीतये ॥ १२ ॥ १९ ॥

हेनरोनेतारऋत्विजः एषइन्द्रः कपृत् सुखस्यपूरकोयष्टॄणां स्तोतॄणांच कमिति सुखनाम तं कपृथं सुखस्य पूरयितारमिन्द्रं चोदयत प्रेरयत खुदत खुर्दत क्रीडयत खुर्दक्रीडायां भौमादिकः व्यत्ययेन शः रेफलोपश्छान्दसः संपिष्ट संस्कुरुतेत्यर्थः किमर्थं वाजसातये अन्नस्य

लाभाय तदेवाह—हेहोतः निष्षिध्यः पुत्रं निष्टिं दितिं स्वसपत्नीं गिरतीति निष्टिग्रीरदितिः तस्याः पुत्रमिन्द्रं सबाधः सहपापैः प्रयासरूपैः कर्मभिर्बाध्यन्तइति सबाधऋत्विजः तथाविधायूयं सोमपीतये तस्य सोमपानायोतयेस्माकं रक्षणाय वा च्यवय व्यत्ययेनैकवचनं आच्याव-यतेत्यर्थः ॥ १२ ॥

॥ इत्यष्टमस्य पञ्चमे एकोनविंशोवर्गः ॥ १९ ॥

प्रतेरथमिति द्वादशर्चं तृतीयं सूक्तं भर्म्याश्वपुत्रोमुद्गलऋषिः आद्या तृतीया अन्त्याचेति तिस्रोबृहत्यः शिष्टानव त्रिष्टुभः द्रुघणोनाम मुद्गरः तद्देवत्यमिदं इन्द्रदेवत्यंवा । तथाचानुक्रा-न्तं—प्रतेमुद्गलोभार्म्यश्वोद्रुघणेन वृषभेण चाजिंजिगायेति द्रौघणंवाद्यातृतीयांत्याच बृहत्यइति । गतोविनियोगः । अत्राहुः—मुद्गलस्य हृतागावश्चोरैस्त्यक्का जरद्गवं । सशिष्टं शकटे कृत्वा ग-त्वैकऋजुराहवं ॥ १ ॥ द्रुवणं युयुजेन्यत्र चौरमार्गानुसारकः । द्रुघणं चाग्रतः क्षिप्त्वा चौरे-भ्योजगृहे स्वगाइति ॥ २ ॥ तथा निरुक्तेपीयं कथा सूचिता—मुद्गलोभार्म्यश्वऋषिर्वृषभं च-द्रुघणंचयुक्त्वा संग्रामे व्यवहृत्याजिं जिगायेति[1] ।

तत्र प्रथमा—

**प्रतेरथंमिथूकृतमिन्द्रोवतुधृष्णुया ।**
**अस्मिन्नाजौपुरुहूतश्रवाय्येधनभक्षेषुनोव ॥ १ ॥**

**प्र । ते । रथम् । मिथुऽकृतम् । इन्द्रः । अवतु । धृष्णुऽया ।**
**अस्मिन् । आजौ । पुरुऽहूत । श्रवाय्ये । धनऽभक्षेषु । नः । अव ॥ १ ॥**

हेमुद्गल ते रथं मिथूकृतं मिथःकृतं असहायं कृतं अथवा मिथुरिति मिथ्यानाम अ-श्वादिभिः शून्यं कृतं धृष्णुया धर्षणशीलइन्द्र अवतु रक्षतु यद्वा धृष्णुया धर्षणशीलेन वज्रे-ण उभयत्र सुपांसुलुगिति सुपोयाजादेशः । अथ प्रत्यक्षकृतः हेपुरुहूत बहुभिराहूतेन्द्र अ-स्मिन्नाजौ संग्रामे अपहृतगोभिश्चोरैः कृते संग्रामे कीदृशे श्रवाय्ये श्रोतव्ये विश्रुतइत्यर्थः श्रुदक्षीत्यादिना आय्यप्रत्ययः धनभक्षेषु अस्मासु गोरूपधनभजनकामेषु सत्सु यद्वा गोरूपध-नस्य भक्षकेषु चौरेषु जेतव्येषु सत्सु नोस्मानवरक्ष ॥ १ ॥

---

१ नि० ९. २३ ।

अथ द्वितीया—

**उत्स्मवातोवहतिवासोअस्याअधिरथंयदजयत्सहस्रम् ।**
**रथीरभून्मुद्गलानीगविष्टौभरेकृतंव्यचेदिन्द्रसेना ॥ २ ॥**

उत् । स्म । वातः । वहति । वासः । अस्याः । अधिऽरथम् ।
यत् । अजयत् । सहस्रम् । रथीः । अभूत् । मुद्गलानी । गोऽइष्टौ ।
भरे । कृतम् । वि । अचेत् । इन्द्रऽसेना ॥ २ ॥

अस्याः रथीरभून्मुद्गलानीइति वक्ष्यमाणत्वादस्य मुद्गलस्य पत्न्याः सारथिभूतायाः वासोंशुकं वातोवायुरुद्वहति ऊर्ध्वं प्रापयति श्रमजनितस्वेदापनयाय अथवा शीघ्ररथधावनजनितोवायुरंशुकं चालयतीत्यर्थः । कदेत्युच्यते—यद्यदाधिरथं अधिकं रथमारुह्य सहस्रं सहस्रसंख्याकं गोसंघमजयत्तदा यत् यागोसहस्रमजयत् अस्याइतिवा योज्यं यद्योगाज्जयतेर्नंनिघातः गविष्टौ गवामपहृतानामेषणे मुद्गलानी मुद्गलस्यस्त्री रथीरभूत् सारथिरभवत् छान्दसआनुक् इन्द्रसेनास्तुत्या परितुष्टस्येन्द्रस्य सेनानी यद्वा इन्द्रस्य शत्रूणां दारयितुः मुद्गलस्य सेनानीरूपा मुद्गलानी भरे संग्रामे कृतं संपादितं गोसंघं व्यचेत् व्यचिनोत् शत्रुभ्यः पृथक्कृतवती चयतेर्लङिबहुलं छन्दसीति विकरणस्य लुक् ॥ २ ॥

अथ तृतीया—

**अन्तर्यच्छजिघांसतोवज्रमिन्द्राभिदासतः ।**
**दासस्यवामघवन्नार्यस्यवासनुतर्यवयावधम् ॥ ३ ॥**

अन्तः । यच्छ । जिघांसतः । वज्रम् । इन्द्र । अभिऽदासतः ।
दासस्य । वा । मघऽवन् । आर्यस्य । वा । सनुतः । यवय । वधम् ॥३॥

हेइन्द्र जिघांसतोहन्तुमिच्छतः अभिदासतः अभिद्रुह्यतः शत्रोर्वज्रमन्तर्यच्छ अन्तर्गमय । तदेवाह—हेमघवन् धनवन्निन्द्र दासस्यवा उपक्षीणस्याल्पस्य आर्यस्याभिगन्तव्यस्य महतोवा शत्रोः वधं वज्रनामैतत् हननसाधनं वज्रं सनुतः अन्तर्हितनामैतत् अन्तर्हितं गूढं प्रयुज्यमानं यवय पृथक्कुरु ॥ ३ ॥

अथ चतुर्थी—

उद्नोह्रदमपिबज्जर्हृषाणःकूटंस्मतृंहदभिमातिमेति ।
प्रमुष्कभारःश्रवइच्छमानोजिरंबाहूअभरत्सिषासन् ॥ ४ ॥

उद्नः । ह्रदम् । अपिबत् । जर्हृषाणः । कूटम् । स्म । तृंहत् ।
अभिऽमातिम् । एति । प्र । मुष्कऽभारः । श्रवः । इच्छमानः ।
अजिरम् । बाहू इति । अभरत् । सिसासन् ॥ ४ ॥

अत्र वृषभः स्तूयते वृषभः उद्नउदकस्य ह्रदं अगाधजलाशयमपिबत् जर्हृषाणः अत्यन्तं हृषितः सन् तथाकूटं पर्वतशृंगं चोरैर्गोपिधानार्थं निहितं तृंहत् स्म शृंगेण विहिंसितवान् व्यदारयदित्यर्थः । तथा कृत्वा अभिमातिमेति शत्रुं गच्छति हन्तुं पश्चान्मुष्कभारः प्रवृद्धमुष्कः प्रवृद्धस्य वृषभस्य हि मुष्कवृद्धिर्भवति तथा प्रवृद्धोवृषभः श्रवः श्रूयतइति श्रवोयशः इच्छमानः इच्छन् अजिरं गमनशीलं शत्रुं बाहू बाहुभ्यां बाह्वोर्वा प्राभरत् प्रहृतवान् यद्वा अजिरमिति क्षिप्रनाम क्षिप्रं सिषासन् संभक्तुमिच्छन् बाहू प्राभरत् प्रसारितवानित्यर्थः ॥ ४ ॥

अथ पंचमी—

न्यक्रन्दयन्नुपयन्तएनममेहयन्वृषभंमध्यआजेः ।
तेनसूभर्वंशतवत्सहस्रंगवांमुद्गलःप्रधनेजिगाय ॥ ५ ॥

नि । अक्रन्दयन् । उपऽयन्तः । एनम् । अमेहयन् । वृषभम् ।
मध्ये । आजेः । तेन । सूभर्वम् । शतऽवत् । सहस्रम् ।
गवाम् । मुद्गलः । प्रऽधने । जिगाय ॥ ५ ॥

मुद्गलआह तेनेति तच्छब्दश्रुतेर्यच्छब्दाध्याहारः यमेनं वृषभं न्यक्रन्दयत् नितरां क्रन्दनमकुर्वन् के उपयन्तः समीपे गच्छन्तोनराः यथा प्रचण्डेन क्रन्दनेन शत्रवोभीताः पलायन्ते तथा कुर्वन् किं वृषभं वर्षकं सेक्तारं आजेः संग्रामस्य मध्ये अमेहयन् मूत्रपुरीषोत्सर्गं विश्रामार्थं कारितवन्तः सूभर्वं भर्वतिरत्तिकर्मा शोभनचणकादिभक्षकं तादृशोयथाभवति

तथा कृत्वेत्यर्थः । यद्वैतद्गोसहस्रविशेषणं तेन उक्तरूपेण वृषभेण सुभर्वं सुष्ठु यवसास्वादि शतवच्छतोपेतं गवां सहस्रं मुद्गलएतन्नामाहं प्रधने संग्रामे जिगाय अजैषं ॥ ५ ॥

अथ षष्ठी—

कुकर्दवेवृषभोयुक्तआंसीदवांवचीत्सारंथिरस्यकेशी ।
दुधेर्युक्तस्यद्रवंतःसहानंसऋच्छन्तिष्मानिष्पदोमुद्गलानीम्॥६॥२०॥

कुकर्दवे । वृषभः । युक्तः । आसीत् । अवांवचीत् । सारंथिः ।
अस्य । केशी । दुधेः । युक्तस्यं । द्रवंतः । सह । अनंसा ।
ऋच्छन्ति । स्म । निःऽपदः । मुद्गलानीम् ॥ ६ ॥ २० ॥

ककर्दवे हिंसनाय शत्रूणां वृषभोवर्षिता गौर्युक्तआसीत् रथे संबद्धोभूत् केशी केशवान् प्रग्रहवान् अस्य राज्ञोरथस्य वा सारथिर्मुद्गलानीत्यर्थः सारथ्यभिप्रायेण केशीति पुल्लिंगता अवावचीत् वृषभभयजनकं शत्रुभयजनकंवा क्रोशं अकरोत् अथवा केशी केशिनी सारथिरस्य अमुमित्यर्थः अमुं वृषभं शब्दमकारयत् वचपरिभाषणे इत्यस्य केवलस्य अन्तर्णीतण्यर्थस्य यङ्लुगन्तस्य लङि रूपं अथवा अस्य सारथिः सहायभूतः केशी प्रकृष्टकेशोवृषभः अवावचीत् भृशमशब्दयत् । एवंभूतस्य दुधेः दुर्धरस्य अनसा सह द्रवतः शीघ्रं शत्रुमध्ये रथेन सह धावतोवृषभस्य भयंकरशब्देन निष्पदोनिर्गच्छन्तोयोद्धारोमुद्गलानीं मुद्गलस्य योषितं सारथिभूतां प्रति ऋच्छन्तिस्म अगच्छन्नित्यर्थः पाघ्रेत्यादिना ऋच्छादेशः ॥ ६ ॥

॥ इत्यष्टमस्य पंचमे विंशोवर्गः ॥ २० ॥

अथ सप्तमी—

उतप्रधिमुदंहन्नस्यविद्वानुपांयुनग्वंसंगमत्रशिक्षंन् ।
इन्द्रउदांवत्पतिमघ्न्यांनामरंहतपद्यांभिःककुद्मान् ॥ ७ ॥

उत । प्रऽधिम् । उत् । अहन् । अस्य । विद्वान् । उपं । अयुनक् ।
वंसंगम् । अत्रं । शिक्षंन् । इन्द्रः । उत् । आवत् । पतिम् ।
अघ्न्यांनाम् । अरंहत । पद्यांभिः । ककुत्ऽमान् ॥ ७ ॥

उतापिच विद्वान् मुद्गलोस्य रथस्य प्रधिं प्रधिरथच्छिद्रकाष्ठप्रान्तकाष्टः सच रथावयवानामुपलक्षकः रथावयवमुद्दहन् उदगमयत् रथं सन्ननाहेत्यर्थः। तदनन्तरमत्र रथे वंसगं वननीयगमनं वृषभं शिक्षन् शिक्षयन् रज्जुषु स्थापन् उपायुनक् रथसमीपे युगे अयोजयत् युजेर्लङि तिपोहल्ङ्याादिलोपः एवंसति इन्द्रोदेवः अघ्न्यानां अहन्तव्यानां गवां पतिं उत्उत्कृष्टमावत् रक्षामकरोत् पश्चात्ककुद्मान् वृषभः पद्याभिः सरणिभिः अरंहत वेगेनागमत्बहिर्गत्यर्थः॥ ७॥

अथाष्टमी—

शुनमष्ट्राव्यचरत्कपर्दी वरत्रायां दार्वानह्यमानः।
नृम्णानि कृण्वन्बहवे जनाय गाः पस्पशानस्तविषीरधत्त॥ ८॥

शुनम्। अष्ट्राऽवी। अचरत्। कपर्दी। वरत्रायाम्।
दारु। आऽनह्यमानः। नृम्णानि। कृण्वन्। बहवे।
जनाय। गाः। पस्पशानः। तविषीः। अधत्त॥ ८॥

शुनमिति सुखनाम सुखं यथाभवति तथा अष्ट्रावी अष्ट्राप्रतोदः तद्वान् छान्दसोविनिः कपर्दी कपर्दवान् अचरत् संचरति। किंकुर्वन् वरत्रायां वध्रौ दारुकाष्ठं रथांगभूतमानह्यमानः सर्वतोबध्नन् पुनः किंकुर्वन् बहवे जनाय स्वपुत्रभृत्यादिलक्षणाय नृम्णानि धनानि शत्रुसंबन्धीनि सुखानिवा कृण्वन् गाः पस्पशानः स्पृशन् स्पशबाधनस्पर्शनयोः छान्दसोलिटि कानच् एवंकुर्वन् तविषीर्बलानि अधत्त धत्ते जयंप्राप्नोतीत्यर्थः॥ ८॥

अथ नवमी—

इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम्।
येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु॥ ९॥

इमम्। तम्। पश्य। वृषभस्य। युञ्जम्। काष्ठायाः। मध्ये।
द्रुऽघनम्। शयानम्। येन। जिगाय। शतऽवत्।
सहस्रम्। गवाम्। मुद्गलः। पृतनाज्येषु॥ ९॥

चक्षुषस्त्वं चक्षुरसि यद्यस्मात् वृषा अभिमतवर्षकस्त्वं आजिं मुद्गलस्य मम संग्रामं वध्रिणा पाशेन युजा युजौ युक्तौ वृषणा वृषणौ वर्षकावश्वौ रथे योजयित्वा चोदयन् शत्रुषु प्रेरयन् सिषाससि आजिं संभक्तुमिच्छसि तस्माच्चक्षुरसि ॥ १२ ॥

॥ इत्यष्टमस्य पञ्चमे एकविंशोवर्गः ॥ २१ ॥

आशुःशिशानइति त्रयोदशर्चं चतुर्थं सूक्तं इन्द्रपुत्रस्य अप्रतिरथनाम्नआर्षं त्रयोदश्यनुष्टुप् शिष्टास्त्रिष्टुभः बृहस्पतेपरिदीयेत्यस्या बृहस्पतिर्देवता अमीषां चित्तमित्यस्या अप्वाख्या देवी देवता शिष्टाऐन्द्र्यः त्रयोदशी विकल्पेन मारुती तथाचानुक्रान्तं—आशुः सप्तोनैन्द्रोप्रतिरथश्चतुर्थी बार्हस्पत्योपान्त्याप्वादेव्यन्त्यानुष्टुम्मारुतीवेति । साग्निचित्येक्रतौ चित्त्यग्निषु प्रणीयमानेषु दक्षिणतोव्रजता ब्रह्मणैतत्सूक्तं जप्यं । तथाचसूत्रितं—दक्षिणतश्चव्रजं जपत्याशुःशिशानइतिसूक्तं समाप्य्येति । ब्रह्माप्रतिरथंजपित्वेतिच । युद्धार्थं राज्ञः सन्नहनेअनेन सूक्तेन राजा ईक्षितव्यः । सूत्रितं अथैनमन्वीक्षेताप्रतिरथे शासनसौपर्णैरिति ।

तत्र प्रथमा—

आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ।
संक्रन्दनोनिमिषएकवीरःशतंसेनाअजयत्साकमिन्द्रः ॥ १ ॥

आशुः । शिशानः । वृषभः । न । भीमः । घनाघनः ।
क्षोभणः । चर्षणीनाम् । सम्ऽक्रन्दनः । अनिऽमिषः । एकऽवीरः ।
शतम् । सेनाः । अजयत् । साकम् । इन्द्रः ॥ १ ॥

अयमिन्द्रः आशुः शीघ्रकारी व्यापकोवा .शिशानः निशितः शत्रूणां भयजनकइत्यर्थः कइव वृषभोनभीमः बिभेत्यस्मादिति भीमः तादृशोवृषभइव सयथा तीक्ष्णाभ्यां शृंगाभ्यां भीमोभवति तद्वत् अथवा शिशानः तीक्ष्णमतिः व्यत्ययेनात्मनेपदं वृषभोनभीमः वृषभो यथा शृंगाभ्यां भयजनकस्तद्वच्छत्रूणां भयजनकश्च घनाघनः घातकः शत्रूणां हन्तेः पचाद्यचि हन्तेर्घश्चेतिद्विर्वचनं अभ्यासस्याडागमः घत्वंच धात्वभ्यासयोः । चर्षणीनां चर्षणयोमनुष्याः मनुष्याणां द्वेष्याणां क्षोभणः क्षोभयिता संक्रन्दनः सम्यक्क्रन्दयिता प्राणिनां आकर्षणेन

प्रहारेणवा अनिमिषः चक्षुर्निमेषरहितः सर्वदा स्वयज्ञगमनयुद्धादिकार्येष्वनलसइत्यर्थः एकवीरः वीरयत्यमित्रानितिवीरः एकश्चासौ वीरश्च एकवीरः अथवा एकएव विक्रान्तः असहायेन कार्यक्षमइत्यर्थः। ईदृशोयमिन्द्रः शतं सेनाः साकं सह एकोद्योगेनैव अजयत् जयति ॥ १ ॥

अथ द्वितीया—

संक्रन्दनेनानिमिषेणंजिष्णुनायुत्कारेणंदुश्च्यवनेनंधृष्णुना।
तदिन्द्रेणजयततत्सहध्वंयुधोनरइषुंहस्तेनवृष्णा ॥ २ ॥

सम्ऽक्रन्दनेन। अनिऽमिषेणं। जिष्णुना। युत्ऽकारेणं।
दुःऽच्यवनेनं। धृष्णुना। तत्। इन्द्रेण। जयत। तत्।
सहध्वम्। युधः। नरः। इषुंऽहस्तेन। वृष्णा ॥ २ ॥

अस्तुनामेन्द्र उक्तविधस्तथाप्यस्माकं किमिति चेत्तत्राह संक्रन्दनेन अनिमिषेण चोक्तलक्षणेन जिष्णुना जयशीलेन युत्कारेण योधनं युत् युद्धकारिणा कर्मण्यण् दुश्च्यवनेन अन्यैरविचाल्येन च्युङ्प्रुङ् गतौ छन्दसि गत्यर्थेभ्यइति युच् धृष्णुना धर्षकेण ईदृशेनेन्द्रेण तद्युद्धं जयत तत् शत्रुबलं सहध्वं अभिभवत। हेयुधोयोद्धारो हेनरोनेतारः विभाषितं विशेषवचने बहुवचनमिति विशेषवचनं बहुवचनमिति पूर्वस्याविद्यमानत्वनिषेधादुत्तरं निहन्यते। पुनः कीदृशेनेन्द्रेणेति इषुहस्तेन वृष्णा वर्षित्राच ॥ २ ॥

अथ तृतीया—

सइषुंहस्तैःसनिषङ्गिभिर्वशीसंस्रष्टासयुधइन्द्रोगणेनं।
संसृष्टजित्सोमपाबाहुशर्ध्युग्रधन्वाप्रतिंहिताभिरस्ता ॥ ३ ॥

सः। इषुंऽहस्तैः। सः। निषङ्गिऽभिः। वशी। सम्ऽस्रष्टा। सः।
युधः। इन्द्रः। गणेनं। संसृष्टऽजित्। सोमऽपाः। बाहुऽशर्धी।
उग्रऽधन्वा। प्रतिंऽहिताभिः। अस्ता ॥ ३ ॥

पूर्वमंत्रे इन्द्रेण जयतेत्युक्तं अत्रेन्द्रस्य जयसाधनसमर्थत्वं दर्शयति सइन्द्रइषुहस्तैर्भटैः मरुदादिभिर्वशीवश्यैस्तद्वान् तथानिषंगिभिर्युक्तः निषङ्गः खङ्गः तद्वद्भिर्वशी सचेन्द्रायुधं

युध्यमानः सन् इगुपधलक्षणः कः अथवा युधोयुद्धहेतोर्गणेन शत्रुसंघेन सह संस्रष्टा एकीभ वनशीलः यतएवंविधः अतः संसृष्टजित् ये परस्परैकमत्येन युद्धाय संसृष्टाभवन्ति तेषां जेता तथा सोमपाः सोमस्य पाता बाहुशर्धी शर्धोबलं तद्वान् मत्वर्थीयइनिः यद्वा शृधू प्रसहने बाहु भ्यां शर्धयतीत्यभिभवतीति बाहुशर्धी सुप्यजातौणिनिस्ताच्छील्ये इतिणिनिः उग्रधन्वा उग्र तधन्वा प्रतिहिताभिः शत्रुषु प्रेरिताभिरिषुभिः अस्ता मारयिता यत्रेषून्मुंचति तत्र वृथानभव न्तीत्यर्थः ईदृशेनेन्द्रेण जयतीति संबन्धः ॥ ३ ॥

अथ चतुर्थी—

बृहस्पतेपरिदीयारथेनरक्षोहामित्राँअपबाधमानः ।
प्रभञ्जन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविितारथानाम् ॥ ४ ॥

बृहस्पते । परि । दीय । रथेन । रक्षःऽहा । अमित्रान् ।
अपऽबाधमानः । प्रऽभञ्जन् । सेनाः । प्रऽमृणः । युधा । जयन् ।
अस्माकम् । एधि । अविता । रथानाम् ॥ ४ ॥

हेबृहस्पते बृहतां पते पालयितर्देव रथेन परीदीय परिगच्छ दीयतिर्गतिकर्मा आगत्यच रक्षोहा रक्षसां हन्ता अमित्रान् शत्रून् अपबाधमानः सर्वतोनाशयन् तथा सेनाः शत्रुसंबन्धिनीः प्रभंजन् प्रकर्षेण नाशयन् प्रमृणः प्रकर्षेण हिंसन् मृणहिंसायां इगुपधलक्षणः कः केन हिंसन् युधा युद्धेन सावेकाचइति विभक्तेरुदात्तत्वं जयन् एवंसर्वत्र जयं प्रतिपद्यमानः ईदृशस्त्वं अस्माकं रथानामविता रक्षिता एधि भव ॥ ४ ॥

अथ पञ्चमी—

बलविज्ञायःस्थविरःप्रवीरःसहस्वान्वाजीसहमानउग्रः ।
अभिवीरोअभिसत्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ५ ॥

बलऽविज्ञायः । स्थविरः । प्रऽवीरः । सहस्वान् । वाजी ।
सहमानः । उग्रः । अभिऽवीरः । अभिऽसत्वा । सहःऽजाः ।
जैत्रम् । इन्द्र । रथम् । आ । तिष्ठ । गोऽवित् ॥ ५ ॥

सर्वस्य भूतस्य बलं विजानातीति बलविज्ञायः यद्वा बलं ममायमिति सर्वैर्बलत्वेन विज्ञायतइति बलविज्ञायः सर्वस्य बलभूतइत्यर्थः स्थविरोमहान् प्रवीरः प्रकर्षेणवीरः सहस्वान् पराभिभवसामर्थ्यवान् वाजी वेजनवान् अन्नवान्वा सहमानः शत्रूणामभिभविता उग्रउद्गूर्णबलः अभिवीरः अभिगतावीरावीर्यवन्तोनुचरायस्य सतथोक्तः अभिसत्वा अभिगतसत्वा सहोजाः सहसोबलाज्जातः एवं महानुभावस्त्वं हेइन्द्र जैत्रं जयशीलं रथं आतिष्ठ अस्मत्सहायार्थं आरोढुमर्हसि त्वंच गोवित् उदकस्य स्तुतेर्वा लब्धा वेदितावा ॥ ५ ॥

अथ षष्ठी—

गोत्रभिदंगोविदंवज्रबाहुंजयन्तमज्मप्रमृणन्तमोजसा ।
इमंसजाताअनुवीरयध्वमिन्द्रंसखायोअनुसंरभध्वम् ॥ ६ ॥२२॥

गोत्रऽभिदम् । गोऽविदम् । वज्रऽबाहुम् । जयन्तम् । अज्म ।
प्रऽमृणन्तम् । ओजसा । इमम् । सऽजाताः । अनु । वीरयध्वम् ।
इन्द्रम् । सखायः । अनु । सम् । रभध्वम् ॥ ६ ॥ २२ ॥

गोत्रभिदं गाउदकानि त्रायन्तइति गोत्रामेघाः यद्वा गौर्भूमिः तां त्रायन्तइति गोत्राः पर्वताः तेषां भेत्तारं गोविदं उदकस्य लब्धारं वज्रबाहुं वज्रहस्तं प्रहरणार्थेभ्यइति परनिपातः जयन्तं जयनशीलं अज्म गमनशीलं शत्रुबलं ओजसा बलेन जयन्तं यद्वा अज्म आजिं जयन्तं ओजसा बलेन प्रमृणन्तं शत्रूनभिभवन्तं ईदृशं महानुभावमिममिन्द्रं हे सजाताः सहोत्पन्नाः योद्धारोयूयं अनुवीरयध्वं एनमग्रतः कृत्वा अनुपश्चाद्वीरयध्वं वीरकर्मयुद्धं कुरुध्वं शूरवीरविक्रान्तौ वीरशब्दात्तत्करोति तदाचष्टइति णिच् हेसखायः परस्परं सखिभूताः यूयमिममिन्द्रं संरभमाणमनुसंरभध्वं ॥ ६ ॥

॥ इत्यष्टमस्य पंचमे द्वाविंशोवर्गः ॥ २२ ॥

अथ सप्तमी—

अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिन्द्रः ।
दुश्च्यवनःपृतनाषाळयुध्योऽस्माकंसेनाअवतुप्रयुत्सु ॥ ७ ॥

अभि । गोत्राणि । सहसा । गाहमानः । अदयः । वीरः ।
शतऽमन्युः । इन्द्रः । दुःऽच्यवनः । पृतनाषाट् । अयुध्यः ।
अस्माकम् । सेनाः । अवतु । प्र । युत्ऽसु ॥ ७ ॥

अयमिन्द्रोगोत्राणि मेघान् सहसा बलेन अभिगाहमानः प्रविशन् अदयः निर्दयः वीरः विक्रान्तः शतमन्युः बहुयज्ञः बहुक्रोधोवा दुश्च्यवनः अन्यैरचाल्यः स्वयं पृतनाषाट् शत्रुसेनानामभिभविता छन्दसिसहइतिण्विः सहेःसाडःसइति मूर्धन्यादेशः अयुध्यः संप्रहर्तुमशक्यः युधसंप्रहारे छान्दसः क्यप् ईदृगिन्द्रोस्माकं सेनायुत्सु संग्रामेषु प्रावतु प्रकर्षेण रक्षतु ॥ ७ ॥

अथाष्टमी—

इन्द्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः ।
देवसेनानामभिभञ्जतीनांजयन्तीनांमरुतोयन्त्वग्रम् ॥ ८ ॥

इन्द्रः । आसाम् । नेता । बृहस्पतिः । दक्षिणा । यज्ञः । पुरः ।
एतु । सोमः । देवऽसेनानाम् । अभिऽभञ्जतीनाम् । जयन्तीनाम् ।
मरुतः । यन्तु । अग्रम् ॥ ८ ॥

आसां अस्मत्सहायार्थमागतानां देवसेनानां अयमिन्द्रोनेता नायकोस्तु तथा तस्य बृहस्पतिः पुरएतु एवं दक्षिणायज्ञः सोमश्च पुरएत्विति प्रत्येकं संबन्धः । तथा देवसेनानां अभिभंजतीनां अस्मदमित्रानाभिमुख्येन मर्दयन्तीनां जयन्तीनां छन्दसीतिनामउदात्तत्वं जयन्तीनामित्यत्र बहुलवचनान्नभवति तासामग्रं मरुतोयन्तु गच्छन्तु ॥ ८ ॥

अथ नवमी—

इन्द्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रम् ।
महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ ९ ॥

इन्द्रस्य । वृष्णः । वरुणस्य । राज्ञः । आदित्यानाम् । मरुताम् ।
शर्धः । उग्रम् । महाऽमनसाम् । भुवनऽच्यवानाम् । घोषः ।
देवानाम् । जयताम् । उत् । अस्थात् ॥ ९ ॥

वृष्णोवर्षकस्येन्द्रस्य राज्ञोवरुणस्य आदित्यानां मरुतांच उग्रं उद्गूर्णं शर्धोबलं अस्माकं भवत्विति शेषः। किंच महामनसां उदारमनसां भुवनच्यवानां भुवनानां च्यावयितॄणां देवानां घोषः अयं शब्दः उदस्थात् उत्तिष्ठति अनूर्ध्वकर्मत्वादात्मनेपदाभावः॥ ९॥

अथ दशमी—

उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमनांसि।
उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतांयन्तुघोषाः॥ १०॥

उत्। हर्षय। मघऽवन्। आयुधानि। उत्। सत्वनाम्।
मामकानाम्। मनांसि। उत्। वृत्रऽहन्। वाजिनाम्। वाजिनानि।
उत्। रथानाम्। जयताम्। यन्तु। घोषाः॥ १०॥

हेमघवन्निन्द्रास्मदीयान्यायुधानि उद्धर्षय उत्कृष्टं हर्षय प्रहरणेषूद्युक्तानि भवन्त्वित्यर्थः। मामकानां मदीयानां सत्वनां प्राणिनां सैनिकानां मनांसि चोद्धर्षय हेवृत्रहन्निन्द्र वाजिनां अश्वानां वाजिनानि वेगाः उद्यन्तु तथा जयतां रथानां घोषाउद्यन्तु॥ १०॥

अथैकादशी—

अस्माकमिन्द्रःसमृतेषुध्वजेष्वस्माकंयाइषवस्ताजयन्तु।
अस्माकंवीराउत्तरेभवन्त्वस्माँउदेवाअवताहवेषु॥ ११॥

अस्माकम्। इन्द्रः। समऽऋतेषु। ध्वजेषु। अस्माकम्। याः
इषवः। ताः। जयन्तु। अस्माकम्। वीराः। उत्ऽतरे। भवन्तु।
अस्मान्। ऊँ इति। देवाः। अवत। हवेषु॥ ११॥

अस्माकं संबन्धिष्वेव समृतेषु परसेनां संप्राप्तेषु ध्वजेषु ध्वजवत्सु सैनिकेषु इन्द्रोरक्षिता भवतु तथा अस्माकं याइषवः सन्ति ताएव जयन्तु शत्रून्। तथास्माकं वीराभटाउत्तरे उपरिभवन्तु हेदेवाअस्माँउ अस्मानेव अवत रक्षत हवेषु संग्रामेषु॥ ११॥

अथ द्वादशी—

**अमीषांचित्तंप्रतिलोभयन्तीगृहाणाङ्गान्यप्वेपरेहि ।**
**अभिप्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥ १२ ॥**

अमीषाम् । चित्तम् । प्रतिऽलोभयन्ती । गृहाण । अङ्गानि । अप्वे । परा । इहि । अभि । प्र । इहि । निः । दह । हृत्ऽसु । शोकैः । अन्धेन । अमित्राः । तमसा । सचन्ताम् ॥ १२ ॥

हे अप्वे पापाभिमानिनि देवते अमीषां योद्धृणां शत्रूणां चित्तं प्रतिलोभयन्ती विमोहयन्ती सती अंगानि तेषामवयवान् शिरआदिकान् गृहाण स्वीकुरु अभिप्रेहि अभिगच्छ तेषां समीपं गत्वाच हृत्सु हृदयेषु शोकैर्निर्दह नितरां भस्मी कुरु । ते अमित्राअस्मच्छत्रवोन्धेन तमसा सचन्तां संगच्छन्तां ॥ १२ ॥

अथ त्रयोदशी—

**प्रेताजयतानरइन्द्रोवःशर्मयच्छतु ।**
**उग्रावःसन्तुबाहवोनाधृष्यायथासथ ॥ १३ ॥ २३ ॥**

प्र । इत । जयत । नरः । इन्द्रः । वः । शर्म । यच्छतु । उग्राः । वः । सन्तु । बाहवः । अनाधृष्याः । यथा । असथ ॥ १३ ॥ २३॥

हे नरोनेतारः संग्रामस्य निर्वोढारोयोद्धारः प्रेत प्रकर्षेणगच्छत गत्वाच जयत तान् प्रतिभटान् । तिङःपरत्वात्तिङ्ङतिङइति निघाताभावः । वोयुष्माकमिन्द्रः शर्मसुखं यच्छतु प्रयच्छतु वोबाहवउग्राउद्गूर्णबलाः सन्तु भवन्तु अनाधृष्याःअन्यैरनभिभव्याः यूयमसथ भविष्यथ तथा उग्राः सन्तु वोबाहवः ॥१३ ॥

॥ इत्यष्टमस्य पंचमे त्रयोविंशोवर्गः ॥ २३ ॥

असावीत्येकादशर्चं पञ्चमं सूक्तं वैश्वामित्रस्याष्टकस्यार्षं त्रैष्टुभमैन्द्रं । तथाचानुक्रान्तम्—असाव्येकादशाष्टकोवैश्वामित्रइति । गतः सूक्तविनियोगः ।

तत्र प्रथमा—

असा॑वि॒सोमः॑पुरुहूत॒तुभ्यं॒हरि॑भ्यांय॒ज्ञमुप॑याहि॒तूय॑म् ।
तुभ्यं॒गिरो॒विप्र॑वीराइया॒नाद॑धन्वि॒रइ॑न्द्र॒पिबा॑सु॒तस्य॑ ॥ १ ॥

असा॑वि । सोमः॑ । पु॒रु॒ऽहू॒त । तु॒भ्य॑म् । हरि॑ऽभ्याम् । य॒ज्ञम् ।
उप॑ । या॒हि॒ । तूय॑म् । तु॒भ्य॑म् । गिरः॑ । विप्र॑ऽवीराः ।
इ॒या॒नाः । द॒ध॒न्वि॒रे । इ॒न्द्र॒ । पिब॑ । सु॒तस्य॑ ॥ १ ॥

हे पुरुहूत बहुभिः स्तोतृभिराहूत तुभ्यं त्वदर्थं सोमः असावि अभिषुतोभूत् षुञ् अ-भिषवे इत्यस्मात् कर्मणि लुङ् अतोहरिभ्यां हरितवर्णाभ्यामश्वाभ्यां यज्ञमस्मदीयं तूयं तूर्णं उपयाहि उपागच्छ तुभ्यं त्वदर्थं गिरोस्मदीयाः स्तुतयोविप्रवीराः विप्रामेधाविनोवीराविशेषे-ण प्रेरयितारः प्रोद्गमयितारोयासां तास्तथोक्ताः इयानागमनशीला दधन्विरे गम्यन्तेस्माभिः युष्मत्प्रीणनाय प्राप्यन्तइत्यर्थः । ईङ् गतौ ताच्छीलिकश्चानश् छान्दसोविकरणस्य लुक् धविर्गत्यर्थः इदित्वान्नुम् कर्मणिछान्दसोलिट् । यतएवमतः सुतस्याभिषुतस्यांशं सुतं सोमं वा पिब ॥ १ ॥

प्रथमेपर्याये ब्राह्मणाच्छंसि शस्त्रे अप्सुधूतस्येत्येषा याज्या । सूत्रितंच—अप्सुधूतस्यहरिवः पिबेहेति याज्येति ।

सैषा सूक्ते द्वितीया—

अ॒प्सुधू॑तस्य॑हरिवः॒पिबे॒हनृभि॑ःसु॒तस्य॑ज॒ठरं॑पृणस्व ।
मि॒मि॒क्षुर्यमद्र॑यइन्द्र॒तुभ्यं॒तेभि॑र्वर्धस्व॒मद॑मुक्थवाहः ॥ २ ॥

अ॒प्ऽसु । धूतस्य॑ । ह॒रि॒ऽवः॒ । पिब॑ । इ॒ह । नृऽभिः॑ । सु॒तस्य॑ ।
ज॒ठर॑म् । पृ॒ण॒स्व॒ । मि॒मि॒क्षुः । यम् । अद्र॑यः । इ॒न्द्र॒ । तुभ्य॑म् ।
तेभिः॑ । व॒र्ध॒स्व॒ । मद॑म् । उ॒क्थ॒ऽवा॒हः॒ ॥ २ ॥

हेहरिवः ऋक्सामेवा इन्द्रस्य हरीइति श्रुतेः[1] । स्तोत्रशस्त्राधारभूताभ्यामृक्सामाभ्यां हरिभ्यां तद्वन्निन्द्र अप्सु एकधनादिषूदकेषु धूतस्य कंपितस्य अभिषुतस्येत्यर्थः तथानृभिः कर्मनेतृभिः कर्म

१ ऐ० ब्रा० २. २४.

निर्वाहकैः अध्वर्य्वादिभिः सुतस्याभिषुतस्य उभयत्रक्रियाग्रहणंकर्तव्यमिति कर्मणः संप्रदान संज्ञायां चतुर्थ्यर्थे बहुलंछन्दसीति षष्ठी । ईदृशं सोममिहास्मिन्यज्ञे पिब पीत्वाच जठरं स्वकीयं पृणस्वपूरयच चादिलोपेविभाषेति प्रथमातिङ्विभक्तिर्ननिहन्यते । यंसोमं अद्रयोभिषवग्रावाणः हेइन्द्र तुभ्यं त्वदर्थं मिमिक्षुः सेक्तुमभिषोतुमैच्छन् अभिषवमकुर्वन्नित्यर्थः मिहसेचनइत्यस्य सनि लिड्युसि रूपं । हेउक्थवाहः उक्थैः शस्त्रैः उह्यमानस्तेभिस्तैर्मदं वर्धस्व ॥ २ ॥

द्वितीयपर्याये ब्राह्मणाच्छंशिनः प्रोग्रामित्येषा याज्या । सूत्रितंच—अश्वावतिप्रथमः प्रोग्रां पीतिं वृष्णइयर्मि सत्यामितियाज्येति ।

सैषा तृतीया—

प्रोग्रांपी॒तिंवृष्णं॑इयर्मिस॒त्यांप्र॒यैसु॒तस्य॑हर्यश्व॒तुभ्य॑म् ।
इन्द्र॒धेना॑भिरि॒हमा॑दयस्वधी॒भिर्विश्वा॑भिः॒शच्या॑गृणा॒नः ॥ ३ ॥

प्र । उ॒ग्राम् । पी॒तिम् । वृष्णे॑ । इ॒यर्मि॑ । स॒त्याम् । प्र॒ऽयै ।
सु॒तस्य॑ । ह॒रि॒ऽअ॒श्व॒ । तुभ्य॑म् । इन्द्र॑ । धेना॑भिः ।
इ॒ह । मा॒द॒य॒स्व॒ । धी॒भिः । विश्वा॑भिः । शच्या॑ । गृ॒णा॒नः ॥ ३ ॥

हेहर्यश्व वृष्णे वर्षकाय तुभ्यं उग्रां उद्गूर्णां सत्यां पीतिं सोमपानं प्रेयर्मि प्रेरयामि किमर्थं प्रयै प्रगमनाय । कस्य पीतिं सुतस्याभिषुतस्य । अथो हे इन्द्र शच्या शक्त्या कर्मणा वा युक्तोगृणानः स्तूयमानस्त्वं विश्वाभिः सर्वाभिः धेनाभिः स्तुतिवाग्भिः विश्वाभिर्धीभिः सर्वैः कर्मभिश्चेहास्मिन् यज्ञे मादयस्व तृप्यस्व मदतृप्तियोगे आत्मनेपदं ॥ ३ ॥

तृतीये पर्याये ब्राह्मणाच्छंसिनः शस्त्रे ऊतीशचीवइत्येषा याज्या । सूत्रितंच—ऊतीशचीवस्तववीर्येणेतियाज्येति ।

सैषा चतुर्थी—

ऊ॒तीशं॑चीव॒स्तव॑वी॒र्ये॑ण॒वयो॒दधा॑नाउ॒शिज॑ऋत॒ज्ञाः ।
प्र॒जाव॑दिन्द्र॒मनु॑षोदुरो॒णेत॒स्थुर्गृ॒णन्तः॑सध॒माद्या॑सः ॥ ४ ॥

ऊती । शचीऽवः । तव॑ । वीर्ये॑ण । वयः॑ । दधा॑नाः । उशिजः॑ ।
ऋतऽज्ञाः । प्रजाऽवत् । इन्द्र । मनु॑षः । दुरोणे । तस्थुः ।
गृणन्तः॑ । सधऽमाद्या॑सः ॥ ४ ॥

हेशचीवः शक्तिवन्निन्द्र तव ऊती ऊत्या रक्षणेन तववीर्येण वयोन्नं प्रजावत्प्रजोपेतं दधानाः धारयन्तः उशिजस्त्वामेव कामयमानाः ऋतज्ञाः ऋतं यज्ञमहर्जानन्तोंगिरसः सत्रमनुतिष्ठन्तः षष्ठेहनि प्रयोगमूढाः सन्तोनाभानेदिष्ठेन पारंगताः यतः अतस्तेशाम्तज्ञत्वं ईदृशोंगिरसोमनुषोमनुष्यस्य यजमानस्य दुरोणे यज्ञगृहे गृणन्तस्त्वां स्तुवन्तः सधमाद्यासः सहमाद्यन्तः तस्थुः तिष्ठन्ति मादयतेः कृत्यल्युटोबहुलमिति वचनात्कर्तरि अचोयदितियत् छान्दसः सधादेशः अतोवयमपि तिष्ठेमेत्यर्थः ॥ ४ ॥

अथ पंचमी—

प्रणी॑तिभिष्टेहर्य॑श्वसुष्टोःसुषुम्नस्य॑पुरुरुचोजना॑सः ।
मंहि॑ष्ठामूतिंवितिरे॑दधा॑नाःस्तोतार॑इन्द्रतव॑सूनृता॑भिः ॥ ५ ॥ २४ ॥

प्रनी॑तिऽभिः । ते । हरिऽअश्व । सुऽस्तोः । सुऽसुम्नस्य॑ ।
पुरुऽरुचः॑ । जना॑सः । मंहि॑ष्ठाम् । ऊतिम् । विऽतिरे॑ । दधा॑नाः ।
स्तोतार॑म् । इन्द्र । तव॑ । सूनृता॑भिः ॥ ५ ॥ २४ ॥

हेहर्यश्व हरितवर्णाश्वोपेतेन्द्र सुस्टोः सुष्ठु स्तूयमानस्य सुषुम्नस्य सु सुखस्य सुधनस्यवा पुरुरुचोबहुदीप्तेस्ते तव प्रणीतिभिः प्रणयनैर्धनादिप्रदानैर्जनासोजनाः स्तोतारः सूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः एतत् प्रणीतिभिरित्यनेन समुच्चीयते वितिरे अन्येभ्योर्थिभ्योवितरणाय मंहिष्ठां अतिशयेन मंहनीयां तव संबन्धिनीं ऊतिं रक्षां दधाना आसत इतिशेषः ॥ ५ ॥

॥ इत्यष्टमस्य पञ्चमे चतुर्विंशोवर्गः ॥ २४ ॥

अथ षष्ठी—

उपब्रह्मा॑णिहरिवोहरि॑भ्यांसोम॑स्ययाहिपीतये॑सुतस्य॑ ।
इन्द्र॑त्वायज्ञःक्षम॑माणमानड्दाश्वाँअस्यध्वरस्य॑प्रकेतः ॥ ६ ॥

उप॑ । ब्रह्मा॑णि । ह॒रि॒ऽव॒ः । हरि॑ऽभ्याम् । सोम॑स्य । या॒हि॒ ।
पी॒तये॑ । सु॒तस्य॑ । इन्द्र॑ । त्वा॒ । य॒ज्ञः । क्षम॑माणम् । आ॒न॒ट् ।
दा॒श्वान् । अ॒सि॒ । अ॒ध्व॒रस्य॑ । प्र॒ऽके॒तः ॥ ६ ॥

हेहरिवोहरिवन्निन्द्र सुतस्याभिषुतस्य सोमस्य पीतये पानाय ब्रह्माणि परिवृढानि अस्मदीयानि कर्माणि स्तोत्राणिवा उपयाहि उपागच्छ केन साधनेनेति तदुच्यते—हरिभ्यामश्वाभ्यां ताभ्यां युक्तेन रथेनेत्यर्थः यद्वा हरिभ्यां हरिवइति संबन्धनीयं । हेइन्द्र क्षममाणं त्वा त्वां यज्ञः सोमयाग आनट् व्याप्नोति नशतेर्लुङि मंत्रेघसेति च्लेर्लुक् छन्दस्यपि दृश्यते इति आडागमः अश्नोतेरेव वा लिटिछान्दसस्तत्प्रत्ययस्यलोपः अश्नोतेश्चेति नुडागमः अध्वरस्य यागस्य प्रकेतः प्रकर्षेण जानंस्त्वं दाश्वानसि दातासि कर्मफलस्य ॥ ६॥

अथ सप्तमी—

स॒हस्र॑वाजमभिमाति॒षाहं॑सु॒तेर॑णंम॒घवा॑नंसुवृ॒क्तिम् ।
उप॑भूषन्ति॒गिरो॒अप्र॑तीत॒मिन्द्रं॑नम॒स्याज॑रि॒तुः॑पनन्त ॥ ७ ॥

स॒हस्र॑ऽवाजम् । अ॒भि॒मा॒ति॒ऽसह॑म् । सु॒तेऽर॑णम् । म॒घऽवा॑नम् ।
सु॒ऽवृ॒क्तिम् । उप॑ । भू॒ष॒न्ति॒ । गिर॑ः । अप्र॑तिऽइतम् । इन्द्र॑म् ।
न॒म॒स्याः । ज॒रि॒तुः । प॒न॒न्त॒ ॥ ७ ॥

सहस्रवाजं अपरिमितान्नं अपरिमितबलंवा अभिमातिषाहं अभिमातीनां सर्वतोहिंसकानां शत्रूणामभिभवितारं सुतेरणं अभिषुते सोमे रममाणं मघवानं धनवन्तं सुवृक्तिं शोभनस्तुतिकं अप्रतीतं युद्धे अन्यैरप्रतिगतमिन्द्रं गिरः स्तुतिरूपावाचः उपभूषन्ति अलंकुर्वन्ति तदेवाह जरितुः स्तोतुः नमस्याः स्तुतयः पनन्त स्तुवन्ति ॥ ७ ॥

अथाष्टमी—

स॒प्तापो॑दे॒वीः सु॒रणा॒अमृ॑क्ता॒याभिः॒सिन्धु॒मत॑रइन्द्रपू॒र्भित् ।
न॒व॒तिंस्रो॒त्यानव॑चस्रव॑न्तीर्दे॒वेभ्यो॑गा॒तुंमनु॑षेचविन्दः ॥ ८ ॥

सप्त । आपः । देवीः । सुऽरणाः । अमृक्ताः । याभिः । सिन्धुम् ।
अतरः । इन्द्र । पूःऽभित् । नवतिम् । स्रोत्याः । नव । च ।
स्रवन्तीः । देवेभ्यः । गातुम् । मनुषे । च । विन्दः ॥ ८ ॥

हेइन्द्र त्वदाज्ञया सप्त एतत्संख्याकाआपः अब्रूपादेवीः देव्योगंगाद्याः सुरणाः सुष्ठुरममाणाः शोभमानाः शोभनशब्दावा । रणिः शब्दार्थः वशिरण्योरुपसंख्यानमिति भावेअप् बहुव्रीहावाद्युदात्तं द्व्यचूछन्दसीत्युत्तरपदाद्युदात्तत्वं । अमृक्ता अहिंसिताः प्रवहन्तीनिशेषः हेइन्द्र पूर्भित् पुरां भेत्ता त्वं याभिर्गंगादिभिः सप्तनदीभिः सिंधुं समुद्रमतरः प्रावर्धयइत्यर्थः । यद्वा सप्तसर्पणस्वभावाः उक्तलक्षणाः आपोदेव्यः त्वयासृष्टाः प्रवहन्ति याभिः सिन्धुं नदीमातरः । किंच त्वं नवतिं नवच नवोत्तरं नवतिसंख्याकाः स्रवन्तीः प्रवहन्तीः स्रोत्याः नदीनामैतद नदीर्देवेभ्योहविरर्थं मनुषे मनुष्याय भोगार्थंच गातुं गन्तव्यं तासां मार्गंच विन्दः अलभथाः ॥ ८ ॥

अथ नवमी—

अपोमहीरभिशंस्तेरमुञ्चोजागरास्वधिदेवएकः ।
इन्द्रयास्त्वंवृत्रतूर्येचकर्थताभिर्विश्वायुस्तन्वंपुपुष्याः ॥ ९ ॥

अपः । महीः । अभिऽशंस्तेः । अमुञ्चः । अजागः । आसु ।
अधि । देवः । एकः । इन्द्र । याः । त्वम् । वृत्रऽतूर्ये । चकर्थ ।
ताभिः । विश्वऽआयुः । तन्वम् । पुपुष्याः ॥ ९ ॥

हेइन्द्र महीर्महतीरपउदकानि अभिशस्तेः अभिशंसकाद्वृत्रादमुंचः आसु मुक्तास्वप्सु देवस्त्वमेकः एकएवासहायः सन् अध्यजागः अप्रमत्तोभवसि यद्वा अधीति सप्तम्यर्थानुवादी हेइन्द्र त्वं याअपोवृत्रतूर्ये वृत्रहत्यायां चकर्थ करोषि ताभिरद्भिर्विश्वाभिः सर्वाभिस्त्वं तनुं स्वकीयं शरीरं पुपुष्याः पोषयेः पुषपुष्टावित्यस्य व्यत्ययेनश्लुः ॥ ९ ॥

अथ दशमी—

वीरेण्यःक्रतुरिन्द्रःसुशस्तिरुतापिधेनापुरुहूतमीट्टे ।
आर्दयद्वृत्रमकृणोदुलोकंससाहेशक्रःपृतनाअभिष्टिः ॥ १० ॥

वीरेण्यः । क्रतुः । इन्द्रः । सुऽशस्तिः । उत । अपि । धेना ।
पुरुऽहूतम् । ईट्टे । आर्दयत् । वृत्रम् । अकृणोत् । ऊँ इति ।
लोकम् । ससहे । शक्रः । पृतनाः । अभिष्टिः ॥ १० ॥

इन्द्रोवीरेण्योवीरैर्गन्तव्यः अतिशयेन वीरोवा क्रतुः कर्मवान् सुशस्तिः शोभनस्तुतिकः उतापिच अपीत्यनर्थकः अपिच धेना वाङ्नामैतत् प्रीणयित्री स्तुतिवाक् पुरुहूतं इन्द्रं ईट्टे स्तौति पूजयतिवा यतउक्तलक्षणः अतः स्तौतीत्यर्थः किंचायं वृत्रं आवरकमेतन्नामकमसुरं आर्दयत् हतवानित्यर्थः । उ अपिच लोकं लोकयतइतिलोकः प्रकाशः तमकृणोदकरोत् आवरकमसुरं हत्वा प्रकाशं कृतवानित्यर्थः नकेवलं तमेकमेव अपितु शक्रः शक्तइन्द्रः अभिष्टिः शत्रूणामभिगन्ता पृतनाः शत्रुसेनाः ससहे अभ्यभवत् ॥ १० ॥

अथैकादशी—

शुनंहुवेममघवानमिन्द्रमस्मिन्भरेनृतमंवाजसातौ ।
शृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसंजितंधनानाम् ॥११॥२५॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे ।
नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु ।
घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥ २५ ॥

इयं पूर्वं व्याख्याता ॥ ११ ॥

॥ इत्यष्टमस्य पंचमे पंचविंशोवर्गः ॥ २५ ॥

कदेत्येकादशर्चं षष्ठं सूक्तं ऐन्द्रं कुत्सपुत्रोनाम्ना दुर्मित्रोगुणतः सुमित्रः यद्वा नाम्ना सुमित्रोगुणतोदुर्मित्रः सऋषिः हरी यस्य सुयुजा वज्रंयश्वकइति द्वे पिपीलिकमध्ये एकादशषट्कैकादशके औष्णिहौ अंत्यात्रिष्टुप् आद्यागायत्रीवा अक्षरव्यूहेन पक्षान्तरे उष्णिक् शिष्टाभिः सर्वाभिः सप्तौष्णिहः । तथाचानुक्रान्तं—कदाकौत्सोदुर्मित्रोनामतः सुमित्रोगुणतः सुमित्रोवानाम्नादुर्मित्रोगुणतऔष्णिहं हरीवज्रं पिपीलिकमध्ये त्रिष्टुबंत्याद्यागायत्रीवेति । गतोविनियोगः ।

तत्र प्रथमा—

**कदावंसोस्तोत्रंहर्यतआवंश्मशारुधद्वाः। दीर्घंसुतंवाताप्याय ॥१॥**

कदा। वसो इति। स्तोत्रम्। हर्यते। आ। अव। श्मशा।
रुधत्। वारिति वाः। दीर्घम्। सुतम्। वाताप्याय॥ १ ॥

हेवसो वासयितरिन्द्र स्तोत्रमस्मत्कर्तृकं हर्यते कामयमानाय कामयमानं त्वां क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी कदा कस्मिन्काले अवरुधत् अवरोत्स्यति अवरुध्यच कदा वाः वारयिष्यति तादृशकालः कदास्माकं संभविष्यतीत्याशास्ते रुधेर्लुङि इरितोवेति च्लेरङादेशः वारिति वृणोतेर्ण्यन्ताल्लुङि छान्दसः शपोलुक् छन्दस्युभयथेतितिपआर्धधातुकत्वाण्णेरनिटीति णिलोपे हल्ङ्याब्भ्यइति तिलोपः। तत्र दृष्टान्तः—अश्नुते क्षेत्रमिति श्मशा कुल्या लुप्तोपममेतत् यथा कुल्या इतस्ततउदकान्यवरुणद्धि अवरुध्यच वारयति तथेत्यर्थः। किमुद्दिश्यावरोधइति तत्राह दीर्घं सवनत्रयरूपेण आयतं सुतमभिषुतं सोमं प्रति किमर्थमिति तदाह वाताप्याय वातेनाप्यते अधस्तान्निपात्यतइति वाताप्यमुदकं तस्य प्रदानायेत्यर्थः॥१॥

अथ द्वितीया—

**हरीयस्यंसुयुजाविव्रंतावेरर्वन्तानुशेपां।**
**उभारजीनकेशिनापतिर्दन्॥ २ ॥**

हरी इति। यस्य। सुऽयुजा। विऽव्रता। वेः। अर्वन्ता। अनु।
शेपा। उभा। रजी इति। न। केशिना। पतिः। दन्॥ २ ॥

यस्येन्द्रस्य हरी हरितवर्णावश्वौ सुयुजा सुयुजौ सुष्ठु नियोज्यौ सुशिक्षितावित्यर्थः विव्रता व्रतमिति कर्मनाम विशिष्टकर्माणौ अर्वन्तौ अरणकुशलौ शेपा शेपौ शेपवन्तौ मत्वर्थोलुप्यते प्रशस्तपुंस्त्वावित्यर्थः उभा उभौ रजीन रजसी द्यावापृथिव्याविव यद्वा महान्तौ रंजकौ सूर्याचन्द्रमसाविव केशिना केशिनौ प्रकाशमानौ केशवन्तौवा ईदृशावश्वौ हेइन्द्र यस्यते तव स्वभूतौ तयोः पतिः स्वामी त्वं दन् धनानि प्रयच्छन् अनुवेः स्तुतशस्त्रादीन्यनुका-

मयस्व दन्निति ददातेः शतरि छन्दस्युभयथेत्यार्धधातुकत्वादातोलोपइटिचेत्याकारलोपः अतएव श्लवभावश्च ॥ २ ॥

अथ तृतीया—

अपयोरिन्द्रःपापंजआमर्तोनशश्रमाणोबिभीवान् ।
शुभेयद्युयुजेतविषीवान् ॥ ३ ॥

अप॑ । योः । इन्द्रः । पाप॑जे । आ । मर्तः । न । शश्रमाणः ।
बिभीवान् । शुभे । यत् । युयुजे । तविषीऽवान् ॥ ३ ॥

यइन्द्रः पापजे आ आइत्यनर्थकः पापाज्जायतइति पापजोवृत्रः तस्मिन् मर्तोन मनुष्यइव शश्रमाणः तेन सह युद्धे श्राम्यन् बिभीवान् बिभ्यच्च भवति श्राम्यतेश्छन्दसि लिट् तस्य व्यत्ययेन कानच् सइन्द्रोयद्यदा तविषीवान् मरुद्भिर्बलैर्बलवान् युयुजे युज्यते संपद्यते शुभे शोभार्थं तदानीमपयोः तस्य वृत्रस्यापयोः अपयोजिता भवति ॥ ३ ॥

अथ चतुर्थी—

सचायोरिन्द्रश्चर्कृषआँउपानसःसपर्यन् ।
नदयोर्विव्रतयोःशूरइन्द्रः ॥ ४ ॥

सचा॑ । आयोः । इन्द्रः । चर्कृषे । आ । उपानसः । सपर्यन् ।
नदयोः । विऽव्रतयोः । शूरः । इन्द्रः ॥ ४ ॥

आयोः मनुष्यनामैतत् मनुष्यस्य स्तोतुः चर्कृषे पुनःपुनर्विलेखनाय धनप्रदानायेत्यर्थः सचासह दातव्यैर्धनैः सहितः यद्वा आयोः सचासहायभूतः उपानसः अनउपगतवान् अत्यादयः क्रान्ताद्यर्थे द्वितीययेति प्रादिसमासः अनसन्तान्नपुंसकादिति समासान्तष्टच् आरूढरथइत्यर्थः सपर्यन् धनैः स्तोतारं पूजयन् यद्वा व्यत्ययेन कर्तृप्रत्ययः स्तुतिभिर्हविर्भिश्च पूज्यमानः उक्तगुणविशिष्टः सन् आआगच्छति उपसर्गश्रुतेरुचितक्रियाध्याहारः । कीदृशइन्द्रः नदयोः हेषाशब्दं कुर्वतोः विव्रतयोः विशिष्टकर्मणोरश्वयोः नियन्ताशूरोविक्रान्तः ॥ ४ ॥

अथ पञ्चमी–

अधियस्तस्थौकेशवन्ताव्यचस्वन्तानपुष्ट्यै ।
वनोतिशिप्राभ्यांशिप्रिणीवान् ॥ ५ ॥ २६ ॥

अधि । यः । तस्थौ । केशऽवन्ता । व्यचस्वन्ता । न । पुष्ट्यै ।
वनोति । शिप्राभ्याम् । शिप्रिणीऽवान् ॥ ५ ॥ २६ ॥

यइन्द्रः केशवन्ता केशिनौ व्यचस्वन्ता व्यचनवन्तौ व्याप्तिमन्तौ नेत्यनर्थकोनिपातः ईदृशावश्वौ पुष्ट्यै पोषणाय यजमानस्यात्मनोवा अधितस्थौ अधितिष्ठति आरोहति अधिशीङ्स्थासांकर्मेतिकर्मणोधिकरणसंज्ञा ।यद्वा नेति चार्थे तेन गुणौ समुच्चीयेते प्रशस्तकेशौ व्यचस्वन्तौ चेत्यर्थः सशिप्राभ्यां हनूभ्यां प्रशस्ताभ्यां शिप्रिणीवान् शिप्रवानिन्द्रः एकोमत्वर्थीयोनुवादः वनोति सोमान् याचते वनुयाचने यद्वा वनुष्यतिर्हन्तिकर्मा शत्रून् हिनस्ति ॥ ५॥

॥ इत्यष्टमस्य पञ्चमे षड्विंशोवर्गः ॥ २६ ॥

अथ षष्ठी–

प्रास्तौदृष्वौजाऋष्वेभिस्ततक्षशूरःशवसा ।
ऋभुर्नक्रतुभिर्मातरिश्वा ॥ ६ ॥

प्र । अस्तौत् । ऋष्वऽओजाः । ऋष्वेभिः । ततक्ष । शूरः ।
शवसा । ऋभुः । न । क्रतुऽभिः । मातरिश्वा ॥ ६ ॥

ऋष्वौजाः दर्शनीयबलोव्याप्तबलोवा ऋष्वेभिर्दर्शनीयैर्मरुद्भिः सह प्रास्तौत प्रस्तौति स्तुत्यादिकं सम्यक्कृतमनेनेति प्रशंसति यद्वा कर्मणि कर्तृप्रत्ययः प्रकर्षेण स्तुतोभूत यइन्द्रः शूरोविक्रान्तो मातरिश्वा वृष्टेर्निर्मातर्यन्तरिक्षे श्वसन् वर्तमानःसन् शवसा बलेन क्रतुभिः क्रियमाणैः कर्मभिः यद्वा क्रतुरिति प्रज्ञानाम बलेन प्रज्ञाभिश्च ततक्ष वृत्रवधादिकं चकार तत्र दृष्टान्तः—ऋभुर्न ऋभवइव सुपांसुलुगिति जसः सुः आदेशः ऋभवोयथा कर्मभिः प्रज्ञाभिश्चानन्यसाधारणरथचमसादिनिर्माणमकुर्वन् तद्वदित्यर्थः ॥ ६ ॥

अथ सप्तमी—

वज्रंयश्चक्रेसुहनायदस्यवेहिरीमशोहिरीमान् ।
अरुतहनुरद्भुतंनरजः ॥ ७ ॥

वज्रम् । यः । चक्रे । सुऽहनाय । दस्यवे । हिरीमशः । हिरीमान् ।
अरुतऽहनुः । अद्भुतम् । न । रजः ॥ ७ ॥

यइन्द्रः सुहनाय सुष्ठुहननीयाय दस्यवे उपक्षपयित्रे शत्रवे तस्य वधाय वज्रं प्रहरण-साधनमायुधं चक्रे कृतवान् सत्वं वृजिना शिशीहीति उत्तरत्र संबन्धः । कीदृशइन्द्रः हिरीमशः हरितश्मश्रुः पृषोदरादिः हिरीमान् हरिताश्वोहरितवर्णोवा अरुतहनुः अबाधितहनुः किमिव अद्भुतं न रजः अद्भुतमिति महन्नाम रजइति रंजकमन्तरिक्षमुच्यते महदन्तरिक्षमिव तद्यथा अन्यैरबाध्यं भवति तद्वत् ॥ ७ ॥

अथाष्टमी—

अवनोवृजिनाशिशीह्यृचावनेमानृचः ।
नाब्रह्मायज्ञऋधग्जोषतित्वे ॥ ८ ॥

अव । नः । वृजिना । शिशीहि । ऋचा । वनेम । अनृचः ।
न । अब्रह्मा । यज्ञः । ऋधक् । जोषति । त्वे इति ॥ ८ ॥

हेइन्द्र नोस्माकं वृजिना वृजिनानि वर्जनीयानि पापानि अवशिशीहि अत्यर्थं तनूकुरु विनाशयेत्यर्थः वयंच ऋचा स्तुत्या साधनेन अनृचः अस्तुतिकान् अयजमानान् वनेम हिंसाम अब्रह्मा ब्रह्म परिवृढं स्तोत्रं स्तुतिविरहितोयज्ञऋधक् सस्तुतिकाद्यज्ञात्पृथग्भूतस्त्वेत्वयि नजोष-ति नसेवते त्वां नप्रीणयतीत्यर्थः । जुषी प्रीतिसेवनयोः व्यत्ययेन शप् परस्मैपदंच ॥ ८ ॥

अथ नवमी—

ऊर्ध्वायत्तेत्रेतिनीभूद्यज्ञस्यधूर्षुसद्मन् ।
सजूर्नावंस्वयशसंसचायोः ॥ ९ ॥

ऊर्ध्वा । यत् । ते । त्रेतिनी । भूत् । यज्ञस्य । धूःऽसु । सद्मन् ।
सऽजूः । नावम् । स्वऽयशसम् । सचा । आयोः ॥ ९ ॥

हेइन्द्र तेतव स्वभूतात्रेतिनी त्रेताग्निरयं यद्वा त्रेतिनी क्रिया सा यद्यदा ऊर्ध्वा उन्नता प्रवृत्ता भूदभूत् यद्योगादनिघातः कुत्र स्थानइति यज्ञस्य यागस्य सद्मन् सदने केष्विति धूर्षु कर्मणां वोढ्षृत्विक्षु तदानीं सजूः यजमानेन मरुद्भिर्वा सह प्रीयमाणः सन् आयोर्मनुष्यस्य यजमानस्य सचा सह तेन साकं स्वयशसं स्वायत्तयशस्कं यशः साधनं नावं तरणसाधनं तरणिं आरोहसीतिशेषः एकमेव रथं यज्ञं यजमानआरोहति स्वतरणार्थं तमेव तस्य साधकमारोहसीत्यर्थः । यद्वा नावं रथं स्वयशसं आयोर्यजमानस्य सचा सहायभूतः सजूस्तेन सह प्रीयमाणआरोहेत्यर्थः ॥ ९ ॥

अथ दशमी—

श्रियेतेपृश्निरुपसेचनीभूच्छ्रियेदर्विरेपाः ।
ययास्वेपात्रेसिञ्चसउत् ॥ १० ॥

श्रिये । ते । पृश्निः । उपऽसेचनी । भूत् । श्रिये । दर्विः ।
अरेपाः । यया । स्वे । पात्रे । सिञ्चसे । उत् ॥ १० ॥

हे इन्द्र तेतव संबन्धिनः सोमस्य श्रिये श्रयणाय पृश्निःगौःपृश्निवर्णाउपसेचनी पयसां दोग्ध्री भूत् भवतु तथा दर्विररणिररेपाः अपापासती तेश्रिये हविषः श्रयणायभूत्भवतु यया दर्व्या स्वेस्वकीये पात्रे पानसाधने मुखे उत्सिंचसे उपर्याकृष्य पिबसि साश्रियेभूदिति संबन्धः॥१०॥

अथैकादशी—

शतंवायदंसुर्यप्रतित्वासुमित्रइत्थास्तौद्दुर्मित्रइत्थास्तौत् ।
आवोयद्दस्युहत्येकुत्सपुत्रंप्रावोयद्दस्युहत्येकुत्सवत्सम् ॥११॥२७॥

शतम् । वा । यत् । असुर्य । प्रति । त्वा । सुऽमित्रः । इत्था ।
अस्तौत् । दुःऽमित्रः । इत्था । अस्तौत् । आवः । यत् । दस्युऽहत्ये ।
कुत्सऽपुत्रम् । प्र । आवः । यत् । दस्युऽहत्ये । कुत्सऽवत्सम् ॥ ११ ॥ २७ ॥

हेअसुर्यं बलवन्निन्द्र वध्यत्वेनासुरसंबन्धित्वात् त्वा त्वां प्रति शतं वा शतसंख्याकं धनं वाशब्देनापरिमितं धनंवा यद्यदा कामितवानित्यर्थः यद्यदाच दस्युहत्ये दस्युहनने शत्रुवधे कुत्सपुत्रं दुर्मित्रं आवः रक्षितवानसि तथा कुत्सवत्सं कुत्सपुत्रंप्रावः प्रकर्षेण रक्षितवानसि अवरक्षणादौ लङि आडजादीनामित्याडागमः पादादित्वादनिघातः पुनरुक्तिरादरार्था । तदानीं सुमित्रोनाम्ना इत्थमस्तौत् तथा दुर्मित्रोगुणतइत्थमस्तौत् तद्विपरीतंवा द्रष्टव्यं सुमित्रोनाम्ना दुर्मित्रो गुणतइति कात्यायनेन तथोक्तेः । सइत्था इत्थमनेन कृतप्रकारेणास्तौत् अस्तावीत् इत्थास्तौदिति द्विरुक्तिः स्तुतिसमाप्त्यर्था ॥ ११ ॥

॥ इत्यष्टमस्य चतुर्थे सप्तविंशोवर्गः ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशेऋक्संहिताभाष्ये अष्टमाष्टके पञ्चमोध्यायः ॥ ५ ॥



॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा योवेदेभ्योखिलं जगत् । निर्ममे तमहंवन्दे विद्यातीर्थमहेश्वरं ॥१॥
अष्टमे पंचमाध्यायं व्याख्याय श्रुतिकोविदः । सायणार्यस्ततोध्यायं षष्ठंच व्याचिकीर्षति॥२॥
तत्र उभाउनूनमित्येकादशर्चं आद्यं अनुवाकापेक्षया सप्तमं सूक्तं त्रैष्टुभं अश्विदेवत्यं कश्यपपुत्रोभूतांशोनामऋषिः । तथाचानुक्रम्यते—उभौ भूतांशः काश्यपआश्विनमिति । अप्तो-र्यामेच्छावाकातिरिक्तोक्थे एतत्सूक्तं । सूत्रितंच—उभाउनूनं दैव्याहोताराप्रथमापुरोहितेति परिधानीयेति ।

तत्र प्रथमा—

ॐम् उभाउंनूनंतदिदंर्थयेथेवितंन्वाथेधियोवस्त्रापसेंव ।
सध्रीचीनायातंवेप्रेमंजीगःसुदिनेंवपृक्षआतंसयेथे ॥ १ ॥

उभौ । ॐ इति । नूनम् । तत् । इत् । अर्थयेथे इति । वि ।
तन्वाथे इति । धियः । वस्त्रा । अपसाऽइव । सध्रीचीना । यातवे ।
प्र । ईम् । अजीगरिति । सुदिनाऽइव । पृक्षः । आ । तंसयेथे इति॥१॥

हे अश्विनौ उभौ युवां नूनमिदानीं तदित् अस्माभिर्दीयमानं हविः क्रियमाणं स्तोत्रमेव अर्थयेथे प्रार्थयथः । अर्थयाञ्चायां चौरादिकः अनुदात्तेत् । उःपूरणः संप्रार्थ्यंच धियः कर्माणि स्तुतीर्वा वितन्वाथे विस्तारयथः । तनुविस्तारे तानादिकः । तत्र दृष्टान्तः—अपसेव अपसा अपस्विनौ कुविंदौ यथा वस्त्रा वस्त्राणि विस्तारयतः अपःशब्दान्मत्वर्थीयोविनिः तस्यबहुलंछन्दसीतिलुक् प्रातिपदिकस्वरेणान्तोदात्तः । उभयत्रसुपआकारः ईमयं यजमानः सध्रीचीना सध्रीचीनौ सहांचनौ युवां सहपूर्वादंचतेः क्विनि सहस्य सध्रिरितिसध्र्यादेशः । विभाषांचेरदिक्स्त्रियामितिखः सुपआजादेशः तौ यातवे तुमर्थेतवेन्प्रत्ययः अभिमतप्राप्त्यर्थं प्राजीगः प्रकर्षेण स्तौति । यद्वा युवां प्रति स्तुतीरुद्गिरति गृशब्दे गृनिगरणेवा एताभ्यांलुङि बहुलंछन्दसीति विकरणस्यश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वं दीर्घश्छान्दसः गुणेकृते हल्ङ्याादिना

तिलोपः । किंच सुदिनेव सुदिनेषु अन्नानि यथा अलंकुर्वन्ति यद्वा सुदिना सुदिनौ अहोरात्रयोः प्रवर्तकत्वेन तद्वन्तौ सूर्याचन्द्रमसौ स्वरश्मिभिर्यथा अन्नान्यलंकुरुतः तद्वत् युवां पृक्षः अन्ननामैतत् भोक्तृभिः संपृच्यंतेइति पृक्षोन्नानि आतंसयेथे समन्तादलंकुरुथः । तसिभूषअलंकारे तौदादिकः ॥ १ ॥

अथ द्वितीया—

उष्टारे॑व॒ फर्व॑रेषु श्रयेथे प्रायो॒गेव॒ श्वात्र्या॒ शासु॒रेथः॑ ।
दू॒तेव॒ हि ष्ठो य॒शसा॒ जने॑षु॒ माप॑ स्थातं महि॒षेवा॑व॒पाना॑त् ॥ २ ॥

उष्टारा॑ऽइव । फर्व॑रेषु । श्र॒ये॒थे॒ इति॑ । प्रा॒यो॒गाऽइ॑व । श्वात्र्या॑ ।
शासुः॑ । आ । इ॒थः॒ । दू॒ताऽइ॑व । हि । स्थः । य॒शसा॑ । जने॑षु ।
मा । अप॑ । स्था॒त॒म् । म॒हि॒षाऽइ॑व । अ॒व॒ऽपाना॑त् ॥ २ ॥

उष्टारेव उष्टः कामयेते गन्तव्यंदेशमिति उष्टारौ प्रासंगस्य वोढारावनड्वाहाविव वशकान्तावित्यस्मात् तृचिछान्दसं संप्रसारणं इडभावश्च तौ यथा संपूर्णघासेषु संचरतः तद्वत् फर्वरेषु स्तुतिभिर्हविर्भिश्च पूरयितृषु जनेषु श्रयेथे तत्स्वीकरणार्थं आश्रयथः । फर्वतिः पूरणार्थः । अस्मादौणादिकोरन्प्रत्ययः । प्रायोगेव प्रायोगौ प्रयोक्तव्यावनड्वाहाविव प्रपूर्वाद्युजेः कर्मणिघञि उपसर्गस्यदीर्घः थाथादिस्वरेणान्तोदात्तः । तौ यथा श्वात्र्या श्वात्र्यौ शु क्षिप्रं अतनं श्वात्रं तत्र साधूभवतः तद्वत् यद्वा युद्धार्थं प्रयोक्तव्यावश्वौइव श्वात्र्यौ श्वात्रमिति धननाम तत्रभवौ धनस्यसाधकावित्यर्थः । तौ युवां शासुः शंसितुः स्तोतुःस्तुतिंप्रति एथः आगच्छथः इणूगतौ आदादिकः दूतेव दूताविव यथा राज्ञः प्रियतमौदूतौ जनपदेषु यशस्विनौ भवतः तद्वत् जनेषु स्तोतृषु यशसा यशस्विनौ स्थोहि भवथः खलु । अस्तेर्लटिरूपं हियोगादनिघातः महिषेव महिषाविव यथा श्रान्तौमहिषौ अवपानात् पीयतेस्मिन्निति पानं ह्रदादि अधिकरणेल्युट् पानमेवावपानं सन्निकृष्टात् पानात् नापगच्छतः तद्वत् युवां अस्मदीयाद्धविषः स्तोत्राच्च मापस्थातं मापक्रम्य तिष्ठतं तिष्ठतेर्लुङि गातिस्थेति सिचोलुक् नमाङ्योगे इत्यडागमाभावः ॥ २ ॥

अथ तृतीया—

साकंयुजाशकुनस्येवपक्षापश्वेवचित्रायजुरागमिष्टम् ।
अग्निरिवदेवयोर्दीदिवांसापरिज्मानेवयजथःपुरुत्रा ॥ ३ ॥

साकम्ऽयुजा । शकुनस्यऽइव । पक्षा । पश्वाऽइव । चित्रा । यजुः ।
आ । गमिष्टम् । अग्निःऽइव । देवऽयोः । दीदिऽवांसा ।
परिज्मानाऽइव । यजथः । पुरुऽत्रा ॥ ३ ॥

शकुनस्येव पक्षिणइव यथा पक्षिणः पक्षा पक्षौ संहत्यवर्तमानौ तद्वत् साकंयुजा साकं युजौ सहावियुज्यवर्तमानौ भवथः । युजेः सत्सूद्विषेत्यादिना क्विप् पश्वेव पशूइव । सुपआकारः। तौ यथा चायनीयौ तद्वत् चित्रा चित्रौ चायनीयौ युवां यजुः यजनौ अस्मदीयौ आगमिष्टं आगच्छतं । यजेरौणादिकोभावेउसिन् प्रत्ययः । गमिष्टं गमेर्लेटि सिब्बहुलंलेटीतिसिप् सिप- आर्धधातुकत्वाद्गमेरिट् परस्मैपदेष्वितीडागमः । देवयोः देवानिच्छतोयजमानस्य यज्ञेअग्निरिव अग्निर्यथा हविर्भिः स्तुतिभिश्च दीप्यते तद्वत् दीदिवांसा दीदिवांसौ स्तुतिभिः दीप्तौभवथः दी- व्यतेः क्वसौ वस्वेकाजादिति नियमादिड्भावः वलिलोपे तुजादित्वादभ्यासस्य दीर्घः । परि- ज्मानेव परिज्मानाविव परितः अजतोगच्छतः कर्मकरणार्थमिति परिज्मानावध्वर्यूइव स्थि- तौ युवां पुरुत्रा बहुषु देशेषु यजथः देवान्पूजयथः । अश्विनावध्वर्यू इत्याम्नानात् । यद्वा परि- ज्मानेव परितोगन्तारौ पुरोवा पश्चाद्वा तौ यथा बहुषु देशेषु यजथः संगच्छमानौ भवथः य- जदेवपूजासंगतिकरणदानेषु पुरुत्रा देवमनुष्येष्वित्यादिना त्राप्रत्ययः ॥ ३ ॥

अथ चतुर्थी—

आपीवोअस्मेपितरेवपुत्रोग्रेवरुचानृपतीवतुर्यै ।
इर्येवपुष्ट्यैकिरणेवभुज्यैश्रुष्टीवानेवहवमागमिष्टम् ॥ ४ ॥

---

ऐ० ब्रा० १. १७।

आपी इति । वः । अस्मे इति । पितराऽइव । पुत्रा । उग्राऽईव ।
रुचा । नृपतीऽइवेति नृपतीऽइव । तुर्यै । इर्याऽइव । पुष्ट्यै ।
किरणाऽइव । भुज्यै । श्रुष्टीवानाऽइव । हवंम् । आ । गमिष्टम् ॥ ४ ॥

अस्मे अस्माकं वोयुवां पूजायांबहुवचनं आपी प्राप्तौ बन्धुभूतौ भवथः । पितरेव पितराविव यथात्रपितरौ प्रति पुत्रा पुत्रौ बंधुभूतौ भवतः तद्वत् । यद्वा पुत्रा षष्ठ्याआकारः । पुत्राणां पितरौ बन्धू तथा उग्रेव उग्राविव यथा उग्रौ स्वतेजसा उद्गूर्णौ अग्न्यादित्यौ यथारुचा रोचमानौ भवतः तद्वत् रुचा दीप्त्या युक्तौ रोचतेर्भावेक्विप् सावेकाचइति विभक्तेरुदात्तत्वं । यद्वा रुचा आरोचमानौ भवथः रोचतेरिगुपधलक्षणः कः सुपआकारः नृपतीव यथा नृणां पालयितरौ राजानौ संभ्रमयुक्तायै सेनायै रक्षकत्वेन भवतस्तद्वत् तुर्यै कर्मार्थं त्वरमाणायै संभ्रमवत्यै जनतायै युवां अभीष्टदातृत्वेन भवथः । तुरत्वरणे इगुपधात्किदितीनप्रत्ययः । कृदिकारादक्तिनइतिङीप् उदात्तयणोहल्पूर्वादिति विभक्तेरुदात्तत्वं । इर्येव इर्याविव इराअन्नं तत्रभवौ भवार्थेयत् अन्नवन्तावाढ्यौ स्वजनपरितोषणाय भवतः तद्वत् युवां पुष्ट्यै धनादिदानेनास्माकं परितोषणाय भवथः । किरणेव किरणाविव यथा आग्नेयादित्यकिरणौ सर्वेषां प्रकाशनादिद्वारेण भोगाय भवतः । तद्वत् भुज्यै स्तोतॄणां परिभोगाय भवथः । श्रुष्टीवानेव श्रुष्टिवन्ताविव श्रुष्टीति क्षिप्रनाम मत्वर्थीयोवनिप् तद्वन्तावश्वौ यथा लक्ष्यं देशं प्रति शीघ्रंगच्छत स्तद्वत् यद्वा श्रुष्टीवानेव श्रुष्टीति सुखनाम तद्वन्तौ पुरुषौ यथा क्रीडार्थमागच्छतः तद्वद्युवां हवमस्मदीयमाह्वानं प्रत्यागमिष्टं आगच्छतं । हवं भावेनुपसर्गस्येति ह्वयतेरप् संप्रसारणंच ॥ ४ ॥

अथ पंचमी—

वंसंगेवपूषर्याशिम्बातामित्रेवऋतागशतराशातपन्ता ।
वाजेवोच्चावयसाघर्म्येष्ठामेषेवेषासपर्या३पुरीषा ॥ ५ ॥ १ ॥

वंसंगाऽइव । पूषर्या । शिम्बाता । मित्राऽईव । ऋता । शतरा ।
शातपन्ता । वाजाऽइव । उच्चा । वयसा । घर्म्येऽस्था ।
मेषाऽइव । इषा । सपर्या । पुरीषा ॥ ५ ॥ १ ॥

वंसगेव वंसगाविव वननीयगमनौ वृषभाविव तौ यथा पूषर्या पूषर्यौ पूषणेभवौ पुष्टावयवावित्यर्थः । तद्वद्युवां स्फोतांगावयवौ पुष्पुष्टौ अस्मादौणादिकोभावेअरन्प्रत्ययः । तं दन्ताद्भावे छन्दसोतियत् तित्स्वरितः तथा शिंबाता शिंबातौ सुखनामैतत् शिंबेन दुःखानां तनूकरणेन हेतुनाततिं व्याप्तमिति शिञ्निशाने अस्माद्शिंबमिति बाहुलकाद्बप्रत्यययोमुक्च निपात्यते अततेः कर्मणिघञ् सुपआलादेशः सुखकरौभवथः । मित्रेव मित्राविव मित्रशब्देन वरुणोप्युपलक्ष्यते सहावस्थितमित्रावरुणाविव ऋता ऋतौ सत्यभूतौ तद्वद्यथार्थदर्शिनौ भवथः तथा शतरा शतं शतसंख्याकानि बहूनि रायोधनानिययोः सन्ति तौ तथोक्तौ सुपोडादेशः । यद्वा शतमनेकमिन्द्रियप्रसादादि रातिददातीति शतरासुखं तेन तद्वन्तौ शातपन्ता शातपन्तौ तीक्ष्णस्तुतिकौ शातं तीक्ष्णं पन्तं पनतेर्बाहुलकात्तन् यद्वा शातपन्ता शातेन दुःखानां तनूकरणेन पन्यते स्तूयतइति शातपन्तंसुखं शोतनूकरणे निष्ठा । पनतेस्तन् तेन युवां सुखवन्तौ भवथः । यद्यपि शिंबाता शतरा शातपन्तेति त्रीण्यपि सुखनामानि तथापि कालत्रयेपि अश्विनोः सुखकरत्वस्य विवक्षितत्वेन विषयभेदादपौनरुक्त्यम् । वाजेव वाजाविव यथा अश्वौ घासादिना उन्नतौ संपूर्णावयवौ तद्वत् वयसा हवीरूपेणान्नेन हेतुना उच्चैर्वर्तमानौ पुष्टावित्यर्थः । उच्चा उच्चैःशब्दात् सुपोडादेशः डित्वाट्टिलोपः घर्म्येष्ठा घर्मस्थौ घर्मंदीप्तमन्तरिक्षं तत्संबन्धिनिर्देशे सूर्याचन्द्रमसोरूपेणावस्थितौ भवतः । सूर्यचन्द्रमसावितियास्कः । यद्वा घर्मे प्रवर्ग्ये भवं घर्म्यं हविः तत्र देवतात्वेनावस्थितौ भवथः तिष्ठतेरन्येभ्योपिदृश्यन्तइतिविच् तत्पुरुषेकृतिबहुलमिति पूर्वपदस्यसप्तम्याअलुक् मेषेव मेषाविव तौ यथा अन्नेन परिचरणीयौ तद्वत् युवां इषा हवीरूपेण अन्नेन सपर्या सपर्यौ परिचरणीयौ भवथः । सपरशब्दः कंड्वादिः सपर्यतिः परिचरणकर्मा । पुरीषा पुरीषौ धनादिदानेन स्तोतॄणां पोषयितारौ यद्वा हविर्भिः पोषणीयौ भवथः । पुरीषं पृणातेः पोषयतेर्वेतियास्कः ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी–

सृण्येवजर्भरीतुर्फरीतूनैतोशेवतुर्फरीपर्फरीका ।
उदन्यजेवजेमनामदेरूतामेजराय्वजरंमरायु ॥ ६ ॥

---

१ नि० १२. १ । २ नि० २. २२ ।

प्रज्ञाऽइव । चर्चरम् । जारम् । मरायु । क्षद्मऽइव । अर्थेषु ।
तर्तरीथः । उग्रा । ऋभू इति । न । आपत् । खरमज्रा । खरऽज्रुः ।
वायुः । न । पर्फरत् । क्षयत् । रयीणाम् ॥ ७ ॥

हे उग्रा उग्रौ उद्गूर्णतेजस्कौ अश्विनौ पज्रेव पज्राविव प्रार्जितबलौ वीराविवस्थितौ यद्वा पज्रेव जिज्रिअभिभवे पादाभ्यामभिभवन्तौ समर्थाविवस्थितौ युवां चर्चरं चरणशीलं जारं जरायुक्तं अतएव मरायु मरणशीलं मदीयं शरीरं अर्थेषु गन्तव्येषु तरीतव्येष्वापदादिषु क्षद्मेव उदकनामैतत् उदकमिव तर्तरीथः अत्यन्तं तारयथः। तॄप्लवनतरणयोः यङ्लुगन्ताल्लटि छन्दस्युभयथेति थासआर्धधातुकत्वेनेडागमः वृतोवेतिदीर्घः ऋभून ऋभूइव दार्ष्टान्तिकसाम्यादत्रद्विवचनं ऋभूयथा स्वनिर्मितोरथआपत् तद्वत् खरमज्रा खरं तीक्ष्णं मज्जयितारौ शोधयितारौ अत्यन्तं शुद्धबलावित्यर्थः टुमस्जोशुद्धौ अस्मादौणादिकोरप्रत्ययः तादृशौ युवां खरज्रुः तीक्ष्णगतिः अतिशयेन वेगवान् ऋभुभिर्दत्तोरथोयुवां आपत् आप्नोत् आप्लृव्याप्तौ लृदित्वात्च्लेरङ् सरथः वायुरिव पर्फरत् सर्वत्रआपूरयत् सर्वत्रव्याप्तवानित्यर्थः फर्वपूरणे अस्माल्लेटि बहुलंछन्दसीति शपःश्लुः अभ्यासस्य रुगागमः वलोपश्च लेटोडाटावित्यडागमः ततः सरथः रयीणां धनानां धनानिक्षयत् शत्रुभ्यआगमयत् क्षिनिवासगत्योः अस्मादन्तर्णीतण्यर्थात् लेट्यडागमः। यद्वा क्षयतिरैश्वर्यकर्मा धनानामीष्टे छान्दसमनुदात्तत्वं ॥ ७ ॥

अथाष्टमी—

**घर्मेवमधुजठरेसनेरूभगेवितातुर्फरीफारिवारम् ।**
**पतरेवचचराचन्द्रनिर्णिङ्मनऋङ्गामनन्याऽनजग्मी ॥ ८ ॥**

घर्माऽइव । मधु । जठरे । सनेरू इति । भगेऽअविता । तुर्फरी इति ।
फारिवा । अरम् । पतराऽइव । चचरा । चन्द्रऽनिर्निक् ।
मनःऽऋङ्गा । मनन्या । न । जग्मी इति ॥ ८ ॥

घर्मेव घर्माविव महावीराविव जठरे स्वोदरे मधु मधुनः षष्ठ्यालुक् घृतस्य सनेरू संभक्तारौ वनषणसंभक्तौ अस्मादौणादिकएरुप्रत्ययः भगेविता भगोधनं तद्विषयरक्षणयुक्तौ अवते-

र्भावेकः तत्पुरुषे कृतिबहुलमिति बहुलवचनाद्बहुव्रीहावप्यलुक् । यद्वा अवतेस्तृजन्तस्य सुपो-डादेशः स्वरश्छान्दसः । अरमलं तुर्फरी शत्रूणांहिंसितारौ अतएव फारिवा फारिरायुधं तद्वन्तौ भवथः । स्फुरतिर्वधकर्मा अस्मात् णिचिचिस्फुरोर्णाविति आत्वं तदन्तादिप्रत्ययः सकारलोप-श्छान्दसः । छन्दसीवनिपाविति मत्वर्थीयोवनिप् । सुपोडादेशः पतरेव पतराविव पतनशीलौ पक्षिणाविव चचरा संचरन्तौ चन्द्रनिर्णिक् निर्णिगिति रूपनाम सुपोलुक् चन्द्रनिर्णिजौ चन्द्रस-दृशरूपयुक्तौ यद्वा चन्द्रमाह्लादकंरूपं ययोस्तौ वर्तेते मनऋंगा मनसाप्रसाधनं ययोस्तौ ऋंज-तिःप्रसाधनकर्मा । अस्माद्भावेघञ् बहुव्रीहिस्वरः मनन्यान मनन्यौ यथा मनने साधू स्तुत्या-वित्यर्थः । मननशब्दात् तत्रसाधुरिति यत् तित्स्वरितः तादृशाविव जग्मी यज्ञं प्रत्यागमनशीलौ भवतः गमेरादृगमहनइति किन्प्रत्ययः ॥ ८ ॥

अथ नवमी—

बृहन्तेवगंभरेषुप्रतिष्ठांपादेवगाधंतरतेविदाथः ।
कर्णेवशासुरनुहिस्मराथोंशेवनोभजतंचित्रमप्नः ॥ ९ ॥

बृहन्ताऽइव । गम्भरेषु । प्रतिऽस्थाम् । पादाऽइव । गाधम् ।
तरते । विदाथः । कर्णाऽइव । शासुः । अनु । हि । स्मराथः ।
अंशाऽइव । नः । भजतम् । चित्रम् । अप्नः ॥ ९ ॥

बृहन्तेव बृहन्ताविव प्रांशू पुरुषौ यथागंभरेषु गहनेषु जलेषु प्रतिष्ठां विंदतस्तद्वत् गंभरे-षु गंभीरेषु दुष्प्रवेशेषु स्थानेषु प्रतिष्ठां अवस्थितिमासदं युवां विदाथः जानीथः । पादेव पा दाविव यथा तरते षष्ठ्यर्थेचतुर्थी तरतः पुरुषस्यपादौ यथा गाधजलं विदाथः तद्वत् युवां ता र्येषु जलेषु गाधं विदाथः जानीथः विदज्ञाने लेट्याडागमः कर्णेव यथा कर्णौ उक्तं शब्दं विदतुः तद्वत् युवां शासुः शासितारं स्तुतिंकुर्वाणं जनं अनुहिस्मराथः अनुकूलं जानीथःखलु । स्मर तेर्लेट्यडागमः हियोगादनिघातः अधीगर्थदयेशांकर्मणीति शासुरित्यस्यषष्ठी अंशेवअंशाविव यथावयवौ तद्वन्तौ यज्ञं भजेते तद्वत् युवां नोस्मदीयं चित्रं चायनीयं अप्नःकर्म भजतं आश्र यतं अप्नः आपृव्याप्तौ अस्मादापःकर्माख्यायांह्रस्वोनुट्चवेति असुन् तत्संनियोगेनह्रस्वोनुडागम श्च नित्स्वरेणाद्युदात्तः ॥ ९ ॥

अथ दशमी—

आरङ्गरेव मध्वेरयेथे सारघेव गवि नीचीनबारे ।
कीनारेव स्वेदमासिष्विदाना क्षामेवोर्जा सूयवसात्सचेथे ॥ १० ॥

आरङ्गराऽइव । मधु । आ । ईरयेथे इति । सारघाऽइव । गवि ।
नीचीनऽबारे । कीनाराऽइव । स्वेदम् । आऽसिस्विदाना ।
क्षामाऽइव । ऊर्जा । सुयवसऽअत् । सचेथे इति ॥ १० ॥

आरंगरेव गॄशब्दे अस्माद्भावेऽकदोरप् अरमलं पर्याप्तं गरः शब्दनं तस्य संबन्धिनौ तस्येदमित्यण् शब्दवन्तौ मेघाविव यथा मधु जलं प्रेरयतः तद्वत् युवां एरयेथे प्रेरयथः । ईर-प्रेरणे चौरादिकः सारघेव सारघाविव सरघा मधुमक्षिका सरघैव सारघा प्रज्ञादित्वादण् तेयथा नीचीनबारे नीचीनद्वारे मधुपुष्पे मधु प्रेरयतः तद्वत् । युवां नीचीनबारे न्यग्भूतद्वारे गवि गोरूधसि क्षीरं प्रक्षिपथः । कीनारेव कीनाराविव कुत्सितमनुष्यौ यथा स्विद्यमानौ भवतस्तद्वत्स्वेदं स्विद्यमानं जलमासिष्विदाना आसमन्तात्स्वेदयन्तौ प्रक्षारयन्तौ भवथः । ञिष्विदा गात्रप्रक्षरणे अनुदात्तेत् तस्माच्छान्दसे लिटि कानजादेशः । क्षामेव क्षैजैक्षैक्षये अस्मादातोमनिन् । ह्रस्वश्छान्दसः क्षामा क्षीणा गौः सुयवसात् अदेः क्विप् शोभनं यवसं घासादिकं भक्षयन्ती क्षीररूपेणान्नेन समवेता भवति तद्वत् युवां ऊर्जा हवीरूपेणान्नेन सचेथे संगच्छेथे । षच समवाये ॥ १० ॥

अथैकादशी—

ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् ।
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ ११ ॥ २ ॥

ऋध्याम । स्तोमम् । सनुयाम । वाजम् । मा । नः । मन्त्रम् ।
सऽरथा । इह । उप । यातम् । यशः । न । पक्वम् । मधु । गोषु ।
अन्तः । आ । भूतऽअंशः । अश्विनोः । कामम् । अप्राः ॥ ११ ॥ २ ॥

हे अश्विनौ वयं स्तोमं त्रिवृत्पंचदशादिकं ऋध्याम ऋध्यास्म वर्धयेम। ऋधुवृद्धौ अस्मादाशीर्लिङि किदाशिषीति यासुटःकित्वं। वाजं हविर्लक्षणमन्नं युवाभ्यां सनुयाम प्रयच्छेम षणुदाने तानादिकः विधिलिङ् वाक्यभेदादनिघातः। तस्माद्युवां सरथा सरथौ समानरथौ एकमेवरथमारूढौ सन्तौ इहास्मिन्कर्मणि नोस्मदीयं मंत्रं मननीयं स्तोत्रमुपयातं उपागच्छतं। गोष्वन्तः गोरूधस्यांतःस्थितं पक्वं परिणतं अतएवमधु मधुरं यशोन यशइत्यन्ननाम नश्चार्थे क्षीराज्यादिलक्षणं महावीरे अवनीयमानमन्नं चापेक्ष्य आगच्छतमिति संबन्धः। एवमुक्तप्रकारेण भूतांशः एतन्नामाऋषिः अश्विनोः काममभिलाषमात्मीयाभिः स्तुतिभिः अपाः आपूरयत्। संपूर्णमकार्षीदित्यर्थः। प्रापूरणे आदादिकः। व्यत्ययेनमध्यमः। अत्राश्विनेसूक्ते सर्वाण्यपिपदानि दुर्व्युत्पादानि अस्माभिर्दिङ्मात्रं प्रदर्शितानि एवं निरुक्तव्याकरणादिभिरर्थविशेषे बुद्धिमद्भिरुन्नेयानि॥ ११॥

॥ इत्यष्टमस्य षष्ठे द्वितीयोवर्गः॥ २॥

आविरित्येकादशर्चमष्टमंसूक्तं दिव्योनामांगिरसऋषिः प्रजापतेःसुता दक्षिणासावाऋषिका शतधारंवायुमिति चतुर्थीजगती शिष्टादशत्रिष्टुभः अनेनसूक्तेन ऋत्विग्भ्योदीयमानादक्षिणा तद्दातारोयजमानावा स्तूयन्ते अतः सैवदेवता। तथाचानुक्रान्तं—आविर्दिव्योदक्षिणावा प्राजापत्यादक्षिणा तद्दातॄन्वास्तौत् चतुर्थी जगतीति। गतोविनियोगः।

तत्र प्रथमा—

**आविर्भून्महिमाघोनमेषांविश्वंजीवंतमसोनिरमोचि।**
**महिज्योतिःपितृभिर्दत्तमागादुरुःपन्थादक्षिणायाअदर्शि॥ १॥**

आविः। अभूत्। महि। माघोनम्। एषाम्। विश्वम्। जीवम्।
तमसः। निः। अमोचि। महि। ज्योतिः। पितृऽभिः। दत्तम्।
आ। अगात्। उरुः। पन्थाः। दक्षिणायाः। अदर्शि॥ १॥

इदंसूक्तं दक्षिणायावा तद्दातॄणांवा स्तावकं दक्षिणातु यागांगं यागस्तु सायंकाले भक्षितेथ नसायमस्तिदेवयाअजुष्टमित्यादि[1] श्रवणात्। तस्मादह्न्येव कर्तव्यः। अहश्च सूर्योदयात् प-

१ ऋ० सं० ४. ४. १८।

श्चाद्भवतीति सूक्तादौ सूर्योदयोभिधीयते मावोनं मावोनइन्द्रः इन्द्रश्च सूर्यः। चैत्रमासे तथा इन्द्र इतिस्मरणात्। तस्यसंबन्धि तस्येदमित्यण् अतद्धितेप्रत्यये संप्रसारणमभिहितं सर्वेविधीनांछन्दसि विकल्पितत्वादत्र तद्धितेपि संप्रसारणं। सूर्यात्मकस्येन्द्रस्य स्वभूतं महि महत्तेजएषां यजमानानां यागसिध्यर्थं आविरभूत् प्रकाशितमुद्गतमभूत्। तत्र विश्वं सर्वं जीवं स्थावरजंगमात्मकं जगत्तमसः सकाशान्निरमोचि निर्मुक्तमभूत् मुंचतेःकर्मणिलुङिचिणिरूपं अथानन्तरं पितृभिर्यत् पितृभिर्देवैर्दत्तंनोहविषामागमनाय ततमहि महत् ज्योतिः सूर्याख्यं आगात् आगच्छति पश्चाद्दक्षिणायाः यागांगभूतायाः उरुर्महान् पंथा मार्गः अदर्शि सर्वैर्यजमानैर्दृष्टोभूत् सर्वे यागं कृत्वा ऋत्विग्भ्योदक्षिणां दत्तवन्तइत्यर्थः ॥ १ ॥

अथ द्वितीया—

उ॒च्चादि॒विदक्षि॑णावन्तो॒अस्थु॒र्येअ॑श्व॒दाः स॒हते॒सूर्ये॑ण।
हि॒र॒ण्य॒दाअ॑मृत॒त्वंभ॑जन्ते॒वासो॒दाःसो॑म॒प्रति॑रन्त॒आयुः॑ ॥ २ ॥

उ॒च्चा। दि॒वि। दक्षि॑णाऽवन्तः। अ॒स्थुः॒। ये। अ॒श्व॒ऽदाः। स॒ह। ते।
सूर्ये॑ण। हि॒र॒ण्य॒ऽदाः। अ॒मृ॒त॒ऽत्वम्। भ॒ज॒न्ते॒। वा॒स॒ःऽदाः।
सो॒म॒। प्र। ति॒र॒न्ते॒। आयुः॑ ॥ २ ॥

दक्षिणावन्तः दक्षिणायादेयत्वेन तद्वन्तः दक्षिणां दत्तवन्तोयजमानाः उच्चा उच्चैः स्थानैः स्थिते दिवि द्युलोके अस्थुः तिष्ठन्ति सामान्येनोक्त्वा। दातृविशेषाणां फलविशेषमाह अश्वदा अश्वानां दातारोये यजमानाः ते सूर्येण सर्वस्य स्वस्वकर्मणि प्रेरकादित्येन सह तिष्ठन्ति येहिरण्यदाः हिरण्यदातारः ते अमृतत्वं अमरणधर्मत्वं भजन्ते अमृतंवै हिरण्यं इत्याम्नानात् तथा सौम्यंवैवासइतिश्रवणात्। सोमएव संबोध्यते हे सोम वासोदाः तद्देवत्यवस्त्राणां दातारोयेसन्ति ते त्वयासह तिष्ठन्तीतिशेषः। एते सर्वे आयुः जीवनं प्रतिरन्ते प्रवर्धयन्ति प्रपूर्वस्तिरतिर्वृद्ध्यर्थः ॥ २ ॥

अथ तृतीया—

दैवी॑पू॒र्तिर्दक्षि॑णादेवय॒ज्याने॑क॒वा॒रिभ्यो॒नहि॒तेपृ॒णन्ति॑।
अथा॒नरः॒प्रय॑तदक्षिणासोवद्यभि॒या॒ब॒हवः॑पृणन्ति ॥ ३ ॥

दैवी । पूर्तिः । दक्षिणा । देवऽयज्या । न । कवऽअरिभ्यः । नहि ।
ते । पृणन्ति । अथ । नरः । प्रयतऽदक्षिणासः । अवद्यऽभिया ।
बहवः । पृणन्ति ॥ ३ ॥

दैवी देवसंबन्धिनी देवाद्यञञावित्यञ् तादृशी पूर्तिः पालनी तत्साध्या देवयज्या छन्दसिनिष्टक्र्येतिनिपातितः देवयागः तदंगभूता दक्षिणा न कवारिभ्यः ऋगतावित्यस्य अचइरितीप्रत्ययः । कुत्सितगन्तृभ्यः अयष्टृभ्यः एतेभ्यः नभवन्ति यद्वा देवानां स्वभूता पूर्तिः पूरयित्री स्तुतिभिः हविर्भिश्च तादृशी देवयज्या दक्षिणाच तेभ्योनभवतः । तत्र हेतुरुच्यते—हि यस्मात् ते कुत्सितगन्तारः नहि पृणन्ति देवान् स्तुतिभिर्हविर्भिश्च न प्रीणयन्ति पृणप्रीणने तौदादिकः अथेतिप्रश्ने यष्टृणां देवयागादिकथंभवति उच्यते नरः कर्मणांनेतारः अतएव प्रयतदक्षिणासः दत्तदक्षिणा बहवोयजमानाः अवद्यभिया अवद्यपण्यवर्यागर्ह्येति यत्प्रत्ययान्तत्वेननिपातितः पापभिया विहिताननुष्ठाने दुरितानिभवन्तिखलु तस्मात्तद्भीत्या पृणन्ति देवान्प्रीणयन्ति तस्माद्यष्टृणां देवपालनयागदक्षिणाभवतीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

शतधारंवायुमर्कंस्वर्विदंनृचक्षसस्तेअभिचक्षतेहविः ।
येपृणन्तिप्रचयच्छन्तिसंगमेतेदक्षिणांदुहतेसप्तमातरम् ॥ ४ ॥

शतऽधारम् । वायुम् । अर्कम् । स्वःऽविदम् । नृऽचक्षसः । ते ।
अभि । चक्षते । हविः । ये । पृणन्ति । प्र । च । यच्छन्ति ।
समऽगमे । ते । दक्षिणाम् । दुहते । सप्तऽमातरम् ॥ ४ ॥

शतधारं बहुधारेणोपेतं वायुं एतन्नामकं स्वर्विदं स्वर्गस्यलंभकं सर्वस्यवेत्तारंवा अर्कमर्चनीयं आदित्यंच एतौ नृचक्षसः नृणां द्रष्टृन् अन्यानिन्द्रादीन्देवांश्चाभिलक्ष्य ते यजमाना हविश्चक्षते तेभ्योदातुं पश्यन्ति चष्टेर्लेटिरूपं । किंच संगमे कर्मकरणार्थमृत्विजोत्रसंगच्छन्तइति संगमः ग्रहवृदृनिश्चिगमश्चेति अधिकरणेअप् थाथादिस्वरः तस्मिन्यज्ञे ये यष्टारः पृणन्ति स्तुतिभिः प्रीणयन्ति येच तेभ्योदेवेभ्योहवींषि प्रयच्छन्ति उभयत्रयद्योगादनिघातः ते सप्तमातरं सप्तसंख्याकामातृभूता अग्निष्टोमादिसंस्था यस्यांभवन्ति सा यद्वा सप्तसंख्याकामातरः कर्मणांनिर्मातारः कर्तारोहोत्रादयः सन्ति तादृशीं दक्षिणां दुहते ऋत्विग्भ्योदुहन्ति ॥ ४ ॥

अथ पंचमी—

दक्षिणावान्प्रथमोहूतएंधिदक्षिणावान्ग्रामणीरग्रंमेति ।
तमेवमंन्येनृपतिंजनांनांयःप्रंथमोदक्षिणामाविवाय ॥ ५ ॥ ३ ॥

दक्षिणाऽवान् । प्रथमः । हूतः । एति । दक्षिणाऽवान् । ग्रामऽनीः ।
अग्रम् । एति । तम् । एव । मन्ये । नृऽपतिम् । जनानाम् । यः ।
प्रथमः । दक्षिणाम् । आऽविवाय ॥ ५ ॥ ३ ॥

हूतः ऋत्विग्भिराहूतः दक्षिणावान्यजमानः प्रथमः सर्वेषां मुख्यःसन् एति सर्वत्रगच्छति । तथा ग्रामणीः ग्रामाणांनेता धनवत्वेन तेषां कर्ता दक्षिणावान् सः अग्रमेति सर्वेषां प्रथममेव गच्छति । तमेव नृपतिं नराणां पालयितारमिति मन्ये । ऋषिरहमवबुध्ये प्रथमोयोजनः जनानांदक्षिणामाविवाय आगमयति वीगत्यादिषु तस्यलिटिरूपं तंनृपतिमिति मन्ये यद्वा जनानामिति पूर्ववाक्यशेषः जनानांमध्ये तमेव मनुष्याणां स्वामिनमितिमन्ये ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे तृतीयोवर्गः ॥ ३ ॥

अथ षष्ठी—

तमेवऋषिंतमुंब्रह्माणंमाहुर्यज्ञन्यंसामगामुक्थशासम् ।
सशुक्रस्यंतन्वोवेदतिस्रोयःप्रंथमोदक्षिणयाररार्ध ॥ ६ ॥

तम् । एव । ऋषिम् । तम् । ऊँ इति । ब्रह्माणम् । आहुः ।
यज्ञऽन्यम् । सामऽगाम् । उक्थऽशसम् । सः । शुक्रस्य ।
तन्वः । वेद । तिस्रः । यः । प्रथमः । दक्षिणया । रराध ॥ ६ ॥

तमेव दक्षिणायादातारं ऋषिमतीन्द्रियार्थदर्शिनं यद्वा सत्कर्मकरणेन ऋषिमित्याहुः तथा तमु तमेव ब्रह्माणमाहुः किंच तमेव यज्ञन्यं णीञ्प्रापणे क्विप् उदात्तस्वरितयोर्यण् इत्यमः स्वरितत्वं यज्ञस्यनेतारं अध्वर्युमित्याहुः तमेव सामगां साम्नां गातारमिति तथा उक्थशासं शंसु स्तुतौ क्विप् संहितायांदीर्घश्छान्दसः उक्थशसं शस्त्राणां शंसितारं होतारमिति ब्रुवन्ति दक्षिणादानेन तत्कर्मणः परिग्रहात् सदाता शुक्रस्य दीप्यमानस्य ज्योतिषः तिस्रस्तन्वः अग्निर्वायु

तादित्यात्मकानि त्रीणि शरीराणि वेद जानाति यद्वा शुक्रस्य दीप्तस्याग्नेः आहवनीयात्मकानि त्रीणि शरीराणि जानाति प्रथमोमुख्योयोजनः दक्षिणयारराध ऋत्विगादीनाराधयति राधसंसिद्धौ लिटिरूपं लित्स्वरः ॥ ६ ॥

अथ सप्तमी–

**दक्षिणाश्वंदक्षिणागांददातिदक्षिणाचन्द्रमुतयद्धिरण्यम् ।**
**दक्षिणान्नंवनुतेयोनंआत्मादक्षिणांवर्मकृणुतेविजानन् ॥ ७ ॥**

दक्षिणा । अश्वम् । दक्षिणा । गाम् । ददाति । दक्षिणा । चन्द्रम् । उत । यत् । हिरण्यम् । दक्षिणा । अन्नम् । वनुते । यः । नः । आत्मा । दक्षिणाम् । वर्म । कृणुते । विऽजानन् ॥ ७ ॥

दक्षिणा तद्दातृभ्यःअश्वं ददाति तथा गांच ददाति तथा चन्द्रं सुवर्णं ददाति उतापिच यद्धिरण्यं रजतमस्ति रजतं हिरण्यंइत्याम्नानात् तच्चददाति किंच सा अन्नं वनुते ददाति वनोतिरन्नदानार्थः । तस्मान्नोस्मदीयोयआत्मास्ति स वर्म विजानन् कवचं यथायुधानां निवारकं तद्वत् दुरितानि वारयतीति कवचमिति विजानन् दक्षिणा अश्वादिदानशीलां कृणुते ऋत्विग्भ्यः करोति ॥ ७ ॥

अथाष्टमी–

**नभोजाममुर्नन्यर्थमीयुर्नरिष्यन्तिनव्यथन्तेहभोजाः ।**
**इदंयद्विश्वंभुवनंस्वश्चैतत्सर्वंदक्षिणैभ्योददाति ॥ ८ ॥**

न । भोजाः । ममुः । न । निऽअर्थम् । ईयुः । न । रिष्यन्ति । न । व्यथन्ते । ह । भोजाः । इदम् । यत् । विश्वम् । भुवनम् । स्वः१रिति स्वः । च । एतत् । सर्वम् । दक्षिणा । एभ्यः । ददाति ॥ ८ ॥

भोजाः भोजयितारः धनादिदानेन दातारोनमम्रुः नम्रियन्ते देवत्वं भजन्तइत्यर्थः । अतएव न्यर्थं ऋगतौ उषिकुषिगार्तिभ्यःस्थन् समासेथाथादिस्वरः निकृष्टां गतिं नेयुः नप्राप्नुवन्ति । इण्गतौ लिटिदीर्घइणःकितीतिदीर्घः तथा नरिष्यन्ति केश्चिदप्यहिंसिताभवन्ति कर्मणि व्य-

त्ययेनपरस्मैपदं अतएव भोजाः दातारः नव्यथन्ते परस्परं नभीता नबाधितावा भवन्ति । ह प्र-सिद्धौ । किंच इदं परिदृश्यमानं विश्वं सर्वं भुवनं यद्भूतजातमस्ति स्वः स्वर्गलोकश्च एतत्सर्वं दक्षिणास्वयं एभ्यस्तद्दातृभ्योददाति प्रयच्छति ॥ ८ ॥

अथ नवमी—

भोजाजिग्युःसुरभिंयोनिमग्रेभोजाजिग्युर्वध्वंयासुवासाः ।
भोजाजिग्युरन्तःपेयंसुरायाभोजाजिग्युर्येअहूताःप्रयन्ति ॥ ९॥

भोजाः । जिग्युः । सुरभिम् । योनिम् । अग्रे । भोजाः । जिग्युः ।
वध्वम् । या । सुऽवासाः । भोजाः । जिग्युः । अन्तःऽपेयम् ।
सुरायाः । भोजाः । जिग्युः । ये । अहूताः । प्रऽयन्ति ॥ ९ ॥

भोजाः दातारः अग्रे प्रथममेव योनिं क्षीरादेरुत्पत्तिस्थानं सुरभिं धेनुं जिग्युः शत्रुभ्यो-जितवन्तः । जिजये लिटिसन्लिटोर्जेरिति अभ्यासादुत्तरस्यकवर्गादेशः । तथा भोजा दातारः वध्वं वधूं नवोढां स्त्रीं जिग्युः यास्त्रीसुवासाः शोभनवासाअस्ति तां जिग्युः किंच भोजाः शत्रू-णां सुरायाः अन्तःपेयं अन्तःपानं जिग्युः पापाने भावेयत् ईद्यतीतीत्वं आर्धधातुकलक्षणो-गुणः कृदुत्तरपदप्रकृतिस्वरत्वं येशत्रवः अहूताः बलाधिक्येनानाहूयमानाः प्रयन्ति प्रमुखमा-गच्छन्ति तान् भोजाः दक्षिणायादातारोजनाः जिग्युर्जयन्ति ॥ ९ ॥

अथ दशमी—

भोजायाश्वंसंमृजन्त्याशुंभोजायास्तेकन्याशुम्भमाना ।
भोजस्येदंपुष्करिणीववेश्मपरिष्कृतंदेवमानेवचित्रम् ॥ १० ॥

भोजाय । अश्वम् । सम् । मृजन्ति । आशुम् । भोजाय ।
आस्ते । कन्या । शुम्भमाना । भोजस्य । इदम् । पुष्करिणीऽइव ।
वेश्म । परिऽकृतम् । देवमानाऽइव । चित्रम् ॥ १० ॥

भोजाय दात्रे आशुं शीघ्रगामिनमश्वं संमृजन्ति परिचारकाः सम्यगलंकुर्वन्ति । मृजू-शौचालंकारयोः तथा कन्या कन्यात्वेनात्रसन्निकर्षादभिनवं यौवनं लक्ष्यते अभिनवयौवनाः

शुंभमाना शरीरावयवविशेषशोभया तथा वस्त्राद्यलंकारशोभयाच शोभमाना स्त्री तस्मै भोजाय दात्रे आस्ते। तथा भोजस्य दातुरेव हृदयाह्लादकरं वेश्मगृहं भवति। कीदृशं पुष्करिणीव पुष्कराणि पद्मानि यस्याः सन्तीति पुष्करिणी सरसी सा यथा पद्महंसादिभिरलंकृता भवति तद्वत् परिष्कृतं वितानादिभिरलंकृतं। परिपूर्वस्यकरोतेर्भूषणार्थे संहितायांसुडागमः परिनिविभ्यइतिसुटःषत्वं गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वं। तथा देवमानेव सुपांसुलुगिति प्रथमैकवचनस्याकारः देवमानमिव चित्रं मनोहरं वेश्म तस्य भवति॥ १०॥

अथैकादशी—

भोजमश्वाःसुष्ठुवाहोवहन्तिसुवृद्रथोवर्ततेदक्षिणायाः।
भोजंदेवासोवताभरेषुभोजःशत्रून्त्समनीकेषुजेता॥ ११॥ ४॥

भोजम्। अश्वाः। सुष्ठुऽवाहः। वहन्ति। सुऽवृत्। रथः। वर्तते। दक्षिणायाः। भोजम्। देवासः। अवत। भरेषु। भोजः। शत्रून्। सम्ऽअनीकेषु। जेता॥ ११॥ ४॥

सुष्ठुवाहः वहप्रापणे वहश्चेतिण्विप्रत्ययः शोभनवहनसमर्थाः अश्वाः भोजं दातारं वहन्ति लक्ष्यंदेशंप्रापयन्ति ततोदक्षिणायाः दातुर्यजमानस्य सुवृत् सुष्ठुचक्रादिवर्तनं यस्यसोश्वादिसहितोरथोवर्तते। अथप्रत्यक्षः हे देवासः हे देवाइन्द्रादयः भरेषु भ्रियते आहवनीयादिरूपेणाग्निरत्रेतिभराः यज्ञाः। यद्वा भृभर्त्सने भृणन्तिभर्त्सयन्ति योद्धारोत्रेतिभराः संग्रामाः तेषु भोजं दातारं अवत रक्षत ततः युष्माभिः पालितोभोजः धनादिदानेन जनानां भोजयितासन् समनीकेषु संग्रामेषु शत्रून् जेता जयशीलोभवति। जिजये ताच्छीलिकस्तृन् अतएव नलोकाव्ययेतिशत्रुशब्दस्य षष्ठीप्रतिषेधः॥ ११॥

॥ इत्यष्टमस्य षष्ठे चतुर्थोवर्गः॥ ४॥

किमिच्छन्तीत्येकादशर्चं नवमंसूक्तं त्रैष्टुभं इन्द्रपुरोहितस्य बृहस्पतेः गोषु बलनाम्नोसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवामन्वेषणाय सरमानामदेवशुनी प्रेषिता साच महतीं नदीमुत्तीर्य बलपुरंप्राप्य गुप्तस्थाने निहितास्तागाददर्श अथ त-

स्मिन्नन्तरे पणयः इदंवृत्तान्तमवगच्छन्तः एनां मित्रीकर्तुं संवादमकुर्वन् । तत्र प्रथमा तृतीया-द्याअयुजोन्त्यावर्जिताः पणीनां वाक्यानि अत्र ते ऋषयः सरमादेवता । द्वितीयाचतुर्थाद्यायुजः एताएकादशीच षट्सरमायावाक्यानि अतस्तासु साऋषिः पणयोदेवता । तथाचानुक्रान्तं– किमिच्छन्ती पणिभिरसुरैर्निगूढागाअन्वेष्टुं सरमादेवशुनीन्द्रेणप्रहिता तामयुग्भिः पणयोमित्रीयन्तः प्रोचुः सातान्युग्मान्ताभिरनिच्छन्तीप्रत्याचष्टेइति । गतोविनियोगः ।

तत्र प्रथमा–

**किमिच्छन्तींसरमाप्रेदमानड्दूरेह्यध्वाजगुरिःपराचैः ।**
**कास्मेहितिःकापरितक्म्यासीत्कथंरसायाअतरःपयांसि ॥ १ ॥**

**किम् । इच्छन्ती । सरमा । प्र । इदम् । आनट् । दूरे । हि ।**
**अध्वा । जगुरिः । पराचैः । का । अस्मेऽहितिः । का । परिऽतक्म्या ।**
**आसीत् । कथम् । रसायाः । अतरः । पयांसि ॥ १ ॥**

अनया आगच्छन्तीं सरमां दृष्ट्वा पणयोवदन्ति सरमा सरणशीला एतन्नामिका देवशुनी किं प्रार्थयमानासती इदमस्मदीयं स्थानं प्रानट् प्राप्नोत् आङ्पूर्वोनशिर्व्याप्तिकर्मा । तस्य लुङिमन्त्रेघसेत्यादिनाच्लेर्लुक् छन्दस्यपिदृश्यते इति आडागमः । पराचैः परांचि पराङ्मुखान्यावृत्तिवर्जितानि यानि गमनानि तैर्जगुरिः उद्गूर्णः महताप्रयत्नेनापि गन्तुंनशक्यतइत्यर्थः । गॄनिगरणे आदृगमहनेत्यादिना किन्प्रत्ययः बहुलंछन्दसीत्युत्वं तादृशोयमध्वा दूरेहि विप्रकृष्टः खलु । यद्वा पराचैः परांचनै जगुरिः अत्यर्थं गंत्री पार्ष्णिभागमनालोकमानासती इदं स्थानं प्राप्नोति दूरे अयमध्वा यदृच्छयागन्तुं नशक्यते अतोवयमेतांपृच्छामः । हे सरमे का कीदृशी अस्मेहितिः कोस्मास्वर्थहितिः कोस्मासु त्वदपेक्षितार्थोनिहितः यद्वा अस्मासु कोर्थोगतः दधातेर्हिनोतेर्वा क्तिनिरूपं आगच्छंत्यास्तव का कीदृशी परितक्म्या रात्रिरासीत् यद्वा तकतिर्गत्यर्थः परितकनं परितोगमनं भ्रमणंवा कीदृशमासीत् कथंवा रसायाः शब्दायमानायाः अन्तरिक्षनद्या योजनशतविस्तीर्णायाः पयांस्युदकानि अतरः तीर्णवत्यसि एतद्वद । अत्रकिमिच्छन्तीसरमेदंप्रानडित्यादि निरुक्तंद्रष्टव्यं ॥ १ ॥

---

१ नि० ११. २५ ।

अथ द्वितीया—

इन्द्र॑स्य दू॒तीरि॑षि॒ता च॑रामि म॒ह इ॒च्छन्ती॑ पणयो नि॒धीन्वः॑ ।
अ॒ति॒ष्कदो॑ भि॒यसा॒ तन्न॑ आव॒त्तथा॑ र॒साया॑ अतरं॒ पयां॑सि ॥ २ ॥

इन्द्र॑स्य । दू॒तीः । इ॒षि॒ता । च॒रा॒मि॒ । म॒हः । इ॒च्छन्ती॑ । प॒ण॒यः॒ । नि॒ऽधीन् । व॒ः । अ॒ति॒ऽस्कदः॑ । भि॒यसा॑ । तत् । न॒ः । आ॒व॒त् । तथा॑ । र॒साया॑ः । अ॒त॒र॒म् । पयां॑सि ॥ २ ॥

अनया तान् सरमेत्यूचे हेपणयः एतन्नामकाः असुराः इन्द्रस्य दूतीः सुपांसुलुगिति प्रथमैकवचनस्य सुश्छान्दसः अहं इषिता तेनैवप्रेषिता सती चरामि युष्मदीयंस्थानमागच्छामि। किमर्थं वोयुष्मदीयान् युष्मदीयेपर्वते अधिष्ठापितान् महोमहतः निधीन् बृहस्पतेर्गोनिधीन् इच्छन्ती कामयमानासती चरामि। किंच अतिष्कदः स्कन्दिर्गतिशोषणयोः भावेक्विप् अतिष्कन्दनात् अतिक्रमणाज्जातेन भियसा भयेन तन्नदीजलं नः पूजायां बहुवचनं मां आवत् अरक्षत्। तथा तेन प्रकारेण रसायानद्याः पयांस्युदकानि अतरं तीर्णवत्यस्मि ॥ २ ॥

अथ तृतीया—

की॒दृङ्ङिन्द्रः॑ सरमे॒ का दृ॑शी॒का यस्ये॒दं दू॒तीरस॑रः परा॒कात् ।
आ च॒ गच्छा॑न्मि॒त्रमे॑ना दधा॒माथा॒ गवां॒ गोप॑तिर्नो भवाति ॥ ३ ॥

की॒दृङ् । इन्द्रः॑ । स॒र॒मे॒ । का । दृ॒शी॒का । यस्य॑ । इ॒दम् । दू॒तीः । अस॑रः । प॒रा॒कात् । आ । च॒ । गच्छा॑त् । मि॒त्रम् । ए॒न॒ । द॒धा॒म॒ । अथ॑ । गवा॑म् । गोऽप॑तिः । न॒ः । भ॒वा॒ति॒ ॥ ३ ॥

तेषां वाक्यं हे सरमे तव स्वामीइन्द्रः कीदृक् कियत्पराक्रमवान् कादृशीका तस्य कीदृशीदृष्टिः दृष्टिरूपासेनाकियती यस्य दूतीः दूती त्वं इदमस्मदीयंस्थानं पराकादतिदूरादसरः आगमः। इति तामुक्त्वा इदानीं ते परस्परमाहुः एषा सरमा आगच्छात् च आगच्छतुच गमेर्लेटि आडागमः स्वामी भवाति भवतु नह्येकस्यागोः किंतु बहूनां गवां स्वामी भवतु वृत्यवृत्तिभ्यां स्वामित्वं बाहुल्यंच विवक्ष्यते ॥ ३ ॥

अथ चतुर्थी—

**नाहंतंवेदद्भ्यंदभत्सयस्येदंदूतीरसरंपराकात् ।**
**नतंगूहन्तिस्रवतोगभीराहताइन्द्रेणपणयःशयध्वे ॥ ४ ॥**

न । अहम् । तम् । वेद् । दभ्यम् । दभत् । सः । यस्य । इदम् ।
दूतीः । असरम् । पराकात् । न । तम् । गूहन्ति । स्रवतः । गभीराः ।
हताः । इन्द्रेण । पणयः ॥ शयध्वे ॥ ४ ॥

सरमावदति हे पणयः तमिन्द्रं दभ्यं हंतव्यं नवेद नजानामि दभेरचोयत् कथं सइन्द्रः दभत् सर्वाञ्जनान्दभति हिनस्त्येव दभेर्लेटिरूपं वाक्यभेदादनिघातः यस्यदूतीः अहं इदं युष्मदीयं स्थानं पराकात् अतिदूरदेशात् असरं प्राप्ताभूवं । इन्द्रोहिंसितव्योनभवतीत्यत्र युक्तिमाह स्रवतः स्रवणं स्रवः तमाचरन्ति आचारार्थेक्विप् तुगागमः जसिरूपं स्रवणशीलाः गभीरा गंभीरानद्यः तं इन्द्रं नगूहन्तिनसंवृण्वन्ति नाच्छादयन्ति । किंतु आविष्कुर्वन्ति वयं यस्य महिम्ना समुद्रं प्रतिसरामस्तस्मादहिंस्यइति एनं प्रकटीकुर्वन्ति । गुहूसंवरणे भौवादिकः। तस्मात् हे पणयोयूयं इन्द्रेण तादृशपराक्रमेणहताः सन्तः शयध्वे शीङ्स्वप्ने बहुलंछन्दसीति शपोलुगभावः ॥ ४ ॥

अथ पंचमी—

**इमागावःसरमेयाऐच्छःपरिदिवोअन्तान्त्सुभगेपतन्ती ।**
**कस्तएनाअवसृजादयुध्व्युतास्माकमायुधासन्तितिग्मा ॥५॥५॥**

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अन्तान् ।
सुऽभगे । पतन्ती । कः । ते । एनाः । अव । सृजात् । अयुध्वी ।
उत । अस्माकम् । आयुधा । सन्ति । तिग्मा ॥ ५ ॥ ५ ॥

क्रुद्धाः पणयः प्रत्यूचुः हे सुभगे शोभनभाग्यवति हेसरमे दिवः द्युलोकस्य अन्तान् पर्यन्तान् परिपतन्ती कुत्रगावस्तिष्ठन्तीति परितोगच्छन्ती त्वं इमाः परिदृश्यमानाः याः गावः सुब्व्यत्ययः गाः ऐच्छः कामयसे ताः एना गाः ते त्वदीयः कः अयुध्वी अयुध्वा अवसृजात्

अस्मात्पर्वतादवसृजेत् विनिर्गमयेत । सृजेर्लेटिरूपं अयुध्वी युधेःक्त्वाप्रत्यये स्नात्व्यादयश्चेति निपातितः नञ्समासत्वात्ल्यबादेशाभावः नञःप्रकृतिस्वरत्वंच उतापिच अस्माकं तिग्मा तीक्ष्णान्यायुधा आयुधानि सन्ति तस्मादस्माभिर्युद्धमकृत्वा कोवागाआहरति ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे पंचमोवर्गः ॥ ५ ॥

अथ षष्ठी–

असेन्यावः पणयोवचांस्यनिषव्यास्तन्वःसन्तुपापीः ।
अधृष्टोवएतवाअस्तुपन्थाबृहस्पतिर्वउभयानमृळात् ॥ ६ ॥

असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः । सन्तु ।
पापीः । अधृष्टः । वः । एतवै । अस्तु । पन्थाः । बृहस्पतिः ।
वः । उभया । न । मृळात् ॥ ६ ॥

सा तां निराह हे पणयः वोयुष्माकं वचांसि पूर्वोक्तानि वचनान्यसेन्या असेन्यानि सेन्यानि सेनार्हाणि नभवन्ति सेनाशब्दात्तदर्हतीत्यर्थेछन्दसिचेति यत्प्रत्ययः नञ्समासः । ययतोश्चातदर्थइति उत्तरपदान्तोदात्तत्वं । तथा तन्वः युष्मदीयानि शरीराणि अनिषव्याः इष्वर्हाणि न सन्तु पराक्रमराहित्येन पूर्ववत्प्रत्ययः ओर्गुणइतिगुणः स्वरश्चतादृक् । यतः पापीः पापयुक्तानिखलु छन्दसीवनिपादितोप्रत्ययः । जसःशः किंच वोयुष्मदोयः पंथामार्गः एतवै गन्तुं अधृष्टः असमर्थोस्तु इणूगतावित्यस्य तुमर्थेतवैप्रत्ययः तवैचान्तश्चयुगपदितिधातोः प्रत्ययान्तस्य युगपदुदात्तत्वं तत्र हेतुमाह वोयुष्मदीयान् उभया उभयविधान् पूर्वोक्तान्तन्वोदेहान् बृहस्पतिरिन्द्रप्रेरितोनमृळात् नसुखयतु किंतु बाधेत मृडसुखने लेटयाडागमः ॥ ६ ॥

अथ सप्तमी–

अयंनिधिःसरमेअद्रिबुध्नोगोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षन्तितंपणयोयेसुगोपारेकुपदमलकमाजगन्थ ॥ ७ ॥

अयम् । निऽधिः । सरमे । अद्रिऽबुध्नः । गोभिः । अश्वेभिः ।
वसुऽभिः । निऽऋष्टः । रक्षन्ति । तम् । पणयः । ये । सुऽगोपाः ।
रेकु । पदम् । अलकम् । आ । जगन्थ ॥ ७ ॥

तेच पुनराहुः हे सरमे अयंनिधिः अस्मदीयः कोशः अद्रिबुध्नः बन्धबन्धने बन्धेर्बंधि-बुधीचेति नप्रत्ययः बुधइत्यादेशः अद्रिर्बन्धकोयस्य तादृशः तथा आहृतैर्गोभिः अश्वेभिः अश्वैश्च वसुभिरात्मीयैः धनैश्च न्यृष्टः नितरांप्राप्तोभवति । ऋषीगतौ क्तप्रत्ययेश्वीदितोनि-ष्ठायामितीट्प्रतिषेधः । गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं सुगोपाः गुपूरक्षणे आयप्रत्ययान्तात्क्विपि अतोलोपयलोपौ सुष्ठु गोपायितारोयेपणयः तेअसुराः तंनिधिं रक्षन्ति पालयन्ति । रेकु रेकृशंकायां औणादिकउप्रत्ययः शंकितं गोभिः शब्दायमानं पदं अस्माभिः पालितंस्थानं अलकं व्यर्थमेव आजगंथ आगतवत्यसि । गमेर्लेटिरूपं ॥ ७ ॥

अथाष्टमी—

एह ग॑म॒न्नृष॑यः॒ सोम॑शिता अ॒यास्यो॒ अङ्गि॑रसो॒ नव॑ग्वाः ।
त ए॒तमू॒र्वं वि भ॑जन्त॒ गोना॒मथै॒तद्वचः॑ प॒णयो॒ वम॒न्नित् ॥ ८ ॥

आ । इ॒ह । ग॒म॒न् । ऋष॑यः । सोम॑ऽशिताः । अ॒यास्यः॑ ।
अङ्गि॑रसः । नव॑ऽग्वाः । ते । ए॒तम् । ऊ॒र्वम् । वि । भ॒ज॒न्त॒ ।
गोना॑म् । अथ॑ । ए॒तत् । वचः॑ । प॒णयः॑ । वम॑न् । इत् ॥ ८ ॥

सरमा पुनः प्रत्युवाच हे पणयः सोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः शिञ्निशाने कर्मणिक्तप्रत्ययः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वं । तादृशानवग्वाः नवगतयः यद्वा अंगिरसां सत्रमासीनानां मध्ये केचन नवसु मासु अध्यतिष्ठन् ते नवग्वाः अनेन दशग्वाअप्युपलक्ष्यन्ते । उभयविधास्तेअंगिरसऋषयः तेषां प्रथमोयास्यः एतन्नामाच तेएते इह युष्मदीयेस्थाने आगमन् आगच्छेयुः । गमेश्छन्दसि लुङ्लङ्लिटइति सार्वकालिकोलुङ् लृदित्वात् च्लेः रङ् । आगत्यच ते गोनां गोःपादान्तइति छन्दसिनुडागमः गवां ऊर्वन्तं समूहं विभजन्त विभागंकुर्युः अत्रापि पूर्ववत्सार्वकालिकोलुङ् । अथानन्तरं पणयोयूयं एतद्वचः पूर्वंयद्यर्थं मागतासीति यद्वाक्यमवोचत तद्वाक्यं तदावमन्नित् वमन्तः परित्यजन्त एव भवथ । वमुउद्गिरणे शतरिसुपांसुलुगिति जसोलुक् नुमागमः संयोगान्तलोपः यद्वा लङि रूपं स्वरश्छान्दसः ॥८ ॥

अथ नवमी—

एवाचत्वंसरमआजगन्थप्रबाधितासहसादैव्येन ।
स्वसारंत्वाकृणवैमापुनर्गाअपतेगवांसुभगेभजाम ॥ ९ ॥

एव । च । त्वम् । सरमे । आऽजगन्थ । प्रऽबाधिता । सहसा ।
दैव्येन । स्वसारम् । त्वा । कृणवै । मा । पुनः । गाः । अप ।
ते । गवाम् । सुऽभगे । भजाम ॥ ९ ॥

तया एवमुक्तेसति पणयः प्रणयवाक्यमाहुः हे सरमे त्वं दैव्येन देवसंबन्धिना सहसा बलेन प्रबाधिता यथातथा वलपुरं प्राप्य तत्रस्थितागादृष्ट्वा पुनरागच्छेति तेन प्रपीडितात्वंएवंचेत् आजगन्थ आगतवत्यसि चशब्दश्चेदर्थे निपातैर्यद्यदिहन्तेतिङोनिघाताभावः गमेर्लिटिथलिरूपं सहसुपेत्यत्र सहेतियोगविभागात् समासः तिङिचोदात्तवतीति गतेर्निघातः नित्स्वरः तर्हि त्वा त्वां स्वसारं भगिनीं कृणवै करवै समूहापेक्षयैकवचनं त्वंतु पुनः मागाः इन्द्रादीन्मागच्छ अपि तर्हि हे सुभगे सरमे ते त्वदीयानां गवांसमूहं पर्वतादपगमय्य भजाम त्वंच वयंच विभजाम विभागं करवामेत्यर्थः ॥ ९ ॥

अथ दशमी—

नाहंवेदभ्रातृत्वंनोस्वसृत्वमिन्द्रोविदुरङ्गिरसश्चघोराः ।
गोकामामेअच्छदयन्यदायमपातइतपणयोवरीयः ॥ १० ॥

न । अहम् । वेद । भ्रातृऽत्वम् । नो इति । स्वसृऽत्वम् । इन्द्रः ।
विदुः । अङ्गिरसः । च । घोराः । गोऽकामाः । मे । अच्छदयन् ।
यत् । आयम् । अप । अतः । इत । पणयः । वरीयः ॥ १० ॥

सा तान्प्रत्याचष्टे हे पणयः अहं भ्रातृत्वं नवेद नजानामि । तथा स्वसृत्वंच नोवेद नैवजानामि । केजानन्ति तान्आह इन्द्रः घोराः शत्रूणांभयंकराः अंगिरसश्च विदुर्जानन्ति किंच अस्मात् स्थानात् अहं यद्यदायं इन्द्रादीन् प्रामवं अयपयगतौ लङिरूपं तदा मे मदीयागोकामाः युष्माभिरपहृतागाः कामयमानाइन्द्रादयः अच्छदयन् युष्मदीयंस्थानं आच्छादय-

न्ति । छदअपवारणे अतःकारणात् हे पणयोवरीयः उरुतरं गवांवृन्दं परित्यज्यअपेत अन्यत्स्थानं प्रतिगच्छत । यद्वा वरीयः प्रभूतं अतिदूरं देशंगच्छत । इत इणूगतौ लोटिरूपं वरीयः उरुशब्दादीयसुनि प्रियस्थिरेत्यादिनावरादेशः ॥ १० ॥

अथैकादशी–

दूरमित पणयोवरीयउद्गावोयन्तुमिनतीर्ऋतेन ।
बृहस्पतिर्याअविन्दन्निगूळ्हाःसोमोग्रावाणऋषयश्चविप्राः ॥ ११ ॥ ६ ॥

दूरम् । इत । पणयः । वरीयः । उत् । गावः । यन्तु । मिनतीः ।
ऋतेन । बृहस्पतिः । याः । अविन्दत् । निऽगूळ्हाः । सोमः ।
ग्रावाणः । ऋषयः । च । विप्राः ॥ ११ ॥ ६ ॥

हे पणयः यूयं वरीयउरुतरं दूरंदेशं इत गच्छत । युष्माभिरपहतागावः ऋतेन सत्येन मिनतीः मिनत्यः द्वारस्यपिधायकंपर्वतं हिंसत्योविदारयन्त्यः उद्यन्तु तस्मादुद्गच्छन्तु । यद्वा मिनतीः व्यत्ययेन कर्मणिशता । मीयमाना युष्माभिः बाध्यमानास्तागावः सुब्व्यत्ययः गाऋतेन स्तुतिभिर्गन्तव्येनेन्द्रेण सहायेन बृहस्पत्यादयउद्यन्तु पर्वतादुद्गमयन्तु निगूढा नितरांस्थापितायाःगाः बृहस्पतिः अविन्दत् लप्स्यते । तथा सोमः तदभिषवकारिणोग्रावाणश्च विप्रामेधाविनऋषयः अंगिरसश्च लप्स्यन्ते । विद्लृलाभे तौदादिकः तस्माच्छन्दसिलुङ्लङ्लिटइति भविष्यदर्थेलङ् शेमुचादीनामिति नुमागमः ॥ ११ ॥

॥ इत्यष्टमस्य पंचमे षष्ठोवर्गः ॥ ६ ॥

तेवदन्नितिसप्तर्चं दशमंसूक्तं जुहूर्नामब्रह्मवादिनी ऋषिः ब्रह्मपुत्रऊर्ध्वनाभानामवा षष्ठीसप्तम्यावनुष्टुभौ शिष्टाः पञ्चत्रिष्टुभः विश्वेदेवादेवता । तथाचानुक्रान्तम्–तेवदन्त्सप्त जुहूर्ब्रह्मजाया ब्राह्मोवोर्ध्वनाभा वैश्वदेवं द्व्यनुष्टुबन्तमिति । गतोविनियोगः ।

तत्र प्रथमा–

तेवदन्प्रथमाब्रह्मकिल्बिषेकूपारःसलिलोमातरिश्वा ।
वीळुहरास्तपउग्रोमयोभूरापोदेवीःप्रथमजाऋतेन ॥ १ ॥

ते । अ॒व॒द॒न् । प्र॒थ॒माः । ब्र॒ह्म॒ऽकि॒ल्बि॒षे । अकूपारः । स॒लि॒लः । मा॒त॒रिश्वा॑ । वी॒ळु॒ऽह॑राः । तपः॑ । उ॒ग्रः । म॒यः॒ऽभूः । आपः॑ । दे॒वीः । प्र॒थ॒म॒ऽजाः । ऋ॒तेन॑ ॥ १ ॥

अत्रेतिहासमाचक्षते जुहूरितिवाङ्नाम साब्रह्मणोजायाच बृहस्पतेर्वाचस्पतित्वाद्बृहस्पतेर्जुहूर्नामभार्याबभूव कदाचिदस्याःकिल्बिषमस्यादौर्भाग्यरूपेणासांचक्रे अतएव सएनांपर्यत्याक्षीत् अनन्तरमादित्यादयोदेवाः मिथोविचार्य एनामकिल्बिषांकृत्वा पुनर्बृहस्पतयेमादुरिति । तदत्रवर्ण्यते—प्रथमा मुख्यास्तेदेवाः ब्रह्मकिल्बिषे षष्ठीसमासः समासःस्वरः ब्रह्मणोबृहस्पतेः किल्बिषे पापे जुहूदौर्भाग्यरूपे विषये अवदन् निष्कृत्युपायमवोचन् वकारपरत्वादत्रप्रकृतिभावाभावः । केते अकूपारः । अत्रयास्कः—आदित्योप्यकूपारउच्यते कूपारोभवति दूरपारइति । अकुत्सितपारः महागतिरादित्यः सलिलः अब्देवतावरुणः मातरिश्वावायुः वीळुहराः हरतेरसुनिरूपं हरइति हरति विनाशयति तमांसीतिहरस्तेजः प्रभूततेजस्कः तपः तृतीयायाःसुः तपसा तापनेन उग्रः उद्गूर्णोग्निः मयोभूः सुखस्यभावयिता सोमः देवीः देव्यः आपः कीदृश्यः ऋतेन सत्यभूतेन ब्रह्मणा प्रथमजाः आदितएवोत्पादिताः एते उपायमुक्त्वा प्रायश्चित्तमप्यकारयन्नितिभावः॥१॥

अथ द्वितीया—

सोमो॒ राजा॑ प्रथ॒मो ब्र॒ह्मजा॒यां पुनः॒ प्राय॑च्छ॒दहृ॑णीयमानः ।
अ॒न्व॒र्ति॒ता वरु॑णो मि॒त्र आ॑सीद॒ग्निर्होता॑ हस्त॒गृह्या नि॑नाय ॥ २ ॥

सोमः॑ । राजा॑ । प्र॒थ॒मः । ब्र॒ह्म॒ऽजा॒याम् । पु॒नरिति॑ । प्र । अ॒य॒च्छ॒त् । अहृ॑णीयमानः । अ॒नु॒ऽअ॒र्ति॒ता । वरु॑णः । मि॒त्रः । आ॒सी॒त् । अ॒ग्निः । होता॑ । ह॒स्त॒ऽगृह्य॑ । आ । नि॒ना॒य ॥ २ ॥

प्रथमोमुख्यः सोमोराजा अहृणीयमानः पापापगमनेनालज्जमानः सन् तामेनामकिल्बिषां ब्रह्मजायां पुनर्बृहस्पतये प्रायच्छत् । ततः वरुणः अन्वार्तिता ऋतिः सौत्रोधातुः घृणायांवर्तते तस्यतृचिरूपं सोममनुमोदयितासीत् सर्वथा त्वंगृहाणेति दयामकार्षीत् तथा मित्रश्च अन-

१ नि० ४. १८ ।

न्तरं होता देवानां आह्वाता मनुष्याणां होमनिष्पादकोवाग्निः हस्तगृह्य तां हस्तेगृहीत्वा आनि-नाय आनैषीत् प्रादादित्यर्थः । हस्तगृह्य नित्यंहस्तेपाणावुपयमनइति हस्तेशब्दस्य गतिसंज्ञा-यां ग्रहिणासमासेल्यप् एकारलोपश्छान्दसः।यद्वा हस्तशब्दात्परस्यगृहेश्छान्दसौ समासल्यपौ॥२॥

अथ तृतीया—

हस्तेनैवग्राह्यआधिरस्याब्रह्मजायेयमितिचेदवोचन् ।
नदूतायप्रह्येतस्थएषातथाराष्ट्रंगुपितंक्षत्रियस्य ॥ ३ ॥

हस्तेन । एव । ग्राह्यः । आऽधिः । अस्याः । ब्रह्मऽजाया । इयम् । इति । च । इत् । अवोचन् । न । दूताय । प्रऽह्ये । तस्थे । एषा । तथा । राष्ट्रम् । गुपितम् । क्षत्रियस्य ॥ ३ ॥

देवा बृहस्पतिमूचुः हे बृहस्पते अस्याः आधिः आधीयन्ते आभरणान्यत्रेति आधिः शरीरं उपसर्गेघोःकिरितिकिप्रत्ययः अस्याः शरीरं हस्तेनैव ग्राह्यः गृहीतव्यमेव पुनः तेदे-वा इदानीमियं ब्रह्मजायेत्येवावोचन् अवादिषुः च शब्दश्चेदर्थे अतएव निपातैर्यद्यदिहन्तेति तिङोनिघाताभावः ब्रूञ्व्यक्तायांवाचि लुङिब्रुवोवचिः अस्यतिवक्तिख्यातिभ्योङितिच्लेरङादेशः वच उमित्युमागमः अडागमस्वरः इदवधारणे एषा ब्रह्मजाया पुरा प्रह्ये हिगतौ वृद्धौच कर्म-ण्यौणादिकः क्विप् तुगभावश्छान्दसः ङिद्वचनं संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः उ-दात्तस्वरितयोर्यणइति सुपः स्वरितत्वं प्रहिताय त्वया भार्यान्वेषणार्थं प्रेषिताय दूताय तथा नतस्थे स्वात्मानं नप्रकाशयति तिष्ठतेर्लिटि प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं श्लाघन्हुङ्-स्थाशपामितिदूतस्य संप्रदानसंज्ञा । तत्रदृष्टान्तः—यथा क्षत्रियस्यराज्ञः गुपितं रक्षितं राष्ट्रं रा-ज्यं शत्रवे यथा नप्रकाशयति तद्वदसौ दौर्भाग्ययुक्ततया तस्मै स्वात्मानं नप्रकाशितवती इ-दानींतु तद्राहित्येन प्रकाशमानाइयं ब्रह्मजायैवेत्यब्रुवन् ॥ ३ ॥

अथ चतुर्थी—

देवाएतस्यामवदन्तपूर्वेसप्तऋषयस्तपसेयेनिषेदुः ।
भीमाजायाब्राह्मणस्योपनीतादुर्धांदधातिपरमेव्योमन् ॥ ४ ॥

देवाः । एतस्याम् । अवदन्त । पूर्वे । सप्तऽऋषयः । तपसे । ये ।
निऽसेदुः । भीमा । जाया । ब्राह्मणस्य । उपऽनीता ।
दुःऽधाम् । दधाति । परमे । विऽओमन् ॥ ४ ॥

पूर्वे चिरन्तनादेवाः आदित्यादयः एतस्यांविषये अवदन्त इयं पापरहितेत्यवादिषुः तथा ये सप्तऋषयः समासस्वरः सप्तसंख्याकाऋषयः तपसे तपश्चरणाय निषेदुर्निषण्णाबभूवुः । सदेर्लिटिरूपं उपसर्गेणसमासः यद्योगादनिघातः तेप्यवादिषुः ततः भीमा शत्रुरूपाणां पापानां भयंकरी पतिवत्नी एषाजाया ब्राह्मणस्य बृहस्पतेरुपनीता समीपे देवैःस्थापिता णीञ् प्रापणे कर्मणिक्तः गतिरनन्तरइति गतेःप्रकृतिस्वरत्वं तथाहि तपःप्रभावः दुर्धां दुर्धानामपि परमे व्योमन् व्योमनि उत्तमेस्थाने दधाति विदधातिखलु । तस्मादेनामपि देवतापरिग्रहरूपः तपोमहिमा बृहस्पतेरन्तिके स्थापयति ॥ ४ ॥

अथ पंचमी—

ब्रह्मचारीचरतिवेविषद्विषःसदेवानांभवत्येकमङ्गम् ।
तेनजायामन्वविन्दद्बृहस्पतिःसोमेननीतांजुह्वंनदेवाः ॥ ५ ॥

ब्रह्मऽचारी । चरति । वेविषत् । विषः । सः । देवानाम् ।
भवति । एकम् । अङ्गम् । तेन । जायाम् । अनु । अविन्दत् ।
बृहस्पतिः । सोमेन । नीताम् । जुह्वम् । न । देवाः ॥ ५ ॥

एवं स्वपतिः मामलभतेति जुहूः परोक्षतयावदति हे देवाः पूर्वं सब्रह्मचारी जायाभावेन ब्रह्मचारीचरति अतएव विषः सर्वेषु यज्ञेषु व्याप्तवान् देवान्वेविषत् स्तुतिभिर्हविर्भिश्च व्याप्नुवन् देवानामेकमंगंभवति जायापती यज्ञस्यद्वेअंगेखलु वेविषत् विष्लृव्याप्तौ जौहोत्यादिकः णिजां-त्रयाणांगुणः श्लावित्यभ्यासस्यगुणः शतुर्नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः अभ्यस्ताना-मादिरित्याद्युदात्तत्वं । तेन देवानां परिचरणेन बृहस्पतिः जायां जुहूनामिकां मां अन्वविन्दत् अनुगम्यालभत् । नशब्दउपमार्थे पूर्वं यथा सोमेननीतां सोमोददद्गन्धर्वायेत्यादि क्रमेणनीतां जुह्वं जुहूं यथा लब्धवान् तद्वदिदानीमपि जुह्वं हुदानादनयोः अन्येभ्योपिदृश्यन्तेइतिक्विप् जु-

होतेर्द्वेचेतिद्विर्वचनंदीर्घश्च उदात्तयणोहल्पूर्वादितिविभक्त्युदात्तत्वेप्राप्ते नोङ्धात्वोरितिप्रतिषेधे उदात्तस्वरितयोर्यणइतिस्वरितत्वं ॥ ५ ॥

अथ षष्ठी—

पुनर्वैदेवाअददुःपुनर्मनुष्याउत ।
राजानःसत्यंकृण्वानाब्रह्मजायांपुनर्ददुः ॥ ६ ॥

पुनः । वै । देवाः । अददुः । पुनः । मनुष्याः । उत । राजानः ।
सत्यम् । कृण्वानाः । ब्रह्मऽजायाम् । पुनः । ददुः ॥ ६ ॥

लाभहेतुमाह देवाः ब्रह्मजायां जुहूं बृहस्पतये पुनरददुः वैशब्दः प्रसिद्धवाची उताप्यर्थे मनुष्याअपि पुनरददुः एवं देवमनुष्यैः कृतंदानं सत्यं यथार्थं कृण्वानाः कुर्वाणा राजानोपि पुनस्तस्मैददुः एवं अव्यवहार्यत्वनिमित्तं पापमपि व्यनाशयन्नितिभावः ॥ ६ ॥

अथ सप्तमी—

पुनर्दायब्रह्मजायांकृत्वीदेवैर्निकिल्बिषम् ।
ऊर्जंपृथिव्याभक्त्वायोरुगायमुपासते ॥ ७ ॥ ७ ॥

पुनःऽदाय । ब्रह्मऽजायाम् । कृत्वी । देवैः । निःऽकिल्बिषम् ।
ऊर्जम् । पृथिव्याः । भक्त्वाय । उरुऽगायम् । उप । आसते ॥ ७ ॥ ७ ॥

देवैः सुपांसुपोभवन्तीति जसस्तृतीयादेशः देवाः निकिल्बिषं अर्थाभावेव्ययीभावः समासस्वरः तस्याकिल्बिषाभावं कृत्वी स्नात्व्यादयश्चेतिनिपातितः कृत्वा ब्रह्मजायां ब्रह्मणोबृहस्पतेर्भार्यां पुनर्दाय पुनर्दत्वा पुनश्चनसोश्छन्दसि गतिसंज्ञावक्तव्येति पुनःशब्दस्य गतिसंज्ञायां समासल्यपौ नल्यपीतीत्वप्रतिषेधः कृदुत्तरपदप्रकृतिस्वरत्वं पृथिव्याऊर्जं रसभूतं अन्नं हवीरूपं भक्त्वाय क्त्वोयगितियगागमः भक्त्वा विभज्य उरुगायं बहुकीर्तिं बहुभिः स्तोतव्यंवा बार्हस्पत्यंयज्ञं उपासते सेवन्ते ॥ ७ ॥

॥ इत्यष्टमस्य षष्ठे सप्तमोवर्गः ॥ ७ ॥

समिद्धइत्येकादशर्चं एकादशंसूक्तं त्रैष्टुभं भार्गवोजमदग्निर्ऋषिः तस्यपुत्रोरामोवा यःपरशुरामइतिप्रख्यातः आप्रीसूक्तमिदं अतः समिदाद्याः सतनूनपातोनराशंसवर्जिताः प्रत्यृचंदेवताः । तथाचानुक्रान्तं—समिद्धएकादश जमदग्निस्तत्सुतोवाराम आप्रियइति । पशौ जामदग्न्यानामिदमाप्रीसूक्तं यद्वा अविशेषेण सर्वेषां । सूत्रितंच समिद्धोअद्येति यथर्षिवेति । अग्निचयनांगभूते प्राजापत्येपशौ सर्वेषां नित्यमिदमाप्रीसूक्तं । सूत्रितंच—प्राजापत्ये तु जामदग्न्यः सर्वेषामिति ।

तत्र प्रथमा—

**समि॑द्धोअ॒द्यमनु॑षोदुरो॒णेदे॒वोदे॒वान्य॑जसिजातवेदः ।**
**आचव॑हमित्रमहश्चिकि॒त्वान्त्वंदू॒तःक॒विर॑सि॒प्रचे॑ताः ॥ १ ॥**

सम्ऽइ॑द्धः । अ॒द्य । मनु॑षः । दु॒रो॒णे । दे॒वः । दे॒वान् । य॒ज॒सि॒ ।
जा॒त॒ऽवे॒दः॒ । आ । च॒ । व॒ह॒ । मि॒त्र॒ऽम॒हः॒ । चि॒कि॒त्वान् ।
त्वम् । दू॒तः । क॒विः । अ॒सि॒ । प्रऽचे॑ताः ॥ १ ॥

हे जातवेदोजातप्रज्ञाग्ने देवः स्वतेजसा दीप्यमानस्त्वं मनुषः मनुष्यस्य यष्टुः दुरोणे गृहनामैतत् दुरवने आयासेन रक्षितव्येगृहे अद्यास्मिन्कर्मणि समिद्धः सम्यक्प्रज्वालितःसन् देवानिन्द्रादीन्यजसि हविर्भिः पूजय समिद्धः इन्धीदीप्तौ कर्मणिक्ते श्वीदितोनिष्ठायामितीट्प्रतिषेधः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं हे मित्रमहः स्तुत्यस्तोतृलक्षणत्वेन मित्रभूतानां स्तोतॄणां पूजयितस्तैः पूज्यमानवाग्ने चिकित्वान् तैःकृताःस्तुतीः प्रजानन् चेतनावान्वा त्वं अस्मदीयेयज्ञे देवानावहचआप्रापय वहप्रापणे लोटिरूपं चवायोगेप्रथमेतिननिघातः । तथा कविः क्रान्तप्रज्ञः अतएव प्रचेताः प्रकृष्टज्ञानस्त्वं दूतः देवानां हविःप्रापणेन हितकारीभवसि ॥ १ ॥

अथ द्वितीया—

**तनू॑नपात्पथऋ॒तस्य॒याना॒न्मध्वा॑सम॒ञ्जन्त्स्व॑दयासुजिह्व ।**
**मन्मा॑निधी॒भिरु॒तय॒ज्ञमृ॒न्धन्दे॑व॒त्राच॑कृणुह्यध्व॒रंनः ॥ २ ॥**

तनू॑ऽनपात् । प॒थः । ऋ॒तस्य॑ । याना॑न् । मध्वा॑ । स॒म्ऽअ॒ञ्जन् ।
स्व॒द॒य॒ । सु॒ऽजि॒ह्व॒ । मन्मा॑नि । धी॒भिः॑ । उ॒त । य॒ज्ञम् । ऋ॒न्धन् ।
दे॒व॒ऽत्रा । च॒ । कृ॒णु॒हि॒ । अ॒ध्व॒रम् । नः॒ ॥ २ ॥

हे तनूनपात् नपादिति अनन्तरापत्यनामधेयं गौरत्रतनूरुच्यते ततास्यां भोगाः क्षीरादयइति तस्याः पयोजायते पयसआज्यं तस्मादग्निः । यद्वा अन्तरिक्षे तताआपस्तन्वः ताभ्यओषध्यादयः तेभ्योग्निरिति एवंरूप हे सुजिह्व शोभनज्वाल यद्वा जिह्वेतिवाङ्नाम शोभनवाक् अग्ने ऋतस्य यज्ञस्य यानान् फलप्राप्तिहेतून् पथोमार्गान् हविराख्यान् मध्वा मदकरेणरसेन यद्वा वाग्जनितेनरसेन समंजन् सम्यग्दीपयन् स्वदय स्वादयस्व स्वादुकुरु । स्वद्आस्वादने णिचिउपधावृद्ध्यभावश्छान्दसः । किंच मन्मानि मन्यतेरर्चतिकर्मणः मननीयान्यस्मदभिप्रेतानि स्तोत्राणि धीभिः प्रज्ञाभिः कर्मभिर्वा उतापिच यज्ञं यजनीयं हविश्चऋन्धन् समृद्धानिकुर्वन् नोस्मदीयमध्वरं यज्ञं देवत्रा देवेषु कृणुहि कुरु । देवशब्दात् देवमनुष्येत्यादिना सप्तम्यर्थे त्राप्रत्ययः ॥ २ ॥

अथ तृतीया—

आ॒जुह्वा॑नई॒ड्यो॒वन्द्य॒श्चाया॑ह्यग्ने॒वसु॑भिःस॒जोषाः॑ ।
त्वंदे॒वाना॑मसियह्वहोता॒सए॑नान्यक्षीषि॒तोयजी॑यान् ॥ ३ ॥

आ॒ऽजुह्वा॑नः । ई॒ड्यः॑ । वन्द्यः॑ । च॒ । आ । या॒हि॒ । अ॒ग्ने॒ ।
वसु॑ऽभिः । स॒ऽजोषाः॑ । त्वम् । दे॒वाना॑म् । अ॒सि॒ । य॒ह्व॒ ।
होता॑ । सः । ए॒नान् । य॒क्षि॒ । इ॒षि॒तः । यजी॑यान् ॥ ३ ॥

हे अग्ने त्वमस्मिन्कर्मण्यायाहि आगच्छ कीदृशः आजुह्वानः देवानामाह्वाता हुदानादनयोः जौहोत्यादिकः अभ्यस्तस्वरः ईड्यःईडिरध्येषणाकर्मा अध्येष्यः प्रार्थ्यमानः वन्द्यः स्तोतव्यः वसुभिर्देवैः सजोषाः सहप्रीयमाणः आगत्यच हे यह्व महन्नामैतत् हे महन् सत्वं देवानां होता आह्वातासि ततः यजीयान् यष्टृशब्दादीयसुनि तुरिष्ठेमेयःस्विति तृचोलोपः यष्टृतरः सत्वं इषितः अस्माभिरध्येषितः प्रार्थितः सन् एतान् देवान् यक्षि यज हविषा पूज्य ॥ ३ ॥

अथ चतुर्थी—

प्राचीनंबर्हिःप्रदिशापृथिव्यावस्तोरस्याद्वृज्यतेअग्रेअह्नाम्।
व्युप्रथतेवितरंवरीयोदेवेभ्योअदितयेस्योनम् ॥ ४ ॥

प्राचीनम्। बर्हिः। प्रऽदिशा। पृथिव्याः। वस्तोः। अस्याः।
वृज्यते। अग्रे। अह्नाम्। वि। ऊँ इति। प्रथते। विऽतरम्।
वरीयः। देवेभ्यः। अदितये। स्योनम् ॥ ४ ॥

यदिदं प्राचीनं प्रागंचितं प्राङ्मुखं बर्हिरस्ति तदिदं पृथिव्याः वेदिलक्षणायाः वस्तोः वसआच्छादने तुन्प्रत्ययः चतुर्थ्यर्थे बहुलंछन्दसीतिषष्ठी यद्वा भावलक्षणेतोसुन् द्रष्टव्यः वसनायाच्छादनार्थं अह्नामग्रे पूर्वाह्णे प्रदिशा प्रकर्षेण दिश्यमानेनमंत्रेण अस्याः प्राच्यादिशः वृज्यते स्तूयते आह्रियते। तथाचनिगमः—तआवहन्तिकवयःपुरस्तादित्यादि। तच्चाहृतं वरीयउरुतरं बर्हिः वितरं विस्तीर्णं यथाभवति तथा विप्रथते विविधमेववेद्यां प्रस्तृतंभवति। तथा देवेभ्यःअदितये वेदिलक्षणायै पृथिव्यैच स्योनं सुखकरं भवति। विस्तीर्णेबर्हिषि देवाः सुखं निषीदन्ति ॥ ४ ॥

अथ पञ्चमी—

व्यचस्वतीरुर्विया॑विश्रयन्तांपतिभ्योनजनयःशुम्भमानाः।
देवीर्द्वारोबृहतीर्विश्वमिन्वादेवेभ्योभवतसुप्रायणाः ॥ ५ ॥ ८ ॥

व्यचस्वतीः। उर्विया। वि। श्रयन्ताम्। पतिऽभ्यः। न। जनयः।
शुम्भमानाः। देवीः। द्वारः। बृहतीः। विश्वम्ऽइन्वाः।
देवेभ्यः। भवत। सुप्रऽअयनाः ॥ ५ ॥ ८ ॥

व्यचस्वतीः व्यचोव्यापनं तद्वत्यः वाछन्दसीति पूर्वसवर्णदीर्घः ताद्वारदेवता उर्विया उरुशब्दात् तृतीयैकवचने इयाडियाजीकाराणामुपसंख्यानमितीयादेशः उरुत्वेन विश्रयन्तां विशेषणाश्रिताभवन्तु। तत्रदृष्टान्तः—पतिभ्योन यथा पतीनामर्थाय संभोगकाले शुंभमानाः शोभमानाः जनयः विश्रयन्ति तद्वदस्मिन्कर्मणि विश्रयन्तां बृहतीर्महत्यः। हे विश्वमिन्वाः

इविः प्रीणनार्थः तस्मात्कर्मण्युपपदेअण् इदित्वान्नुम् तत्पुरुषे कृतिबहुलमित्यत्र बहुलवचनात् द्वितीयायाअप्यलुक् सर्वस्यप्रीणयित्र्यः हे द्वारोदेवीः द्वाराभिमानिन्योहेदेव्यः यूयं देवेभ्यः देवानामर्थाय सुप्रायणाः सुप्रगमनाः सुविवृताभवत ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठेष्टमोवर्गः ॥ ८ ॥

अथ षष्ठी—

आसुष्वयन्तीयजतेउपाकेउषासानक्तासदतांनियोनौ ।
दिव्येयोषणेबृहतीसुरुक्मेअधिश्रियंशुक्रपिशंदधाने ॥ ६ ॥

आ । सुस्वयन्ती इति । यजते इति । उपाके इति । उषसानक्ता । सदताम् । नि । योनौ । दिव्ये इति । योषणे इति । बृहती इति । सुरुक्मे इति सुऽरुक्मे । अधि । श्रियम् । शुक्रऽपिशम् । दधाने इति ॥ ६ ॥

सुस्वयन्ती अयपयगतौ शतरिउपसर्गस्यसोर्द्विवचनंछान्दसं सुष्ठु अयंत्यौ गच्छन्त्यौ यद्वा स्वपेण्यंतस्यवर्णलोपः सुष्वापयंत्यौ यजते यष्टव्ये उपाके उपक्रान्ते उषसानक्ता उषश्च नक्तंच द्वन्द्वे उषासोषसइति उषासादेशः देवताद्वन्द्वेचेति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं अहोरात्रदेव्यौ योनौ अस्मिन्यज्ञस्थाने निनितरां नियमेनवा आसदतां आसीदन्तां । सदेर्लुङि लृदित्वाच्च्लेरङ् कीदृश्येदिव्ये दिविभवे योषणे योषितावित प्रीणयित्र्यौ यद्वा योषणेसमिते परस्परतोविविक्ते बृहतीगुणैर्महत्यौ सुरुक्मे शोभनदीप्ते रुक्मं रोचतेर्मक्प्रत्ययेकुत्वेचकृतेरूपं शुक्रपिशं शोचमानरूपं श्रियं अधिदधाने अधिकंधारयन्त्यौ ॥ ६ ॥

अथ सप्तमी—

दैव्याहोतारापथमासुवाचामिमानायज्ञंमनुषोयजध्यै ।
प्रचोदयन्ताविदथेषुकारूप्राचीनंज्योतिःप्रदिशादिशन्ता ॥ ७ ॥

दैव्या । होतारा । प्रथमा । सुऽवाचा । मिमाना । यज्ञम् । मनुषः । यजध्यै । प्रऽचोदयन्ता । विदथेषु । कारू इति । प्राचीनम् । ज्योतिः । प्रऽदिशा । दिशन्ता ॥ ७ ॥

दैव्या देवाद्यञञाविति यञ्प्रत्ययः देवसंबन्धिनौ होतारा होमनिष्पादकौ होतृनामकौ अग्न्यादित्यौ अस्मिन्यज्ञे आसीदतां । कीदृशौ प्रथमामनुष्यहोतुः पूर्वंभाविनौ सुवाचा शोभनस्तोत्रौ मनुषोमनुष्यस्य सर्वस्य यष्टुः यजध्यै यागनिवृत्तये यजेस्तुमर्थेशध्यैन्प्रत्ययः यज्ञं मिमाना निर्मिमानौ उत्पादयन्तौ विदथेषु विदंत्यत्रऋत्विजः स्वस्वकर्माणीति विदथाः यज्ञाः तेषु ऋत्विजोयजमानाश्च प्रचोदयन्ता प्रेरयन्तौ कारू स्तुतीनांकर्तारौ प्राचीनं पूर्वस्यांदिशि यष्टव्यत्वेनस्थितं आहवनीयाख्यं ज्योतिः प्रदिशा प्रकृष्टेनोपदिष्टमार्गेण यद्वा प्रदिश्यमानेन मंत्रेण दिशन्ता निर्वहन्तौ ॥ ७ ॥

अथाष्टमी—

आनोयज्ञंभारतीतूयमेत्विळामनुष्वदिहचेतयन्ती ।
तिस्रोदेवीर्बर्हिरेदंस्योनंसरस्वतीस्वपसःसदन्तु ॥ ८ ॥

आ । नः । यज्ञम् । भारती । तूयम् । एतु । इळा । मनुष्वत् ।
इह । चेतयन्ती । तिस्रः । देवीः । बर्हिः । आ । इदम् ।
स्योनम् । सरस्वती । सुऽअपसः । सदन्तु ॥ ८ ॥

भारती भरतआदित्यः तस्यस्वभूतादीप्तिः तस्येदमित्यर्थे उत्सादित्वादञ् टिड्ढाणञिति ङीप् नोस्मदीयंयज्ञंतूयं क्षिप्रं एतु आगच्छतु । तथा मनुष्वत् मनुष्योयथा इदं मयाकर्तव्यमितिजानाति तद्वत् चेतयन्ती जानाना इळादेवीच इहास्मिन्कर्मणि आगच्छतु । तथा सरस्वती च स्वपसः सुकर्माणः अपइति कर्मनाम आप्नोतेरसुनि आपःकर्माख्यायांह्रस्वः बहुव्रीहौआद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वं । एतास्तिस्रोदेवीः देव्यः स्योनं सुखकरं इदं बर्हिः इमं यज्ञं आसदन्तु आसीदन्तु प्राप्नुवन्तु सदेर्लोटिसीदादेशाभावश्छान्दसः ॥ ८ ॥

त्वाष्ट्रस्यपशोर्वपायां यइमेइत्येषानुवाक्या । सूत्रितंच—यइमेद्यावापृथिवीजनित्री तन्नस्तुरीपमधपोषयित्न्विति ।

सैषा नवमी—

यइमेद्यावापृथिवीजनित्रीरूपैरपिंशद्भुवनानिविश्वा ।
तमद्यहोतरिषितोयजीयान्देवंत्वष्टारमिहयक्षिविद्वान् ॥ ९ ॥

यः । इमे इति । द्यावापृथिवी इति । जनित्री इति । रूपैः ।
अपिंशत् । भुवनानि । विश्वा । तम् । अद्य । होतः । इषितः ।
यजीयान् । देवम् । त्वष्टारम् । इह । यक्षि । विद्वान् ॥ ९ ॥

यस्त्वष्टादेवः जनित्री विश्वस्यजनयित्र्यौ इमे द्यावापृथिवी द्वन्द्वे दिवोद्यावादेशः आद्युदात्तः । पृथिवीशब्दोङीषन्तत्वेनाद्युदात्तः देवताद्वंद्वेचेति पूर्वोत्तरपदयोःप्रकृतिस्वरत्वं द्यावापृथिव्यौ रूपैः देवतिर्यङ्मनुष्याद्याकारैः अपिंशत् रूपवत्यावकरोत् पिशअवयवे तौदादिकः । शेमुचादीनामितिनुमागमः । तथा विश्वा सर्वाणि भुवनानि भूतजातानि रूपयुक्तान्यकरोत् हे होतः यजीयान् यष्टृतमः विद्वान् सर्वंजानानः त्वं इषितः अस्माभिरध्येषितः प्रार्थितःसन् इहास्मिन् कर्मणि अद्यास्मिन्दिने तं त्वष्टारंदेवं यक्षि स्तुतिभिर्हविर्भिर्वा यज पूजय ॥ ९ ॥

अथ दशमी—

उपावसृजत्मन्यासमञ्जन्देवानांपाथऋतुथाहवींषि ।
वनस्पतिःशमितादेवोअग्निःस्वदन्तुहव्यंमधुनाघृतेन ॥ १० ॥

उपऽअवसृज । त्मन्या । सम्ऽअञ्जन् । देवानाम् । पाथः ।
ऋतुऽथा । हवींषि । वनस्पतिः । शमिता । देवः । अग्निः ।
स्वदन्तु । हव्यम् । मधुना । घृतेन ॥ १० ॥

हेवनस्पते यूप त्मन्या आत्मन्शब्दस्य तृतीयैकवचनेयादेशः मंत्रेष्वाङ्यादेरात्मनइत्याकारलोपः आत्मनैव ऋतुथा ऋतौऋतौ प्राप्तेकाले देवानामर्थाय पाथः पशुलक्षणमन्नं अन्यानिच हवींषि समंजन् सम्यक्व्यक्तीकुर्वन् उपावसृज उपागम्य प्रयच्छ । गतिर्गतावितिगतेर्निघातः । किंच वनस्पतिर्योयंयूपः शमिता एतन्नामकोदेवः यद्वा शामित्रोग्निः देवोदीप्यमानः आहवनीयाख्योग्निश्च एतेत्रयः मधुना मधुरेणघृतेन यद्वा मधुना उदकेन प्रोक्षणोपनयनादिगतेन घृतेनच हव्यं हवनयोग्यं स्वदन्तु स्वादंकुर्वन्तु ॥ १० ॥

अथैकादशी—

सद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः ।
अस्यहोतुःप्रदिश्यृतस्यवाचिस्वाहाकृतंहविरदन्तुदेवाः ॥ ११ ॥ ९ ॥

सद्यः । जातः । वि । अमिमीत । यज्ञम् । अग्निः । देवानाम् ।
अभवत् । पुरःऽगाः । अस्य । होतुः । प्रऽदिशि । ऋतस्य ।
वाचि । स्वाहाऽकृतम् । हविः । अदन्तु । देवाः ॥ ११ ॥ ९ ॥

अयमग्निः सद्यस्तदानीमेव जातोजायमानएव यज्ञं व्यमिमीतविशेषेणनिर्मिमीते उत्पादयति । माङ्मानेशब्देच जौहोत्यादिकः अतएवायमग्निः देवानांपुरोगाः प्रथमगामीमुख्योभवत् गमेर्विट्प्रत्ययेआत्वेचकृतेरूपं । ततः प्रदिशि प्रकृष्टायांदिशि प्राच्यां ऋतस्य आहवनीयात्मनाआगतस्यास्य होतुर्होमनिष्पादकस्याग्नेः वाचि अत्रवागाश्रयआस्यंलक्ष्यते वाचि आस्ये स्वाहाकृतं स्वाहाकारेण प्रक्षिप्तं हविः सर्वेदेवा अदन्तु । इदंसूक्तं यास्केन सम्यगव्याख्यायि[1] तत्रानुसंधीयतां ॥ ११ ॥

॥ इत्यष्टमस्य षष्ठे नवमोवर्गः ॥ ९ ॥

मनीषिणइतिदशर्चं द्वादशंसूक्तं वैरूपस्याष्ट्रादंष्ट्रस्यार्षं त्रैष्टुभमैन्द्रं । तथाचानुक्रम्यते—मनीषिणोदशाष्ट्रादंष्ट्रइति । गतोविनियोगः ।

तत्र प्रथमा—

मनीषिणःप्रभरध्वंमनीषांयथायथामतयःसन्तिनृणाम् ।
इन्द्रंसत्यैरेरयामाकृतेभिःसहिवीरोगिर्वणस्युर्विदानः ॥ १ ॥

मनीषिणः । प्र । भरध्वम् । मनीषाम् । यथाऽयथा । मतयः ।
सन्ति । नृणाम् । इन्द्रम् । सत्यैः । आ । ईरयाम । कृतेभिः ।
सः । हि । वीरः । गिर्वणस्युः । विदानः ॥ १ ॥

हे मनीषिणः स्तोतारः मनीषां मनसईशित्रीं स्तुतिमिन्द्राय प्रभरध्वं कुरुत नृणां कर्मनेतॄणां युष्माकं यथायथामतयःसन्ति भवन्ति तथा बुध्यनुसारेणस्तुतिं कुरुध्वं । वयंच कृतेभिः कृतैः सत्यैः यथार्थभूतैः स्तोत्रैः इन्द्रमेरयाम यज्ञंप्रत्यागमयाम ईरगतौ ण्यन्तस्यलोट् । हि यतोविदानः जानानः समर्थः सइन्द्रः गिर्वणस्युः गीर्भिः वनन्ति संभजन्तेइति गिर्वणसः

1 नि० ८. ५. अष्टमाध्याये पंचमीं कंडिकामारभ्य एकविंशीकंडिकापर्यंतम् ।

स्तोतारः वनतेरसुनिरूपं उपपदस्यदीर्घाभावश्छान्दसः तदन्तात्क्यचूक्याच्छन्दसीत्युप्रत्ययः स्तोतॄन् कामयमानःखलु अतस्तमभिष्टुत ॥ १ ॥

अथ द्वितीया—

ऋतस्य॒ हि सद॑सो धी॒तिरद्यौ॒त्सं गा॑र्ष्टे॒यो वृ॑ष॒भो गोभि॑रानट् ।
उद॑तिष्ठत्तवि॒षेणा॒ रवे॑ण म॒हान्ति॑ चि॒त्सं वि॑व्या॒चा॒ रजां॑सि ॥ २ ॥

ऋ॒तस्य॑ । हि । सद॑सः । धी॒तिः । अद्यौ॑त् । सम् । गा॒र्ष्टे॑यः ।
वृ॒ष॒भः । गोभिः॑ । आ॒न॒ट् । उत् । अ॒ति॒ष्ठ॒त् । त॒वि॒षेण॑ ।
रवे॑ण । म॒हान्ति॑ । चि॒त् । सम् । वि॒व्या॒च॒ । रजां॑सि ॥ २ ॥

ऋतस्योदकस्य सदसः स्थानस्यान्तरिक्षस्य धीतिर्धारकः सइन्द्रः अद्यौत् द्योतते प्रकाशते । हि प्रसिद्धौ द्युतदीप्तौ लुङि द्युद्भ्योलुङीतिपरस्मैपदं च्लेर्लुक्छान्दसः हलंतलक्षणावृद्धिरपि । यद्वा अद्यौत् तादृशइन्द्रः यज्ञमभिगच्छति द्युअभिगमने आदादिकः लङ् उतोवृद्धिर्लुकिहलीतिवृद्धिः । गार्ष्टेयः सकृत्प्रसूताधेनुर्गृष्टिः तस्याअपत्यंवृषभः गोभिः समानट् संव्याप्नोति तथा एषोपि सर्वं स्वमहिम्ना व्याप्नोति तथा तविषेण महन्नामैतत् महता रवेण शब्देन उदतिष्ठत् उच्छ्रितउन्नतोभवत् । अतएव महान्तिचित् महान्त्यपि रजांस्युदकानि भुवनानिवा संविव्याच संव्याप्नोति ॥ २ ॥

अथ तृतीया—

इन्द्रः॒ किल॒ श्रुत्या॑ अ॒स्य वे॑द॒ स हि जि॒ष्णुः प॑थि॒कृत्सूर्या॑य ।
आन्मेनां॑ कृ॒ण्वन्नच्यु॑तो॒ भुव॒द्गोः पति॑र्दि॒वः स॑न॒जा अप्र॑तीतः ॥ ३ ॥

इन्द्रः॑ । किल॑ । श्रु॒त्यै॑ । अ॒स्य । वे॒द॒ । सः । हि । जि॒ष्णुः ।
प॒थि॒ऽकृत् । सूर्या॑य । आत् । मेना॑म् । कृ॒ण्वन् । अच्यु॑तः ।
भुव॑त् । गोः । पतिः॑ । दि॒वः । स॒न॒ऽजाः । अप्र॑तिऽइतः ॥ ३ ॥

अस्यास्मदीयस्यस्तोत्रस्य श्रुत्यै श्रवणाय इन्द्रः किल इन्द्रएव वेद जानाति सहि सएव जिष्णुः शत्रूणांजयशीलः सूर्याय पथिकृत् मार्गकर्ताभवति । किंच अच्युतः शत्रुभिरगन्तव्यः

वृषणश्वस्य मेनामात्मानंकुण्वन् कुर्वन्निन्द्रः आत् आगच्छति अस्मदीयंयज्ञं । मेनाभवोवृषणश्वस्यसुक्रतोइतिमंत्रान्तरं । असगतिदीप्त्यादानेषु भौवादिकः दिवोद्युलोकस्यच पतिः भुवद्भूव भवतेर्लेट् वाक्यभेदादनिघातः ॥ ३ ॥

अथ चतुर्थी—

इन्द्रोमह्नामहतोअर्णवस्यव्रतामिनादङ्गिरोभिर्गृणानः ।
पुरूणिचिन्नितताना‌रजांसिदाधारयोधरुणंसत्यताता ॥ ४ ॥

इन्द्रः । मह्ना । महतः । अर्णवस्य । व्रता । मिनात् ।
अङ्गिरःऽभिः । गृणानः । पुरूणि । चित् । नि । ततान ।
रजांसि । दाधार । यः । धरुणम् । सत्यऽताता ॥ ४ ॥

इन्द्रः अङ्गिरोभिर्ऋषिभिर्गृणानः स्तूयमानःसन् महतोर्णवस्य अर्णसः सलोपश्चेतिवप्रत्ययः उदकवतोमेघस्य व्रता व्रतानि कर्माणि मह्ना स्वमहिम्नैव मिनात् अहिंसीत् । मीङ्हिंसायां लङि मीनातेर्निगमइतिह्रस्वः ततः पुरूणिचित् बहून्येव रजांस्युदकानि नितताननीचीनान्यकरोत् यइन्द्रः सत्यताता सत्यैः देवैः तते यद्वा सत्यशब्दादपि स्वार्थिकस्तातिल्प्रत्ययः सत्ये द्युलोके धरुणं धारकं बलं दाधाराधारयत् ॥ ४ ॥

अथ पंचमी—

इन्द्रोदिवःप्रतिमानंपृथिव्याविश्वावेदसवनाहन्तिशुष्णंम् ।
महींचिद्यामातनोत्सूर्येणचास्कम्भचित्कम्भनेनस्कभीयान्॥५॥१०॥

इन्द्रः । दिवः । प्रतिऽमानम् । पृथिव्याः । विश्वा । वेद । सवना ।
हन्ति । शुष्णम् । महीम् । चित् । द्याम् । आ । अतनोत् । सूर्येण ।
चास्कम्भ । चित् । स्कम्भनेन । स्कभीयान् ॥ ५ ॥ १० ॥

दिवोद्युलोकस्य पृथिव्याश्च प्रतिमानं महत्त्वेन प्रतिनिधिरिन्द्रोविश्वा सर्वाणि सवना सवनानि वेद सोमपानार्थं जानाति शुष्णं सर्वस्यशोषकं एतन्नामानमसुरं हन्ति वाक्यभेदादनिघातः अपिच महींचित् महतीमपि द्यां सूर्येण आतनोत् सर्वत्रप्रकाशयुक्तामकरोत् । स्क-

१ ऋ० सं० १. ४. ११ ।

भीयान् स्कंभयितॄणांमध्ये श्रेष्ठः सस्कंभनेनचित् निरोधनसाधनेन सामर्थ्येनैव चास्कंभ द्यु-लोकमवरुद्धमकरोत् स्कंभिः सौत्रोधातुः लिटि तुजादीनामितिदीर्घः चित्कंभनेनेत्यत्र संहितायां सलोपः उत्पूर्वस्यस्तंभेः उदःस्थास्तंभोरितिसलोपउक्तः चित्पूर्वस्यस्तंभेरपिभवति छन्दोविष-यत्वात् ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे दशमोवर्गः ॥ १० ॥

अथ षष्ठी—

**वज्रेणहिवृत्रहावृत्रमस्तरदेवस्यशूशुवानस्यमायाः ।**
**विधृष्णोअत्रधृषताजघन्थाथाभवोमघवन्बाह्वोजाः ॥ ६ ॥**

वज्रेण । हि । वृत्रऽहा । वृत्रम् । अस्तः । अदेवस्य । शूशुवानस्य । मायाः । वि । धृष्णो इति । अत्र । धृषता । जघन्थ । अथ । अभवः । मघऽवन् । बाहुऽओजाः ॥ ६ ॥

हे इन्द्र वृत्रहा वृत्रस्यहन्ता वज्रेण वृत्रमस्तः अस्तृणाः अवधीः । स्तृणातेर्लङि बहु-लंछन्दसीति विकरणस्यलुक् सिपिगुणः हियोगादनिघातः । अनन्तरं हे धृष्णो धर्षणशील त्वं अदेवस्य अद्योतमानस्य शूशुवानस्य स्वबलेनवर्धमानस्य तस्यमायाः धृषता समर्थेनवज्रेण अत्रास्मिन् कालएव विजघंथ विनाशितवानसि । हन्तेर्लिटि थलिअभ्यासाच्चेतिकुत्वं अथ हे मघवन् धनवन्निन्द्र बाह्वोजाः भुजबलवानभवः ॥ ६ ॥

अथ सप्तमी—

**सचन्तयदुषसःसूर्येणचित्रामस्यकेतवोरामविन्दन् ।**
**आयन्नक्षत्रंददृशेदिवोनपुनर्यतोनकिरद्धानुवेद ॥ ७ ॥**

सचन्त । यत् । उषसः । सूर्येण । चित्राम् अस्य । केतवः । राम् । अविन्दन् । आ । यत् । नक्षत्रम् । ददृशे । दिवः । न । पुनः । यतः । नकिः । अद्धा । नु । वेद ॥ ७ ॥

यद्यदा उषसः उषःकालाः सूर्येण सूर्यात्मकेनेन्द्रेण सचन्त संगच्छन्ते । सचसमवाये भौवादिकः । तदानीमस्य स्वभूताः केतवः सर्वस्य प्रज्ञापकारश्मयः चित्रां नानावर्णां रां रायं श्रियं अविन्दन् अलभन्त । पुनरुदयानन्तरं यद्यदा दिवोनक्षत्रं नददृशे नदृश्यते दृशेःकर्मणि लिट् यद्योगादनिघातः तदानीं यतः शत्रंतस्य शसि शतुरनुमोनद्यजादीइतिविभक्तेरुदात्तत्वं । सर्वत्रगच्छतोस्यरश्मीन् नकिर्नकश्चित् नु वेद जानाति । एतत् अद्धा सत्यमेव ॥ ७ ॥

अथाष्टमी—

दूरंकिलंप्रथमाजंग्मुरासामिन्द्रंस्ययाःप्रंसवेसस्रुरापंः ।
कंस्विदग्रंकंबुध्नआंसामापोमध्यंक्वंवोनूनमन्तंः ॥ ८ ॥

दूरम् । किलं । प्रथमाः । जग्मुः । आसाम् । इन्द्रंस्य । याः । प्रऽसवे । सस्रुः । आपंः । क्वं । स्वित् । अग्रंम् । क्वं । बुध्नः । आसाम् । आपंः । मध्यंम् । क्वं । वः । नूनम् । अन्तंः ॥ ८ ॥

आसामपांमध्ये प्रथमाः प्रथमगामिन्यस्ताआपः दूरंकिलजग्मुः दूरमेवागताः याआपः इन्द्रस्य प्रसवे प्रेरणे । षूप्रेरणे जवसवौचेतिवक्तव्यमिति अपवादेच् थाथघञ्क्ताजबित्र-काणामितिउत्तरपदान्तोदात्तत्वं । तस्याज्ञायां सस्रुः सरन्ति गच्छन्तिखलु । अथ प्रत्यक्षकृतः हे आपः आसां युष्माकमग्रं क्वस्वित् कुत्रवर्तते बुध्नोमूलंच क्व । तथा वोयुष्माकं मध्यंचक्व नू-नमिदानीमस्माकमन्तोवसानंचक्व सर्वगतत्वादनिर्ज्ञायमानगमनाआसन्नित्यर्थः । क्व किंशब्दात् सप्तम्यर्थे किमोदित्यत्प्रत्ययः क्वातीतिक्वादेशः तित्स्वरितः अंतः अमेर्गत्यर्थस्य असिहसी-त्यादिनातन्प्रत्ययः ॥ ८ ॥

अथ नवमी—

सृजःसिन्धूँरहिनाजग्रसानाँआदिदेताःप्रविविज्रेजवेनं ।
मुमुंक्षमाणाउतयामुमुच्रेधेदेतानरंमन्तेनितिक्ताः ॥ ९ ॥

सृजः । सिन्धून् । अहिना । जग्रसानान् । आत् । इत् । एताः । प्र । विविज्रे । जवेनं । मुमुंक्षमाणाः । उत । याः । मुमुच्रे । अधं । इत् । एताः । न । रमन्ते । निऽतिक्ताः ॥ ९ ॥

हे इन्द्र अहिना अहन्तव्येन वृत्रेण मेघेनवा जग्रसानान् ग्रसअदने अनुदात्तेत् छन्दसि लिटःकानच् ग्रस्ताः सिन्धून् स्यन्दमानाअपः सृजःअसृजः निर्गमयः । आदित् इदवधारणे अनन्तरमेव एता आपः जवेन वेगेन प्रविविज्रे सर्वत्रात्यन्तंचलिताबभूवुः । ओविजीभयचलन योः उदात्तेत् लिटिइरयोरेइतिइरयोरेआदेशः । उतापिच मुमुक्षमाणाः इन्द्रेणामोचयितुमिष्य माणायाआपः मुमुच्रे इन्द्रेणमोचिताअभूवन् । मुचेःकर्मणिलिट् अधेत् अनन्तरमेव नितिक्ताः नितरां शुद्धाआपः नरमन्ते एकत्रनक्रीडन्ते किन्तु सर्वत्रगमनशीलाइत्यर्थः ॥ ९ ॥

अथ दशमी—

सध्रीचीःसिन्धुंमुशतीरिवायन्त्सनाज्जारआरितःपूर्भिदासाम् ।
अस्तमातेपार्थिवावसून्यस्मेजग्मुःसूनृताइन्द्रपूर्वीः ॥ १० ॥११॥

सध्रीचीः । सिन्धुम् । उशतीःऽइव । आयन् । सनात् । जारः ।
आरितः । पूःऽभित् । आसाम् । अस्तम् । आ । ते । पार्थिवा ।
वसूनि । अस्मे इति । जग्मुः । सूनृताः । इन्द्र । पूर्वीः ॥ १० ॥ ११॥

सध्रीचीः सहस्यसध्रिरितिसध्र्यादेशः अंचतेश्चोपसंख्यानमिति ङीप् अलोपदीर्घौ वाछन्द सीतिपूर्वसवर्णदीर्घः सहांचनाः सहगमना आपः सिंधुं समुद्रं भर्तारमायन् आगच्छन् । तत्रदृ ष्टान्तः उशतीरिव यथा कामयमानाःस्त्रियः स्वपतिमभिगच्छन्ति तद्वत् जारः शत्रूणां जारयि ता पूर्भिदिन्द्रः सनाच्चिरादेव आसामपां आरितः प्रेरकत्वेन स्वामीभवति । हे इन्द्र अस्मे अ स्माकं स्वभूतानि पार्थिवा पार्थिवानि वसूनि धनवत्प्रीणयिनृणि हवींषि पूर्वीः बव्ह्यः सूनृतावा चः स्तुतिलक्षणाश्च ते त्वदीयमस्तं गृहमाजग्मुः आगच्छन्तु । यद्वा अस्मदीयाः स्तुतयः तेगृहं गच्छन्तु अस्माकं गृहं त्वदीयानिपार्थिवा पार्थिवानि धनान्यभिगच्छन्तु गमेश्छन्दसि सा- र्वकालिकोलिट् ॥ १० ॥

॥ इत्यष्टमस्य चतुर्थे एकादशोवर्गः ॥ ११ ॥

इन्द्रपिबेति दशर्चं त्रयोदशं सूक्तं त्रैष्टुभमैन्द्रं नभः प्रभेदनोनामविरूपगोत्रऋषिः तथाचा- नुक्रम्यते—इन्द्रपिबनभःप्रभेदनइति । गतोविनियोगः ।

तत्र प्रथमा—

इन्द्र पिब प्रतिकामंसुतस्य प्रातःसावस्तवहिपूर्वपीतिः ।
हर्षस्वहन्तवेशूरशत्रूनुक्थेभिष्टेवीर्याप्रब्रवाम ॥ १ ॥

इन्द्र । पिब । प्रतिऽकामम् । सुतस्य । प्रातःऽसावः । तव । हि ।
पूर्वऽपीतिः । हर्षस्व । हन्तवे । शूर । शत्रून् । उक्थेभिः ।
ते । वीर्या । प्र । ब्रवाम ॥ १ ॥

हेइन्द्र त्वं प्रतिकामं येयेकामाः तांस्तान्प्रति अव्ययीभावसमासः तस्यस्वरः यथेच्छं सुतस्याभिषुतस्य योभागः तुभ्यं दातव्यः तंपिब आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः प्रातःसावः प्रातःसवनेभिषूयमाणः सोमः तवहि तृतीयार्थेषष्ठी त्वयैव पूर्वपीतिः प्रथमतएवपातव्यः यद्वा प्रातःसावः सप्तम्याः सुः प्रातःसवने तवैव प्रथमपानं खलु ऐन्द्रवायवग्रहेहि आदितएवेन्द्रः पिबति तत्पुरुषे दासीभारादित्वात् पूर्वपदान्तोदात्तत्वं यद्वा बहुव्रीहिः ततः हे शूर समर्थ त्वं शत्रून् हन्तवे हन्तुं हर्षस्व हृष्टोभव अथ ते त्वदीयानि वीर्या वृत्रहननादिलक्षणानि वीर्याणि उक्थेभिः शस्त्रैः प्रब्रवाम प्रकर्षेण वदाम ॥ १ ॥

अथ द्वितीया—

यस्तेरथोमनसोजवीयानेन्द्रतेनसोमपेयाययाहि ।
तूयमातेहरयःप्रद्रवन्तुयेभिर्यासिवृषभिर्मन्दमानः ॥ २ ॥

यः । ते । रथः । मनसः । जवीयान् । आ । इन्द्र । तेन । सोमऽपेयाय ।
याहि । तूयम् । आ । ते । हरयः । प्र । द्रवन्तु । येभिः । यासि ।
वृषऽभिः । मन्दमानः ॥ २ ॥

हेइन्द्र मनसोपि जवीयान् अतिशयेन गन्ता त्वदीयोयोरथोस्ति तेन रथेन सोमपेयाय अस्मदीयं सोमं पातुं आयाहि आगच्छ । पा पाने भावे अचोयत् ईद्यतीतीत्वं आर्धधातुकलक्षणोगुणः कृदुत्तरपदप्रकृतिस्वरत्वं तथा ते त्वदीया हरयः रथे संयुक्ताअश्वाः तूयं क्षिप्रमाभिमुख्येन प्रद्रवन्तु प्रगच्छन्तु वृषभिः सेक्तृभिः येभिः यैः अश्वैः मन्दसानः मोदमानः सन् यासि

गच्छसि हरीइन्द्रस्येति वचनादिन्द्रस्य द्वावेवाश्वाविति नचोदनीयं। आत्वासहस्रमाशतमित्यादिनिगमान्तरदर्शनात् ॥ २ ॥

अथ तृतीया—

हरित्वतावर्चसासूर्यस्यश्रेष्ठैरूपैस्तन्वंस्पर्शयस्व ।
अस्माभिरिन्द्रसखिभिर्हुवानःसध्रीचीनोमादयस्वानिषद्य ॥ ३ ॥

हरित्वता । वर्चसा । सूर्यस्य । श्रेष्ठैः । रूपैः । तन्वम् ।
स्पर्शयस्व । अस्माभिः । इन्द्र । सखिऽभिः । हुवानः ।
सध्रीचीनः । मादयस्व । निऽसद्य ॥ ३ ॥

हेइन्द्र हरित्वता हरिच्छब्दान्मतुपोझयइति वत्वं हरिद्वर्णयुक्तेन सूर्यस्य वर्चसा तेजसा सदृशैः श्रेष्ठैः प्रशस्यतमैरात्मीयैरूपैः तन्वमात्मीयं शरीरं मदीयंवा यद्वा तायतेइति तनूर्यज्ञः तं स्पर्शयस्व तेजोयुक्तं कुरु। किंच सध्रीचीनः विभाषांचेरदिक्स्त्रियामिति खप्रत्ययः मरुद्भिः सहांचनस्त्वं सखिभिः सखिभूतैरस्माभिर्हुवानः आहूयमानःसन् निषद्य यज्ञे निषण्णोभूत्वा मादयस्व सोमपानेन हृष्टोभव ॥ ३ ॥

अथ चतुर्थी—

यस्यत्यत्तेमहिमानंमदेष्विमेमहीरोदसीनाविविक्ताम् ।
तदोकआहरिभिरिन्द्रयुक्तैःप्रियेभिर्याहिप्रियमन्नमच्छ ॥ ४ ॥

यस्य । त्यत् । ते । महिमानम् । मदेषु । इमे इति । मही इति ।
रोदसी इति । न । अविविक्ताम् । तत् । ओकः । आ । हरिऽभिः ।
इन्द्र । युक्तैः । प्रियेभिः । याहि । प्रियम् । अन्नम् । अच्छ ॥ ४ ॥

हेइन्द्र इमे महो महत्यौ रोदसी द्यावापृथिव्यौ यस्य तेतव सोमपानेन जनितेषु मदेषु संभूतं त्यत् तं महिमानं नाविविक्तां नपृथक्कुरुतः किन्तु तस्य महिम्न्येव तिष्ठतः विचिर् पृथग्भावे जौहोत्यादिकः लङि संज्ञापूर्वकोविधिरनित्यइत्यभ्यासस्य गुणाभावः यद्योगादनिघातः। प्रियेभिः प्रियतमैः रथेयुक्तैर्हरिभिः अश्वैः प्रियं प्रीणनकरं अन्नं सोमलक्षणमच्छाभिलक्ष्य तदोकः अस्मदीयं यज्ञसदनमायाहि आगच्छ ॥ ४ ॥

---

१ ऋ० सं० ५. ७. १४ ।

अथ पंचमी—

यस्यशश्वंत्पपिवाँइन्द्रशत्रूंननानुकृत्यारण्यांचकर्थं ।
सतेपुरंन्धिंतविंषीमियर्तिंसतेमदांयसुतइन्द्रसोमंः ॥ ५ ॥ १२ ॥

यस्यं । शश्वंत् । पपिऽवान् । इन्द्र । शत्रून् । अननुऽकृत्या ।
रण्यां । चकर्थं । सः । ते । पुरम्ऽधिम् । तविंषीम् । इयर्ति ।
सः । ते । मदाय । सुतः । इन्द्र । सोमंः ॥ ५ ॥ १२ ॥

हे इन्द्र पपिवान् पातेः क्वसौ वस्वेकाजादिति इडागमः सोमं पीतवांस्त्वं अनानुकृत्या अनुकरणरहितेन सकृत्प्रहारेण शत्रुहननसमर्थेन रण्या संयुगीनेनायुधेन रणशब्दात्साध्वर्थे प्राग्घितोयोयत् यस्य यजमानस्य शत्रून्शश्वद्बहुवारं चकर्थ हतवानसि कृञ्हिंसायां लिटि थलि यद्योगादनिघाते लित्स्वरः सयष्टा तेत्वदर्थं तविषीं महतीं पुरंधिं बह्वीं स्तुतिं इयर्ति प्रेरयति । ऋगतौ जौहोत्यादिकः अर्तिपिपर्त्योरित्यभ्यासस्येत्वं अभ्यासस्यासवर्णइतीयङ् हेइन्द्र सुतोभिषुतः ससोमः ते मदाय समर्थोभवति यद्वा सयष्टा सुतः सोमः सुब्व्यत्ययः अभिषुतं सोमं त्वन्मदाय प्रेरयति ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे द्वादशोवर्गः ॥ १२ ॥

अथ षष्ठी—

इदंतेपात्रंसनंवित्तमिन्द्रपिबासोममेनाशंतक्रतो ।
पूर्णआहावोमंदिरस्यमध्वोयंविश्वइदंभिहर्यन्तिदेवाः ॥ ६ ॥

इदम् । ते । पात्रम् । सनंऽवित्तम् । इन्द्र । पिबं । सोमंम् । एना ।
शतक्रतो इतिं शतऽक्रतो । पूर्णः । आऽहावः । मदिरस्यं ।
मध्वंः । यम् । विश्वें । इत् । अभिऽहर्यन्ति । देवाः ॥ ६ ॥

हेइन्द्र तेत्वदर्थं पात्रं चमसादिकं सनवित्तं अस्माभिश्चिरादेव लब्धं विद्लृलाभे कर्मणि निष्ठा हेशतक्रतो बहुकर्मन्निन्द्र एना एनेन पात्रेण सोमं पिब यतः मदिरस्य मदकरस्य मध्वः मधुनः सोमस्य आहावः पानस्थानोयपात्रविशेषः पूर्णः पूरितोभूत् ह्वेञ् स्पर्धायां निपानमा-

हावइति निपातितः स्तुतिभिराहूयमानादेवाः अत्र सोमं पिबन्तीति थाथादिस्वरः यमिव य-माह्वावमेव विश्वे सर्वे देवाः अभिहर्यन्ति अभिकामयन्ते हर्यगतिकान्त्योः भौवादिकः यद्यो-गात्तिङोनिघाताभावे तिङिचोदात्तवतीति गतेर्निघातः ॥ ६ ॥

अथ सप्तमी—

विहित्वामिन्द्रपुरुधाजनासोहितप्रयसोवृषभह्वयन्ते ।
अस्माकंतेमधुमत्तमानीमाभुवन्त्सवनातेषुहर्य ॥ ७ ॥

वि । हि । त्वाम् । इन्द्र । पुरुधा । जनासः । हितऽप्रयसः ।
वृषभ । ह्वयन्ते । अस्माकम् । ते । मधुमत्ऽतमानि ।
इमा । भुवन् । सवना । तेषु । हर्य ॥ ७ ॥

हेइन्द्र वृषभ कामानां वर्षक हितप्रयसः प्रयइत्यन्ननाम प्रीणनकारित्वात् संभृतहवि-ष्काः जनासोजनाः पुरुधा बहुधा हिरवधारणे त्वामेव विह्वयन्ते विविधमाह्वयन्ति ह्वेञ् स्प-र्धायां निसमुपविभ्योह्वइत्यात्मनेपदं अस्माकं स्वभूतानि इमा इमानि सवना सवनानि ते त्व-दर्थं मधुमत्तमानि अतिशयेन सोमवन्ति भुवन् अभूवन् तस्मात् त्वं तेषु सवनेषु हर्य सोमा-न् कामयस्व ॥ ७ ॥

अथाष्टमी—

प्रतंइन्द्रपूर्व्याणिप्रनूनंवीर्यावोचंप्रथमाकृतानि ।
सतीनमन्युरश्रथायोअद्रिंसुवेदनामकृणोर्ब्रह्मणेगाम् ॥ ८ ॥

प्र । ते । इन्द्र । पूर्व्याणि । प्र । नूनम् । वीर्या । वोचम् ।
प्रथमा । कृतानि । सतीनऽमन्युः । अश्रथयः । अद्रिम् ।
सुऽवेदनाम् । अकृणोः । ब्रह्मणे । गाम् ॥ ८ ॥

हेइन्द्र ते त्वदीयानि प्रथमा आदितः कृतानि पूर्व्याणि पुरातनानिच वीर्या वीर्याणि नूनमिदानीं प्रवोचं प्रकर्षेण वदामि एकः प्रशब्दः पूरणः । वोचं लुङि ब्रुवोवचिः चेुरङ् कानि

तानि सतीनमन्युः सतीनमित्युदकनाम उदकाभिवर्षणबुद्धियुक्तः त्वं अद्रिं मेघं अश्नथयः वज्रेणाहिंसीः ब्रह्मणे बृहस्पतये गां पणिभिरपहृतां सुवेदनां सुष्ठु ज्ञापनीयां अकृणोरकरोरित्यादीनि ॥ ८ ॥

अथ नवमी—

निषुसीदगणपतेगणेषुत्वामाहुर्विप्रंतमंकवीनाम् ।
नऋतेत्वत्क्रियतेकिंचनारेमहामर्कंमघवञ्चित्रमर्च ॥ ९ ॥

नि । सु । सीद । गणऽपते । गणेषु । त्वाम् । आहुः । विप्रंऽतमम् ।
कवीनाम् । न । ऋते । त्वत् । क्रियते । किम् । चन । आरे ।
महाम् । अर्कम् । मघऽवन् । चित्रम् । अर्च ॥ ९ ॥

हेगणपते त्वं गणेषु स्तोतृगणेषु सुसुष्ठु निषीद स्तुतिश्रवणार्थं निषण्णोभव यतः कवीनां क्रान्तप्रज्ञानां मध्ये त्वा त्वां विप्रतमं अतिशयेन मेधाविनमित्याहुः किंच त्वदृते अन्यारादितरर्तेइति पंचमी त्वां वर्जयित्वा किंचनकर्म आरे दूरे समीपेवा नक्रियते तस्मान्निषीद ततः हेमघवन् धनवन्निन्द्र महां महान्तं अर्कमर्चनीयं अस्मदीयं त्रिवृत्पंचदशादिलक्षणं स्तोमं चित्रं नानारूपं कृत्वा अर्च पूजय विधेहि । अर्चपूजायां भौवादिकः ॥ ९ ॥

अथ दशमी—

अभिख्यानोमघवन्नाधमानान्त्सखेबोधिवसुपतेसखीनाम् ।
रणंकृधिरणकृत्सत्यशुष्माभक्तेचिदाभजारायेअस्मान् ॥ १० ॥ १३ ॥

अभिऽख्या । नः । मघऽवन् । नाधमानान् । सखे । बोधि ।
वसुऽपते । सखीनाम् । रणम् । कृधि । रणऽकृत् । सत्यऽशुष्म ।
अभक्ते । चित् । आ । भज । राये । अस्मान् ॥ १० ॥ १३ ॥

हेमघवन् धनवन्निन्द्र नाधमानान् नाथृनाधृयाच्ञोपतापैश्वर्याशीःषु भौवादिकः अनुदात्तेत याचमानान् नोस्मान् अभिख्या अभिख्यापनेन तेजसा युक्तान् कुरु प्रसिद्धान्वाकुरु हेसखे धनदानेन हेवसुपते वसूनां स्वामिन् त्वं सखीनां स्तोतृत्वेन सखिभूतानामस्माकं स्वभू-

तानि स्तोत्राणि बोधि बुध्यस्व बुधअवगमने भौवादिकः लोटिछान्दसः शपोलुक् छन्दस्युभयथेति हेरार्धधातुकत्वेनाङित्वात् अङितश्चेति हेर्धिभावः अतएव गुणः सार्वधातुकत्वेन ङित्वादन्तोदात्तत्वं वर्णलोपश्छान्दसः हे रणकृत शत्रुभिः सह युद्धकर्तः अतएव हेसत्यशुष्म यथार्थबलोपेत त्वं रणं कृधि कुरु शत्रून् जहि । करोतेर्लोटि श्रुशृणुकृवृभ्यश्छन्दसीति हेर्धिः । किंच अभक्तेचित् असंभजनीये स्थानेपि अस्मान् राये धनाय आभज भागिनः कुरु द्व्यचोतस्तिङइति संहितायां दीर्घः ॥ १० ॥

॥ इत्यष्टमस्य षष्ठे त्रयोदशोवर्गः ॥ १३ ॥

॥ इति दशमे मंडले नवमोनुवकः ॥ ९ ॥

दशमेनुवाके षोडशसूक्तानि तत्र तमस्येति दशर्चं प्रथमं सूक्तं ऐन्द्रं शतप्रभेदनोनाम वैरूपऋषिः अन्त्या त्रिष्टुप् शिष्टाजगत्यः । तथाचानुक्रान्तं—तमस्यशतप्रभेदनस्त्रिष्टुबन्तमिति । दशरात्रस्याष्टमेहनि मरुत्वतीयएतत्सूक्तं । सूत्रितंच—तमस्यद्यावापृथिवीमहाँइन्द्रोनृवदितिमरुत्वतीयमिति ।

तत्र प्रथमा—

**तमस्यद्यावापृथिवीसचेतसाविश्वेभिर्देवैरनुशुष्ममावताम् ।**
**यदैत्कृण्वानोमहिमानमिन्द्रियंपीत्वीसोमस्यक्रतुमाँअवर्धत ॥ १॥**

तम् । अस्य । द्यावापृथिवी इति । सऽचेतसा । विश्वेभिः । देवैः ।
अनु । शुष्मम् । आवताम् । यत् । ऐत् । कृण्वानः । महिमानम् ।
इन्द्रियम् । पीत्वी । सोमस्य । क्रतुऽमान् । अवर्धत ॥ १ ॥

सचेतसा सहचेतयंत्यौद्यावापृथिवी द्यावापृथिव्यौ विश्वेभिः सर्वैर्देवैः सह अन्वादेशे अशादेशोनुदात्तः एतस्येन्द्रस्य तंशुष्मं शत्रूणां शोषकं बलमन्वावतां रक्षतां तस्य बलं पूर्वमस्मान् रक्षतु पश्चादेते अपिरक्षतामितिभावः अवतेर्लुङ् ।कृण्वानः वृत्रवधादिकं कुर्वाणः समहिमानं इन्द्रियं इन्द्रस्यात्मनः पर्याप्तं वीर्यंच यद्यदा ऐत् प्राप्नोत् । इणूगतौ आदादिकः आडजादीनामित्याडागमः तदा क्रतुमान् कर्मवान् सः सोमस्य पीत्वी सोमं पीत्वा अवर्धत । क्रियाग्रह-

णं कर्तव्यमिति कर्मणः संप्रदानसंज्ञा चतुर्थ्यर्थे बहुलमिति षष्ठी पीत्वी स्नात्व्यादयश्चेति निपातितः ॥ १ ॥

अथ द्वितीया—

तमस्यविष्णुर्महिमानमोजसांशुंदधन्वान्मधुनोविरप्शते ।
देवेभिरिन्द्रोमघवासयावभिर्वृत्रंजघन्वाँअभवद्वरेण्यः ॥ २ ॥

तम् । अस्य । विष्णुः । महिमानम् । ओजसा । अंशुम् । दधन्वान् ।
मधुनः । वि । रप्शते । देवेभिः । इन्द्रः । मघऽवा । सयावऽभिः ।
वृत्रम् । जघन्वान् । अभवत् । वरेण्यः ॥ २ ॥

विष्णुरेतन्नामकः व्याप्तोयज्ञोवा मधुनः मदकरस्य सोमस्य अंशुं लताखंडं दधन्वान् प्रेरयन् धवेर्गत्यर्थस्य क्वसौ इदन्तान्नुमागमेकृते वलिलोपः ओजसा स्ववीर्येण संजातमस्येन्द्रस्य तं महिमानं विरप्शते विविधं शब्दयति स्तौति मघवा धनवान् सयावभिः यातेः आतोमनिन्निति क्वनिप् सहगन्तृभिः देवेभिः देवैर्मरुद्भिश्च वृत्रं जघन्वान् हतवान् इन्द्रः वरेण्यः सर्वैर्वरणीयः संभजनीयोभवत् ॥ २ ॥

अथ तृतीया—

वृत्रेणयदहिनाबिभ्रदायुधासमस्थिथायुधयेशंसमाविदे ।
विश्वेतेअत्रमरुतःसहत्मनावर्धन्नुग्रमहिमानमिन्द्रियम् ॥ ३ ॥

वृत्रेण । यत् । अहिना । बिभ्रत् । आयुधा । सम्ऽअस्थिथाः ।
युधये । शंसम् । आऽविदे । विश्वे । ते । अत्र । मरुतः । सह ।
त्मना । अवर्धन् । उग्र । महिमानम् । इन्द्रियम् ॥ ३ ॥

युधये युद्धाय आयुधा आयुधानि वज्रादीनि बिभ्रत् धारयन्निन्द्रः त्वं यद्यदा अहिना अहन्तव्येन वृत्रेण समस्थिथाः सहास्थाः तिष्ठतेर्लुङि समवप्रविभ्यःस्थइत्यात्मनेपदं स्थाघ्वोरिच्चेति सिचः कित्वं इकारश्चान्तादेशः ह्रस्वादंगादिति सिचोलोपः यद्योगादनिघातः तिङिचोदात्तवतीति गतेर्निघातः तदाआविदे कृत्यार्थे केन्प्रत्ययः । तव वृत्रवधादिकं वीर्यमज्ञाप-

यितुं शंसमशंसं शस्त्रैरहं स्तौमि शंसुस्तुतौलङ् वाक्यभेदादनिघातः किंच हेउग्र उद्गूर्णबल अ-त्रास्मिन्कालेएव तेत्वदीयं महिमानमिन्द्रियं वीर्यंच विश्वेसर्वे मरुतः त्मनाआत्मना सहैव अव-र्धन् वर्णलोपश्छान्दसः अवर्धयन् मरुतोहीन्द्रस्य वीर्यं भवति ॥ ३ ॥

अथ चतुर्थी—

जज्ञानएवव्यबाधतस्पृधःप्रापश्यद्वीरोअभिपौंस्यंरणम् ।
अवृश्चदद्रिमवसस्यदःसृजदस्तभ्नान्नाकंस्वपस्ययापृथुम् ॥ ४ ॥

जज्ञानः । एव । वि । अबाधत । स्पृधः । प्र । अपश्यत् । वीरः ।
अभि । पौंस्यम् । रणम् । अवृश्चत् । अद्रिम् । अव । सऽस्यदः ।
सृजत् । अस्तभ्नात् । नाकम् । सुऽअपस्यया । पृथुम् ॥ ४ ॥

सइन्द्रः जज्ञानएव जनी प्रादुर्भावेछान्दसस्य लिटः कानच् जायमानएव स्पृधः शत्रून् व्यबाधत अत्यर्थमपीडयत् स्पृधः स्पर्धसंघर्षे क्विप् अपस्पृधेथामिति निपातनेन एकत्रसंप्रसारणदर्शनात् अत्रापि भवति अतएव वीरः समर्थः सः रणं संग्राममभिलक्ष्य पौंस्यमात्मीयं बलं प्रापश्यत् अस्यैतद्बलमिति प्रकर्षेण पश्यति जानाति । किंच अद्रिं मेघं अवृश्चत्वर्षणार्थमच्छिनत् अनन्तरं सस्यदः स्यन्दूप्रस्रवणे क्विप् शसिनलोपः सहस्यन्दमानाअपः अवसृजत् अवाङ्मुखमसृजत् निरगमयत् तथा सः पृथुं महान्तं नाकं द्युलोकं स्वपस्यया सुपआत्मनः क्यच् अप्रत्ययादिति स्त्रियामप्रत्ययः शोभनकर्मेच्छया अस्तभ्नात् निरुद्धमकरोत् स्तंभिः सौत्रोधातुः ॥ ४ ॥

अथ पंचमी—

आदिन्द्रःसत्रातविषीरपत्यतवरीयोद्यावापृथिवीअबाधत ।
अवाभरद्धृषितोवज्रमायसंशेवंमित्रायवरुणायदाशुषे ॥ ५॥१४॥

आत् । इन्द्रः । सत्रा । तविषीः । अपत्यत । वरीयः ।
द्यावापृथिवी इति । अबाधत । अव । अभरत् । धृषितः ।
वज्रम् । आयसम् । शेवम् । मित्राय । वरुणाय । दाशुषे ॥ ५॥१४॥

आदपिच सइन्द्रः तविषीः महतीः सत्रा सहैव अपत्यतागच्छत पदगतौ दैवादिकः व-र्णव्यत्ययः यद्वा पत्यतइत्यैश्वर्यकर्मा सेनानामीष्टे तासामीश्वरोभवदित्यर्थः । सएव द्यावापृथिवी द्यावापृथिव्यौ वरीयः तृतीयायाः सुः उरुतरेण महिम्ना अवबाधत तयोरन्तःस्थितान् शत्रूनवधी-दित्यर्थः । धृषितः शत्रुवधे प्रगल्भः सन् आयसमयोमयं वज्रमवाभरत् अधारयत् । किमर्थं मित्राय वरुणाय दाशुषे हविर्दत्तवते यज्वने शेवं सुखं कर्तुं ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे चतुर्दशोवर्गः ॥ १४ ॥

अथ षष्ठी–

इन्द्र॑स्या॒त्र त॑वि॑षीभ्यो विर॒प्शिन॑ ऋघाय॒तो अ॑रंहयन्त म॒न्यवे॑ ।
वृ॒त्रं यदु॒ग्रो व्यवृ॑श्च॒दोज॑सा॒पो बिभ्र॑तं॒ तम॑सा॒ परी॑वृतम् ॥ ६ ॥

इन्द्र॑स्य । अत्र॑ । तवि॑षीभ्यः । वि॒ऽर॒प्शिनः॑ । ऋ॒घा॒य॒तः । अ॒रं॒ह॒य॒न्त॒ । म॒न्यवे॑ । वृ॒त्रम् । यत् । उ॒ग्रः । वि । अवृ॑श्चत् । ओज॑सा । अ॒पः । बिभ्र॑तम् । तम॑सा । परि॑ऽवृतम् ॥ ६ ॥

अत्रास्मिन् काले एव विरप्शिनः महतः विविधं शब्दायमानस्यवा ऋघायतः शत्रून् हिंसतः इन्द्रस्य तविषीभ्यः षष्ठ्यर्थे चतुर्थी बलानां मन्यवे प्रख्यापनाय अरंहयन्त आपोनिरगच्छन् रहिर्गत्यर्थः उग्रउद्गूर्णः सः अपउदकानि बिभ्रतं धारयन्तं तमसापरीवृतं परितोवेष्टितं वृणोतेः कर्मणि क्तः गतिरनन्तरइति स्वरः संहितायामुपसर्गस्य घञीति दीर्घः तंवृत्रं यद्यस्मिन्काले ओजसा स्ववीर्येण व्यवृश्चत् अत्यर्थमवधीत् ॥ ६ ॥

अथ सप्तमी–

या वी॒र्या॑णि प्र॒थ॒मानि॒ कर्त्वा॑ महि॒त्वेभि॒र्यत॑मानौ स॒मी॒य॒तुः॑ ।
ध्वा॒न्तं तमो॑ऽव॑ दध्वसे ह॒त इन्द्रो॑ म॒ह्ना पू॒र्वहू॑ताव पत्यत ॥ ७ ॥

या । वी॒र्या॑णि । प्र॒थ॒मानि॑ । कर्त्वा॑ । म॒हि॒ऽत्वेभिः॑ । यत॑मानौ । स॒म्ऽई॒य॒तुः॑ । ध्वा॒न्तम् । तमः॑ । अव॑ । द॒ध्व॒से॒ । ह॒ते । इन्द्रः॑ । म॒ह्ना । पू॒र्वऽहू॑तौ । अ॒प॒त्य॒त ॥ ७ ॥

महित्वेभिः मंहनीयैः स्वबलैः यतमानौ युद्धाय प्रयत्नं कुर्वतौ इन्द्रवृत्रौ प्रथमानि पूर्वभावीनि कत्वां कृत्यार्थे त्वन् प्रत्ययः कर्तव्यानि या यानि वीर्याणि समीयतुः संयोजयामासतुः इण्गतौ लिटि दीर्घइणः कितीति दीर्घः तयोर्मध्ये इन्द्रेण वृत्रे हतेसति ध्वान्तं अतिनिबिडं तमः अवध्वसे अवदध्वसे अवध्वस्तं विनष्टमभूत् ध्वंसेर्लिट् कित्वान्नलोपः इन्द्रस्तु मह्ना स्वमहिम्ना पूर्वहूतौ प्रथमाह्वाने अपत्यतागच्छत् शूराणां मध्ये अयमेव प्रथमोहूयमानोभवदित्यर्थः ॥ ७ ॥

अथाष्टमी—

विश्वेदेवासोअधवृष्ण्यानितेवर्धयन्त्सोमवत्यावचस्यया ।
रद्धंवृत्रमहिमिन्द्रस्यहन्मनाग्निर्नजम्भैस्तृष्वन्नमावयत् ॥ ८ ॥

विश्वे । देवासः । अध । वृष्ण्यानि । ते । अवर्धयन् । सोमऽवत्या ।
वचस्यया । रद्धम् । वृत्रम् । अहिम् । इन्द्रस्य । हन्मना ।
अग्निः । न । जम्भैः । तृषु । अन्नम् । आवयत् ॥ ८ ॥

हेइन्द्र अध वृत्रहननानन्तरं विश्वेदेवासोदेवा ऋत्विजः सोमवत्या सोमयुक्तया वचस्यया स्तुतीच्छया तेत्वदीयानि वृष्ण्यानि बलानि अवर्धयन् वर्धयन्ति इन्द्रस्य हन्मना हननसाधनेन वज्रेण रद्धं रधहिंसासंराध्योः हिंसितमहिंवृत्रं अपामावरकं मेघं तृषु शीघ्रमन्नमावयत् अभक्षयत् तज्जन्येनोदकेन संपादितमन्नं जनः भक्षयदित्यर्थः आवयतिरत्तिकर्मा । तत्रदृष्टान्तः—अग्निर्न यथाग्निः जंभैः आत्मीयैः दन्तैः अन्नं भक्षयति तद्वत् ॥ ८ ॥

अथ नवमी—

भूरिदक्षेभिर्वचनेभिर्ऋक्वभिः सख्येभिः सख्यानिप्रवोचत ।
इन्द्रोधुनिंचचुमुरिंचदम्भयञ्छ्रद्धामनस्याशृणुतेदभीतये ॥ ९ ॥

भूरि । दक्षेभिः । वचनेभिः । ऋक्वऽभिः । सख्येभिः । सख्यानि ।
प्र । वोचत । इन्द्रः । धुनिम् । च । चुमुरिम् । च ।
दम्भयन् । श्रद्धाऽमनस्या । शृणुते । दभीतये ॥ ९ ॥

हेस्तोतारः दक्षेभिः वर्धनहेतुभिः ऋकभिः छन्दसीवनिपाविति वनिप् प्रत्ययः अयस्मयादित्वने भत्वात् जश्त्वाभावः पदत्वात्कुत्वं मंत्रयुक्तैः सख्येभिः तदर्हतीत्यर्थे छन्दसिचेति यप्रत्ययः सख्युरिन्द्रस्य योग्यैः वचनेभिः वचनैः स्तोत्रैः सख्यानि स्तुत्यस्तोतृलक्षणान्यभिलक्ष्य भूरि बहुवारं इन्द्रं प्रवोचत प्रब्रूत अभिष्टुत इन्द्रस्तु दभीतये एतन्नामकाय राजर्षये धुनिंच चुमुरिंच एतन्नामकौ द्वावसुरौ दंभयन् हिंसन् श्रद्धामनस्या मनःशब्दात्क्यच् श्रद्धायुक्तया मनसइच्छया शृणुते युष्माभिः कृतानि स्तोत्राणि शृणोति ॥ ९ ॥

अथ दशमी—

त्वंपुरूण्याभरास्वश्व्यायेभिर्मंसैनिवचनानिशंसन् ।
सुगेभिर्विश्वादुरितातरेमविदोषुणउर्वियागाधमद्य ॥ १० ॥ १५ ॥

त्वम् । पुरूणि । आ । भर । सुऽअश्व्या । येभिः । मंसै ।
निऽवचनानि । शंसन् । सुऽगेभिः । विश्वा । दुःऽइता । तरेम ।
विदो इति । सु । नः । उर्विया । गाधम् । अद्य ॥ १० ॥ १५ ॥

हे इन्द्र त्वं स्वश्व्या स्वश्व्यानि शोभनाश्वयुक्तानि पुरूणि बहूनि धनानिमह्यमाभर आहर प्रयच्छ निवचनानि नितरां वक्तव्यानि स्तोत्राणि शंसन् अहं येभिः धनैः मंसै मन्यतिरर्चतिकर्मा देवान्पूजयानि तानि देहि मन्यतेर्लोटि बहुलं छन्दसीति विकरणस्यलुक् सिप्यडागमः सिपः पित्वेनानुदात्तत्वात् धातुस्वरः सुगेभिः सुष्ठु गन्तव्यैस्तैर्धनैः स्तोत्रैर्वा विश्वा सर्वाणि दुरिता दुरितानि पापानि तरेम हेइन्द्र अद्यास्मिन्कर्मणि गाधं ग्रथ्यमानं क्रियमाणं नोस्मदीयं स्तोत्रं उर्विया उरुत्वेन बहुमानेन सु सुष्ठु विदोविदउ जानीह्येव ॥ १० ॥

॥ इत्यष्टमस्य षष्ठे पंचदशोवर्गः ॥ १५ ॥

घर्मेति दशर्चं द्वितीयं सूक्तं सध्रिर्नामवैरूपऋषिः तपसः पुत्रोघर्मोवा चतुर्थी जगती शिष्टास्त्रिष्टुभः । तथाचानुक्रान्तं—घर्मासध्रिस्तापसोवाघर्मोवैश्वदेवंचतुर्थीजगतीति । गतोविनियोगः ।

तत्र प्रथमा—

घर्मासमन्तात्रिवृतंव्यापतुस्तयोर्जुष्टिंमातरिश्वाजगाम।
दिवस्पयोदिधिषाणाअवेषन्विदुर्देवाःसहसामानमर्कम् ॥ १ ॥

घर्मा। सम्ऽअन्ता। त्रिऽवृतम्। वि। आपतुः। तयोः।
जुष्टिम्। मातरिश्वा। जगाम। दिवः। पयः। दिधिषाणाः।
अवेषन्। विदुः। देवाः। सहऽसामानम्। अर्कम् ॥ १ ॥

समन्ता समन्तौ संव्याप्तदिगन्तौ घर्मा घृक्षरणदीप्त्योः घर्मौ दीप्यमानौ अग्न्यादित्यौ त्रिवृतं। त्रयोवाइमे त्रिवृतोलोकाइत्याम्नानात्। त्रैलोक्यं व्यापतुः स्वतेजोभिः व्याप्तवन्तौ मातरिश्वा अन्तरिक्षे वर्तमानोवायुः तयोरग्न्यादित्ययोः जुष्टिं प्रीतिं जगाम गतवान् यदा सहसामानं सामशब्दउपलक्षकः वेदत्रयतेजःसहितं। सर्वंतेजः सामरूपंहशश्वदित्याम्नानात्। ईदृशमर्कं अर्चनीयं सूर्यं देवाः दीप्यमानाः स्वरश्मयोविदुः विविदुः लेभिरे प्रापुः। तदा दिधिषाणाः लोकधारणशीलाः तेदिवः द्युलोकस्य संबन्धि पयः उदकमवेषन् व्याप्तवन्तः ववर्षुरित्यर्थः। दिवस्पयइत्यत्र षष्ठ्याः पतिपुत्रेति सत्वं। दिधिषाणाः धिषधारणे चानश् शपःश्लुः यद्वा धिधारणे सन्नन्तस्य चानश् अज्झनगमांसनीति दीर्घाभावश्छान्दसः। यद्वा समंतौ संगतौ घर्मौ स्वयंदीप्यमानौ जीवेश्वरौ त्रिवृतं सत्वरजस्तमोगुणात्मिकां मायां व्यापतुः नियन्तृनियन्तव्यभावेन। मातरिश्वा परमात्मा तयोर्जुष्टिं संभोक्तव्यपदार्थैः संजातां प्रीतिं जगाम गतवान् तंपरमात्मानं वेदमयं इमं सूर्यं इति देवाजानन्ति ॥ १ ॥

अथ द्वितीया—

तिस्रोदेष्ट्रायनिर्ऋतीरुपासतेदीर्घश्रुतोविहिजानन्तिवह्नयः।
तासांनिचिक्युःकवयोनिदानंपरेषुयागुह्येषुव्रतेषु ॥ २ ॥

तिस्रः। देष्ट्राय। निःऽऋतीः। उप। आसते। दीर्घऽश्रुतः।
वि। हि। जानन्ति। वह्नयः। तासाम्। नि। चिक्युः। कवयः।
निऽदानम्। परेषु। या। गुह्येषु। व्रतेषु ॥ २ ॥

निर्ऋतीः पृथिवीनामैतत् अनेन इतरलोकावुपलक्ष्येते तत्राधिष्ठितास्तिस्रः अग्न्यादिदेवताः देष्ट्राय हविषां प्रदानाय उपासते यजमानाउपासनं कुर्वते ततः दीर्घश्रुतः प्रभूतकीर्तयोवह्नयः जगतः प्रापिकाः तादेवताः विजानन्ति एतैः कृतामुपासनां मन्वतएव । यद्वा निर्ऋतीः निःशेषेण ऋच्छंति गच्छन्तीति निर्ऋतयः तास्तिस्रः सृष्टिस्थितिसंहृतीः देष्ट्राय आत्मनः कर्मभोगदानाय उपासते ते दीर्घश्रुतः दीर्घं संसारे शृण्वन्तः मन्तव्यद्रष्टव्यादिपदार्थं जानन्तः मंत्रद्रष्ट्यादिरूपमजानन्तइत्यर्थः । अतएववह्नयः संसारस्य वोढारः तानजानन्ति कवयः क्रान्तदर्शिनस्तु तासां सृष्ट्यादीनामग्न्यादीनां वा निदानं मूलकारणं परमात्मानं निचिक्युः नितरां चिन्वन्ति जानन्ति परेषु उत्कृष्टेषु वा गुह्येषु गोप्तव्येषु कर्मसु यमनियमादिषु व्रतेषु याः प्रवृत्तयः सन्ति तासां निदानं निचिक्युः जानन्ति चिञ् चयने लिटि विभाषाचेरित्यभ्यासादुत्तरस्य कवर्गादेशः यद्वा चायतेर्लिटि चायःकीति छन्दसि कीत्यादेशः ॥ २ ॥

अथ तृतीया—

चतुंष्कपर्दाय़ुवतिःसुपेशांघृतप्रंतीकावयुनांनिवस्ते ।
तस्यांसुपर्णावृषंणानिषेदतुर्यत्रंदेवादंधिरेभागधेयम् ॥ ३ ॥

चतुंःऽकपर्दा । युवतिः । सुऽपेशाः । घृतऽप्रतीका । वयुनानि ।
वस्ते । तस्याम् । सुऽपर्णा । वृषंणा । नि । सेदतुः । यत्रं । देवाः ।
दधिरे । भागऽधेयम् ॥ ३ ॥

चतुष्कपर्दा चतुष्कोणा युवतिः स्त्रीरूपा सुपेशाः शोभनालंकारा घृतप्रतीका घृतप्रमुखहविष्का एतादृशीवेदिः वयुनानि ज्ञातव्यानि पदार्थजातानि कर्माणि स्तोत्राणि वा वस्ते आच्छादयति तस्यां वेद्यां वृषणा वृषणौ हविषां वर्षितारौ सुपर्णा सुपर्णौ सुपतनौ जायापती यजमानब्रह्माणौ वा निषेदतुः निषण्णौ भवतः यत्र यस्यां वेद्यां देवाअग्न्यादयः भागधेयं स्वार्थिकोधेयप्रत्ययः स्वस्वभागं हविर्दधिरे धारयन्ति यद्वा चतुष्कपर्दा नामाख्यातोपसर्गनिपाताश्चत्वारः कपर्दस्थानीयायस्याः सा युवतिस्तरुणी नित्याघृतप्रतीका दीप्यमानवर्णावयवा एषा औपनिषदीवाक् वयुनानि ज्ञानानि वस्ते आच्छादयति तस्यां वाचि सुपर्णा सुपर्णौ जीवपरमात्मानौ

निषण्णौ भवतः यत्र इतराभ्योपि दृश्यंतइति तृतीयार्थे त्रल्प्रत्ययः यया वाचा देवाभागं धारयन्ति ॥ ३ ॥

अथ चतुर्थी—

एकः॑सुप॒र्णः॒सस॑मु॒द्रमावि॑वेश॒सइ॒दंविश्वं॒भुव॑नं॒विच॑ष्टे ।
तंपाके॑न॒मन॑सापश्य॒मन्ति॑त॒स्तंमा॒तारे॑ळ्हि॒सउ॒रे॑ळ्हिमा॒तर॑म् ॥ ४ ॥

एकः॑ । सु॒ऽप॒र्णः । सः । स॒मु॒द्रम् । आ । वि॒वे॒श॒ । सः । इ॒दम् ।
विश्व॑म् । भुव॑नम् । वि । च॒ष्टे॒ । तम् । पाके॑न । मन॑सा । अ॒प॒श्य॒म् ।
अन्ति॑तः । तम् । मा॒ता । रे॒ळ्हि॒ । सः । ऊँ॒ इति॑ । रे॒ळ्हि॒ । मा॒तर॑म् ॥ ४ ॥

एकः सर्वकार्येष्वसहायः सुपर्णः सुपतनः मध्यमस्थानोदेवः समुद्रमन्तरिक्षं आविवेश आविशति आविश्यच सइदंविश्वं सर्वं भुवनं भूतजातं विचष्टे अनुग्राह्यतयाभिपश्यति तमेवं रूपं देवं पाकेन परिपक्केन मनसा अन्तितः समीपेहमपश्यं अदर्शं । किंच माता उदकानां निर्मात्री माध्यमिकावाक् तां रेळ्हि आस्वादयति उपजीवनमात्रमत्रलक्ष्यते सउ सखलु मातरं वाचं रेळ्हि लेढि तामेवोपजीवति लिहआस्वादने । यद्वा सुपर्णः पक्षवान् निराधारसंचारी एकः प्राणवायुः परमात्मा वा समुद्रं समुद्रवन्ति आपोस्मादिति समुद्रमन्तरिक्षं यद्वा समुद्रवं सर्वतोगमनं तच्छीलं प्रपंचजातमाविष्टवान् सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । वायुपक्षे वाय्वादिरूपेणाविवेश सइदं विश्वं सर्वं लोकं विचष्टे विशेषेण ख्यापयति सति हिप्राणे परमात्मनि वा जीवन्तः पुरुषालोकं विख्यातं कुर्वन्ति तंदेवं उपासकोहं पाकेन परिपक्कज्ञानेन मनसा अन्तितः अन्तिकशब्दात्तसिः अन्तिकस्यतसि कादिलोपोभवत्याद्युदात्तत्वंच इति कादिलोपः अन्तिके समीपे स्वहृदये अपश्यं तं प्राणं मातावाक् रेळ्हि वाक्प्राणेन्तर्भवतीत्यर्थः । स्वापे हि वाग्व्यापारोनदृश्यते प्राणव्यापारस्तु दृश्यतइति ॥ ४ ॥

अथ पंचमी—

सु॒प॒र्णंविप्राः॑क॒वयो॒वचो॑भि॒रेकं॒सन्तं॑बहु॒धाक॑ल्पयन्ति ।
छन्दां॑सिच॒दध॑तोअध्व॒रेषु॒ग्रहा॒न्त्सोम॑स्यमिमतेद्वाद॑श ॥ ५ ॥ १६ ॥

सुऽपर्णम् । विप्राः । कवयः । वचःऽभिः । एकम् । सन्तम् ।
बहुधा । कल्पयन्ति । छन्दांसि । च । दधतः । अध्वरेषु । ग्रहान् ।
सोमस्य । मिमते । द्वादश ॥ ५ ॥ १६ ॥

विप्रामेधाविनः कवयः क्रान्तप्रज्ञाः मनुष्याः सुपर्णं सुपतनं एकं सन्तं परमात्मानं वचोभिः स्तुतिलक्षणैर्वचनैर्बहुधा बहुप्रकारं कल्पयन्ति कुर्वन्ति । किंच तएव कवयः अध्वरेषु यज्ञेषु छन्दांसि गायत्र्यादीनिसप्तच्छदांसि दधतः स्तोत्रशस्त्रादिना धारयन्तः द्वादशसंख्याकान् सोमस्य ग्रहान् ग्रहणसाधनानि पात्राणि उपांश्वन्तर्यामादीनि मिमते निर्मिमते ग्रहान् गृह्यते एभिरिति ग्रहाः ग्रहवृद्दनिश्चिगमश्चेति करणे अप्प्रत्ययः सोमस्येति कर्मणिषष्ठी द्वादशेत्यत्र संख्या इति पूर्वपदप्रकृतिस्वरत्वं ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे षोडशोवर्गः ॥ १६ ॥

अथ षष्ठी—

षट्त्रिंशांश्चंचतुरःकल्पयन्तश्छन्दांसिचदधतआद्वादशम् ।
यज्ञंविमायकवयोमनीषऋक्सामाभ्यांप्ररथंवर्तयन्ति ॥ ६ ॥

षट्ऽत्रिंशान् । च । चतुरः । कल्पयन्तः । छन्दांसि । च । दधतः ।
आऽद्वादशम् । यज्ञम् । विऽमाय । कवयः । मनीषा ।
ऋक्ऽसामाभ्याम् । प्र । रथम् । वर्तयन्ति ॥ ६ ॥

पूर्वं सामान्येन यज्ञग्रहानुक्त्वा इदानीं सर्वग्रहादिपूर्वकोयज्ञोभिधीयते । षट्त्रिंशान् द्वौ उपांश्वन्तर्यामौ ऐन्द्रवायवादयस्त्रयोद्विदेवत्याग्रहाः द्वौ शुक्रामंथिनौ आग्रयणउक्थ्योध्रुवश्चेति त्रयः ऋतुग्रहाः द्वादश ऐन्द्राग्नौ वैश्वदेवश्च द्वौ त्रयोमरुत्वतीया एकोमाहेन्द्र आदित्यसावित्रौद्वौ वैश्वदेवः पात्नीवतोहारियोजनइति त्रयोग्रहाः एवं षट्त्रिंशद्भवन्ति । अत्यग्निष्टोमे पूर्वे षट्त्रिंशग्रहाः द्वावंश्वदाभ्यौ दधिग्रहः षोडशीचेति चत्वारएतान् चत्वारिंशत्संख्याकान् ग्रहान्कल्पयन्तः सोमेन पूरयन्तः । किंच आद्वादशं आङ्मर्यादाभिविध्योरित्यव्ययीभावसमासः तस्य स्वरः द्वादशसंख्याकप्रउगादिशस्त्रसमाप्तिपर्यन्तं छन्दांसि गायत्र्यादीनि दधतः सन्तः शस्त्रादिरूपेण

धारयन्तः कवयः मनीषा तृतीयायाआकारः मनीषया बुध्या एवं यज्ञं विमाय निर्माय रथं र-मन्त्यत्रेति रथोयज्ञः तंरथं यज्ञं ऋक्सामाभ्यां प्रवर्तयन्ति प्रकर्षेण संपादयन्ति चतुरइत्यत्र च-तुरः शसीत्यन्तोदात्तत्वं ॥ ६ ॥

अथ सप्तमी—

चतुर्दशान्येमहिमानोअस्यतंधीरावाचाप्रणयन्तिसप्त ।
आमानंतीर्थंकइहप्रवोचद्येनपथाप्रपिबन्तेसुतस्य ॥ ७ ॥

चतुःऽदश । अन्ये । महिमानः । अस्य । तम् । धीराः । वाचा ।
प्र । नयन्ति । सप्त । आमानम् । तीर्थम् । कः । इह । प्र । वोचत् ।
येन । पथा । प्रऽपिबन्ते । सुतस्य ॥ ७ ॥

अस्य यज्ञरूपस्य परमात्मनः अन्ये चतुर्दश चतुर्दशसंख्याकालोकाः महिमानः विभूत-योभवन्ति तंयज्ञं सप्तसंख्याकाधीराः धीमन्तः होत्रादयः वाचा शस्त्ररूपया प्रणयन्ति प्रकर्षेण नयन्ति आमानं आप्लृव्याप्तौ ताच्छील्ये चानशि व्यत्ययेन विकरणस्यव्यत्ययः व्यापनशीलं तीर्थं पापोत्तारणसमर्थं चात्वालोत्करमध्यदेशं इहास्मिन्यज्ञे कः प्रवोचत् कोवक्ति नकोपीत्य-र्थः । येन पथा येनयज्ञमार्गेण सुतस्याभिषुतं सोमं प्रपिबन्ते देवाः अतिशयेन पिबन्ति पापाने पाघ्रेत्यादिना पिबादेशः व्यत्ययेनात्मनेपदं उपसर्गेण समासः यद्योगादनिघाते तिङिचोदात्तवती ति गतेर्निघातः ॥ ७ ॥

अथाष्टमी—

सहस्रधापञ्चदशान्युक्थायावद्यावापृथिवीतावदित्तत् ।
सहस्रधामहिमानःसहस्रंयावद्ब्रह्मविष्ठितंतावतीवाक् ॥ ८ ॥

सहस्रधा । पञ्चऽदशानि । उक्था । यावत् । द्यावापृथिवी इति ।
तावत् । इत् । तत् । सहस्रधा । महिमानः । सहस्रम् । यावत् ।
ब्रह्म । विऽस्थितम् । तावती । वाक् ॥ ८ ॥

सहस्रधा सहस्रसंख्याकेषु ब्रह्मादिस्तंभपर्यन्तेषु देहेषु पंचदशानि चक्षुःश्रोत्रंमनोवाक् प्राण इत्येतानि पंच तदाधारत्वेन मातापित्रोः सकाशात् आगतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि भूतानि मिलितानि दश एवं पंचदशसंख्याकानि उक्थाउक्थानि उत्कृष्टान्यङ्गानि विद्यन्ते प्राणिदेहेषु जातेषु द्यावापृथिवी षष्ठीद्विवचनस्य सुपांसुलुगिति पूर्वसवर्णदीर्घः द्यावापृथिव्योः यावत्परिमाणमस्ति तावदित् तत्परिमाणमेव आत्माधिष्ठितं प्राणिदेहजातं भवति यावत्तावच्छब्दयोः यत्तदेतेभ्यः परिमाणेवतुपि आसर्वनाम्नइति दीर्घः। किंच सहस्रधा सहस्रसंख्याकेषु सहस्रं महिमानः सहस्रसंख्याका महान्तोव्यवहारविशेषाभवन्ति प्रतिविषयं प्रतिलक्षणं दर्शनश्रवणादिव्यवहारनिष्पत्तेः सहस्रधेत्यत्र विधार्थे धाप्रत्ययः ब्रह्म जगत्कारणं वस्तु यावत् नानाविधप्राणिदेहरूपेण यावत्परिमाणं भूत्वा विष्ठितं विशेषेण स्थितं वाक् तावती तत्परिमाणाभवति एकैकस्याभिधेयार्थस्यैकैकनामापेक्षणात् । अन्यत्रापिश्रूयते—सर्वाणि रूपाणि विचित्यधीरोनामानि कृत्वाभिवदन्यदास्तइति । सहस्रधा पंचदशान्युक्थेति पंचहिदशतोभवन्तीत्यादिकमारण्यकमत्रानुसंधेयं ॥ ८ ॥

अथ नवमी—

कश्छन्दसांयोगमावेदधीरःकोधिष्ण्यांप्रतिवाचंपपाद ।
कमृत्विजामष्टमंशूरमाहुर्हरीइन्द्रस्यनिचिकायकःस्वित् ॥ ९ ॥

कः । छन्दसाम् । योगम् । आ । वेद । धीरः । कः । धिष्ण्याम् ।
प्रति । वाचम् । पपाद । कम् । ऋत्विजाम् । अष्टमम् । शूरम् ।
आहुः । हरी इति । इन्द्रस्य । नि । चिकाय । कः । स्वित् ॥ ९ ॥

धीरोधीमान् कोमानुषः छन्दसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना योगमावेद आजानाति । कोवाधिष्ण्यां धिष्ण्यानि होत्रादीनां सप्तस्थानानि तदर्हांवाचं प्रतिपपाद प्रतिपादयति करोति । किंच ऋत्विजां होत्रादीनां सप्तानां अष्टमं अष्टसंख्यापूरकं शूरं स्वतंत्रं कमाहुः वदन्ति । कः स्वित् कः खलु इन्द्रस्य हरी ऋक्सामरूपौ द्वावश्वौ ऋक्सामेवाइन्द्रस्यहरी इत्याम्नायते । तादृशौ हरी निचिकाय नितरां पूजयति जानाति । वेदिता प्रतिपादयिता अष्टसंख्या परिपूरकस्य देवस्य ज्ञातावा परमात्मनोन्योनास्तीत्यर्थः ॥ ९ ॥

अथ दशमी—

भूम्या अन्तं पर्येके चरन्ति रथस्य धूर्षु युक्तासो अस्थुः ।
श्रमस्य दायं वि भजन्त्येभ्यो यदा यमो भवति हर्म्ये हितः ॥ १० ॥ १७ ॥

भूम्याः । अन्तम् । परि । एके । चरन्ति । रथस्य । धूःऽसु ।
युक्तासः । अस्थुः । श्रमस्य । दायम् । वि । भजन्ति । एभ्यः ।
यदा । यमः । भवति । हर्म्ये । हितः ॥ १० ॥ १७ ॥

एके केचन सप्ताश्वाः भूम्याः पृथिव्याः अनेन द्युलोकोप्युपलक्ष्यते द्युलोकस्य च अन्तं पर्यन्तं परिचरन्ति तदानीं सर्वतःआगच्छन्ति तदा चतेश्वाः रथस्य धूर्षु युगादिभारेषु युक्तासः युक्ताः सन्तः अस्थुः तिष्ठन्ति एभ्योश्वेभ्यः श्रमस्यदायं दोअवखंडने घञ् कर्षात्वतइत्यन्तोदात्तत्वं । श्रमस्यनाशकं घासादिकं विभजन्ति देवाः प्रयच्छन्ति यदा यस्मिन् काले यमोनियन्ता सूर्यः हर्म्ये हर्म्यस्थानीयेरथे हितोनिहितोभवति तदा एतेभजन्तीत्यर्थः ॥ १० ॥

॥ इत्यष्टमस्य षष्ठे सप्तदशोवर्गः ॥ १७ ॥

चित्रइतिनवर्चं तृतीयंसूक्तं आग्नेयं उपस्तुतोनामवृष्टिहव्यपुत्रऋषिः अष्टमीत्रिष्टुप् नवमीशक्करी आदितःसप्तजगत्यः । तथाचानुक्रान्तं—चित्रइन्नव वार्ष्टिहव्यउपस्तुतआग्नेयं जागतं त्रिष्टुप्शक्कर्यन्तमिति । प्रातरनुवाकाश्विनशस्त्रयोः जागतेछन्दसीदंसूक्तं । सूत्रितंच—चित्रइच्छिशोर्वसुंनचित्रमहसमितिजागतमिति ।

तत्र प्रथमा—

चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे ।
अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं१ चरन् ॥ १ ॥

चित्रः । इत् । शिशोः । तरुणस्य । वक्षथः । न । यः । मातरौ ।
अपिऽएति । धातवे । अनूधाः । यदि । जीजनत् । अध । च ।
नु । ववक्ष । सद्यः । महि । दूत्यम् । चरन् ॥ १ ॥

शिशोः शिशुभूतस्य अतएव तरुणस्य नूतनस्याग्नेः वक्षथः वहेरौणादिकोथप्रत्ययः। हविर्वहनं चित्रइदाश्चर्यभूतं एव योजातोग्निः मातरौ सर्वस्यनिर्मात्र्यौ मातापितृभूते द्यावापृथिव्यावरण्यौवा धातवे नाप्येति धेट्पाने तुमर्थे तवेन्प्रत्ययः पानायापिनगच्छति इणूगतौ लटिउपसर्गेणसमासः तिङिचोदात्तवतीति गतेर्निघातः अनूधाःनञ्बहुव्रीहिः समासान्तस्यानङःस्त्रियामिष्टत्वादत्रानङभावः प्रत्येकविवक्षयैकवचनं। ऊधोरहितोयंलोकोसौलोकश्च एनमग्निं यदिजीजनत् अजीजनत् अजनयत् तर्हिस्तनपानाय न गच्छतीतित्युक्तं तथानभवति किंतु द्यावापृथिव्यौ सर्वेषां कामदुघे खलु तथापि नपाति तस्मादस्यहविर्वहनं चित्रं। अधच उत्पत्त्यनन्तरमेव नु अद्यास्मिन्दिने सद्यस्तदानीमेव शीघ्रं महि महत् दूत्यं दूतस्य भागकर्मणीइति कर्मणि यत् प्रत्ययः दूतकर्म चरन् ववक्ष देवान्प्रति हवींषि वहति ॥ १ ॥

अथ द्वितीया—

**अ॒ग्निर्ह॒ नाम॑ धायि॒ दन्न॒पस्त॑मः॒ सं यो वना॑ यु॒वते॒ भस्म॑ना द॒ता।**
**अ॒भि॒प्र॒मु॒रा जु॒ह्वा॑ स्वध्व॒र इ॒नो न प्रोथ॑मानो॒ यव॑से॒ वृषा॑ ॥ २ ॥**

अ॒ग्निः। ह॒। नाम॑। धा॒यि॒। दन्। अ॒पःऽत॑मः। सम्। यः।
वना॑। यु॒वते॑। भस्म॑ना। द॒ता। अ॒भि॒ऽप्र॒मु॒रा॑। जु॒ह्वा॑।
सु॒ऽअ॒ध्व॒रः। इ॒नः। न। प्रोथ॑मानः। यव॑से। वृषा॑ ॥ २ ॥

अपस्तमः अपःशब्दस्यान्तोदात्तत्वेन मत्वर्थोलुप्तइति ज्ञायते। अन्यथा आपःकर्माख्यायामित्यसुनिकृते आद्युदात्तत्वमेवस्यात् अपस्वितमः कर्मवत्तमोग्निर्नाम तृतीयायालुक् नाम्ना नमयितृणा हविषा स्तोत्रेणवा धायि यजमानैः धार्यतेखलु यतः दन् यष्टॄणां धनदाता डुदाञ्दाने हेतौ छन्दस्युभयथेति शतुरार्धधातुकत्वेनाकारलोपः अतएव शपोसंभवः योग्निः भस्मना भासकेन प्रकाशकेन तेजसा दता दंतेनच वना वनानि अरण्यानि संयुवते संयुनक्ति संदहतीतियावत्। युमिश्रणामिश्रणयोः व्यत्ययेनशः आत्मनेपदं दता दन्तशब्दस्य पद्दनित्यादिनादद्भावः ऊडिदमितिविभक्तेराद्युदात्तत्वं। किंच अभिप्रमुरा मूर्छामोहसमुच्छ्राययोः अस्मात् क्विपि राल्लोपइति छकारलोपः। मुरसंवेष्टनेइत्यस्माद्वाक्विप् कृदुत्तरपदप्रकृतिस्वरत्वं। अभितः

समुच्छ्रितेनोद्यतेन यद्वा सर्वतोहविर्भिः संवेष्टितेन जुह्वा एतन्नामकेन पात्रविशेषेण स्वध्वरः शोभनयज्ञोग्निः अदनीये हविषि चरतीतिशेषः। तत्र दृष्टान्तः—इनःन समर्थः प्रोथमानः पर्याप्तः पुष्टांगोवृषायवसेन यथा वृषभो घासादिषु चरति ॥ २ ॥

अथ तृतीया—

तंवोविंनद्रुषदंदेवमन्धसइंदुंप्रोथंन्तंप्रवपंन्तमर्णवम् ।
आसावह्निंनशोचिषाविरप्शिनंमहिंव्रतंनसरजंन्तमध्वंनः ॥ ३ ॥

तम् । वः । विम् । न । द्रुऽसदम् । देवम् । अन्धसः । इन्दुम् ।
प्रोथंन्तम् । प्रऽवपंन्तम् । अर्णवम् । आसा । वह्निम् । न ।
शोचिषा । विऽरप्शिनंम् । महिंऽव्रतम् । न । सरजंन्तम् । अध्वंनः॥३॥

हे स्तोतारः वः यूयं तमग्निं अभिष्टुत कीदृशं विं न पक्षिणमिव द्रुषदं द्रुर्वृक्षः अरणिलक्षणेवृक्षे सीदन्तंदेवं द्योतमानं अन्धसः इन्दुं स्तोतॄणामन्नस्यक्लेदयितारंप्रापयितारं। उन्देरिच्चादेरित्युप्रत्ययःनिदित्यनुवृत्तेराद्युदात्तत्वं। प्रोथन्तं शब्दायमानं प्रवपन्तं अत्यर्थं वनानांदाहकं अर्णवं अर्णसः सलोपश्चेतिमत्वर्थीयोवः अग्नौप्रास्ताहुतिरित्यादिक्रमेण उदकवन्तं आसा आस्यशब्दस्य पद्दन्नित्यादिनाआसन्नादेशः वर्णलोपश्छान्दसः आस्येन वह्निं हविषांवोढारं यद्वा आसा अन्तिकनामैतत् देवानांसमीपे हविषां प्रापकं। वहनेदृष्टान्तः—वह्निंन वह्निर्वा अनड्वानितिश्रवणादनड्वाहमिव वहने समर्थं शोचिषा स्वदीप्त्या विरप्शिनं महन्नामैतत् महान्तं महिव्रतंन महाकर्माणमादित्यमिव अध्वनः सरजन्तं मार्गान् सह युगपदेव रंजयंतं एवंगुणमग्निं अभिष्टुत सरजन्तं रंजरागे रंजेःशतरि रंजेश्चेतिनलोपे सहस्यसभावेचकृतेरूपं यद्वा सरतीतिसरः सरस्योदकस्य जनयितारं जनेस्तप्रत्ययेकृते रूपमितिवा व्युत्पत्त्यनवधारणादनवग्रहः ॥ ३ ॥

अथ चतुर्थी—

वियस्यंतेज्रयसानस्यांजरधक्षोर्नवाताःपरिसन्त्यच्युंताः ।
आरण्वासोयुयुंधयोनसंत्वनंत्रितंनंशन्तप्रशिषन्तंइष्टये ॥ ४ ॥

वि । यस्यं । ते । ज्रयसानस्यं । अजर । धक्षोः । न । वाताः ।
परि । सन्ति । अच्युताः । आ । रण्वासः । युयुधयः । न ।
सत्वनम् । त्रितम् । नशन्त । प्र । शिषन्तः । इष्टये ॥ ४ ॥

हे अजर जरारहिताग्ने ज्रयसानस्य ज्रयतिर्गत्यर्थः बाहुलकादस्मादप्यसानचूप्रत्ययः गमनशीलस्य धक्षोः दहेः सन् द्विवचनप्रकरणे छन्दसिवेति वक्तव्यमिति द्विर्वचनाभावः तदन्तादुप्रत्ययः । अरण्यदहनेच्छोः यस्यते तव स्वभूताः अच्युताः शत्रुभिरच्यवनीयाः प्रभावाः वातान वायवइव विपरिसन्ति सर्वतोविशेषेण वर्तन्ते। सन्ति अस्तेर्लट् यद्योगादनिघातः युयुधयोन युधेः किन्प्रत्ययः योद्धार इव रण्वासः शीघ्रंगन्तारः शब्दायमानाऋत्विजः इष्टये यागाय प्रशिषन्तप्रकर्षेण शिषन्तः शिषासन्तः संभक्तुमिच्छन्तः । सत्वनं बलवन्तं त्रितं त्रिष्वाहवनीयादिस्थानेषु ततं विस्तृतं त्वां आनशंत स्तुतिभिर्हविर्भिश्च व्याप्नुवन्ति । आङ्पूर्वोनशिर्व्याप्तिकर्मा आक्षाणः आनडिति व्याप्तिकर्मसु पाठात् ॥ ४ ॥

अथ पंचमी—

सइदग्निःकण्वंतमःकण्वंसखार्यःपरस्यान्तरस्यतरुषः ।
अग्निःपातुगृणतोअग्निःसूरीनग्निर्ददातुतेषामवोनः ॥ ५ ॥ १८ ॥

सः । इत् । अग्निः । कण्वंऽतमः । कण्वंऽसखा । अर्यः । परंस्य ।
अन्तरस्य । तरुषः । अग्निः । पातु । गृणतः । अग्निः । सूरीन् ।
अग्निः । ददातु । तेषाम् । अवः । नः ॥ ५ ॥ १८ ॥

कण्वतमः कणतेः शब्दार्थादशूप्रुषीत्यादिना वन्प्रत्ययः अतिशयेन स्तोता अतएव कण्वसखा बहुव्रीहित्वात्समासान्तोदात्ताभावः कण्वाः स्तोतारः सखायोयस्य सतादृशः अर्यः स्वामिन्यन्तोदात्तत्वंवक्तव्यमित्यन्तोदात्तत्वं स्वामी सर्वस्येश्वरः सइत् सएवाग्निः परस्य विप्रकृष्टस्य बाह्यस्य अन्तरस्य अव्यवहितस्य समीपेवर्तमानस्य च शत्रोः तरुषः तारयिता विनाशयिता भवति सोग्निः गृणानः स्तोतॄन् अस्मान् पातु रक्षतु गृशब्देक्र्यादिकः शतुरनुमोनद्य-

जादीइति विभक्तेरुदात्तत्वं । तथा सूरीन् षूप्रेरणे हविषां प्रेरयितॄनस्मान् रक्षतु । किंच तेषामेषां नोस्माकं अवोरक्षणमन्नंवा अग्निर्ददातु प्रयच्छतु ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठेष्टादशोवर्गः ॥ १८ ॥

अथ षष्ठी—

वाजिन्तमायसह्यसेसुपित्र्यतृषुच्यवानोअनुजातवेदसे ।
अनुद्रेचिद्योधृषतावरंसतेमहिन्तमायधन्वनेदविष्यते ॥ ६ ॥

वाजिन्ऽतमाय । सह्यसे । सुऽपित्र्य । तृषु । च्यवानः । अनु । जातऽवेदसे । अनुद्रे । चित् । यः । धृषता । वरम् । सते । महिन्ऽतमाय । धन्वना । इत् । अविष्यते ॥ ६ ॥

हे सुपित्र्य पितुरागतः पित्र्यः पितुर्यच्चेतियत्प्रत्ययः शोभनपित्र्य हे अग्ने वाजिन्तमाय अतिशयेनान्नवते अत्यन्तंबलवतेवा नाद्धस्येतिनुडागमः सह्यसे सहीयसे शत्रूणामतिशयेनाभिभवित्रे जातवेदसे जातप्रज्ञाय तुभ्यं त्वां स्तोतुं तृषु क्षिप्रं अनुच्यवानः स्तुतिभिरनुगतः उद्युक्तोस्मि । क्रियार्थोपपदस्यच कर्मणीति जातवेदःशब्दस्य चतुर्थी । सह्यसे सहस्विन् शब्दादीयसुनि विन्मतोर्लुगिति ईयसुनईकारलोपश्छान्दसः अनुद्रेचित् उदकवर्जितेस्थाने आपदीत्यर्थः शत्रुभिः संजातायामापदि धृषता शत्रुधर्षणसमर्थेन धन्वनेत् आत्मीयेन धनुषैव अविष्यते पालकाय सते भूष्णवे शतुरनुमइतिविभक्तेरुदात्तत्वं महिन्तमाय पूज्यतमाय दातृतमायवा ईदृशायाग्नये योहं वरं वरणीयं हविः प्रयच्छामि सोहं स्तुतिमपि तस्मै करोमीत्यर्थः ॥ ६ ॥

अथ सप्तमी—

एवाग्निर्मर्तैःसहसूरिभिर्वसुःष्टवेसहसःसूनरोनृभिः ।
मित्रासोनयेसुधिताऋतायवोद्यावोनद्युम्नैरभिसन्तिमानुषान् ॥७॥

एव । अग्निः । मर्तैः । सह । सूरिऽभिः । वसुः । स्तवे । सहसः । सूनरः । नृऽभिः । मित्रासः । न । ये । सुऽधिताः । ऋतऽयवः । द्यावः । न । द्युम्नैः । अभि । सन्ति । मानुषान् ॥ ७ ॥

सहसोबलस्यसूनरः सुष्ठुप्रेरकः यद्वा सूनुरित्यस्य वर्णव्यत्ययः सूनरः सूनुः बलेनमथ्य-मानत्वात्तस्यपुत्रोग्निः नृभिः कर्मनेतृभिः मर्तैः मनुष्यैः सह सूरिभिः विद्वद्भिः अस्माभिः वसुध-नमभिलक्ष्य एव एवं स्तवे स्तूयते वसुष्टवइत्यत्र संहितायांपूर्वपदादितिषत्वं मित्रासोन सु-हृदइव सुधिताः सुहिताः तृप्ताः दधातेर्निष्ठायां सुधितवसुधितेतिनिपातितः सुधितार्थास्तृप्त्यर्था इति काशिकायामुक्तं । ऋतयवः यज्ञंकामयमानाः नच्छन्दस्यपुत्रस्येति दीर्घेत्वयोः प्रतिषेधः ईदशाये सूरयः द्यावोन द्योतमानाइव द्युम्नैः द्युम्नंद्योततेर्यशोवान्नंवेतियास्कः । अग्निप्रदत्तैर्बलै-रात्मीयैर्यशोभिर्वा मानुषान् शात्रवान् जनानभिसन्ति अभिभवन्ति यद्वृत्तयोगादनिघातः ॥ ७ ॥

अथाष्टमी—

ऊर्जोनपात्सहसावन्नितित्वोपस्तुतस्यवन्दतेवृषावाक् ।
त्वांस्तोषामत्वयासुवीराद्राघीयआयुःप्रतरंदधानाः ॥ ८ ॥

ऊर्जः । नपात् । सहसाऽवन् । इति । त्वा । उपऽस्तुतस्य ।
वन्दते । वृषा । वाक् । त्वाम् । स्तोषाम । त्वया । सुऽवीराः ।
द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥ ८ ॥

ऊर्जोनपात् नपादित्यपत्यनाम अन्नस्यपुत्र अन्नंवाआज्यमितिश्रवणात् तेन प्रवृध्य-मानत्वात् बलस्यवापुत्र सुबामंत्रितेपरांगवत्स्वरइत्यूर्जइत्यस्य परांगवद्भावेनामंत्रितत्वे आमं-त्रितस्यचेति षाष्ठिकमाद्युदात्तत्वं । हे सहसावन् सहस्विन्नग्ने त्वा त्वां इत्येवं उप-स्तुतस्य एतन्नामकस्य ऋषेर्मम वृषा हविषांवर्षयित्री तैः सहितावा स्तुतिर्वन्दते स्तौति । वृषा इगुपधज्ञेतिकः अजाद्यतष्टाप् । किंच वयं त्वां स्तोषाम स्तवाम स्तौतेर्लेट्यडागमः ततः त्वया सुवीराः शोभनपुत्राः स्याम द्राघीयः दीर्घतमं आयुर्जीवनं प्रतरं अत्यर्थंदधानाः धारयन्तो-भवेम ॥ ८ ॥

अथ नवमी—

इतित्वाग्नेवृष्टिहव्यस्यपुत्राउपस्तुतासऋषयोवोचन् ।
तांश्चपाहिगृणतश्चसूरीन्वषड्वषळित्यूर्ध्वासोअनक्ष
न्नमोनमइत्यूर्ध्वासोअनक्षन् ॥ ९ ॥ १९ ॥

इति । त्वा । अग्ने । वृष्टिऽहव्यस्य । पुत्राः । उपऽस्तुतासः ।
ऋषयः । अवोचन् । तान् । च । पाहि । गृणतः । च । सूरीन् ।
वषट् । वषट् । इति । ऊर्ध्वासः । अनक्षन् । नमः । नमः । इति ।
ऊर्ध्वासः । अनक्षन् ॥ ९ ॥ १९ ॥

हे अग्ने त्वा त्वां इत्येवमुक्तप्रकारेण वृष्टिहव्यस्य एतन्नामकस्य ऋषेःपुत्राउपस्तुतास उपस्तुता एतदभिधानाऋषयः सूक्तद्रष्टारोवोचन् अभ्यष्टुवन् तानृषींश्च त्वं पाहि रक्ष चवायोगे प्रथमेति ननिघातः । तथा गृणतः स्तोतॄन् सूरीन् विदुषश्च पाहि वषड्वषळितिमंत्रेण ऊर्ध्वासः हविःप्रदानार्थं ऊर्ध्वमुखहस्ताः सन्तः अनक्षन् व्याप्नुवन् नक्षतिर्व्याप्तिकर्मा नमोनमइत्येवं ऊर्ध्वासः स्तोतुमुद्युक्ताः अनक्षन् ये उक्तगुणाः तानुभयविधान् यष्टॄन् स्तोतॄन् पाळय ॥ ९ ॥

॥ इत्यष्टमस्य षष्ठे एकोनविंशोवर्गः ॥ १९ ॥

पिबेतिनवर्चं चतुर्थंसूक्तं त्रैष्टुभमैन्द्रं स्थूलनाम्नःपुत्रः अग्नियुताख्यऋषिः अग्नियूपाख्योवा । तथाचानुक्रम्यते—पिबस्थौलोग्नियुतोग्नियूपोवेति गतोविनियोगः ।

तत्र प्रथमा—

**पिबासोमंमहतइन्द्रियायपिबावृत्रायहन्तवेशविष्ठ ।**
**पिबरायेशवसेहूयमानःपिबमध्वस्तृपदिन्द्रावृषस्व ॥ १ ॥**

पिब । सोमम् । महते । इन्द्रियाय । पिब । वृत्राय ।
हन्तवे । शविष्ठ । पिब । राये । शवसे । हूयमानः ।
पिब । मध्वः । तृपत् । इन्द्र । आ । वृषस्व ॥ १ ॥

हे इन्द्र त्वं महते प्रभूताय इन्द्रियाय इन्द्रस्यात्मनोजुष्टाय वीर्याय सोमं अस्माभिः दीयमानं पिब इन्द्रियमिन्द्रलिङ्गेत्यादिनेन्द्रियशब्दोयजन्तत्वेन निपातितः । हे शविष्ठ अतिशयेनप्रवृद्ध वृत्राय हन्तवे वृत्रंहन्तुं सोमं पिब क्रियाग्रहणंकर्तव्यमिति वृत्रस्यसंप्रदानत्वं तथाहूयमानोस्माभिराहूयमानस्त्वं राये धनाय ऊडिदमित्यादिना विभक्तेरुदात्तत्वं शवसेन्नाय धनान्नयोः प्रदानाय सोमं पिब । मध्वः मदकरान् सर्वान् सोमान् पिब वाछन्दसीति पूर्वसवर्णदीर्घा-

भावः । अनन्तरं हे इन्द्र तृपत्तृप्तोभवन् आवृषस्व अस्मदभिलषितान्यासिंच ददस्व । तृपव् तृं-पतृप्तौतौदादिकः अनित्यमागमशासनमिति नुमभावः ॥ १ ॥

अथ द्वितीया—

अस्यपिबक्षुमतःप्रस्थितस्येन्द्रसोमस्यवरमासुतस्य ।
स्वस्तिदामनसामादयस्वार्वाचीनोरेवतेसौभगाय ॥ २ ॥

अस्य । पिब । क्षुऽमतः । प्रऽस्थितस्य । इन्द्र । सोमस्य ।
वरम् । आ । सुतस्य । स्वस्तिऽदाः । मनसा । मादयस्व ।
अर्वाचीनः । रेवते । सौभगाय ॥ २ ॥

हे इन्द्र क्षुमतः स्तुतियुक्तस्य यद्वा हवीरूपान्नवतः प्रस्थितस्य हविर्धानादुत्तरवेदिंप्रति प्रस्थापितस्य सुतस्याभिषुतस्यास्य सोमस्य वरं वरणीयं त्वदीयं भागं आभिमुख्येन पिब प्र-स्थितस्य तिष्ठतेःकर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं ततः स्वस्तिदाः कल्याणस्यदा-ता त्वं मनसा अन्तःकरणेन मादयस्व हृष्टोभव यद्वा अस्मानपि हृष्टान् कुरु तदेवोच्यते रेवते धनवते सौभगाय सौभाग्याय तदस्मभ्यं दातुं अर्वाचीनः अभिमुखांचनोभव विभाषांचेरदिक्-स्त्रियामितिखः रयिशब्दान्मतुपः छन्दसीरइतिवत्वं रयेर्मतौबहुलमितिसंप्रसारणं पूर्वरूपत्वेगुणः। सौभगाय उद्गात्रादिषु सुभगान्मंत्रइतिपठ्यते तस्योत्तरपदस्य हृद्भगेतिवृद्धिर्नेष्यते सर्वविधी-नांछन्दसिविकल्पितत्वात् ञित्स्वरेणाद्युदात्तत्वं ॥ २ ॥

अथ तृतीया—

ममत्तुत्वादिव्यःसोमइन्द्रममत्तुयःसूयतेपार्थिवेषु ।
ममत्तुयेनवरिवश्चकर्थममत्तुयेननिरिणासिशत्रून् ॥ ३ ॥

ममत्तु । त्वा । दिव्यः । सोमः । इन्द्र । ममत्तु । यः ।
सूयते । पार्थिवेषु । ममत्तु । येन । वरिवः । चकर्थ ।
ममत्तु । येन । निऽरिणासि । शत्रून् ॥ ३ ॥

हे इन्द्र त्वा त्वां दिव्यः दिविभवः सोमः ममत्तु आत्मीयकलाप्रदानेन मादयतु देवाहि अपरपक्षे सोमस्यकलांपिबन्ति मदेर्लोटि व्यत्ययेनश्लुः भीह्रीत्यादिनापितः पूर्वस्योदात्तत्वं। तथा पार्थिवेषु पृथिव्यांभवेषु देवयजनेषु यः सोमोस्माभिः सूयते अभिषूयते सोपि अस्माभिर्दत्तो-ममत्तु त्वांहर्षयतु येनसोमेन वरिवः वरणीयं धनं चकर्थ कृतवानसि सचममत्तु करोतेर्लिट् य-द्योगादनिघातेल्तित्स्वरः। किंच येन शत्रून् निरिणासि निर्गमयसि सोपि ममत्तु त्वां मादयतु रिणासि रीगतिरेषणयोः क्र्यादिः प्वादीनांह्रस्वत्वम् ॥ ३ ॥

अथ चतुर्थी—

आद्विबर्हाअमिनोयात्विन्द्रोवृषाहरिभ्यांपरिषिक्तमन्धः।
गव्यासुतस्यप्रभृतस्यमध्वःसत्राखेदामरुशहावृषस्व ॥ ४ ॥

आ। द्विऽबर्हाः। अमिनः। यातु। इन्द्रः। वृषा। हरिऽभ्याम्।
परिऽसिक्तम्। अन्धः। गवि। आ। सुतस्य। प्रऽभृतस्य।
मध्वः। सत्रा। खेदाम्। अरुशऽहा। आ। वृषस्व ॥ ४ ॥

द्विबर्हाः द्वयोर्लोकयोः परिवृढः यद्वा द्वाभ्यां स्तुतशस्त्राभ्यां वर्धनीयः बृहेर्वर्धनार्थस्य कर्तरिकर्मणिवा असुन् अमिनः अमतेर्गत्यर्थादौणादिकइनच् सर्वत्रगन्ता यद्वा कान्त्यर्थात् सर्वैः काम्यमानः अतएव वृषा अभिलषितानां वर्षकइन्द्रः परिषिक्तं वसतीवरीभिः परितः सि-क्तं अन्धः अस्मदीयं सोमलक्षणमन्नं प्रति हरिभ्यां एतन्नामकाभ्यामश्वाभ्यां सहायातु आ-गच्छतु। अथ प्रत्यक्षः। हे इन्द्र अरुशहा अरुशाः शत्रवः तेषांहन्ता अर्तेरौणादिकउशन् बहु-लंछन्दसीतिहन्तेःक्विप् सत्रा सप्तम्याडादेशः अस्मदीयसत्रे यज्ञे गवि आनडुहेचर्मणि सुतस्या-भिषुतस्य प्रभृतस्य पात्रेषुप्रहृतस्य हृग्रहोर्भः ईदृशस्य मध्वः मदकरस्य सोमस्य पानेन हृष्टः सन् खेदां खिद्यमानानां शत्रूणां उत्खित्तये आभिमुख्येन वृषस्व वृषइवाचर वृषशब्दादाचारा-र्थेक्विप् व्यत्ययेनात्मनेपदं खेदां खिददैन्ये कर्मणिघञंतस्यामिनुडभावश्छान्दसः ॥ ४ ॥

अथ पंचमी—

नितिग्मानिभ्राशयन्भ्राश्यान्यवस्थिरातनुहियातुजूनाम्।
उग्रायतेसहोबलंददामिप्रतीत्याशत्रून्विगदेषुवृश्च ॥ ५ ॥ २० ॥

नि । तिग्मानि । आशयन् । आश्यानि । अव । स्थिरा ।
तनुहि । यातुऽजूनाम् । उग्राय । ते । सहः । बलम् ।
ददामि । प्रतिऽइत्य । शत्रून् । विऽगदेषु । वृश्च ॥ ५ ॥ २० ॥

हे इन्द्र आश्यानि प्रकाश्यानि तिग्मानि तीक्ष्णान्यायुधानि नितरां आशयन् प्रकाशयन् आशृदीप्तौ सत्वं यातुजूनां जुइतिसौत्रोधातुः आजभासेत्यत्र जवतेर्दीर्घः क्विप्चेतिक्विप् दीर्घस्य आमिनुडागमश्छान्दसः यातुधानानां स्थिरा स्थिराणि दृढान्यपि शरीराणि अवतनुहि अवस्तात्तनुभूतान् पातय उग्राय उद्गूर्णबलाय ते तुभ्यं सहः शत्रुसहनसमर्थं बलं बलहेतुकं हविः ददामि अहं प्रयच्छामि । ततः विगदेषु विविधं गदन्ति शब्दायन्ते गदेर्घञर्थेकविधानमित्यधिकरणेकः शत्रून् प्रतीत्य प्रतिगम्य प्रतिकूलंगत्वा वृश्च तान् छिन्धि ओव्रश्चूछेदने तौदादिकोलोट् ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे विंशोवर्गः ॥ २० ॥

अथ षष्ठी—

**व्य१र्यइन्द्रतनुहिश्रवांस्योजःस्थिरेवधन्वनोभिमातीः ।**
**अस्मद्र्यग्वावृधानःसहोभिरनिभृष्टस्तन्वंवावृधस्व ॥ ६ ॥**

वि । अर्यः । इन्द्र । तनुहि । श्रवांसि । ओजः । स्थिराऽइव ।
धन्वनः । अभिऽमातीः । अस्मद्र्यक् । ववृधानः ।
सहःऽभिः । अनिऽभृष्टः । तन्वम् । ववृधस्व ॥ ६ ॥

हेइन्द्र अर्यः स्वामी त्वं श्रवांसि अन्नानि श्रवइत्यन्ननाम अस्मभ्यं वितनुहि विस्तारय प्रयच्छ तनोतेर्लोटि उतश्चप्रत्ययाच्छन्दसि वावचनमिति हेर्लुगभावः । तथा अभिमातीः अभितोमातीः मानं येषांते अभिमातयः शत्रवः तान् प्रति ओजआत्मीयं वीर्यं स्थिरेव स्थिराण्येव धन्वनः धनूंषिच विस्तारय तैः शत्रून् जहीत्यर्थः । अपिच अस्मद्र्यक् अस्मदभिमुखांचनः विष्वग्देवयोश्चटेरद्र्यंचतावित्यद्र्यादेशः अद्रिसध्र्योरन्तोदात्तत्वेन निपातनाव् उदात्तस्वरितयोर्यणइति धातोरकारस्यानुदात्तस्य स्वरितत्वं सहोभिरात्मीयैर्बलैर्वावृधानः प्रवृद्धः अतएव अनिभृष्टः शत्रुभिरपरिभवनीयः त्वं तन्वं आत्मीयं शरीरं वावृधस्व वर्धय यद्वा तन्वं तन्यतइति तनूर्यज्ञः तं वर्धय त्वदागमनेनहि यज्ञोवर्धते ॥ ६ ॥

अथ सप्तमी—

इदंहविर्मघवन्तुभ्यंरातंप्रतिसम्राळहृणानोगृभाय ।
तुभ्यंसुतोमघवन्तुभ्यंपक्वो३द्धीन्द्रपिबचप्रस्थितस्य ॥ ७ ॥

इदम् । हविः । मघऽवन् । तुभ्यम् । रातम् । प्रति । सम्ऽराट् ।
अहृणानः । गृभाय । तुभ्यम् । सुतः । मघऽवन् । तुभ्यम् ।
पक्वः । अद्धि । इन्द्र । पिब । च । प्रऽस्थितस्य ॥ ७ ॥

हे मघवन् धनवन् सम्राट् सम्यक् राजमान सर्वेषामीश्वरेतिवा इदं सोमादिलक्षणं रातं अस्माभिर्दत्तं हविः हेइन्द्र तुभ्यं अहृणानः अक्रुध्यन् प्रतिगृभाय प्रतिगृहाण ग्रहेर्लोटि श्नाप्रत्ययस्य छन्दसि शायजपीतिशायजादेशः हृग्रहोर्भ इतिभः संनिपातपरिभाषायाअनित्यत्वाद्धेर्लुक् हेमघवन् तुभ्यमेवायं सोमः सुतः ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं तुभ्यमेवायं पुरोडाशादिपक्वः हेइन्द्र तं पुरोडाशमद्धि भक्षय । किंच प्रस्थितस्य हविर्धानादुत्तरवेदिं प्रस्थापितं सोमं पिब । वाक्यभेदादनिघातः यद्वा आमंत्रितस्याविद्यमानत्वेनतिङउत्तरत्वादनिघातः ॥ ७ ॥

अथाष्टमी—

अद्धीदिन्द्रप्रस्थितेमाहवींषिचनोदधिष्वपचतोतसोमम् ।
प्रयस्वन्तःप्रतिहर्यामसित्वासत्याःसन्तुयजमानस्यकामाः ॥ ८ ॥

अद्धि । इत् । इन्द्र । प्रऽस्थिता । इमा । हवींषि । चनः ।
दधिष्व । पचता । उत । सोमम् । प्रयस्वन्तः । प्रति ।
हर्यामसि । त्वा । सत्याः । सन्तु । यजमानस्य । कामाः ॥ ८ ॥

हेइन्द्र प्रस्थिता प्रस्थितानि उत्तरवेदिं प्रति इमा इमानि उभयत्रडादेशः हवींषि अद्धीत् इदवधारणे भक्षयैव चनः चनइत्यन्ननाम तद्दधिष्व धारय उदरे प्रक्षिप दधातेर्लोटि छन्दस्युभयथेति थासआर्धधातुकत्वात् इडागमः पचता पचतानि सवनीयपुरोडाशादीनि चधारय पचेर्भृमृदृशीत्यादिना कर्मणि अतच् प्रत्ययः उतापिच सोमं पिब ततः प्रयस्वन्तः प्रीणयती-

ति प्रयोक्तं तेन तद्वन्तः सन्तः त्वा त्वां प्रति हर्यामसि हर्यामः कामयामहे धनादीनि । हर्यतिः प्रेप्साकर्मा इदंतोमसिः तस्मात् यजमानस्य यागं कुर्वाणस्य कामाः धनादिविषयाअभिलाषाः सत्याः यथार्थाः सन्तु पूङ्यजोःशानन्निति यजेः शानन् प्रत्ययः नित्वादाद्युदात्तः ॥ ८ ॥

अथ नवमी—

प्रेन्द्राग्निभ्यांसुवचस्यामियर्मिसिन्धाविवप्रेरयन्नावमर्कैः ।
अयाइवपरिचरन्तिदेवायेअस्मभ्यंधनदाउद्भिदश्च ॥ ९ ॥ २१ ॥

प्र । इन्द्राग्निऽभ्याम् । सुऽवचस्याम् । इयर्मि । सिन्धौऽइव ।
प्र । ईरयम् । नावम् । अर्कैः । अयाःऽइव । परि । चरन्ति ।
देवाः । ये । अस्मभ्यम् । धनऽदाः । उत्ऽभिदः । च ॥ ९ ॥ २१ ॥

इन्द्राग्निभ्यां देवाभ्यां सुवचस्यां छन्दसि चेति यत्प्रत्ययः सुवचनार्हां स्तुतिमहं प्रेयर्मि प्रेरयामि । ऋगतौ जौहोत्यादिकः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं देवताद्वन्द्वे चेति इन्द्राग्न्यो-रुभयपदप्रकृतिस्वरत्वे प्राप्ते नोत्तरपदेनुदात्तादाविति प्रतिषेधः सिंधाविव सिन्धौ नद्यां यथा नावं प्रेरयति तद्वत् अर्कैरर्चनीयैर्मंत्रैः सहितां स्तुतिं प्रेरयं प्रावादिषं ईरगतौ ण्यन्तस्य लङ्यु-त्तमस्यामादेशः स्तुतास्ते देवाः अयाइव अयन्ति कर्मकरणार्थं गच्छन्तीत्यया ऋत्विजः कर्म-करावा तद्वत् परिचरन्ति अस्मान् धनादिदानेन पूजयन्ति येदेवाः अस्मभ्यं धनदाः धनस्य दातारः उद्भिदः अस्मच्छत्रूणामुद्भेत्तारश्च येसन्ति ॥ ९ ॥

॥ इत्यष्टमस्य षष्ठे एकविंशोवर्गः ॥ २१ ॥

नवाइति नवर्चं पंचमं सूक्तं भिक्षुर्नामआंगिरसऋषिः प्रथमाद्वितीये जगत्यौ शिष्टाः स-प्तत्रिष्टुभः अत्र धनस्यान्नस्यच दानं स्तूयते अतस्तद्देवत्यमिदं । तथाचानुक्रान्तं—नवाउभिक्षु-र्धनान्नदानप्रशंसाद्येजगत्याविति । गतोविनियोगः ।

तत्र प्रथमा—

नवाउदेवाःक्षुधमिद्वधंददुरुताशितमुपगच्छन्तिमृत्यवः ।
उतोरयिःपृणतोनोपदस्यत्युतापृणन्मर्डितारंनविन्दते ॥ १ ॥

न । वै । ऊँ इति॑ । दे॒वाः । क्षुध॑म् । इत् । व॒धम् । द॒दुः । उ॒त ।
आशि॑तम् । उप॑ । ग॒च्छ॒न्ति॒ । मृ॒त्यव॑ः । उ॒तो इति॑ । र॒यिः । पृ॒ण॒तः ।
न । उप॑ । द॒स्य॒ति॒ । उ॒त । अपृ॑णन् । म॒र्डि॒तार॑म् । न । वि॒न्द॒ते॒ ॥ १ ॥

भिक्षुः प्रथमं व्यतिरेकमुखेनान्नदानं प्रशंसति देवावै देवाःखलु सर्वेषां क्षुधं नददुः नप्रायच्छन् किंतु वधमित् वधमेव दत्तवन्तः एतादृशीं वधरूपां क्षुधं अन्नदानेन यः शमयति सदाता खलु उइति पूरणः यः अदत्वा भुंक्ते तं आशितं भुंजानं पुरुषं अपि मृत्यवः मरणान्युपगच्छन्ति समीपे यान्ति आशितः कर्तेत्याद्युदात्तत्वं । क्षुधार्तानां भोक्तृणांच मरणं समानं किं दानेन धननाशरूपेण अतआह उतो उतशब्दस्त्वप्यर्थे पृणतः प्रयच्छतः पुरुषस्य रयिः धनं नोपदस्यति नउपक्षीयते दसुउपक्षये दैवादिकः पृणदाने तौदादिकः तस्य शत्रन्तस्य शतुरनुमोनद्यजादीइति विभक्तेराद्युदात्तत्वं दानप्रसंगेनादातारं दूषयति अपृणन् अप्रयच्छन् पुरुषस्तु मर्डितारं आत्मनः सुखयितारं नविन्दते न कुत्रापि लभते इह बन्धवः अदानेन नसुखयन्ति देवाअपि हविःप्रदानाभावात् ॥ १ ॥

अथ द्वितीया—

**यआ॒ध्राय॑चकमा॒नाय॑पि॒त्वोन्न॑वा॒न्त्सन्र॑फि॒ताया॑पज॒ग्मुषे॑ ।**
**स्थि॒रंम॑नः॑कृणु॒तेसेव॑तेपु॒रोतो॑चि॒त्सम॑र्डि॒तार॒ंनविं॑दते ॥ २ ॥**

यः । आ॒ध्राय॑ । च॒क॒मा॒नाय॑ । पि॒त्वः । अन्न॑ऽवान् । सन् ।
र॒फि॒ताय॑ । उ॒प॒ऽज॒ग्मुषे॑ । स्थि॒रम् । मन॑ः । कृ॒णु॒ते । सेव॑ते ।
पु॒रा । उ॒तो इति॑ । चि॒त् । सः । म॒र्डि॒तार॑म् । न । वि॒न्द॒ते॒ ॥ २ ॥

यः पुरुषः स्वयमन्नवानपि आध्राय आध्रीयतेसावित्याध्रोदुर्बलः तस्मै पित्वः पितूनन्नानि चकमानाय चकमानः कान्तिकर्मा रफिताय रफतिर्हिंसार्थः दारिद्र्येण हिंसिताय उपजग्मुषे गृहं प्रत्यागताय अतिशयेन मनआत्मीयं अन्तःकरणं अदाने स्थिरं कृणुते कुरुते मनःस्थैर्यकरणेन तं क्लेशयतीत्यर्थः । कृणुते कृविहिंसाकरणयोः धिन्विकृण्व्योरचेति उप्रत्ययः करो-

तेषां व्यत्ययेन श्लुः विकरणस्वरः सतिशिष्टोपि लसार्वधातुकस्वरं नबाधते इति लसार्वधातुकस्वरः । नकेवलं क्लेशकरणं अपितु पुरा तस्य पुरस्तादेव सेवते भोगान् सोपि मर्डितारं आत्मनः सुखयितारं नविन्दते नकुत्रापि लभते ॥ २ ॥

अथ तृतीया—

सइद्भोजोयोगृहवेददात्यन्नंकामायचरतेकृशाय ।
अरमस्मैभवतियामहूताउतापरीषुकृणुतेसखायम् ॥ ३ ॥

सः । इत् । भोजः । यः । गृहवे । ददाति । अन्नऽकामाय ।
चरते । कृशाय । अरम् । अस्मै । भवति । यामऽहूतौ ।
उत । अपरीषु । कृणुते । सखायम् ॥ ३ ॥

अन्वयमुखेन प्रशंसति सइत् सएव भोजः दाताखलु यः गृहवे गृहेर्मृगय्वादित्वात्कुप्रत्ययः प्रतिग्रहीत्रे अन्नकामाय अन्नं याचमानाय चरते गृहमागतवते कृशाय दारिद्र्येण एतादृशायातिथये अन्नं ददाति प्रयच्छति अभ्यस्तानामादिरित्याद्युदात्तत्वं यामहूतौ यामागन्तारो देवाः अत्रयातेः अर्तिस्तुसुहुसृइत्यादिना मन् प्रत्ययः ते आहूयन्तेत्रेति यामहूतिः यज्ञः तस्मिन् तस्मै दात्रे फलं अरमलं पर्याप्तं भवति कामप्रदानं भवतीत्यर्थः । उतापिच अपरीषु केवलमामकेति ङीप् अन्यासु शात्रवीषु सेनासु सखायं कृणुते तद्वदाचरतीत्यर्थः तस्य सर्वे सखायएव नशत्रवइत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

नससखायोनददातिसख्येसचाभुवेसचमानायपित्वः ।
अपास्मात्प्रेयान्नतदोकोअस्तिपृणन्तमन्यमरणंचिदिच्छेत् ॥ ४ ॥

न । सः । सखा । यः । न । ददाति । सख्ये । सचाऽभुवे ।
सचमानाय । पित्वः । अप । अस्मात् । प्र । इयात् । न । तत् ।
ओकः । अस्ति । पृणन्तम् । अन्यम् । अरणम् । चित् । इच्छेत् ॥ ४ ॥

व्यतिरेकेणनिन्दामाह सपुरुषः सखा नभवति यः पुरुषः सचाभुवे सर्वदा सहभवनशीलाय सचमानाय सेवमानाय उपसर्जनीभूताय सख्ये सखिजनाय पित्वः पितूनन्नानि नददाति नप्रयच्छति ससुहृन्नभवतीत्यर्थः अस्माददातुः सख्युः सः अपप्रेयात् अपगच्छेत् यद्येनं परित्यज्य गच्छेत् इणूगतौ लिङि यासुट् तर्हि तदोकः निवासः नास्ति नभवति सदनंहि बन्धुभिः परिगतं । सगतः पुरुषः पृणन्तमन्नादिकं प्रयच्छन्तं अन्यमरणं चित् अर्यं स्वामिनमेव इच्छेत् कामयेत ॥ ४ ॥

अथ पञ्चमी–

पृणीयादिन्नाधमानायतव्यान्द्राघीयांसमनुपश्येतपन्थाम् ।
ओहिवर्तन्तेरथ्येवचक्रान्यमन्यमुपतिष्ठन्तरायः ॥ ५ ॥ २२ ॥

पृणीयात् । इत् । नाधमानाय । तव्यान् । द्राघीयांसम् । अनु ।
पश्येत । पन्थाम् । ओ इति । हि । वर्तन्ते । रथ्याऽइव ।
चक्रा । अन्यम्ऽअन्यम् । उप । तिष्ठन्त । रायः ॥ ५ ॥ २२ ॥

धनवन्तं पुरुषं दाने प्रेरयति तव्यान् तवीयान् धनैरतिशयेन प्रवृद्धः पुरुषः नाधमानाय याचमानायातिथये पृणीयादित् धनानि दद्यादेव पॄपालनपूरणयोः क्र्यादिः प्वादीनां ह्रस्वः यदि दद्यात् द्राघीयांसं दीर्घशब्दादीयसुनि प्रियस्थिरेत्यादिना द्राघि इत्यादेशः दीर्घतमं पथां पंथानं सुकृतमार्गमनुपश्येत अनुपश्येत व्यत्ययेनात्मनेपदं । तत्र कारणमाह रायो-धनानि ओहि आउ आवर्तन्ते खलु एकत्र नतिष्ठन्तीत्यर्थः । तत्र दृष्टान्तः–रथ्येव यथा रथ्यानि रथाद्यदिति तस्येदमित्यर्थे यत् रथसंबन्धीनि चक्राणि उपर्यधोभावेनावर्तन्ते तद्वत् आवृत्तिमेव दर्शयति अन्यमन्यं पुरुषं धनान्युपतिष्ठन्ते समवेतानि भवन्ति । उपाद्देवपूजासंगतिकरणइत्यात्मनेपदं तस्माद्धनानि देयानीतिभावः ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे द्वाविंशोवर्गः ॥ २२ ॥

अथ षष्ठी—

मोघमन्नंविन्दतेअप्रचेताःसत्यंब्रवीमिवधइत्सतस्य ।
नार्यमणंपुष्यतिनोसखायंकेवलाघोभवतिकेवलादी ॥ ६ ॥

मोघम् । अन्नम् । विन्दते । अप्रऽचेताः । सत्यम् । ब्रवीमि ।
वधः । इत् । सः । तस्य । न । अर्यमणम् । पुष्यति । नो इति ।
सखायम् । केवलऽअघः । भवति । केवलऽआदी ॥ ६ ॥

अदातारं दूषयति अप्रचेताः अप्रकृष्टज्ञानः दानेचेतोमनोयस्य नभवति समोघं व्यर्थमेवान्नं विन्दते लभते । विद्लृलाभे तौदादिकः शेमुचादीनामिति नुमागमः । इदं सत्यं यथार्थमेवेति ब्रवीमि ऋषिरहं वदामि नकेवलं व्यर्थं किंतु तस्य पुरुषस्य सवधइत् वधएव अन्नं परामृशतः तच्छब्दस्य वधसामानाधिकरण्यात् पुल्लिंगता यथाणेरणावित्यत्र यत्कर्मसएवकर्तेति । अथवा सनिरर्थकोवधएव यः पुरुषः अर्यमणं उपलक्षणमिदं सर्वान् देवान् अर्यमादीन्नपुष्यति हविः प्रदानेन नपोषयति नो नापि सखायं समानख्यानं अभ्यागतमतिथिं मित्रवर्गं च नपोषयति पुषपुष्टौ दैवादिकः यच्छब्दाध्याहारादनिघातः अतएव केवलादी अदेः सुप्यजाताविति णिनिः अतउपधालक्षणावृद्धिः केवलमसाक्षिकमन्नं भुंजानः सकेवलाघोभवति केवलपापवान्भवति अघमेवकेवलं तस्य शिष्यते नैहिकं नामुष्मिकमिति तस्माद्यथा कथंचिद्दातव्यमित्यभिप्रायः ॥ ६ ॥

अथ सप्तमी—

कृषन्नित्फालआशितंकृणोतियन्नध्वानमपवृङ्क्तेचरित्रैः ।
वदन्ब्रह्मावदतोवनीयान्पृणन्नापिरपृणन्तमभिष्यात् ॥ ७ ॥

कृषन् । इत् । फालः । आशितम् । कृणोति । यन् । अध्वानम् ।
अप । वृङ्क्ते । चरित्रैः । वदन् । ब्रह्मा । अवदतः । वनीयान् । पृणन् ।
आपिः । अपृणन्तम् । अभि । स्यात् ॥ ७॥

कृषन् कृषिंकुर्वन् फालः आशितं कर्षकं भोक्तारं कृणोति करोति। तथा अध्वानं मार्गं यन् इणः शतरिनुमागमः गच्छन् पुरुषः चरित्रैः आत्मीयैर्गमनैः अपवृंक्ते स्वामिनोधनमावर्जयति। वृजीवर्जने आदादिकः अनुदात्तेत्। वदन् शास्त्रार्थं ब्रुवाणोब्रह्माब्राह्मणः अवदतः शास्त्रार्थं अब्रुवाणात् जनात् वनीयान् संभक्तृतमः प्रियकरोभवति। वनतेस्तृजन्तस्य ईयसुनितुरिष्ठेमेयः स्वितितृलोपः। ते यथा स्वकर्मणि प्रवर्तमानाः परेषामुपकारकाः तथा पृणन् दाता पुरुषः अपृणन्तं अदातारं जनमभिलक्ष्य आपिःस्यात् बन्धुर्भवेत्॥ ७॥

अथाष्टमी—

एकंपाद्भूयोद्विपदोविचक्रमेद्विपात्त्रिपादमभ्येतिपश्चात्।
चतुष्पादेतिद्विपदामभिस्वरेसंपश्यन्पङ्क्तीरुपतिष्ठमानः॥ ८॥

एक॑ऽपात्। भूयः। द्विऽपदः। वि। चक्रमे। द्विऽपात्। त्रिऽपादम्।
अभि। एति। पश्चात्। चतुःऽपात्। एति। द्विऽपदाम्।
अभिऽस्वरे। सम्ऽपश्यन्। पंक्तीः। उपऽतिष्ठमानः॥ ८॥

अत्र पादशब्दोभागवचनः एकपात् एकभागधनः पुरुषः द्विपदः द्विगुणधनस्य मार्गं भूयः तृतीयायाः सुः भूयसा कालेन विचक्रमे विविधं गच्छति। वेःपादविहरणे इत्यात्मनेपदं तथाद्विपात्पुरुषः त्रिपादं त्रिभागधनं पुरुषं पश्चादभ्येति अभिगच्छति। चतुष्पात् चतुर्भागधनस्तु द्विपदां बहुवचनादेकपादादयः उपलक्ष्यंते एकपादधनादीनां पंक्तीः अभिस्वरे अभिगमने संपश्यन् सम्यगीक्षमाणः सन् उपतिष्ठमानः एति गच्छमानोभवति। अन्योन्यापेक्षया सर्वे उत्तमाधमाः तस्मात्त्वहमेव धनवानितिनमन्येः किंतु अतिथिभ्योधनानिदद्स्वेत्यर्थः॥ ८॥

अथ नवमी—

समौचिद्धस्तौनसमंविविष्टःसंमातराचिन्नसमंदुहाते।
यमयोश्चिन्नसमावीर्याणिज्ञातीचित्सन्तौनसमंपृणीतः॥९॥२३॥

समौ। चित्। हस्तौ। न। समम्। विविष्टः। सम्ऽमातरा। चित्।
न। समम्। दुहाते इति। यमयोः। चित्। न। समा। वीर्याणि।
ज्ञाती इति। चित्। सन्तौ। न। समम्। पृणीतः॥ ९॥ २३॥

अतिथिभ्योधनमप्रयच्छन्नपि ममभ्रातादास्यति इतिचेत्तत्र हेतुमाह समौचित् हस्तौ स-मावपि समं समानं नविविष्टः कार्यंनव्यामुतः। विष्टृव्याप्तौ जौहोत्यादिकः संज्ञापूर्वकस्यविधे-रनित्यत्वादभ्यासस्यगुणाभावः। तथासंमातरा वत्सस्य मातरौ धेनू समेअपि समं समानं प-योनदुहाते यमयोश्चित् सहजातयोः पुत्रयोरपि समा समानि वीर्याणि नसन्ति तस्मात् ज्ञाती चित् एकस्मिन्कुलेसन्तौ जातावपि समंनपृणीतः नप्रयच्छतः। तस्माद्यस्यधनमस्ति सएवद-द्यादित्यर्थः॥ ९ ॥

॥ इत्यष्टमस्य षष्ठे त्रयोविंशोवर्गः ॥ २३ ॥

अग्नेहंसीति नवर्चंषष्ठंसूक्तं अमहीयगोत्रस्य उरुक्षयस्यार्षं गायत्रं रक्षोहाग्निर्देवता। त-थाचानुक्रम्यते—अग्नेहंस्युरुक्षयआमहीयवआग्नेयं राक्षोघ्नं गायत्रंत्विति। मथ्यमानेग्नावजा-यमानइदमनुवक्तव्यं। सूत्रितंच—अजायमानेत्वेतस्मिन्नेवावसानेग्नेहंसिन्यत्रिणमिति सूक्तमाव-पेतेति। प्रातरनुवाकाश्विनशस्त्रयोरपि गायत्रेछन्दसीदंसूक्तं। सूत्रितंच—अग्नेहंस्याग्निंहिन्वन्तुन-इति। दशमेहनि धिष्ण्यांगाराभिविहरणे आद्याजप्या। सूत्रितंच—परित्वाग्नेपुरंवयमित्येतस्याः स्थानेग्नेहंसिन्यत्रिणमिति।

तत्र प्रथमा—

**अग्ने॒हंसि॒न्य१॒त्रिणं॒दीद्य॒न्मर्त्ये॒ष्वा। स्वेक्षये॒शुचिव्रत॥ १॥**

**अग्ने॑। हंसि॑। नि। अ॒त्रिण॑म्। दीद्य॑त्। मर्त्ये॑षु। आ। स्वे। क्षये॑। शु॒चि॒ऽव्र॒त॥ १॥**

हे शुचिव्रत पूतकर्मन् दीप्यमानतेजस्कवा हे अग्ने अत्रिणं अत्तारं शत्रुं तमोरूपं नि नितरां हंसि विनाशय आमंत्रितस्याविद्यमानत्वेन पादादित्वादनिघातः। किंकुर्वन् मर्त्येषु मनुष्येषु य-जमानेषु आभिमुख्येन दीद्यत् कर्मसिध्यर्थं प्रकाशमानः। दीदेतिर्दीप्तिकर्मा। तथा स्वे आत्मीये निवासभूते आहवनीयादिस्थाने दीप्यमानः क्षयोनिवासइत्याद्युदात्तत्वं॥ १॥

अथ द्वितीया—

**उत्ति॑ष्ठसि॒स्वाहु॑तोघृ॒तानि॒प्राति॑मोदसे। यत्त्वा॒स्रुचः॑स॒मस्थि॑रन्॥ २॥**

उत् । तिष्ठसि । सुऽआहुतः । घृतानि । प्रति । मोदसे ।
यत् । त्वा । स्रुचः । सम्ऽअस्थिरन् ॥ २ ॥

हे अग्ने स्वाहुतः अस्माभिः सुष्ठुआहूयमानः सन् उत्तिष्ठसि अरणीभ्यामुद्गतोभव ऊर्ध्वंकर्मत्वादात्मनेपदाभावः । उद्गत्यच घृतानि घृतसहितान्यस्माभिः दीयमानानि हवींषि प्रतिमोदसे हृष्टोभव । मुदहर्षे भौवादिकः अनुदात्तेत् यद्यदा त्वा त्वां स्रुचोजुह्वादीनि पात्राणि समस्थिरन् संगतान्यभवन् समवप्रविभ्यःस्थइति लुङ्यात्मनेपदं स्थाघ्वोरिच्चेतिसिचः कित्वं ईकारश्चान्तादेशः । ह्रस्वादंगादितिसिचोलोपः व्यत्ययेनझस्यरन् तिङ्ङिचोदात्तवतीतिगतेर्निघातः ॥ २ ॥

अथ तृतीया—

सआहुतोविरोचतेग्निरीळेन्योगिरा । स्रुचाप्रतीकमज्यते ॥ ३ ॥

सः । आऽहुतः । वि । रोचते । अग्निः । ईळेन्यः । गिरा ।
स्रुचा । प्रतीकम् । अज्यते ॥ ३ ॥

आहुतः आभिमुख्येनहुतः गतिरनन्तरइति गतेःप्रकृतिस्वरः । गिरा स्तुतिलक्षणयावाचा ईळेन्यः स्तोतव्यः सोग्निर्विरोचते अत्यर्थं दीप्यते । तथा प्रतीकं सर्वेषां देवानां पूर्वमेव स्रुचा घृतसहितया अज्यते सिच्यते ॥ ३ ॥

अथ चतुर्थी—

घृतेनाग्निःसमज्यतेमधुप्रतीकआहुतः । रोचमानोविभावसुः ॥ ४ ॥

घृतेन । अग्निः । सम् । अज्यते । मधुऽप्रतीकः । आऽहुतः ।
रोचमानः । विभाऽवसुः ॥ ४ ॥

अग्निः घृतेन हविषा समज्यते सम्यक् सिक्तोभवति । कीदृशः मधुप्रतीकः घृतप्रयुक्तावयवः आहुतः स्तुतिभिर्हविर्भिर्वा रोचमानः दीप्यमानः विभावसुः स्वदीप्त्या सर्वमाच्छादयन् । यद्वा दीप्तिरेवधनं यस्य सः ॥ ४ ॥

आप्तोर्यामे होतुरतिरिक्तोक्थ्ये जरमाणःसमिध्यसइत्यनुरूपस्तृचः। सूत्रितंच—जराबोध-तद्विविड्ढि जरमाणःसमिध्यसइति।

तत्र प्रथमा सूक्ते पंचमी—

**जरमाणःसमिध्यसेदेवेभ्योहव्यवाहन। तंत्वांहवन्तमर्त्याः॥५॥२४॥**

**जरमाणः। सम्। इध्यसे। देवेभ्यः। हव्यऽवाहन।**

**तम्। त्वा। हवन्त। मर्त्याः॥ ५॥ २४॥**

हे हव्यवाहन हव्यानांप्रापयितः हव्येनन्तःपादमितिञ्युट् जरमाणः स्तोतृभिः स्तूयमानः। जरतिःस्तुतिकर्मा। सत्वं देवेभ्यः देवार्थं समिध्यसे हविर्भिः सम्यग्दीप्यसे। तं तादृशं त्वा त्वां मर्त्याः मनुष्येषु साधवोयजमानाः हवन्त आह्वयन्ति। ह्वयतेर्लङि बहुलंछन्दसीतिसंप्रसारणं॥ ५॥

॥ इत्यष्टमस्य षष्ठे चतुर्विंशोवर्गः॥ २४॥

अथ षष्ठी—

**तंमर्ताअमर्त्यंघृतेनाग्निंसपर्यत। अदाभ्यंगृहपतिम्॥ ६॥**

**तम्। मर्ताः। अमर्त्यम्। घृतेन। अग्निम्। सपर्यत।**

**अदाभ्यम्। गृहऽपतिम्॥ ६॥**

हे मर्ताः ऋत्विजः अमर्त्यं मनुष्यधर्मरहितं अग्निं घृतेन हविषा सपर्यत परिचरत। सपरशब्दःकंड्वादिः। कीदृशमदाभ्यं कैश्चिदप्यहिंस्यं दभेश्चेतिवक्तव्यमितिण्यत्। गृहपतिं गृहस्य स्वामिनं यजमानरूपं पत्यावैश्वर्यइति पूर्वपदप्रकृतिस्वरः॥ ६॥

अथ सप्तमी—

**अदाभ्येनशोचिषाग्नेरक्षस्त्वंदह। गोपाऋतस्यदीदिहि॥ ७॥**

**अदाभ्येन। शोचिषा। अग्ने। रक्षः। त्वम्। दह। गोपाः।**

**ऋतस्य। दीदिहि॥ ७॥**

हे अग्ने त्वमदाभ्येनाहिंस्येन शोचिषा तेजसा रक्षः । जातावेकवचनं । सर्वान् राक्षसान् दह विनाशय । किंच ऋतस्ययज्ञस्यगोपा गोपायितासन् दीदिहि दीप्यस्व ॥ ७ ॥

अथाष्टमी—

**सत्वमंग्नेप्रतीकेनुप्रत्योषयातुधान्यः । उरुक्षयेषुदीद्यंत् ॥ ८ ॥**

**सः । त्वम् । अग्ने । प्रतीकेन । प्रति । ओष ।**
**यातुऽधान्यः । उरुऽक्षयेषु । दीद्यंत् ॥ ८ ॥**

हे अग्ने स त्वं प्रतीकेन त्वदवयवभूतेन तेजसा यातुधान्यः यातुधानीः राक्षसीः प्रत्योष प्रतिकूलं दह । उषदाहे भौवादिकः लोटि हेर्लुक् जातेरस्त्रीविषयादिति यातुधानशब्दस्यङीप् उदात्तस्वरितयोर्यणइतिस्वरितत्वं किंकुर्वन् उरुक्षयेषु विस्तीर्णेषुनिवासेषु आहवनीयादिषु दीद्यत् दीप्यमानः ॥ ८ ॥

अथ नवमी—

**तंत्वांगीर्भिरुरुक्षयांहव्यवाहंसमीधिरे । यजिष्ठंमानुषेजने॥९॥२५॥**

**तम् । त्वा । गीःऽभिः । उरुऽक्षयाः । हव्यऽवाहम् । सम् ।**
**ईधिरे । यजिष्ठम् । मानुषे । जने ॥ ९ ॥ ॥ २५ ॥**

हे अग्ने उरुक्षयाः बहुनिवासायजमानाः हव्यवाहं हविषांवोढारं मानुषे मनुष्यसंबन्धिनि जने जनमध्ये यजिष्ठं यष्टृतमं तं त्वा त्वां गीर्भिः स्तुतिभिः तत्सहितैर्हविर्भिः समीधिरे सम्यगदीदिपन् । इन्धेर्लिटिइन्धिभवतिभ्यांचेतिकित्वं नलोपः ॥ ९ ॥

॥ इत्यष्टमस्य षष्ठे पंचविंशोवर्गः ॥ २५ ॥

इतिवाइति त्रयोदशर्चं सप्तमंसूक्तं गायत्रं इन्द्रोलवरूपमास्थाय सोमपानंकुर्वन् तदानीमृषिभिर्दृष्टः सन् स्वात्मानमनेनसूक्तेनास्तावीत् । अतोलवरूपापन्नइन्द्रऋषिः सएवदेवता । तथाचानुक्रम्यते—इतिवैसप्तोनैन्द्रोलवआत्मानंतुष्टावेति । गतोविनियोगः ।

तत्र प्रथमा—

इतिवाइतिमेमनोगामश्वंसनुयामिति । कुवित्सोमस्यापामिति॥१॥

इति । वै । इति । मे । मनः । गाम् । अश्वम् । सनुयाम् । इति ।
कुवित् । सोमस्य । अपाम् । इति ॥ १ ॥

इतिवै इतिखलु इति एवंप्रकारेण मे मदीयं मनोवर्तते तं प्रकारं दर्शयति गामश्वं च सनुयां स्तोतृभ्यः प्रयच्छामीति । षणुदाने तानादिकः । इतिशब्दोहेतौ यस्मात् कुविद्बहुवारं सोमस्य सोमं अपां पीतवानस्मि क्रियाग्रहणंकर्तव्यमिति सोमस्यसंप्रदानसंज्ञा चतुर्थ्यर्थेबहुलमितिषष्ठी पापाने लुङि गातिस्थेतिसिचोलुक् कुवियोगादनिघातः ॥ १ ॥

अथ द्वितीया—

प्रवाताइवदोधतउन्मापीताअयंसत । कुवित्सोमस्यापामिति॥२॥

प्र । वाताःऽइव । दोधतः । उत् । मा । पीताः । अयंसत ।
कुवित् । सोमस्य । अपाम् । इति ॥ २ ॥

दोधतः भृशं कंपयमाना वाताइव वायवोयथा वृक्षादीन् उद्यच्छन्ते तद्वत् पीताः सोमाः मामां प्रकर्षेण उदयंसत उद्यच्छन्ते । यमेर्लुङिसमुदाङ्भ्योयमोग्रंथेइत्यात्मनेपदं । यस्माद्बहुवारं सोममपां ॥ २ ॥

अथ तृतीया—

उन्मापीताअयंसतरथमश्वाइवाशवः । कुवित्सोमस्यापामिति॥३॥

उत् । मा । पीताः । अयंसत । रथम् । अश्वाःऽइव । आशवः ।
कुवित् । सोमस्य । अपाम् । इति ॥ ३ ॥

पीताः सोमाः मां उदयंसत उद्यच्छन्ते । तत्रदृष्टान्तः—रथमश्वाइव यथा आशवः क्षिप्रगामिनः गमनेनव्याप्तावा अश्वा रथमुद्गमयन्ति तद्वत् ॥ ३ ॥

अथ चतुर्थी—

उप॑मा॒म॒तिर॑स्थित वा॒श्रा पु॒त्रमि॑व प्रि॒यम् । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ४ ॥

उप॑ । मा॒ । म॒तिः । अ॒स्थि॒त॒ । वा॒श्रा । पु॒त्रम्ऽइ॑व । प्रि॒यम् ।

कु॒वित् । सोम॑स्य । अपा॑म् । इति॑ ॥ ४ ॥

मतिः स्तोतृभिः क्रियमाणास्तुतिः मा मामुपास्थित संयोजयति उपाद्देवपूजासंगतिकरणेत्यात्मनेपदं कथमिव वाश्रा पुत्रमिव यथा वाश्रा शब्दायमानाधेनुः प्रियं पुत्रं वत्सं संगच्छति तद्वत् ॥ ४ ॥

अथ पञ्चमी—

अ॒हं तष्टे॑व व॒न्धुरं॒ पर्य॑चामि हृ॒दा म॒तिम् । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ५ ॥

अ॒हम् । तष्टा॑ऽइव । व॒न्धुर॑म् । परि॑ । अ॒चा॒मि॒ । हृ॒दा । म॒तिम् ।

कु॒वित् । सोम॑स्य । अपा॑म् । इति॑ ॥ ५ ॥

तष्टेव तक्षायथा वंधुरं सारथिनिवासस्थानं तद्वान् वा उपलक्ष्यते तत्स्थानं रथंवा साधुकरोति तद्वदहं मतिं स्तुतिं हृदा आत्मीयेनमनसा पर्यंचामि साधुकरणाय परिगच्छामि ॥५॥

अथ षष्ठी—

न॒हि मे॑ अक्षि॒पच्च॒नाच्छा॑न्त्सुः प॒ञ्च कृ॒ष्टयः॑ । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ६ ॥ २६ ॥

न॒हि । मे॒ । अ॒क्षि॒ऽपत् । च॒न । अच्छा॑न्त्सुः । प॒ञ्च । कृ॒ष्टयः॑ ।

कु॒वित् । सोम॑स्य । अपा॑म् । इति॑ ॥ ६ ॥ २६ ॥

चनेति निपातसमुदायोप्यर्थे पंचकृष्टयोनिषादपंचमाश्चत्वारोवर्णाःपंचजनाः । यद्वा देवमनुष्यादयः मे मदीयमक्षिपत् चक्षुःपतनं दृष्टिसंचारं नह्यच्छान्त्सुः नह्यपवृण्वन्ति । नहिद्रष्टुः दृष्टेर्विपरिलोपोविद्यतइतिश्रुतेः । छदिअपवरणे चुरादीनामितिवाण्यन्तत्वादत्रणयभावेलुङि हलंतलक्षणावृद्धिः यस्माद्बहुवारं सोममपां ॥ ६ ॥

॥ इत्यष्टमस्य षष्ठे षड्विंशोवर्गः ॥ २६ ॥

अथ सप्तमी—

नहिमेरोदसीउभेअन्यंपक्षंचनप्रति । कुवित्सोमस्यापामिति ॥७॥

नहि । मे । रोदसी इति । उभे इति । अन्यम् । पक्षम् । चन । प्रति । कुवित् । सोमस्य । अपाम् । इति ॥ ७ ॥

उभे रोदसी द्यावापृथिव्यौ मेमदीयमन्यं पक्षंचन पक्षमपि प्रतिसमानेनभवतः ॥ ७ ॥

अथाष्टमी—

अभिद्यांमहिनाभुवमभीऽमांपृथिवींमहीम् । कुवित्सोमस्यापामिति ॥८॥

अभि । द्याम् । महिना । भुवम् । अभि । इमाम् । पृथिवीम् । महीम् । कुवित् । सोमस्य । अपाम् । इति ॥ ८ ॥

उक्तमर्थं प्रतिपादयति महिना महिम्ना आत्मीयेन द्यां द्युलोकमभिभुवं अभिभवामि तथा महीं महतीं इमां पृथिवीं स्वमहिम्ना अभिभवामि भवतेर्लङ्छान्दसोविकरणस्यलुक् भूसुवोस्तिङीतिगुणेप्रतिषिद्धे उवङादेशः ॥ ८ ॥

अथ नवमी—

हन्ताहंपृथिवीमिमांनिदधानीहवेहवा । कुवित्सोमस्यापामिति ॥९॥

हन्त । अहम् । पृथिवीम् । इमाम् । नि । दधानि । इह । वा । इह । वा । कुवित् । सोमस्य । अपाम् । इति । ९ ॥

हन्तेति संभावनायां अनुज्ञायां वा संभावयामि एतदनुजानामिवा किंतत् अहमिमां पृथिवीं इहवान्तरिक्षे निदधानि इहवाद्युलोके इति हस्तेन निर्दिशति दधातेर्लोटि मेर्निः ॥ ९ ॥

अथ दशमी—

ओषमित्पृथिवीमहंजङ्घनानीहवेहवा । कुवित्सोमस्यापामिति ॥१०॥

ओषम् । इत् । पृथिवीम् । अहम् । जंघनानि । इह । वा । इह । वा । कुवित् । सोमस्य । अपाम् । इति ॥ १० ॥

अहं पृथिवीमभिलक्ष्यौषंस्वतेजसा तापकमादित्यं इहवान्तरिक्षे इहवाद्युलोके जंघनानि भृशंयापयानि इदितिपूरणः हन्तेर्गत्यर्थस्ययङ्लुगन्तस्यलोटिशपोलुगभावश्छान्दसः ॥ ॥ १० ॥

अथैकादशी—

दिविमेअन्यःपक्षोधोअन्यमचीकृषम् । कुवित्सोमस्यापामिति॥ ११॥

दिवि । मे । अन्यः । पक्षः । अधः । अन्यम् । अचीकृषम् ।
कुवित् । सोमस्य । अपाम् । इति ॥ ११ ॥

मे मदीयः अन्यः पक्षः दिवि द्युलोके स्थापितः अधः पूर्वाधरावराणामसीत्यादिनासिप्रत्ययः प्रकृतेरधादेशश्च अधस्तात्पृथिव्यांअन्यंपक्षमचीकृषं अकार्क्षं कृषविलेखने ण्यन्तस्य लुङिचङिनित्यंछन्दसीतिऋकारादेशः विलेखनं नामोत्पादनं उदपादयं आस्थापयमित्यर्थः ॥ ११॥

अथ द्वादशी—

अहमस्मिमहामहोभिनभ्यमुदीषतः । कुवित्सोमस्यापामिति॥ १२॥

अहम् । अस्मि । महाऽमहः । अभिऽनभ्यम् । उत्ऽईषतः । कुवित् ।
सोमस्य । अपाम् । इति ॥ १२ ॥

अभिनभ्यं नभौ मध्यस्थानेभवं नभ्यंअन्तरिक्षं उगवादिभ्योयदितियत्प्रत्ययः तत्रैवपाठान्नभादेशश्च लक्षणेनाभिप्रतीआभिमुख्ये इत्यव्ययीभावःसमासस्वरः अन्तरिक्षमभि उदीषितः उद्गतः सूर्यआत्माहं महामहोस्मि महतामपि महानस्मि यद्वा महत्प्रभूतं महस्तेजोयस्य प्रभूततेजस्कोस्मि आन्महत इत्यात्वं ॥ १२ ॥

सैषा त्रयोदशी—

गृहोयाम्यरंकृतोदेवेभ्योहव्यवाहनः । कुवित्सोमस्यापामिति॥ १३॥ २७॥

गृहः । यामि । अरम्ऽकृतः । देवेभ्यः । हव्यऽवाहनः । कुवित् ।
सोमस्य । अपाम् । इति ॥ १३ ॥ २७॥

गृहः हविषां ग्रहीता अरंकृतः यजमानैरलंकृतोहं देवेभ्य इन्द्रादिभ्यः हव्यवाहनः हविषांवोढा प्रापयिता अस्म्यात्मासन् यामि हवींषि प्रापयामि याप्रापणे लट् हव्येनन्तःपादमितिवहेर्ञ्युट् नित्वादाद्युदात्तः समासेकृदुत्तरपदप्रकृतिस्वरः । इति यस्मात्कुविद्बहुवारं सोमस्य सोमं अपां पीतवानस्मि तस्मादेतान्यकार्षमिति इन्द्रः स्वात्मानमेवास्तावीत् ॥ १३ ॥

॥ इत्यष्टमस्य षष्ठे सप्तविंशोवर्गः ॥ २७ ॥

वेदार्थस्यप्रकाशेन तमोहार्दं निवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये अष्टमाष्टके षष्ठोध्यायः ॥ ६ ॥



## ॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदा योवेदेभ्योखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥१॥

अथ सप्तमोव्याख्यायते दशममण्डलस्य दशमेनुवाके सूक्तसप्तकं व्याख्यातं तदिदिति नवर्चमष्टमंसूक्तं अथर्वणःपुत्रस्य बृहद्दिवस्यार्षं त्रैष्टुभमैन्द्रं। तथाचानुक्रान्तं—तदिन्नवाथर्वणो-बृहद्दिवइति चातुर्विंशिकेहनि निष्केवल्यइदंसूक्तं। सूत्रितंच—तदिदासेतिच पुरस्तात्सूक्तस्यशं-सेदिति। व्योमविश्वदेवस्तुत्पंचशारदीयेष्वप्येकाहेषु इदमेवनिष्केवल्यनिविद्धानं। सूत्रितंच—एतेषां त्रयाणां कयाशुभा तदिदासेति मध्यंदिनइति राशिमरायाख्ययोरेकाहयोरपि इदंनि-ष्केवल्यनिविद्धानं। सूत्रितंच—राशिमराययोश्च कयाशुभीयतदिदासीयेति। महाव्रते निष्केव-ल्येप्येतत्सूक्तं। तथैव पंचमारण्यके सूत्रितं—तदिदासभुवनेषुज्येष्ठंतांसुतेकीर्तिंमघवन्महित्वेति।

तत्र प्रथमा—

**ॐम् तदिदासभुवनेषुज्येष्ठंयतोजज्ञउग्रस्त्वेषनृम्णः।**
**सद्योजज्ञानोनिरिणातिशत्रूननुयंविश्वेमदन्त्यूमाः॥ १ ॥**

तत्। इत्। आस। भुवनेषु। ज्येष्ठम्। यतः। जज्ञे। उग्रः। त्वेषऽनृम्णः। सद्यः। जज्ञानः। नि। रिणाति। शत्रून्। अनु। यम्। विश्वे। मदन्ति। ऊमाः॥ १ ॥

तत् जगत्कारणत्वेन सर्ववेदान्तप्रसिद्धं इच्छब्दोवधारणे भुवनेषु भूसत्तायां सत्सु पृथि-व्यादिषु लोकेषु मध्ये जगत्कारणं ब्रह्मैव ज्येष्ठं प्रशस्ततमं आस बभूव। तस्य परमार्थत्वात् तद्व्यतिरिक्तानां व्यावहारिकत्वाच्च। यद्वा ज्येष्ठं वृद्धतमं जगत्कारणत्वेन सर्वेषामादिभूतं बभूव। अस्तेर्लिटि छन्दस्युभयथेति सार्वधातुकत्वादस्तेर्भूरिति भूभावाभावः। यद्वा वृद्धं तदेवब्रह्म स्वप्रकाशतया आस दिदीपे असगतिदीप्त्यादानेषु अस्माल्लिटिरूपं यतउपादानभूतात् यस्मा-द्ब्रह्मणः उग्रः उद्गूर्णः त्वेषनृम्णः प्रदीप्तबलः सूर्यात्मकइन्द्रः जज्ञे जातोबभूव। श्रूयतेहि—च-

क्षोःसूर्योअजायतेति । सूर्याचन्द्रमसौधातायथापूर्वमकल्पयदितिच । जनिकर्तुःप्रकृतिरिति प्रकृतेरपादानसंज्ञायां यतइतिपंचमी जनेर्लिटि गमहनेत्यादिनोपधालोपः द्विर्वचनेचीति तस्य स्थानिवद्भावात् द्विर्वचनादि यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । सच जज्ञानोजायमानएव सद्यः शीघ्रं शत्रून् शातयितॄन् मन्देहादीन् राक्षसान् निरिणाति निहिनस्ति । यद्वा उपासकानां पापरूपान् शत्रून् निहन्ति । तथाचब्राह्मणं—सद्योह्येषजातःपाप्मानमपाहतेति । जज्ञानइति जनेर्लिटः कानचिरूपमेतत् । रिणाति रीगतिरेषणयोः क्र्यादिः प्वादीनांह्रस्वइतिह्रस्वत्वं विश्वे सर्वे ऊमाः अवन्ति रक्षन्तीत्युमाः प्राणिनः अवतेरौणादिकोमन्प्रत्ययः ज्वरत्वरेत्यादिनावकारोपधयोःस्थाने ऊठ् सर्वप्राणिनोयं सूर्यात्मकमुद्यन्तमिन्द्रमनुलक्ष्य मदर्थमुदगान्मदर्थमुदगादिति मदन्तिहृष्यन्ति मदीहर्षे व्यत्ययेनशप् । तथाच ब्राह्मणं—भूतानिवैविश्वऊमास्तएनमनुमदन्तिउदगादुदगादितीति । तैत्तिरीयकंच—तस्मात्सर्वएवमन्यन्तेमांप्रत्युदगादितीति । यद्वा यंस्तुत्यादिभिर्मांद्यन्तमनु पश्चात्सर्वे प्राणिनोभीष्टप्राप्त्या हृष्यन्ति अनुर्लक्षणइति अनोःकर्मप्रवचनीयत्वात्कर्मप्रवचनीययुक्तेइतिद्वितीया सइन्द्रोजज्ञइत्यन्वयः ॥ १ ॥

अथ द्वितीया—

वावृधानःशवसाभूर्योजाःशत्रुर्दासायभियसंदधाति ।
अव्यनच्चव्यनच्चसस्निसन्तेनवन्तप्रभृतामदेषु ॥ २ ॥

ववृधानः । शवसा । भूरिऽओजाः । शत्रुः । दासाय ।
भियसम् । दधाति । अविऽअनत् । च । विऽअनत् । च ।
सस्निः । सम् । ते । नवन्त । प्रऽभृता । मदेषु ॥ २ ॥

शवसा बलेन ववृधानः वर्धमानः अतएव भूर्योजाः बहुबलः शत्रुः शातयिता इन्द्रः दासाय उपक्षयकारिणे शत्रवे भियसं भीतिं दधाति विदधाति करोति । अव्यनत् विविधमनितिश्वसितीति व्यनत् प्राणवज्जंगमं तद्विलक्षणमव्यनत् स्थावरं तदुभयमपि सस्नि संस्नातं इन्द्रेण सम्यक्शोधितं भवति । स्नातेः आदृगमहनइतिव्यत्ययेन कर्मणि किन्प्रत्ययः यद्वान्त-

---

ऋ० सं० ८. ४. १९ । २ ऋ० सं० ८. ८. ४८ ।

र्णीतिणयर्थांत्कर्तंर्येवकिन् वृष्ट्यादिना सम्यक्स्नापयिता शोधयिताभवति नलोकाव्ययेतिकर्मणिषष्ठ्याःप्रतिषेधः शिष्टःपादः प्रत्यक्षःकृतः। हे इन्द्र ते तव मदेषु हर्षेषु हविषा स्तुत्याच जातेषुसत्सु प्रभृता प्रभृतानि प्रकर्षेण धृतानि पोषितानिवा सर्वाणि भूतजातानि सन्नवन्त संगच्छन्ते स्तोतुंहवींषिच दातुं समूहीभवन्तीत्यर्थः। नवतिर्गतिकर्मा। प्रभृता बिभर्तेः कर्मणि निष्ठा शेश्छन्दसिबहुलमितिशेर्लोपः गतिरनन्तरइति गतेःप्रकृतिस्वरत्वं ॥ २ ॥

अथ तृतीया—

त्वेक्रतुमपिवृञ्जन्तिविश्वेद्विर्यदेतेत्रिर्भवन्त्यूमाः।
स्वादोःस्वादीयःस्वादुनासृजासमदःसुमधुमधुनाभियोधीः ॥ ३ ॥

त्वे इति। क्रतुम्। अपि। वृञ्जन्ति। विश्वे। द्विः। यत्।
एते। त्रिः। भवन्ति। ऊमाः। स्वादोः। स्वादीयः। स्वादुना।
सृज। सम्। अदः। सु। मधु। मधुना। अभि। योधीः ॥ ३ ॥

हे इन्द्र त्वे त्वयि सुपांसुलुगिति सप्तम्येकवचनस्य शेआदेशः विश्वे सर्वे यजमानाः क्रतुं अनुष्ठेयं कर्म वृंजन्ति समापयन्ति। अपिशब्दोब्राह्मणोक्तसर्वभूतानां सर्वमनसां समुच्चयार्थः सर्वाणि पृथिव्यादीनिभूतानि सर्वेषां प्राणिनां मनांसि सर्वे यज्ञक्रतवश्च व्याप्तेत्वय्येव यजमानैः परिसमाप्यन्तइत्यर्थः। तथाचब्राह्मणं—त्वयीमानि सर्वाणिभूतानि सर्वाणि मनांसि सर्वेक्रतवोपि वृंजन्तीत्येवतदाहेति। यद्यस्मात् एते ऊमाः तर्पकाः अवतेस्तर्पणार्थादौणादिकोमन्प्रत्ययः ज्वरत्वरेत्यादिना वकारोपधयोरूठ् ईदृशायजमानाः पूर्वमेकाकिनःसन्तः पश्चाद्द्विः द्विवारं स्त्रीरूपेण पुंरूपेणच जाताः सन्तः पुनरपत्येन सार्धं त्रिः त्रिवारं जन्मभाजोभवन्ति एकएवात्मा स्त्रीपुंरूपेण जायते। अर्धोवाएषआत्मनोयत्पत्नीतिश्रुतेः। पुत्रोप्यात्मैव आत्मावैपुत्रनामासीतिश्रुतेः। अतएवमेतेभिवृद्धाभवन्ति ततोवगम्यते त्वय्येवानुष्ठितं सर्वंकर्म परिसमापयन्तीति। तथाचब्राह्मणं—द्वौवैसन्तौमिथुनौ प्रजायेते प्राजापत्याइति। हे इन्द्र त्वं च स्वादोः प्रियाद्गृहधनादेरपि स्वादीयः स्वादुतरं प्रियतरं अपत्यं स्वादुना स्वादुभूतेन मिथुनेन मातापित्रात्मकेन संसृज संयोजय। यद्वा स्वादुनाभावेन उत्पन्नं तदपत्यमपि संयोजय। एतदेवाह अदः तदपत्यं मधुमधुरं मधुना मदहेतुना मिथुनान्तरेण पौत्रेण सु सुष्ठु अभियोधीः अभियोधयाभितः क्रीडय।

धातूनामनेकार्थत्वात् युध्यतिरत्र क्रीडार्थेवर्तते मिथुनंवैस्वादु प्रजास्वाद्वित्यादि ब्राह्मणमत्रानुसंधेयं ॥ ३ ॥

अथ चतुर्थी—

इतिंचिद्धित्वाधनाजयंन्तंमदेंमदेअनुमदंन्तिविप्राः ।
ओजींयोधृष्णोस्थिरमातंनुष्वमात्वांदभन्यातुधानांदुरेवाः ॥ ४ ॥

इतिं । चित् । हि । त्वा । धनां । जयंन्तम् । मदेंऽमदे ।
अनुऽमदंन्ति । विप्राः । ओजींयः । धृष्णो इतिं । स्थिरम् । आ ।
तनुष्व । मा । त्वा । दभन् । यातुऽधानाः । दुःऽएवाः ॥ ४ ॥

इतिचिद्धि एवमेवखलु हे इन्द्र मदेमदे सोमपानजन्ये हर्षेसति धना शत्रुधनानि जयन्तं जयेन प्राप्नुवन्तंत्वा त्वामनु पश्चात् लक्षणे अनोःकर्मप्रवचनीयत्वं विप्रामेधाविनः स्तोतारः मदन्ति हृष्यन्ति। यद्वा त्वामनु मदन्ति अनुक्रमेण स्तुवन्ति। मदतिःस्तुतिकर्मा हिचेतिनिघातप्रतिषेधः। हे धृष्णो शत्रूणां धर्षयितः इन्द्र त्रसिगृधिधृषिक्षिपेःक्नुः ओजीयः ओजस्विशब्दादीयसुनि विन्मतोर्लुगितिविनोलुक् टेरितिटिलोपः बलवत्तरं अतएवस्थिरं दृढं धनं आतनुष्व अभितोस्मदर्थं विस्तारय त्वा त्वां च मादभन् माहिंसन्तु दुरेवा दुर्गतयोयातुधानाराक्षसाः ॥ ४ ॥

अथ पंचमी—

त्वयांवयंशांशद्महेरणेंषुप्रपश्यंन्तोयुधेन्यांनिभूरिं ।
चोदयांमितआयुंधावचोंभिःसन्तेंशिशामिब्रह्मंणावयांसि॥५॥१॥

त्वयां । वयम् । शाशद्महे । रणेंषु । प्रऽपश्यंन्तः । युधेन्यांनि ।
भूरिं । चोदयांमि । ते । आयुंधा । वचंःऽभिः । सम् । ते ।
शिशामि । ब्रह्मंणा । वयांसि ॥ ५ ॥ १ ॥

हे इन्द्र त्वयानुगृहीतावयं रणेषु संग्रामेषु शाशद्महे भृशं शत्रून् शातयामः । शद्लृशातने अस्माद्यङन्तान्महिङः छन्दस्युभयथेत्यार्धधातुकत्वादतोलोपयलोपौ किंकुर्वंतः युधेन्यानि योधनार्हाणि कृत्यार्थेतवैकेन्केन्यत्वनइति युधेरर्हार्थेकेन्यप्रत्ययः भूरि बहूनि बहुलानि सुपांसुलु-

गितिशसोलुकू प्रपश्यन्तः प्रकर्षेणजानन्तः अपिच ते तव आयुधा आयुधानि आयोधनसाधनानि वज्रादीनि शेश्छन्दसिबहुलमितिशेर्लोपः । वचोभिः स्तुतिभिः चोदयामि शत्रून्प्रति प्रेरयामि ते त्वदर्थं ब्रह्मणा मंत्रेण स्तुतिरूपेण सहितानि वयांसि अन्ननामैतत् हविर्लक्षणान्यन्नानि संशिशामि सम्यक्निश्यामि संस्करोमीत्यर्थः । शोतनूकरणे छान्दसोविकरणस्यश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वं ॥ ५ ॥

॥ इत्यष्टमस्य सप्तमे प्रथमोवर्गः ॥ १ ॥

अथ षष्ठी—

स्तुषेय्यंपुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।
आदर्षतेशवसासप्तदानून्प्रसाक्षतेप्रतिमानानिभूरि ॥ ६ ॥

स्तुषेय्यम् । पुरुऽवर्पसम् । ऋभ्वम् । इनऽतमम् । आप्त्यम् ।
आप्त्यानाम् । आ । दर्षते । शवसा । सप्त । दानून् । प्र ।
साक्षते । प्रतिऽमानानि । भूरि ॥ ६ ॥

स्तुषेय्यं स्तोतव्यं स्तुवः स्केय्यश्छन्दसीत्यौणादिकः स्केय्यप्रत्ययः । पुरुवर्पसं बहुरूपं ऋभ्वं उरुभासमानं उरुभूतंवा इनतमं अतिशयेनेश्वरं आप्त्यानां आप्तव्यानां मध्ये आप्त्यं आप्तव्यं एवंभूतं इन्द्रं स्तौमीतिशेषः । यइन्द्रः शवसा बलेन सप्त सप्तसंख्याकान् दानून् दानवान् वृत्रनमुचिकुयवादीन् आदर्षते आदृणाति हिनस्ति । दृविदारणे अस्माल्लेटि व्यत्ययेनात्मनेपदं लेटोडाटावित्यडागमः सिब्बहुलमितिसिप् तथा प्रतिमानानि असुराणां प्रतिरूपाणि भूरि भूरीणि बहून्यसुरबलानि प्रसाक्षते यइन्द्रः प्रसहते । यद्वा बहूनि प्रतिमानानि असुराणांस्थानानि प्रसाक्षते प्राप्नोति साक्षतिराप्नोतिकर्मेतियास्कः । षहअभिभवे लेटचाडागमः सिब्बहुलमितिसिप् ढत्वकत्वषत्वानि छान्दसोदीर्घः ॥ ६ ॥

अथ सप्तमी—

नितद्दधिषेवरंपरंचयस्मिन्नाविथावसादुरोणे ।
आमातरास्थापयसेजिगत्नूअतइनोषिकर्वरापुरूणि ॥ ७ ॥

नि। तत्। दधिषे। अवरम्। परम्। च। यस्मिन्। आविथ।
अवसा। दुरोणे। आ। मातरा। स्थापयसे। जिगत्नू इति।
अतः। इनोषि। कर्वरा। पुरूणि ॥ ७ ॥

तत्तस्मिन्यजमानस्य गृहे अवरं अल्पं भौमं धनं परं उत्कृष्टं दिविभवं धनं च हे इन्द्र त्वं निदधिषे निदधासि निक्षिपसि यस्मिन् दुरोणे गृहे अवसा अन्ननामैतत् तर्पकेणान्नेन हविर्लक्षणेन आविथावसि तृप्यसि। अवतेस्तृप्त्यर्थाच्छन्दसिलुङ्लङ्लिटइति सार्वकालिकोलिट् अतआदेरित्यभ्यासस्यात्वं यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः अपिच मातरा सकलस्य भूतजातस्यनिर्मात्र्यौ द्यावापृथिव्यौ जिगत्नू गमनशीले इतस्ततः प्रचलन्त्यौ आस्थापयसे स्वकीयेस्थाने अवस्थापयसि नैश्चल्येनयथावतिष्ठेते तथाकरोषीत्यर्थः। विष्वक् तस्तंभपृथिवीमुतद्यामिति[1] निगमान्तरं। हे इन्द्र अतःकारणात् पुरूणि बहूनि कर्वरा कर्मनामैतत् कर्वराणि शेश्छन्दसि बहुलमितिशेर्लोपः कर्माणि लौकिकानि वैदिकानिच इनोषि प्राप्नोषि। इण्गतौ व्यत्ययेन श्नुः ॥ ७ ॥

अथाष्टमी—

इमाब्रह्मबृहद्दिवोविवक्तीन्द्रायशूषमग्रियःस्वर्षाः।
महोगोत्रस्यक्षयतिस्वराजोदुरश्चविश्वाअवृणोदपस्वाः ॥ ८ ॥

इमा। ब्रह्म। बृहत्ऽदिवः। विवक्ति। इन्द्राय। शूषम्।
अग्रियः। स्वःऽसाः। महः। गोत्रस्य। क्षयति। स्वऽराजः।
दुरः। च। विश्वाः। अवृणोत्। अप। स्वाः ॥ ८ ॥

बृहद्दिवऋषिः इमा इमानि ब्रह्म ब्रह्माणि इन्द्राय शूषं सुखं यथाभवति तथा विवक्ति ब्रवीति इत्यात्मनएव परोक्षनिर्देशः वचपरिभाषणे आदादिकः छान्दसःशपःश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वं। ऋषिर्विशेष्यते अग्रियः अग्रेभवः ऋषीणांप्रमुखः श्रेष्ठइत्यर्थः वच्छौचेति अग्रशब्दाद्भवार्थेवच्। स्वर्षाः स्वर्गस्यसंभक्ता यद्वा स्वरादित्यइन्द्रः असौवाआदित्यइन्द्रइतिश्रुत्यन्तरात्।

---

1 ऋ० सं० ८. ४. १४।

तस्यसंभक्ता सेवकइत्यर्थः वनषणसंभक्तौ जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वं सनोतेरनइतिषत्वं । यइन्द्रः महतः गोत्रस्य पर्वतस्य बलेनासुरेण गवांपिधानार्थं निहितस्य स्वराजः स्वयमेव राजमानस्य क्रियाग्रहणंकर्तव्यमिति कर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी ईदृशं पर्वतं क्षयति अपगमयति क्षिक्षये भौवादिकः यद्वा गोशब्दात्समूहार्थेइनित्रकटचचश्चेतित्रप्रत्ययः गोत्रस्य गोसमूहस्य महोमहतः स्वराजः स्वयमेव राजमानस्य यइन्द्रः क्षयति ईष्टे क्षयतिरैश्वर्यकर्मा स्वशब्दोपपदाद्राजतेःसत्सूद्विषेतिक्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । दुरश्च बिलद्वाराणिच विश्वाः सर्वाः स्वाः वलासुरस्य स्वभूता अपावृणोत् अपगतावरणाअकरोत् उद्घाटितवानित्यर्थः यद्वादुरश्चापावृणोद्विश्वाःसर्वाः स्वाःस्वभूतागाः बिलमध्ये वर्तमानाः अलभतेतिशेषः एवंभूतोयइन्द्रः तस्माइन्द्राय विवक्मीत्यन्वयः ॥ ८ ॥

अथ नवमी—

एवामहान्बृहद्दिवोअथर्वावोचत्स्वांतन्व१मिन्द्रमेव ।
स्वसारोमातरिभ्वरीररिप्राहिन्वन्तिचशवसावर्धयन्तिच ॥ ९ ॥ २॥

एव । महान् । बृहत्ऽदिवः । अथर्वा । अवोचत् । स्वाम् । तन्वम् ।
इन्द्रम् । एव । स्वसारः । मातरिभ्वरीः । अरिप्राः । हिन्वन्ति ।
च । शवसा । वर्धयन्ति । च ॥ ९ ॥ २ ॥

महान् गुणैरधिकः अथर्वा उपचाराज्जन्ये जनकशब्दः अथर्वणः पुत्रोबृहद्दिवऋषिः देवेषुमध्ये इन्द्रमेव प्रति स्वां आत्मीयां तन्वं विस्तृतां स्तुतिं एवमवोचत् प्रोक्तवान् वचेर्लुङि अस्यतिवक्तीत्यादिनाच्लेरङादेशः । वचउमित्युमागमः पादादित्वान्ननिहन्यते । अपिच एतमेवेन्द्रं मातरिभ्वरीः मातरि सकलस्य भूतजातस्य निर्मात्र्यां भूमौ भवंत्योवर्तमानाः भवतेरन्येभ्योपिदृश्यन्तेइतिवनिप् वनोरचेतिङीब्रेफौ जसिवाछन्दसीतिपूर्वसवर्णदीर्घः पृषोदरादित्वाद्वर्णलोपः अरिप्राः अपापाः स्वसारः स्वयमेव सरंत्यः परस्परंभगिन्योवा गंगाद्यानद्यः हिन्वन्ति यागसाधनत्वेन प्रीणयन्ति हिविः प्रीणनार्थः भौवादिकः व्यत्ययेनशः इदित्वान्नुम् यद्वा हिगतौवृद्धौच स्वादिभ्यःश्नुः वृष्टचर्थं तमिन्द्रमुपगच्छन्ति गत्वाच शवसा यागजन्येनबलेन तं वर्धयन्ति च ॥ ९ ॥

॥ इत्यष्टमस्य सप्तमे द्वितीयोवर्गः ॥ २ ॥

हिरण्यगर्भइति दशर्चं नवमंसूक्तं प्रजापतिपुत्रस्य हिरण्यगर्भाख्यस्यार्षं त्रैष्टुभं कशब्दाभिधेयःप्रजापतिर्देवता । तथाचानुक्रान्तं—हिरण्यगर्भोदश हिरण्यगर्भःप्राजापत्यः कायमिति । गतःसूक्तविनियोगः । प्राजापत्यस्यपशोर्वपापुरोडाशहविषांक्रमेणादितस्तिस्रोनुवाक्याः ततस्तिस्रोयाज्याः । सूत्रितंच—हिरण्यगर्भःसमवर्तताग्रइतिषट्प्राजापत्याइति । वरुणप्रघासेषुकायस्यहविषोहिरण्यगर्भइत्येषायाज्या । सूत्रितंच—कयानश्चित्रआभुवद्धिरण्यगर्भःसमवर्तताग्रइतिप्रतिप्रस्थातावाजिनेतृतीयइति ।

सैषा प्रथमा—

**हिरण्यगर्भःसमवर्तताग्रेभूतस्यंजातःपतिरेकआसीत् ।**
**सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ १ ॥**

**हिरण्यऽगर्भः । सम् । अवर्तत । अग्रे । भूतस्य । जातः ।**
**पतिः । एकः । आसीत् । सः । दाधार । पृथिवीम् । द्याम् ।**
**उत । इमाम् । कस्मै । देवाय । हविषा । विधेम ॥ १ ॥**

हिरण्यगर्भः हिरण्मयस्यांडस्यगर्भभूतः प्रजापतिर्हिरण्यगर्भः । तथाचतैत्तिरीयकं—प्रजापतिर्वैहिरण्यगर्भःप्रजापतेरनुरूपत्वायेति । यद्वा हिरण्मयःअंडोगर्भवद्यस्यउदरेवर्तते सोसौसूत्रात्मा हिरण्यगर्भइतिउच्यते अग्रे प्रपंचोत्पत्तेःप्राक् समवर्तत मायाध्यक्षात् सिसृक्षोः परमात्मनः समजायत यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मणः उत्पत्तेः तदुपहितोप्युत्पन्नइत्युच्यते सच जातोजातमात्रएव एकः अद्वितीयःसन् भूतस्य विकारजातस्य ब्रह्मांडादेः सर्वस्य जगतः पतिरीश्वरआसीत् नकेवलं पतिरासीदेव अपि तर्हि सहिरण्यगर्भः पृथिवीं विस्तीर्णां द्यां दिवं उतापिच इमां अस्माभिर्दृश्यमानां पुरोवर्तिनीमिमां भूमिं यद्वा पृथिवीत्यन्तरिक्षनाम अन्तरिक्षं दिवं भूमिं च दाधारधारयति । छन्दसिलुङ्लङ्लिटइतिसार्वकालिकोलिट् तुजादित्वादभ्यासदीर्घः । कस्मै अत्रकिंशब्दःअनिर्ज्ञातस्वरूपत्वात्प्रजापतौवर्तते । यद्वा सृष्ट्यर्थं कामयतेइतिकः कमेर्डप्रत्ययः । यद्वा कं सुखं । तद्रूपत्वात्कइत्युच्यते अथवा इन्द्रेणपृष्टः प्रजापतिः मदीयं महत्वं तुभ्यं प्रदाय अहंकः कीदृशः स्यामित्युक्तवान्

सइन्द्रः प्रत्यूचे यदीदं ब्रवीषि अहंकःस्यामिति तदेवत्वंभवेति अतःकारणात् कइतिप्रजापतिराख्यायते । इन्द्रोवैवृत्रंहत्वासर्वाविजितोर्विजित्याब्रवीदित्यादिकंब्राह्मणंमन्त्रानुसंधेयं । यदासौ किंशब्दः तदा सर्वनामत्वात्स्मैभावःसिद्धः यदातु यौगिकः तदाव्यत्ययेनेतिद्रष्टव्यं सावेकाचइति प्राप्तस्य नगोश्वन्त्सावववर्णेतिप्रतिषेधः क्रियाग्रहणंकर्तव्यमिति कर्मणःसंप्रदानत्वाच्चतुर्थी कं प्रजापतिं देवाय देवं दानादिगुणयुक्तं हविषा प्राजापत्यस्यपशोर्वपारूपेण एककपालात्मकेन पुरोडाशेनवा विधेम वयमृत्विजः परिचरेम । विधतिः परिचरणकर्मा ॥ १ ॥

अथ द्वितीया—

यआत्मदाबलदायस्यविश्वंउपासंतेप्रशिषंयस्यंदेवाः ।
यस्यंछायामृतंयस्यंमृत्युःकस्मैदेवायंहविषांविधेम ॥ २ ॥

यः । आत्मऽदाः । बलऽदाः । यस्यं । विश्वें । उपऽआसंते ।
प्रऽशिषंम् । यस्यं । देवाः । यस्यं । छाया । अमृतंम् । यस्यं ।
मृत्युः । कस्मैं । देवायं । हविषां । विधेम ॥ २ ॥

यः प्रजापतिः आत्मदा आत्मनांदाता आत्मानोहिसर्वे तस्मात्परमात्मन उत्पद्यन्ते यथाग्नेःसकाशात् विस्फुलिंगाजायन्ते तद्वत् । यद्वा आत्मनांशोधयिता दैप् शोधने आतोमनिन्निति विच् बलदाः बलस्यचदाता शोधयितावा यस्यच प्रशिषं प्रकृष्टं शासनमाज्ञां विश्वे सर्वे प्राणिन उपासते प्रार्थयन्ते सेवन्तेवा । शासुअनुशिष्टौ शासइदित्युपधायाइत्वं शासिवसिघसीनांचेतिषत्वं कृदुत्तरपदप्रकृतिस्वरत्वं आसेरनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः तिङिचोदात्तवतीतिगतिरनुदात्ता तथादेवाअपि यस्य प्रशासनमुपासते अपिच अमृतं अमृतत्वं भावप्रधानोनिर्देशः । यद्वा अमृतं मरणंनास्ति अस्मिन्निति अमृतं सुधा बहुव्रीहौनञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वं । तदपि यस्य प्रजापतेः छाया छायेव भवति मृत्युर्यमश्चप्राणापहारी छायेवभवति तस्मै कस्मै देवायेत्यादिसमानं पूर्वेण हविषा पुरोडाशात्मनेतितु विशेषः ॥ २ ॥

---

१ ऐ० ब्रा० ३. २१ ।

अथ तृतीया—

यःप्राणतोनिमिषतोमहित्वैकइद्राजाजगतोबभूव ।
यईशेअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम ॥ ३ ॥

यः । प्राणतः । निऽमिषतः । महिऽत्वा । एकः । इत् । राजा ।
जगतः । बभूव । यः । ईशे । अस्य । द्विऽपदः । चतुःऽपदः ।
कस्मै । देवाय । हविषा । विधेम ॥ ३ ॥

योहिरण्यगर्भः प्राणतः प्रश्वसतः अनप्राणने आदादिकः शतुरनुमइतिविभक्तेरुदात्तत्वं निमिषतः अक्षिपक्ष्मचलनंकुर्वतः अत्रापिपूर्ववद्विभक्तिरुदात्ता जगतः जंगमस्य प्राणिजातस्य महित्वा महित्वेन सुपांसुलुगितितृतीयायाआकारः माहात्म्येन एकइत् अद्वितीयएव सन् राजा बभूव ईश्वरोभवति भवतेर्णलि लितीतिप्रत्ययात्पूर्वस्योदात्तत्वं अस्य परिदृश्यमानस्य द्विपदः पादद्वययुक्तस्य मनुष्यादेः चतुष्पदोगवाश्वादेश्च यः प्रजापतिरीशे ईष्टे । ईशऐश्वर्ये आदादिकोनुदात्तेत् लोपस्तआत्मनेपदेष्विति तलोपः अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः अस्यऊडिदमिति इदमोविभक्तिरुदात्ता द्वौपादौ यस्य सद्विपात् संख्यासुपूर्वस्येति पादस्यांत्यलोप समासान्तः भसंज्ञायां पादःपदितिपद्भावः द्वित्रिभ्यांपाद्दन्मितिएकदेशविकृतस्यानन्यत्वादुत्तरपदान्तोदात्तत्वं स्वरवर्जमेषैव चतुष्पदइत्यत्रापि प्रक्रिया बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरः पूर्वपदं त्रःसंख्यायाइत्याद्युदात्तं इदुदुपधस्यचाप्रत्ययस्येतिविसर्जनीयस्यषत्वं ईदृशोयः प्रजापतिः तस्मैकस्माइत्यादिसुबोधं हविषा हृदयाद्यात्मनेत्ययमत्रविशेषः ॥ ३ ॥

अथ चतुर्थी—

यस्येमेहिमवन्तोमहित्वायस्यसमुद्रंरसयासहाहुः ।
यस्येमाःप्रदिशोयस्यबाहूकस्मैदेवायहविषाविधेम ॥ ४ ॥

यस्य । इमे । हिमऽवन्तः । महिऽत्वा । यस्य । समुद्रम् ।
रसया । सह । आहुः । यस्य । इमाः । प्रऽदिशः । यस्य ।
बाहू इति । कस्मै । देवाय । हविषा । विधेम ॥ ४ ॥

हिमा अस्मिन्सन्तीति हिमवान् तेनबहुवचनान्तेन सर्वेपर्वतालक्ष्यंते यथा छत्रिणोगच्छन्तीति हिमवन्तोहिमवदुपलक्षिताः इमे दृश्यमानाः सर्वे पर्वताः यस्य प्रजापतेः महित्वा महत्त्वं माहात्म्यमैश्वर्यमित्याहुः तेन सृष्टत्वात्तद्रूपेणावस्थानाद्वा तथा रसया रसोजलं तद्वती रसा नदी अर्शआदित्वादच् जातावेकवचनं रसाभिः नदीभिः सह समुद्रं पूर्ववदेकवचनं सर्वान्समुद्रान् यस्य महाभाग्यमित्याहुः कथयन्ति सृष्टचभिज्ञाः यस्यच इमाः प्रदिशः प्राच्यारंभा आग्नेय्याद्याः कोणदिशः ईशान्यन्ताः तथा बाहू वचनव्यत्ययः बाहवः भुजाः भुजवत्प्राधान्ययुक्ताः प्रदिशश्चयस्यस्वभूताः तस्मै कस्माइत्यादि समानं पूर्वेण ॥ ४ ॥

अथ पंचमी—

**येनद्यौरुग्रापृथिवीचदृह्लायेनस्वःस्तभितंयेननाकः ।**
**योअन्तरिक्षेरजसोविमानःकस्मैदेवायहविषाविधेम ॥ ५ ॥ ३ ॥**

येन । द्यौः । उग्रा । पृथिवी । च । दृह्ला । येन । स्वरिति स्वः ।
स्तभितम् । येन । नाकः । यः । अन्तरिक्षे । रजसः ।
विऽमानः । कस्मै । देवाय । हविषा । विधेम ॥ ५ ॥ ३ ॥

येन प्रजापतिना द्यौः अन्तरिक्षं उग्राउद्गूर्णविशेषा गहनरूपावा पृथिवी भूमिश्च दृह्ला येन स्थिरीकृता स्वः स्वर्गश्च येन स्तभितं स्तब्धंकृतं यथाधोनपतति तथाउपर्यवस्थापितमित्यर्थः । ग्रसितस्कभितस्तभितेतिनिपात्यते तथा नाकआदित्यश्च येनान्तरिक्षेस्तभितः यश्चान्तरिक्षेरजसउदकस्यविमानोनिर्माता तस्मै कस्माइत्यादि गतं ॥ ५ ॥

॥ इत्यष्टमस्य सप्तमे तृतीयोवर्गः ॥ ३ ॥

अथ षष्ठी—

**यंक्रन्दसीअवसातस्तभानेअभ्यैक्षेतांमनसारेजमाने ।**
**यत्राधिसूरउदितोविभातिकस्मैदेवायहविषाविधेम ॥ ६ ॥**

यम् । क्रन्दसी इति । अवसा । तस्तभाने इति । अभि । ऐक्षेताम् ।
मनसा । रेजमाने इति । यत्र । अधि । सूरः । उत्ऽइतः ।
विऽभाति । कस्मै । देवाय । हविषा । विधेम ॥ ६ ॥

क्न्दितवान् रोदितवाननयोः प्रजापतिरिति क्रन्दसी द्यावापृथिव्यौ श्रूयतेहि—यदरोदीत्तदनयोरोदस्त्वमिति । ते अवसा रक्षणेनहेतुना लोकस्य रक्षणार्थं तस्तभाने प्रजापतिनासृष्टे लब्धस्थैर्येसत्यौ यं प्रजापतिं मनसा बुध्याध्यैक्षेतामावयोर्महत्त्वमनेनेत्यभ्यपश्येतां ईक्षदर्शने लङि अजादित्वादाद्युदात्तः कीदृश्यौ द्यावापृथिव्यौ रेजमाने राजमाने दीप्यमाने आकारस्य व्यत्ययेनैत्वं अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः । यद्वा लिटःकानच् फणांचसप्तानामित्येत्वाभ्यासलोपौ छन्दस्युभयथेतिसार्वधातुकत्वाच्छप् अभ्यस्तानामादिरित्याद्युदात्तत्वं यत्राधि यस्मिन्नाधारभूते प्रजापतौ सूरः सूर्यः उदितः उदयंप्राप्तः सन् विभाति प्रकाशते उत्पूर्वादितेः कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं तस्मै कस्माइत्यादि सुज्ञानं ॥ ६ ॥

अथ सप्तमी—

आपोहयद्बृहतीर्विश्वमायन्गर्भंदधानाजनयन्तीरग्निम् ।
ततोदेवानांसमवर्ततासुरेकःकस्मैदेवायहविषाविधेम ॥ ७ ॥

आपः । ह । यत् । बृहतीः । विश्वम् । आयन् । गर्भम् ।
दधानाः । जनयन्तीः । अग्निम् । ततः । देवानाम् । सम् । अवर्तत ।
असुः । एकः । कस्मै । देवाय । हविषा । विधेम ॥ ७ ॥

बृहतीः बृहत्योमहत्यः जसि वाछन्दसीति पूर्वसवर्णदीर्घः बृहन्महतोरुपसंख्यानमिति ङीपउदात्तत्वं अग्निं उपलक्षणमेतत् अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयन्तीर्जनयन्त्यः तदर्थं गर्भं हिरणमयांडस्य गर्भभूतं प्रजापतिं दधानाः धारयन्त्यः आपोहआपएव विश्वमायन् सर्वं जगद्व्याप्नुवन् यद्यस्मात् ततस्तद्धेतोर्देवानां देवादीनां सर्वेषां प्राणिनां असुः प्राणभूतएकः प्रजापतिः समवर्तत समजायत । यद्वा यत्यं गर्भं दधानाआपोविश्वात्मनावस्थिताः ततोगर्भभूतात्प्रजापतेः देवादीनां प्राणात्मकोवायुः अजायत अथवा यत् लिंगवचनयोर्व्यत्ययः उक्तलक्षणायाआपः विश्वमावृत्यस्थिताः ताः ततः ताभ्योद्भ्यः सकाशात् एकोद्वितीयः असुः प्राणात्मकः प्रजापतिः समवर्ततनिश्चक्राम तस्मै कस्माइत्यादि गतं ॥ ७ ॥

अथाष्टमी—

यश्चिदापोमहिनापर्यपश्यद्दक्षंदधानाजनयन्तीर्यज्ञम् ।
योदेवेष्वधिदेवएकआसीत्कस्मैदेवायहविषाविधेम ॥ ८ ॥

यः । चित् । आपः । महिना । परिऽअपश्यत् । दक्षम् । दधानाः ।
जनयन्तीः । यज्ञम् । यः । देवेषु । अधि । देवः । एकः ।
आसीत् । कस्मै । देवाय । हविषा । विधेम ॥ ८ ॥

यज्ञं यज्ञोपलक्षितं विकारजातं जनयन्तीरुत्पादयन्तीः तदर्थं दक्षं प्रपंचात्मना वर्धिष्णुं प्रजापतिं आत्मनिदधानाधारयित्रीः दधातेर्हैतौशानच् अभ्यस्तानामादिरित्याद्युदात्तत्वं ईदृशीरापः व्यत्ययेन प्रथमा अपः प्रलयकालीनाः महिना महिम्ना छान्दसोमलोपः स्वमाहात्म्येन यश्च प्रजापतिः पर्यपश्यत् परितोदृष्टवान् यश्चदेवेष्वधि देवेषु मध्ये देवः तेषामपीश्वरः सन् एकः अद्वितीयः आसीत् भवति अस्तेश्छान्दसोलुङ् अस्तिसिचोपृक्तइतीडागमः तस्मैकस्माइत्यादि गतं ॥ ८ ॥

अथ नवमी—

मानोहिंसीज्जनिताथःपृथिव्यायोवादिवंसत्यधर्माजजान ।
यश्चापश्चन्द्राबृहतीर्जजानकस्मैदेवायहविषाविधेम ॥ ९ ॥

मा । नः । हिंसीत् । जनिता । यः । पृथिव्याः । यः । वा । दिवम् ।
सत्यऽधर्मा । जजान । यः । च । अपः । चन्द्राः । बृहतीः ।
जजान । कस्मै । देवाय । हविषा । विधेम ॥ ९ ॥

सप्रजापतिः नोस्मान्माहिंसीत् माबाधतां यः पृथिव्याभूमेः जनिता जनयिता स्रष्टा जनितामंत्रइति णिलोपोनिपात्यते उदात्तयणोहल्पूर्वादिति पृथिवीशब्दाद्विभक्तेरुदात्तत्वं योवा यश्चसत्यधर्मा सत्यमवितथं धर्मंजगतोधारणं यस्य सताद्दशः प्रजापतिः दिवंअन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान जनयामास । जनी प्रादुर्भावे णिचि वृद्धौ जनीजृष्क्नसुरंजइति मित्वान्मितांह्रस्वइति ह्रस्वत्वं ततोलिटि अमंत्रइति निषेधादाम्प्रत्य-

याभावे तिपोणलिवृद्धौ लितीति प्रत्ययात्पूर्वस्योदात्तत्वं यश्च बृहतीः महतीः चन्द्राः आह्लादिनीः अपउदकानि जजान जनयामास ऊडिदमित्यादिना अप्शब्दादुत्तरस्य शसउदात्तत्वं तस्मै कस्माइत्यादिगतं ॥ ९ ॥

इळादधाख्ये इष्ट्ययने प्राजापत्यस्य हविषः प्रजापतइत्येषानुवाक्या । सूत्रितंच—प्राजापत्यइळादधः प्रजापतेनत्वदेतान्यन्यइति । केशनखकीटादिभिः दुष्टानि हवींषि अनयैवाप्सु प्रक्षिपेत् । सूत्रितंच—आपोभ्यवहरेयुः प्रजापतेनत्वदेतान्यन्यइति । चौलादिकर्मस्वप्येषा होमार्था । सूत्रितंच—तेषां पुरस्ताच्चतस्रआज्याहुतीर्जुहुयादग्नआयूंषिपवसइतितिसृभिः प्रजापतेनत्वदेतान्यन्यइतिच ।

सैषा दशमी—

**प्रजा॑पते॒नत्वदे॒तान्य॒न्योविश्वा॑जा॒ता॑नि॒परि॒ताब॑भूव ।**
**यत्का॑मास्तेजुहु॒मस्तन्नो॑अस्तुव॒यंस्या॑म॒पत॑योरयी॒णाम् ॥ १० ॥ ४ ॥**

प्रजा॑पते॒नत्वदे॒तान्य॒न्योविश्वा॑जा॒ता॑नि॒परि॒ताब॑भूव ।
यत्का॑मास्तेजुहु॒मस्तन्नो॑अस्तुव॒यंस्या॑म॒पत॑योरयी॒णाम् ॥ १० ॥ ४ ॥

हेप्रजापते त्वत् त्वत्तोन्यः कश्चित् एतानि इदानीं वर्तमानानि विश्वा विश्वानि सर्वाणि शेश्छन्दसि बहुलमिति शेर्लोपः जातानि प्रथमविकारभांजि ता तानि सर्वाणि भूतजातानि नपरिबभूव नपरिगृह्णाति नव्याप्नोति त्वमेव एतानि परिगृह्य स्रष्टुं शक्नोषीतिभावः । परिपूर्वोभवतिः परिग्रहार्थः वयंच यत्कामाः यत्फलं कामयमानाः ते तुभ्यं जुहुमः हवींषि प्रयच्छामः तत्फलं नोस्माकं अस्तु भवतु तथा वयंच रयीणां धनानां पतयईश्वराः स्याम भवेम नामन्यतरस्यां इति नामउदात्तत्वं ॥ १० ॥

॥ इत्यष्टमस्य सप्तमे चतुर्थोवर्गः ॥ ४ ॥

वसुंनेत्यष्टर्चं दशमं सूक्तं वसिष्ठपुत्रस्य चित्रमहसआर्षं आग्नेयं आद्यापंचमी त्रिष्टुभौ शिष्टाजगत्यः । तथाचानुक्रान्तं—वसुंनाष्टौ चित्रमहावासिष्ठआग्नेयं जागतमाद्यापंचमीं चर्तेइति । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ जागते छन्दसीदं सूक्तं । सूत्रितंच—वसुंनचित्रमहसमितिजागतमिति ।

तत्र प्रथमा—

वसुंनचित्रमंहसंगृणीषेवामंशेवमतिथिमद्विषेण्यम् ।
सरासतेशुरुधोविश्वधायसोग्निर्होतागृहपतिःसुवीर्यम् ॥ १ ॥

वसुम् । न । चित्रऽमंहसम् । गृणीषे । वामम् । शेवम् ।
अतिथिम् । अद्विषेण्यम् । सः । रासते । शुरुधः । विश्वऽधायसः ।
अग्निः । होता । गृहऽपतिः । सुऽवीर्यम् ॥ १ ॥

वसुंन वासकं सूर्यमिव चित्रमहसं चायनीयतेजस्कं अग्निं गृणीषेगृणे स्तौमि । गृशब्दे क्र्यादिकः पुरुषव्यत्ययः प्वादित्वाद्ध्रस्वः यद्वा चित्रमहसमिति प्रथमार्थे द्वितीया नेतिसंप्रत्यर्थे संप्रति वासकमग्निं अहं चित्रमहाः स्तौमि कीदृशं वामं वननीयं शेवं सुखकरं अतिथिं अतिथिवत्पूज्यं यद्वा हविर्वहनाय सततगामिनं अद्विषेण्यं द्वेषरहितं द्विषेःकृत्यार्थे तवैकेनिति केन्प्रत्ययः नञा बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं सोग्निः शुरुधः शोकस्य रोधयित्रीः निवारयित्रीः विश्वधायसःक्षीरप्रदानादिना विश्वं सर्वं जगद्धारयन्तीर्गाः सुवीर्यं शोभनवीर्यं च रासते यजमानेभ्योददाति रादाने अस्मात् लेडयडागमः सिब्बहुलमिति सिप् व्यत्ययेनात्मनेपदं विश्वशब्दोपपदाद्दधातेर्वहिहाधाञ्भ्यइत्यसुन् णिदित्यनुवृत्तेरातोयुक्चिणिति युक् मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वं । कीदृशोग्निः होता देवानामाह्वाता होमनिष्पादकोवा गृहपतिः यजमानगृहाणामीश्वरः गेहेकइति ग्रहेः कप्रत्ययः ग्रहिज्यादिना संप्रसारणं पत्यावैश्वर्यइति पूर्वपदप्रकृतिस्वरत्वं शोभनं वीर्यं यस्येति बहुव्रीहौवीरवीर्यौचेति उत्तरपदाद्युदात्तत्वं ॥ १ ॥

अथ द्वितीया—

जुषाणोअंग्नेप्रतिंहर्यमेवचोविश्वानिविद्वान्वयुनानिसुक्रतो ।
घृतंनिर्णिग्ब्रह्मणेगातुमेरयतवंदेवाअंजनयन्ननुंव्रतम् ॥ २ ॥

जुषाणः । अग्ने । प्रति । हर्य । मे । वचः । विश्वानि । विद्वान् ।
वयुनानि । सुक्रतो इति सुऽक्रतो । घृतंऽनिर्निक् । ब्रह्मणे । गातुम् ।
आ । ईरय । तव । देवाः । अजनयन् । अनु । व्रतम् ॥ २ ॥

हेअग्ने जुषाणः प्रीयमाणस्त्वं मे मम वचोवचनं स्तोत्रं प्रतिहर्यं कामयस्व हर्यंगतिकान्त्योः तथा हेसुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा त्वं विश्वानि सर्वाणि वयुनानि ज्ञाननामैतत् इह ज्ञातव्ये वर्तते ज्ञातव्यान्यर्थजातानि विद्वान् जानन् वर्तसे हेतौ शतृप्रत्ययः यतोजानासि ततोहेतोः मद्वचनं कामयस्वेत्यर्थः । हेघृतनिर्णिक् घृतेनाज्येन निर्णिज्यमानपुष्यमाणशरीर णिजिर्शौचपोषणयोः यद्वा निर्णिगिति रूपनाम दीप्तरूपाग्ने ब्रह्मणे ब्राह्मणाय यजमानाय गातुं गातव्यंज्ञातव्यं वा यज्ञं एरय आगमय तव व्रतंत्वदीयंयज्ञकर्मानुपश्चाद्देवाइन्द्रादयः सर्वे अजनयन् यजमानाय फलानि जनयन्ति अतस्त्वदीयं यज्ञं यजमानाय प्रापयेत्यर्थः । लक्षणे अनोः कर्मप्रवचनीयत्वं व्रतमिति कर्मप्रवचनीययुक्तइति द्वितीया जनेर्ण्यन्ताच्छान्दसोलङ् जनीजॄष्क्नसुरंजोमन्ताश्चेति मित्वान्मितांह्रस्वइति ह्रस्वत्वं ॥ २ ॥

अथ तृतीया—

सप्तधामानिपरियन्नमर्त्योदाशद्दाशुषेसुकृतेमामहस्व ।
सुवीरेणरयिणाग्नेस्वाभुवायस्तआनट्समिधातंजुषस्व ॥ ३ ॥

सप्त । धामानि । परिऽयन् । अमर्त्यः । दाशत् । दाशुषे । सुऽकृते ।
ममहस्व । सुऽवीरेण । रयिणा । अग्ने । सुऽआभुवा । यः । ते ।
आनट् । सम्ऽइधा । तम् । जुषस्व ॥ ३ ॥

हे अग्ने सप्त सप्तसंख्याकानि धामानि स्थानानि पृथिव्यादिलोकात्मकानि परियन् परितोगच्छन् अमर्त्यः मरणधर्मरहितस्त्वं योयजमानः पुरोडाशादीनि हवींषि दाशत् प्रयच्छति तस्मै दाशुषे दत्तवते सुकृते सुष्टुयागं कृतवते ममहस्व अपेक्षितं धनं ददस्व मंहतिर्दानकर्मा सुकर्मपापेत्यादिना सुपूर्वात्कृञोभूतेकाले क्विप् । यश्च यजमानः समिधा समिन्धनसाधनेन इध्मेन हेअग्ने ते त्वां आनट् प्राप्नोति नशतिर्गतिकर्मा अस्माच्छान्दसोलङ् बहुलं छन्दसीति शपोलुक् छन्दस्यपि दृश्यतइत्याडागमः अश्नोतेर्वाव्यत्ययेन श्नम् तं यजमानं सुवीरेण शोभनावीराः पुत्राः यस्य वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वं तादृशेन स्वाभुवा सुष्टु आसमन्ताद्भूष्णुना रयिणा धनेन दातव्येन सार्धं जुषस्व ॥ ३ ॥

अथ चतुर्थी—

यज्ञस्यकेतुंप्रथमंपुरोहितंहविष्मन्तईळतेसप्तवाजिनम् ।
शृण्वन्तमग्निंघृतपृष्ठमुक्षणंपृणन्तंदेवःपृणतेसुवीर्यम् ॥ ४ ॥

यज्ञस्य । केतुम् । प्रथमम् । पुरःऽहितम् । हविष्मन्तः । ईळते ।
सप्त । वाजिनम् । शृण्वन्तम् । अग्निम् । घृतऽपृष्ठम् । उक्षणम् ।
पृणन्तम् । देवम् । पृणते । सुऽवीर्यम् ॥ ४ ॥

यज्ञस्य यागस्य केतुं प्रज्ञापकं प्रथमं सर्वेषु देवेषु मुख्यं प्रथमस्थानं वा पुरोहितं पुरतोहितकारिणं यद्वा पुरस्तात्पूर्वस्यां दिशि आहवनीयरूपेण निहितं पूर्वाधरेत्यादिना पूर्वशब्दादसिः प्रत्ययः तत्सन्नियोगेन प्रकृतेः पुरादेशश्च तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञायां पुरोव्ययमिति गतिसंज्ञा धाञः कर्मणि निष्ठा दधातेर्हिः ततः समासे गतिरनन्तरइति गतेः प्रकृतिस्वरत्वं वाजिनं बलवन्तं अन्नवन्तंवा शृण्वन्तं अस्मत्स्तुतीः श्रोत्रेण जानन्तं घृतपृष्ठं दीप्तपृष्ठंदीप्ताङ्गं उक्षणं यागद्वारेण वृष्टेः संभक्तारं यद्वा सेचनसमर्थं युवानं पृणते हविर्भिः प्रीणयित्रे यजमानाय पृणप्रीणने तौदादिकः शतुरनुमइति विभक्तेरुदात्तत्वं क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी हविर्भिः प्रीणयन्तं यजमानं धनैः प्रीणयन्तं यद्वा पृणतिर्दानकर्मा हवींषि ददते यजमानाय पृणन्तं धनानि प्रयच्छन्तं सुवीर्यं शोभनवीर्योपेतं देवं द्योतमानं दानादिगुणयुक्तं वा एवंगुणविशिष्टमग्निं हविष्मन्तः हविर्भिर्युक्ताः सप्तहोतृप्रमुखाः वषट्कर्तारः ईळते स्तुवन्ति ईडस्तुतौ आदादिकः ॥ ४ ॥

अथ पंचमी—

त्वंदूतःप्रथमोवरेण्यःसहूयमानोअमृतायमत्स्व ।
त्वांमर्जयन्मरुतोदाशुषोगृहेत्वांस्तोमेभिर्भृगवोविरुरुचुः ॥५॥५॥

त्वम् । दूतः । प्रथमः । वरेण्यः । सः । हूयमानः । अमृताय । मत्स्व ।
त्वाम् । मर्जयन् । मरुतः । दाशुषः । गृहे । त्वाम् । स्तोमेभिः ।
भृगवः । वि । रुरुचुः ॥ ५॥ ५॥

हेअग्ने त्वं दूतोदेवानां दूतकर्मणि नियुक्तः प्रथमः मुख्यः प्रथितः प्रख्यातोवा वरेण्यः संभजनीयश्चासि सत्वं अमृताय अमरणाय तदर्थं नोस्माभिराहूयमानः हविषा तर्प्यमाणोवा सन् मत्स्व तृप्यस्व मदीहर्षे छान्दसोविकरणस्य लुक् । अपिच त्वां मध्यमस्थाने वैद्युतरूपेण वर्तमानं मरुतः तत्रत्या देवगणाः मर्जयन् मार्जयन्ति अलंकुर्वन्ति तथा दाशुषः हवींषि दत्तवतोयजमानस्य गृहे स्तोमेभिः स्तोमैः स्तोत्रैः भृगवः भृगुगोत्राऋषयः त्वां विरुरुचुः विशेषेण दीपयन्ति भृगुशब्दादुत्तरस्य तद्धितस्य अत्रिभृगुकुत्सेत्यादिना बहुषु लुक् रुरुचुः रुचदीप्तौ अस्माच्छान्दसोलिट् ॥ ५ ॥

॥ इत्यष्टमस्य सप्तमे पंचमोवर्गः ॥ ५ ॥

अथ षष्ठी–

**इषँदुहन्त्सुदुघाँविश्वधायसंयज्ञप्रियेयजमानायसुक्रतो ।**
**अग्नेघृतस्नुस्त्रिर्ऋतानिदीद्यद्वर्तिर्यज्ञंपरियन्त्सुक्रतूयसे ॥ ६ ॥**

इषम् । दुहन् । सुऽदुघाम् । विश्वऽधायसम् । यज्ञऽप्रिये ।
यजमानाय । सुक्रतो इति सुऽक्रतो । अग्ने । घृतऽस्नुः । त्रिः ।
ऋतानि । दीद्यत् । वर्तिः । यज्ञम् । परिऽयन् । सुक्रतुऽयसे ॥ ६ ॥

हेसुक्रतो सुकर्मन् शोभनप्रज्ञवाग्ने यज्ञप्रिये यज्ञैर्हविर्भिः देवान् प्रीणयित्रे यजमानाय विश्वधायसं विश्वस्य सर्वस्य धारयित्रीं सुदुघां दोग्धुं सुशकां यज्ञरूपिणीं गां इषं इष्यमाणं यागफलरूपं पयोदुहन् क्षारयन् तथा घृतस्नुः घृतेनाज्येन प्रस्नातः स्नातेरौणादिकः कुप्रत्ययः यद्वा घृतोदीप्तः स्नुः सानुः समुच्छ्रितोज्वालासमूहोयस्य सतथोक्तः पदादिषु मांस्पृत्स्नूनामुपसंख्यानमिति सानुशब्दस्य स्नुभावः बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ईदृशः त्वं त्रिः त्रिवारमावृत्तानि ऋतानि सत्यभूतानि पृथिव्यादीनि त्रीणिस्थानानि यद्वा गार्हपत्यादीनि स्थानानि दीद्यत् दीपयन् वर्तिः सर्वयज्ञगृहं सर्वं अनुष्ठीयमानं यागंच परियन् परितोगच्छन् तत्तद्यज्ञगृहं तं तं यज्ञंच प्राप्नुवन् सुक्रतूयसे शोभनं क्रतुं यज्ञं आत्मनइच्छसि यद्वा शोभनः क्रतुर्यस्यासौ सुक्रतुर्यजमानः सइवाचरसि सयथा सम्यगनुष्ठाने प्रवर्तते एवं त्वमपि स्वयमेव यागस्य सम्यक् निष्पत्त्यर्थं प्रवर्तसे इत्यर्थः ॥ ६ ॥

अथ सप्तमी—

त्वामिदस्याउषसोव्युंष्टिषुदूतंकृण्वानाअयजन्तमानुंषाः ।
त्वांदेवामंहयाय्यांयवावृधुराज्यंमग्नेनिमृजन्तोंअध्वरे ॥ ७ ॥

त्वाम् । इत् । अस्याः । उषसंः । विऽउंष्टिषु । दूतम् । कृण्वानाः ।
अयजन्त । मानुंषाः । त्वाम् । देवाः । महयाय्यांय ।
वावृधुः । आज्यम् । अग्ने । निऽमृजन्तः । अध्वरे ॥ ७ ॥

अस्याः इदानीं दृश्यमानायाउषसः व्युष्टिषु विवासनेषु प्रभातेषु सत्सु हेअग्ने त्वामित् त्वामेव देवानां दूतं कृण्वानाः कुर्वाणाः मानुषाः मनुष्याः अयजन्त यजन्ति सर्वदेवतात्मकं त्वामेव यजन्तीत्यर्थः । तथादेवाअपि त्वां महयाय्याय पूजायै महपूजायां अस्मादौणादिकोभावे आय्यः आत्मनः पूजार्थं वावृधुः वर्धयन्ति किंकुर्वन्तः अध्वरे ध्वरोहिंसानिमित्तः प्रत्यवायः तद्रहिते यागे आज्यं उपलक्षणमेतत् आज्योपलक्षितं सर्वं हविः निमृजन्तः त्वयि निमार्जयन्तः प्रक्षिपन्तइत्यर्थः ॥ ७ ॥

अथाष्टमी—

नित्वावसिष्ठाअह्वन्तवाजिनंगृणन्तोंअग्नेविदथेषुवेधसंः ।
रायस्पोषंयजमानेषुधारययूयंपातस्वस्तिभिःसदानः ॥ ८ ॥ ६ ॥

नि । त्वा । वसिष्ठाः । अह्वन्त । वाजिनंम् । गृणन्तंः अग्ने ।
विदथेषु । वेधसंः । रायः । पोषंम् । यजमानेषु । धारय ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥ ६ ॥

हेअग्ने विदथेषु विदन्त्यस्मिन् यष्टव्यान् देवानिति विदथायज्ञाः तेषु वेधसः कर्मणां विधातारः गृणन्तः स्तुवन्तः वसिष्ठाः वसिष्ठपुत्राऋषयः वाजिनं अन्नवन्तं बलवन्तंवा त्वां न्यह्वन्त नितरामाह्वयन् अस्ताविषुर्वा । ह्वेञोलुङि निसमुपविभ्योह्वइत्यात्मनेपदं आत्मनेपदेष्वन्यतरस्यामिति च्लेरङादेशः वसिष्ठशब्दाद्विहितस्यापत्यार्थप्रत्ययस्य अत्रिभृगुकुत्सेत्यादिना बहुषु

लुक् सत्वं यजमानेष्वस्मासु रायोधनस्य पोषं पुष्टिं धारय अवस्थापय ऊडिदमित्यादिना रै शब्दात् षष्ठ्याउदात्तत्वं षष्ठ्याःपतिपुत्रेति विसर्जनीयस्य सत्वं । गतमन्यत् । एकस्मिन्नप्यग्नौ पूजार्थं बहुवचनं ॥ ८ ॥

॥ इत्यष्टमस्य सप्तमे षष्ठोवर्गः ॥ ६ ॥

अयंवेनइत्यष्टर्चमेकादशं सूक्तं भार्गवस्य वेनस्यार्षं त्रैष्टुभं वेनोदेवता । तथाचानुक्रान्तं—अयंवेनोवैन्यमिति । प्रवर्ग्येभिष्टवे आद्यानुवक्तव्या । सूत्रितंच—स्रक्केद्रप्सस्यायंवेनश्चोदयत्पृश्निगर्भाइति । वैश्वदेवशस्त्रेप्येषा धाय्या । सूत्रितंच—तक्षन्रथमयंवेनश्चोदयत्पृश्निगर्भा इति ।

सैषा प्रथमा—

अयंवेनश्चोदयत्पृश्निगर्भाज्योतिर्जरायूरजसोविमाने ।
इममपांसंगमेसूर्यस्यशिशुंनविप्रामतिभीरिहन्ति ॥ १ ॥

अयम् । वेनः । चोदयत् । पृश्निऽगर्भाः । ज्योतिःऽजरायुः ।
रजसः । विऽमाने । इमम् । अपाम् । सम्ऽगमे । सूर्यस्य ।
शिशुम् । न । विप्राः । मतिऽभिः । रिहन्ति ॥ १ ॥

वेनः कान्तः एतत्संज्ञोमध्यमस्थानोदेवः ज्योतिर्जरायुः ज्योतिर्द्योतमानोमेघो जरायुः उदरे गर्भोयेन वेष्टितोवतिष्ठते तज्जरायु तदिव वेष्टकोयस्य सतथोक्तः मेघमध्ये गर्भवदवस्थितइत्यर्थः विमाने विमीयन्ते निर्मीयन्तेस्मिन्नापइति विमानमन्तरिक्षं रजसउदकस्य निर्मातर्यन्तरिक्षे स्थितःसन् अयं वेनः पृश्निगर्भाःपृश्निरादित्यः तस्य गर्भभूताःयद्वा पृश्नयः सर्वोज्ज्वलवर्णाः सूर्यरश्मयः तेषां गर्भभूताः अन्तरिक्षस्थाअपः चोदयत् पृथिवीं प्रतिप्रेरयति अपामुदकानां आन्तरिक्ष्याणां सूर्यस्यच संगमे संगमनेन्तरिक्षे स्थितं इमं वेनं विप्रामेधाविनः स्तोतारः मतिभिः स्तुतिभिः रिहन्ति रिहतिरर्चतिकर्मा अर्चन्ति पूजयन्ति स्तुवन्तीत्यर्थः शिशुंन यथा बालं पुत्रं मातापित्राद्याबान्धवाः स्तुतिपदैरुपलालयन्ति तद्वत् ॥ १ ॥

तस्मिन्नेवाभिष्टवे समुद्रादूर्मिमित्येषा । सूत्र्यतेहि—समुद्रादूर्मिमुदियर्तिवेनोद्रप्सःसमुद्रमभि यज्जिगातीति ।

सैषा द्वितीया—

समुद्रादूर्मिमुदियर्तिवेनोनंभोजाःपृष्ठंहर्यतस्यंदर्शि ।
ऋतस्यसानावधिविष्टपिभ्राट्समानंयोनिमभ्यनूषतव्राः ॥ २॥

समुद्रात् । ऊर्मिम् । उत् । इयर्ति । वेनः । नभःऽजाः ।
पृष्ठम् । हर्यतस्य । दर्शि । ऋतस्य । सानौ । अधि ।
विष्टपि । भ्राट् । समानम् । योनिम् । अभि । अनूषत । व्राः ॥ २ ॥

समुद्रवंत्यस्मादापइति समुद्रमन्तरिक्षं तस्मादूर्मिं जलसमूहं अयं वेनः उदियर्ति उद्गम यति अधः पातयतीत्यर्थः । कीदृशः नभोजाः नभस्याकाशेस्य इमं वेनमभिशब्दायन्ते नुस्तुतौ कुटादिः छान्दसोलुङ् ॥ २ ॥

अथ तृतीया—

समानंपूर्वीरभिवावशानास्तिष्ठन्वत्सस्यमातरःसनीळाः ।
ऋतस्यसानावधिचक्रमाणारिहन्तिमध्वोअमृतस्यवाणीः ॥ ३ ॥

समानम् । पूर्वीः । अभि । वावशानाः । तिष्ठन् । वत्सस्य ।
मातरः । सऽनीळाः । ऋतस्य । सानौ । अधि । चक्रमाणाः ।
रिहन्ति । मध्वः । अमृतस्य । वाणीः ॥ ३ ॥

पूर्वीर्बह्व्यः समानं वेनस्यात्मनश्च साधारणं स्थानं प्राप्य अभिवावशानाः अभितः शब्दायमानाः यद्वातमेव वेनं अभिकामयमानाः वत्सस्य वत्सस्थानीयस्य वैद्युताग्नेर्मातरः मातृभूताः सनीळाः समाननिलयाः एवं विधाआन्तरिक्ष्याआपः तिष्ठन् तिष्ठन्ति अपिच ऋतस्योदकस्य सानावधि सानौसमुच्छ्रितेन्तरिक्षस्थाने चक्रमाणाः प्रवर्तमानाः मध्वः मधुरस्य अमृतस्योदकस्य वाणीः वाण्यः शब्दाः रिहन्ति इमं वेनं अर्चन्ति अलंकुर्वन्तीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

जानन्तोरूपमकृपन्तविप्रामृगस्यघोषंमहिषस्यहिग्मन् ।
ऋतेनयन्तोअधिसिन्धुमस्थुर्विदद्गन्धर्वोअमृतानिनाम ॥ ४ ॥

जानन्तः । रूपम् । अकृपन्त । विप्राः । मृगस्य । घोषम् । महिषस्य ।
हि । ग्मन् । ऋतेन । यन्तः । अधि । सिन्धुम् । अस्थुः ।
विदत् । गन्धर्वः । अमृतानि । नाम ॥ ४ ॥

विप्राः मेधाविनः स्तोतारः अस्य वेनस्य रूपं जानन्तः अकृपंत स्तुवन्ति कृपतिः स्तुतिकर्मा कथमस्य रूपं जानन्तीत्यतआह मृगस्य अन्वेषणीयस्य महिषस्यमहन्नामैतत् महतोवेनस्य घोषं गर्जितलक्षणं मेवस्थं शब्दं हियस्मात् ग्मन् अभिगच्छन्ति अतस्तदीयं रूपं जानन्तीत्यर्थः। गमेश्छान्दसे लुङि बहुलं छन्दसीति शपोलुक् गमहनेत्युपधालोपः बहुलं छन्दस्यमाङ्योगेपी त्यडभावः। अपिच ऋतेन सत्यभूतेन स्तोत्रेण यज्ञेन वा यन्तस्तं वेनंगच्छन्तः प्राप्नुवन्तः जनाः सिन्धुं स्यन्दनशीलं जलसमूहं अध्यस्थुः अधितिष्ठंति तेषां सवेनोवृष्टिं करोतीत्यर्थः। तत्रकिं कारणं इतिचेत् यतोयं गंधर्वः गवामुदकानां धर्तावेनः अमृतानि अमरणहेतुभूतानि नाम उदकनामैतत् नमनशीलान्युदकानि विदत् वेद जानाति तस्य वशेवर्तन्तइत्यर्थः अतः तद्भक्तानां वृष्टिः सुलभा ॥ ४ ॥

अथ पञ्चमी—

**अप्सराजारमुपसिष्मियाणायोषाबिभर्तिपरमेव्योमन् ।**
**चरत्प्रियस्ययोनिषुप्रियःसन्त्सीदत्पक्षेहिरण्ययेसवेनः ॥ ५ ॥ ७ ॥**

अप्सराः । जारम् । उपऽसिष्मियाणा । योषा । बिभर्ति ।
परमे । विऽओमन् । चरत् । प्रियस्य । योनिषु । प्रियः । सन् । सीदत् ।
पक्षे । हिरण्यये । सः । वेनः ॥ ५ ॥ ७ ॥

अप्सरा अपां सारयित्री अप्सु क्रीडार्थं सरन्तीवा उपसिष्मियाणा कान्तसमीपमुपगत्यईषद्धसन्ती स्मिङ्ईषद्धसने छान्दसोलिट् तस्य लिटःकानज्वेति कानच् ईदृशी योषा स्त्री विद्युद्रूपा जारं अपां जारयितारं यद्वा जारउपपतिः सइव प्रियं इमं वेनं परमेउत्कृष्टे व्योमन् व्योमनि अन्तरिक्षे बिभर्ति पोषयति धारयतिवा यथा काचित् रूपवती योषित् जारमुपगम्य ईषद्धसन्ती तं निर्जने स्थले पुष्णाति तद्वत् अनेन वेनेन विद्युद्रमतइत्यर्थः प्रियस्यास्य वेनस्य योनिषु स्थानेषु चरत् विद्युद्रूपायोषिच्चरति गच्छति अभिसारिकावत्स्वयमेव गच्छति सच

वेनः प्रियः अस्याः अनुकूलतमःसन् हिरण्यये हिरण्मये हिरण्मयवद्भास्वरे हितरमणीयरूपेवा पक्षे आत्मनः पक्षभूते मेवे सीदत् सीदति तयासहोपविशति ॥ ५ ॥

॥ इत्यष्टमस्य सप्तमे सप्तमोवर्गः ॥ ७ ॥

अभिष्टवे नाकेसुपर्णमित्येषा । सूत्रितंच—नाकेसुपर्णमुपयत्पतन्तमिति समाप्य प्रणवेनोपविशेदिति ।

सैषा षष्ठी—

नाकेसुपर्णमुपयत्पतन्तंहृदावेनन्तोअभ्यचक्षतत्वा।
हिरण्यपक्षंवरुणस्यदूतंयमस्ययोनौशकुनंभुरण्युम् ॥ ६ ॥

नाके । सुऽपर्णम् । उप । यत् । पतन्तम् । हृदा ।
वेनन्तः । अभि । अचक्षत । त्वा । हिरण्यऽपक्षम् । वरुणस्य ।
दूतम् । यमस्य । योनौ । शकुनम् । भुरण्युम् ॥ ६ ॥

हे वेन त्वा त्वां हृदा हृदयेन मनसा वेनन्तः कामयमानाः स्तोतारः नाकेन्तरिक्षे यद्यदा अभ्यचक्षत अभिपश्यन्ति तदानीं त्वं उपागच्छसीति शेषः । कथंभूतं सुपर्णं शोभनपतनं पतन्तं अन्तरिक्षे गच्छन्तं हिरण्यपक्षं हिरण्मयाभ्यां पक्षाभ्यां उपेतं वरुणस्य जलाभिमानिनोदेवस्य दूतं चारं यमस्य नियामकस्य वैद्युताग्नेः योनौ स्थानेन्तरिक्षे शकुनं पक्षिरूपेण वर्तमानं भुरण्युं भर्तारं यद्वा वृष्टिप्रदानादिना सर्वस्य जगतः पोषकं भुरणधारणपोषणयोः कंड्वादिः अस्मादौणादिकउप्रत्ययः ॥ ६ ॥

अथ सप्तमी—

ऊर्ध्वोगन्धर्वोअधिनाकेअस्थात्प्रत्यङ्चित्राबिभ्रदस्यायुधानि।
वसानोअत्कंसुरभिंदृशेकंस्व१र्णनामजनतप्रियाणि ॥ ७ ॥

ऊर्ध्वः । गन्धर्वः । अधि । नाके । अस्थात् । प्रत्यङ् ।
चित्रा । बिभ्रत् । अस्य । आयुधानि । वसानः । अत्कम् ।
सुरभिम् । दृशे । कम् । स्वः । न । नाम । जनत । प्रियाणि ॥ ७ ॥

ऊर्ध्वः उपरिदेशे वर्तमानः गंधर्वः गवामुदकानां धर्ता गविगंधृञोवइति गोशब्दोपपदात् धृञ्धारण इत्यस्माद्वप्रत्ययः उपपदस्य गंभावश्च ईंदृशोवेनः प्रत्यङ् अस्मत्प्रत्यंचनः अभिमुखः सन् नाकेधि अन्तरिक्षे अस्थात् तिष्ठति किंकुर्वन् अस्य आत्मनः स्वभूतानि चित्रा चित्राणि चायनीयान्याश्चर्यभूतानि वा आयुधानि बिभ्रत् धारयन्। बिभर्तेः शतरि भृञामिदित्यभ्यासस्येत्वं नाभ्यस्ताच्छतुरितिनुम्प्रतिषेधः अभ्यस्तानामादिरित्याद्युदात्तत्वं। तथा सुरभिं शोभनं अत्कं आत्मीयं व्याप्तं रूपं वसानः सर्वत्राच्छादयन् किमर्थंदृशोदर्शनार्थं दृशेविख्येचेति केमत्ययान्तोनिपात्यते कर्मितिपूरणः। तत्र दृष्टान्तः—स्वर्ण स्वः शोभनारणआदित्यः सयथात्मीयं रूपं दर्शनाय सर्वत्राच्छादयति तद्वत् तदनन्तरं नाम नामानि नमनशीलान्युदकानि प्रियाणि सर्वेषामनुकूलानि जनत जनयति वृष्टिमुत्पादयतीत्यर्थः ॥ ७ ॥

प्रवर्ग्येभिष्टवे द्रप्सःसमुद्रमित्येषा । सूत्रितंच—द्रप्सःसमुद्रमभियज्जिगाति सखेसखायमभ्याववृत्स्वेति ।

सैषाष्टमी—

द्रप्सःसमुद्रमभियज्जिगातिपश्यन्गृध्रस्यचक्षसाविधर्मन् ।
भानुःशुक्रेणशोचिषाचकानस्तृतीयेचक्रेरजसिप्रियाणि ॥८॥८॥

द्रप्सः । समुद्रम् । अभि । यत् । जिगाति । पश्यन् ।
गृध्रस्य । चक्षसा । विऽधर्मन् । भानुः । शुक्रेण ।
शोचिषा । चकानः । तृतीये । चक्रे । रजसि । प्रियाणि ॥ ८ ॥ ८ ॥

विधर्मन् विधर्मणि विधारकेन्तरिक्षे स्थितः द्रप्सः द्रवणशीलः यद्वा द्रप्साउदकबिंदवः तद्वान् अर्शआदित्वादच् गृध्रस्य गृधोरसानभिकांक्षतः सूर्यस्य चक्षसा तेजसा पश्यन् प्रकाशमानोवेनः यद्यदा समुद्रं समुन्दनशीलं मेघं अभिजिगाति अभिगच्छति तदानीं भानुः सूर्यः शुक्रेण शुभ्रेण शोचिषा तेजसा तृतीयेरजसि लोके चकानो दीप्यमानः प्रियाणि सर्वेषामभीष्टानि उदकानि चक्रे करोति ॥ ८ ॥

॥ इत्यष्टमस्य सप्तमेष्टमोवर्गः ॥ ८ ॥

इमंनोअग्नइति नवर्चं द्वादशंसूक्तं द्वितीयाद्याभिस्तिसृभिः अग्निर्ऋषिर्भूत्वा स्वात्मानं देवतारूपेणास्तौत् अतस्तासां सएवऋषिः देवताच शिष्टाभिरग्निवरुणसोमा अस्तुवन् अतस्तासां षण्णां तेऋषयः आद्याग्नेयी नवमीन्द्रदेवत्या शिष्टासु चतसृषु लिंगोक्तदेवता सप्तमीजगती शिष्टास्त्रिष्टुभः । तथाचानुक्रान्तं—इमंनोनवैन्द्र्युत्तमानिहवोग्निवरुणसोमानामाद्याग्नेयीतिस्रश्चाग्नेरात्मस्तवः शिष्टा यथानिपातं सप्तमीजगतीति । गतोविनियोगः ।

तत्र प्रथमा—

इमंनोअग्नउपयज्ञमेहिपञ्चयामंत्रिवृतंसप्ततन्तुम् ।
असोहव्यवाळुतनःपुरोगाज्योगेवदीर्घन्तमआशयिष्ठाः ॥ १ ॥

इमम् । नः । अग्ने । उप । यज्ञम् । आ । इहि । पञ्चऽयामम् ।
त्रिऽवृतम् । सप्तऽतन्तुम् । असः । हव्यऽवाट् । उत । नः ।
पुरःऽगाः । ज्योक् । एव । दीर्घम् । तमः । आ । अशयिष्ठाः ॥ १ ॥

भ्रातृषु हविर्वहनेषु मृतेषु मरणभीत्या कृतपलायनं गुहायां निगूढमग्निं अग्न्याद्याः सूक्तद्रष्टारऋषयः अनया आह्वयन् हे अग्ने नोस्माकं इमं यज्ञं उपेहि उपागच्छ प्राप्नुहि मापलायिष्ठाः कीदृशं पंचयामं यजमानपंचमैर्ऋत्विग्भिः नियमितं यद्वा धानाकरंभादिभिः पंचभिर्हविर्भिः पंचभिः प्रयाजैर्वाप्राप्तं त्रिवृतं पाकयज्ञहविर्यज्ञसोमयज्ञभेदेन सवनत्रयात्मनावा त्रिगुणं सप्ततन्तुं सप्ततंतवस्तनितारः कर्मणां विस्तारयितारोहोत्राद्याः सप्तवषट्कर्तारः यस्य यद्वा अग्निष्टोमोत्यग्निष्टोमउक्थ्यः षोडशी वाजपेयोतिरात्रोप्तोर्यामइति सप्तधा विस्तीर्यमाणं ईदृशं यज्ञमुपगत्यचानन्तरं नोस्माकं हव्यवाट् हव्यानां हविषां वोढा असः भव अस्तेर्लेटयडागमः । उतापिच नोस्माकं पुरोगाः पुरतोगन्ता भव जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वं ज्योक् चिरकालमेव अस्मान् परित्यज्य दीर्घं तमः महदन्धकारं गुहायां आशयिष्ठाः आस्थाय शयनमकार्षीः इतऊर्ध्वं तस्मात् स्थानात् अस्मानागच्छेत्यर्थः ॥ १ ॥

अथ द्वितीया—

अदे॑वाद्दे॒वः प्र॒चता॒ गुहा॒ यन्प्र॒पश्य॑मानो अमृत॒त्वमे॑मि ।
शि॒वं यत्सन्त॒मशि॑वो॒ जहा॑मि॒ स्वात्स॒ख्यादर॑णीं॒ नाभि॑मेमि ॥ २ ॥

अदे॑वात् । दे॒वः । प्र॒ऽचता॑ । गुहा॑ । यन् । प्र॒ऽपश्य॑मानः ।
अ॒मृ॒त॒ऽत्वम् । ए॒मि॒ । शि॒वम् । यत् । सन्त॑म् । अशि॑वः । जहा॑मि ।
स्वात् । स॒ख्यात् । अर॑णीम् । नाभि॑म् । ए॒मि॒ ॥ २ ॥

अदेवाददेवनशीलात् गुहा गुहायां वर्तमानात् सुपांसुलुगिति सप्तम्यालुक् प्रचता देवानां प्रयाचनेन हेतुना यन् निर्गच्छन् देवोदेवनशीलोहं प्रपश्यमानः देवैर्मदर्थं कल्पितं प्रयाजानुयाजादिलक्षणं हविर्भागं प्रपश्यमानः निरीक्षमाणः सन् अमृतत्वमेमि मरणधर्मराहित्यं देवत्वं प्राप्नोमि इणोर्व्यत्ययेनात्मनेपदं हविर्वहनाद्भीतः पलायितः अबादिषुस्थानेषु निगूढः पुनर्देवैर्हविर्वहनाय प्रार्थ्यमानः तैर्दत्तेन हविषा अहंदेवत्वं प्राप्तवानस्मीत्यर्थः । यद्यप्यहंगुहातोनिर्गत्य प्रकाशमानः सन् शोभनं यज्ञं निवर्तयामि तथापि शिवं शोभनं संतं भवन्तं यज्ञं अशिवः अशोभनरूपः अप्रकाशमानः सन् यद्यस्मिन् समाप्तिकाले जहामि परित्यजामि तदानीं नाभिं नहनशीलां बंधनशीलामरणीं अश्वत्थमेव स्वात् सख्यात् आत्मीयात् सखित्वात् चिरकालमश्वरूपोहं तत्र न्यवात्समिति स्नेहवशात् एमि प्राप्नोमि ॥ २ ॥

अथ तृतीया—

पश्य॑न्न॒न्यस्या॒ अति॑थिं व॒याया॑ ऋ॒तस्य॒ धाम॒ वि मि॑मे पु॒रूणि॑ ।
शंसा॑मि पि॒त्रे असु॑राय॒ शेव॑मयज्ञि॒याद्य॒ज्ञियं॑ भा॒गमे॑मि ॥ ३ ॥

पश्य॑न् । अ॒न्यस्याः॑ । अति॑थिम् । व॒यायाः॑ । ऋ॒तस्य॑ ।
धाम॑ । वि । मि॒मे॒ । पु॒रूणि॑ । शंसा॑मि । पि॒त्रे । असु॑राय ।
शेव॑म् । अ॒य॒ज्ञि॒यात् । य॒ज्ञि॒यम् । भा॒गम् । ए॒मि॒ ॥ ३ ॥

ममस्थानभूता या पृथिवी ततोन्यस्याः वयाया गन्तव्यायाः दिवः संबन्धिनं अतिथिं सततगामिनं सूर्यं पश्यन् जानन् सूर्यस्य गतिमनुसृत्य वसन्तादिकाले ऋतस्य यज्ञस्य धाम धामानि शरीराणि पुरूणि बहूनि विमिमे निर्मिमे निष्पादयामि। ततः पित्रे पितृभूताय द्युलोकवर्तिने देवजनाय असुराय शत्रुक्षयकुशलाय शेवं सुखमुद्दिश्य होताभूत्वा अहं उक्थानि शंसामि यतएवं तस्मात् कारणात् अयज्ञियाद्यज्ञानर्हात् प्रदेशात् निर्गत्य यज्ञियं यज्ञार्हं वेदिलक्षणं भूभागं हविर्लक्षणंवा एमि प्राप्नोमि। यज्ञशब्दादहार्थे यज्ञर्त्विग्भ्यां घखञाविति घप्रत्ययः॥ ३॥

अथ चतुर्थी—

बह्वीःसमाअकरमन्तरस्मिन्निन्द्रंवृणानःपितरंजहामि।
अग्निःसोमोवरुणस्तेच्यवन्तेपर्यावर्द्राष्ट्रंतदवाम्यायन्॥ ४॥

बह्वीः। समाः। अकरम्। अन्तः। अस्मिन्। इन्द्रम्। वृणानः।
पितरम्। जहामि। अग्निः। सोमः। वरुणः। ते। च्यवन्ते।
परिऽआवर्त्। राष्ट्रम्। तत्। अवामि। आऽयन्॥ ४॥

अस्मिन्वेदिलक्षणस्थाने बह्वीःसमाः बहून्वत्सरान् अकरमकार्षं चिरकालं न्यवात्सं तत्र इन्द्रं वृणानः संभजमानः पितरं उत्पादकं अरण्यात्मकं जहामि परित्यजामि। यदात्वहं देवेभ्योनिर्गत्य गुहायां निगूढः तदा ते देवाः अग्निः सोमोवरुणश्चच्यवन्ते राष्ट्रात् प्रच्युता अभवन् एकस्याप्यग्नेः हविर्वोढृत्वरूपेण देवतात्मनाच पृथक्त्वात्परोक्षनिर्देशः आयन् पुनरागच्छन् अहं यद्राष्ट्रं असुरैरपहृतं पर्यावर्त् पर्यावर्तमानंमदभिमुखंपुनरावर्तमानं तद्राष्ट्रं राज्यं यज्ञभूमिं अवामि असुरेभ्योरक्षामि। पर्यावर्त् उपसृष्टाद्वृतेः अन्येभ्योपिदृश्यन्तइतिविच् रात्सस्येतिनियमात् संयोगांतस्येति लोपाभावः॥ ४॥

अथ पंचमी—

निर्मायाउत्येअसुराअभूवन्त्वंचमावरुणकामयासे।
ऋतेनराजन्ननृतंविविञ्चन्ममराष्ट्रस्याधिपत्यमेहि॥ ५॥ ९॥

निःऽमायाः । ऊँ इति । त्ये । असुराः । अभूवन् । त्वम् । च । मा ।
वरुण । कामयासे । ऋतेन । राजन् । अनृतम् । विऽविञ्चन् ।
मम । राष्ट्रस्य । अधिऽपत्यम् । आ । इहि ॥ ५ ॥ ९ ॥

त्ये ते असुराः मय्यग्नावागतेसति निर्मायाः मायारहिताः अभूवन् आसुर्यः सर्वामायाः मयादग्धाः आसन्नित्यर्थः हे वरुण त्वं च अयं चशब्दश्चेदर्थेवर्तमानश्चणिनिपातान्तरं अनेनयुक्तत्वात् कामयासेइति तिङ्विभक्तेः निपातैर्यद्यदिहन्तेति निघातप्रतिषेधः हे वरुण त्वंचेत् माकामयासे मांकामयेथाः तर्हि हे राजन् ईश्वर ऋतेनसत्येन अस्मदीयेन कर्मणा अनृतमसत्यभूतं मायामयं आसुरं चरित्रं विविंचन् पृथक्कुर्वन् अपसारयन् ममराष्ट्रस्य मया यत्साधितं राज्यं तस्याधिपत्यं अधिपतित्वं ईश्वरत्वं एहि प्राप्नुहि ॥ ५ ॥

॥ इत्यष्टमस्य षष्ठे नवमोवर्गः ॥ ९ ॥

अथ षष्ठी—

इदंस्वरिदमिदासवाममयंप्रकाशउर्व१न्तरिक्षम् ।
हनाववृत्रंनिरेहिसोमहविष्ट्वासन्तंहविषायजाम ॥ ६ ॥

इदम् । स्वः । इदम् । इत् । आस । वामम् । अयम् । प्रऽकाशः ।
उरु । अन्तरिक्षम् । हनाव । वृत्रम् । निःऽएहि । सोम ।
हविः । त्वा । सन्तम् । हविषा । यजाम ॥ ६ ॥

इयमृगग्नेर्वरुणस्यवा वाक्यं हे सोम इदं स्वः अयं द्युलोकः यद्वा अयं शोभनारणः सूर्यः इदमित् इदमेव वामं वननीयं आस बभूव । इदंशब्देन प्रकृतं स्वः परामृश्यते अयंच प्रकाशः प्रकाशस्याधारभूतः उरु विस्तीर्णं इदमन्तरिक्षं हे सोम एतत्सर्वं पश्य अतएवास्मिन् समये आवां वृत्रं हनाव हिनव तदर्थं निरेहि निष्क्रम्य आगच्छ हविः संतं लतारूपेण हविर्भवन्तं देवतात्मानं त्वां हविषा चरुपुरोडाशादिना वयं यजाम ॥ ६ ॥

अथ सप्तमी—

कविःकवित्वादिविरूपमासंजदप्रभूतीवरुणोनिरपःसृजत् ।
क्षेमंकृण्वानाजनयोनसिन्धवस्ताअस्यवर्णंशुचयोभरिभ्रति ॥७॥

कुविः । कुविऽत्वा । दिवि । रूपम् । आ । असजत् । अप्रंऽभूती । वरुणः । निः । अपः । सृजत् । क्षेमम् । कृण्वानाः । जनंयः । न । सिन्धंवः । ताः । अस्य । वर्णम् । शुचंयः । भरिभ्रति ॥ ७ ॥

कविः क्रान्तदर्शी मित्रः कवित्वा कवित्वेन सुपांसुलुगिति तृतीयायाआकारः क्रान्तदर्शनेन दिवि द्युलोके रूपमात्मीयं तेजः आसजत आसक्तंकरोति । षंजसंगे अस्माल्लङिशपिदंशसंजष्वंजांशपीतिनलोपः अप्रभूती अप्रभूत्या सुपांसुलुगितितृतीयायाः पूर्वसवर्णदीर्घः । अप्रभूष्णुना अल्पेनैव यत्नेन वरुणोमेघादपोनिःसृजत निरगमयत् वरुणेन विसृष्टास्ताआपः सिन्धवः स्यन्दनशीलानद्योभूत्वा जनयोन जायाइव यथा जायाः पत्युः क्षेमकारिण्योभवन्ति तथा क्षेमं कृण्वानाः जगतोरक्षणं कुर्वाणाः शुचयः शुद्धाः दीप्यमानावा अस्य वरुणस्य वर्णं शुक्लं भास्वररूपं भरिभ्रति भृशंबिभ्रति धारयन्ति । दाधर्त्यादिसूत्रे भरिभ्रदितिनिपातनाद्बिभ्रतेर्यङ्लुकि अभ्यासस्यजश्त्वाभावः ॥ ७ ॥

अथाष्टमी—

ता अस्य ज्येष्ठमिन्द्रियं सचन्ते ता ईमा क्षेति स्वधया मदन्तीः ।
ता ईं विशो न राजानं वृणाना बीभत्सुवो अप वृत्राद्तिष्ठन् ॥ ८ ॥

ताः । अस्य । ज्येष्ठम् । इन्द्रियम् । सचन्ते । ताः । ईम् । आ । क्षेति । स्वधया । मदन्तीः । ताः । ईम् । विशः । न । राजानम् । वृणानाः । बीभत्सुवः । अप । वृत्रात् । अतिष्ठन् ॥ ८ ॥

ताः पूर्वोक्ता वृष्टा आपः अस्य वरुणस्य ज्येष्ठं वृद्धतममिन्द्रियं वीर्यं सचन्तेसमवयन्ति संभजन्ते धारयन्तीत्यर्थः । आपोवरुणस्यपत्न्यआसन् इतिश्रुतेः । स्वधया अन्ननामैतत् हविर्लक्षणेनान्नेन मदन्तीः माद्यन्तीः यद्वा व्रीह्याद्युत्पादनद्वारेण हविषा मादयन्तीस्ताआपः ईं अयं वरुणः आक्षेति अभिगच्छति । क्षिनिवासगत्योः छान्दसोविकरणस्यलुक् ताश्च ईमेनं वरुणं विशोन विशः प्रजा यथा राजानं स्वामिनं संभजन्ते । तथा वृणानाः संभजमानाः बी-

भत्सुवः भयेन कंपमानाः यद्वा बद्धाः वृत्रेणावृताः सत्यः तस्मिन्हतेसति तस्माद्वृत्रादपातिष्ठन् अपक्रम्य तत्रतत्रावतिष्ठंते बधबंधने इत्यस्मात् मान्बधदान्शान्भ्यइतिसन् अभ्यासस्यच दीर्घः सनाशंसभिक्षउरित्युप्रत्ययः । जसिछान्दसउवङादेशः ॥ ८ ॥

अथ नवमी—

**बी॒भ॒त्सू॒नां॑स॒युजं॑हं॒समा॑हुर॒पांदि॒व्यानां॑स॒ख्येचर॑न्तम् ।**
**अ॒नु॒ष्टु॒भ॒मनु॑चर्चू॒र्यमा॑ण॒मिन्द्रं॒निचि॑क्युः॒क॒वयो॑मनी॒षा ॥ ९॥१०॥**

बी॒भ॒त्सू॒नाम् । स॒ऽयुजम् । हं॒सम् । आ॒हुः । अ॒पाम् । दि॒व्याना॑म् ।
स॒ख्ये । चर॑न्तम् । अ॒नु॒ऽस्तुभ॑म् । अनु॑ । च॒र्चू॒र्यमा॑णम् ।
इन्द्र॑म् । नि । चि॒क्यु॒ः । क॒वय॑ः । म॒नी॒षा ॥ ९ ॥ १० ॥

बीभत्सूनां कंपमानावयवानां यद्वा मेघेनबद्धानां हन्ति गच्छतीति हंसःसूर्यः । तं सयुजं सखायमाहुः ब्रह्मवादिनः कथयन्ति । एतदेवाह दिव्यानां दिविभवानां अन्तरिक्ष्याणां अपां सख्ये सखित्वेचरन्तं वर्तमानं अनुष्टुभं अनुस्तोभनीयं स्तोतव्यं यद्वा अनुष्टुप्शब्देन तत्संबन्धोयागः स्तुतिर्वालक्ष्यते अनुष्टुप् संबद्धं यागं अनुष्टुप् छन्दसायुक्तं स्तुतिविशेषं वा अनुलक्ष्य चर्चूर्यमाणं पुनःपुनश्चरन्तं गच्छन्तं चरतेर्यङि उत्परस्यातइत्यभ्यासादुत्तरस्याकारस्योत्वं चरफलोश्चेतिनुकिप्राप्तेव्यत्ययेनाभ्यासस्यरुगागमः एवंगुणविशिष्टं इन्द्रं कवयः क्रान्तदर्शिनऋषयः मनीषा मनीषया स्तुत्या निचिक्युः पूजयन्ति यद्वा मनीषया बुध्या निचिक्युः जानन्ति मनीषाशब्दात्तृतीयायाःसुपांसुलुगितिलुक् चायृपूजानिशामनयोरित्यस्माच्छान्दसेलिटि चायःकीतिप्रकृतेःकीभावः एरनेकाचइतियण् ॥ ९ ॥

॥ इत्यष्टमस्य सप्तमेदशमोवर्गः ॥ १० ॥

अहमित्यष्टर्चं त्रयोदशंसूक्तं अंभृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत् अतः सा ऋषिः सच्चित्सुखात्मकः सर्वगतःपरमात्मादेवता तेनहि एषा तादात्म्यमनुभवन्ती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेनचाहमेव सर्वंभवामीति स्वात्मानंस्तौति द्वितीयाजगती शिष्टाः सप्तत्रिष्टुभः । तथाचानुक्रान्तं—अहमष्टौवागांभृणीतुष्टावात्मानं द्वितीयाजगतीति । गतोविनियोगः ।

तत्र प्रथमा—

**अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः ।**
**अहंमित्रावरुणोभाबिभर्म्यहमिन्द्राग्नीअहमश्विनोभा ॥ १ ॥**

अहम् । रुद्रेभिः । वसुऽभिः । चरामि । अहम् । आदित्यैः ।
उत । विश्वऽदेवैः । अहम् । मित्रावरुणा । उभा । बिभर्मि ।
अहम् । इन्द्राग्नी इति । अहम् । अश्विना । उभा ॥ १ ॥

अहं सूक्तस्यद्रष्ट्रीवाक् आंभृणी यद्ब्रह्मजगत्कारणं तद्रूपाभवन्ती रुद्रेभिः रुद्रैः एकादशभिः इत्थं भावेतृतीया तदात्मना चरामि एवं वसुभिरित्यादौ तत्तदात्मनाचरामीतियोज्यं । एवंच मित्रावरुणेत्यत्र सुपांसुलुगिति द्वितीयायाआकारः उभोभावहमेव ब्रह्मीभूता बिभर्मि धारयामि इन्द्राग्नी अप्यहमेव धारयामि उभोभावश्विनाश्विनावप्यहमेव धारयमि मयिहि सर्वं जगत् शुक्तौ रजतमिवाध्यस्तं सद्दृश्यते मायाच जगदाकारेण विवर्तते तादृश्या मायया आधारत्वेन असंगस्यापि ब्रह्मणउक्तस्य सर्वस्योत्पत्तिः ॥ १ ॥

अथ द्वितीया—

**अहंसोममाहनसंबिभर्म्यहंत्वष्टारमुतपूषणंभगम् ।**
**अहंदधामिद्रविणंहविष्मतेसुप्राव्येयजमानायसुन्वते ॥ २ ॥**

अहम् । सोमम् । आहनसम् । बिभर्मि । अहम् । त्वष्टारम् ।
उत । पूषणम् । भगम् । अहम् । दधामि । द्रविणम् ।
हविष्मते । सुप्रऽअव्ये । यजमानाय । सुन्वते ॥ २ ॥

आहनसं आहन्तव्यं अभिषोतव्यं सोमं यद्वा शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोमं अहमेव बिभर्मि तथा त्वष्टारं उतापिच पूषणं भगंच अहमेवबिभर्मि तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविः देवानां प्रापयित्रे तर्पयित्रे अवतेस्तर्पणार्थाद्वितृस्तृतंत्रिभ्यईरितीकारः प्रत्ययः चतुर्थ्येकवचने यणिउदात्तस्वरितयोर्यणःस्वरितोनुदात्तस्येतिसुपःस्वरितत्वं सुन्वते सोमाभिषवंकुर्वते शतुरनुमइति चतुर्थ्याउदात्तत्वं ईदृशाय यजमानाय द्रवि-

णं धनं यागफलरूपं अहमेव धारयामि एतच्च ब्रह्मणः फलदातृत्वं फलमतउपपत्तेरित्यधिकरणे भगवताभाष्यकारेण समर्थितं ॥ २ ॥

अथ तृतीया—

अहंराष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानाम् ।
तांमादेवाव्यदधुःपुरुत्राभूरिस्थात्रांभूर्यावेशयन्तीम् ॥ ३ ॥

अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् । चिकितुषी । प्रथमा ।
यज्ञियानाम् । ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा ।
भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥ ३ ॥

अहं राष्ट्री ईश्वरनामैतत् सर्वस्य जगत ईश्वरी तथा वसूनां धनानां संगमनी संगमयित्री उपासकानां प्रापयित्री चिकितुषी यत्साक्षात्कर्तव्यं परंब्रह्म तत्ज्ञानवती स्वात्मतया साक्षात्कृतवती अतएव यज्ञियानां यज्ञार्हाणां प्रथमा मुख्या यैवं गुणविशिष्टाहं तां मां भूरिस्थात्रां बहुभावेन प्रपंचात्मनावतिष्ठमानां भूरि भूरीणि बहूनि भूतजातानि आवेशयन्तीं जीवभावेन आत्मानं प्रवेशयन्तीं ईदृशीं मां पुरुत्रा बहुषु देशेषु व्यदधुः देवाः विदधति कुर्वन्ति उक्तप्रकारेण विश्वरूपेणावस्थानात् यद्यत्कुर्वन्ति तत्सर्वं मामेव कुर्वन्तीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

मयासोअन्नमत्तियोविपश्यतियःप्राणितियईंशृणोत्युक्तम् ।
अमन्तवोमान्तउपक्षियन्तिश्रुधिश्रुतश्रद्धिवंतेवदामि ॥ ४ ॥

मया । सः । अन्नम् । अत्ति । यः । विऽपश्यति । यः । प्राणिति ।
यः । ईम् । शृणोति । उक्तम् । अमन्तवः । माम् । ते । उप ।
क्षियन्ति । श्रुधि । श्रुत । श्रद्धिऽवम् । ते । वदामि ॥ ४ ॥

योअन्नमत्ति सभोक्तृशक्तिरूपया मयैवान्नमत्ति यश्च विपश्यति आलोकयतीत्यर्थः । यश्च प्राणिति श्वासोच्छ्वासादि व्यापारंकरोति सोपि मयैव यश्चोक्तं शृणोति श्रुश्रवणे श्रुवः शृचेतिश्रुधातोःशृभावः यईदृशीमन्तर्यामिरूपेणस्थितां मां नजानन्ति ते अमन्तवः अमन्य-

मानाः अजानन्तः उपक्षियन्ति उपक्षीणाः संसारेण हीनाभवन्ति। मनेरौणादिकःतुप्रत्ययः नञ्समासेव्यत्ययेनान्तोदात्तत्वं यद्वा भावे तुप्रत्ययः ततोबहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं मामन्तवः मद्विषयज्ञानरहिताइत्यर्थः हेश्रुत विश्रुत सखे श्रुधि मया वक्ष्यमाणं शृणु छान्दसोविकरणस्यलुक् श्रुशृणुपृकृवृभ्यइति हेर्धिभावः किंतत्श्रोतव्यं श्रद्धिवं श्रद्धिः श्रद्धा तयायुक्तं श्रद्धायत्नेन लभ्यमित्यर्थः श्रदन्तरोरुपसर्गवद्वृत्तिरिष्यतइति श्रच्छब्दस्यउपसर्गवद्वर्तमानत्वात् उपसर्गेघोःकिरितिकिप्रत्ययः मत्वर्थीयोवः ईदृशं ब्रह्मात्मकं वस्तु तेतुभ्यं वदामि उपदिशामि ॥ ४ ॥

अथ पंचमी—

**अहमेवस्वयमिदंवंदामिजुष्टंदेवेभिरुतमानुषेभिः।**
**यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधाम् ॥ ५ ॥ ११ ॥**

अहम्। एव। स्वयम्। इदम्। वदामि। जुष्टम्। देवेभिः।
उत। मानुषेभिः। यम्। कामये। तम्ऽतम्। उग्रम्। कृणोमि।
तम्। ब्रह्माणम्। तम्। ऋषिम्। तम्। सुऽमेधाम् ॥ ५ ॥ ११ ॥

अहं स्वयमेव इदंवस्तु ब्रह्मात्मकं वदामि उपदिशामि देवेभिर्देवैः इन्द्रादिभिरपि जुष्टं सेवितं उतापिच मानुषेभिः मनुष्यैरपि जुष्टं ईदृग्वस्त्वात्मिका अहं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तं तं पुरुषं उग्रं कृणोमि सर्वेभ्योधिकं करोमि तमेव ब्रह्माणं स्रष्टारं करोमि तमेवऋषिंअतीन्द्रियार्थदर्शिनं करोमि तमेव सुमेधां शोभनप्रज्ञंच करोमि ॥ ५ ॥

॥ इत्यष्टमस्य सप्तमे एकादशोवर्गः ॥ ११ ॥

अथ षष्ठी—

**अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहन्तवाउ।**
**अहंजनायसमदंकृणोम्यहंद्यावापृथिवीआविवेश ॥ ६ ॥**

अहम् । रुद्राय । धनुः । आ । तनोमि । ब्रह्मऽद्विषे । शरवे ।
हन्तवै । ऊँ इति ! अहम् । जनाय । सऽमदम् । कृणोमि ।
अहम् । द्यावापृथिवी इति । आ । विवेश ॥ ६ ॥

पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य षष्ठ्यर्थेंचतुर्थी महादेवस्य धनुश्चापं अहमातनोमि ज्ययाततं करोमि किमर्थं ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरुं हिंसकं त्रिपुरनिवासिनमसुरं हन्तवै हन्तुं हिंसितुं हन्तेस्तुमर्थेसेसेनितितवैप्रत्ययः अन्तश्चतवैयुगपदित्याद्यन्तयोर्युगपदुदात्तत्वं शॄहिंसायामित्यस्मात् शॄस्वृस्निहीत्यादिनाउप्रत्ययः । क्रियाग्रहणंकर्तव्यमिति कर्मणःसंप्रदानत्वाच्चतुर्थी उशब्दःपूरकः अहमेव समदं समानं माद्यन्त्यस्मिन्निति समत्संग्रामः स्तोतृजनार्थं शत्रुभिः सहसंग्रामं अहमेव कृणोमि करोमि तथा द्यावापृथिवी दिवंच पृथिवींच अन्तर्यामितया अहमेवाविवेश प्रविष्टवती ॥ ६ ॥

अथ सप्तमी—

अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्व१न्तःसमुद्रे ।
ततोवितिष्ठेभुवनानुविश्वोतामूंद्यांवर्ष्मणोपस्पृशामि ॥ ७ ॥

अहम् । सुवे । पितरम् । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु ।
अन्तरिति । समुद्रे । ततः । वि । तिष्ठे । भुवना । अनु । विश्वा ।
उत । अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥ ७ ॥

द्यौःपितेतिश्रुतेः पिताद्यौः पितरं दिवं अहं सुवे प्रसुवे जनयामि आत्मनआकाशः संभूतइतिश्रुतेः । कुत्रेति तदाह अस्यपरमात्मनः मूर्धन् मूर्धनि उपरिकारणभूते तस्मिन्हि वियदादिकार्यंजातं सर्वं वर्तते तन्तुषु पटइव ममच योनिः कारणं समुद्रे समुद्रवन्त्यस्माद्भूतजातानीति समुद्रः परमात्मा तस्मिन् अप्सुव्यापनशीलासु धीवृत्तिषु अन्तर्मध्ये यद्ब्रह्मचैतन्यं तन्ममकारण मित्यर्थः । यतईदृग्भूताहमस्मि ततोहेतोर्विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अनुप्रविश्य वितिष्ठे विविधंव्याप्य तिष्ठामि समवप्रविभ्यःस्थइत्यात्मनेपदं उतापिच अमूं द्यां विप्रकृष्टदेशेवस्थितं स्वर्गलोकं उपलक्षणमेतत् एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन

मायात्मकेन मदीयेन देहेन उपस्पृशामि यद्वा अस्य भूलोकस्य मूर्धन् मूर्धन्युपरि अहं पितरमा काशं सुवे समुद्रे जलधौ अप्सु उदकेषु अन्तर्मध्ये मम योनिः कारणभूतोम्भृणाख्यऋषिर्वर्तते यद्वा समुद्रेन्तरिक्षे अप्सु अम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्मचैतन्यं वर्तते ततो हं कारणात्मिकासती सर्वाणि भुवनानि व्याप्नोमि । अन्यत्समानं ॥ ७ ॥

अथाष्टमी—

अ॒हमे॒व वात॑इव॒ प्रवा॒म्या॒रभ॑माणा॒ भुव॑नानि॒ विश्वा॑ ।
प॒रो दि॒वा प॒र ए॒ना पृ॑थि॒व्यैताव॑ती महि॒ना सं ब॑भूव ॥ ८ ॥ १२ ॥

अ॒हम् । ए॒व । वात॑ःऽइव । प्र । वा॒मि॒ । आ॒ऽरभ॑माणा ।
भुव॑नानि । विश्वा॑ । प॒रः । दि॒वा । प॒रः । ए॒ना । पृ॒थि॒व्या ।
ए॒ताव॑ती । म॒हि॒ना । सम् । ब॒भू॒व॒ ॥ ८ ॥ १२ ॥

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव प्रवामि प्रवर्ते वातइव यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत् उक्तं सर्वं निगमयति परोदिवा परइति सकारान्तं परस्तादित्यर्थे वर्तते यथा अधइति अधस्तादर्थे तद्योगेच तृतीया सर्वत्र दृश्यते दिवआकाशस्य परस्तात् एना पृथिव्या द्वितीयाटौस्स्वेनइति इदमएनादेशः अस्याः पृथिव्याः परः परस्तात् द्यावापृथिव्योरुपादानमुपलक्षणं एतदुपलक्षितात्सर्वस्माद्विकारजातात्परस्ताद्वर्तमाना असंगोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना महिम्ना एतावती संबभूव एतच्छब्देन उक्तं सर्वं परामृश्यते एतत्परिमाणमस्याः यत्तदेतेभ्यः परिमाणइतिवतुप् आसर्वनाम्नइत्यात्वं सर्वजगदात्मना अहं संभूतास्मि महच्छब्दादिमनिचिटेरिति टिलोपः ततः तृतीयायां उदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वं छान्दसोमलोपः ॥ ८ ॥

॥ इत्यष्टमस्य सप्तमे द्वादशोवर्गः ॥ १२ ॥

नतमित्यष्टर्चं चतुर्दशं सूक्तं शिलूषपुत्रस्य कुल्मलबर्हिषस्यार्षं वामदेवपुत्रस्य अंहोमुङ्नाम्नोवा वैश्वदेवं अष्टमीत्रिष्टुप् शिष्टाउपरिष्टाद्बृहत्यः त्र्यष्टकद्वादशकवती उपरिष्टाद्बृहती । अ-

न्त्यश्चेदुपरिष्टाद्बृहतीतिहि तल्लक्षणं। तथाचानुक्रान्तं—नतंशैलूषःकुलमलबर्हिषोवामदेव्योवांहोमुग्वैश्वदेवमुपरिष्टाद्बार्हतमंत्यात्रिष्टुबिति। गतोविनियोगः।

तत्र प्रथमा—

नतमंहोनदुरितंदेवासोअष्टमर्त्यम्।
सजोषसोयमर्यमामित्रोनयन्तिवरुणोअतिद्विषः ॥ १ ॥

न। तम्। अंहः। न। दुःऽइतम्। देवासः। अष्ट। मर्त्यम्।
सऽजोषसः। यम्। अर्यमा। मित्रः। नयन्ति।
वरुणः। अति। द्विषः ॥ १ ॥

हेदेवासोदेवाः आज्जसेरसुक् तं मर्तं मनुष्यं अंहः पापं दुरितं तत्फलरूपं दुर्गमनंच नाष्ट नप्राप्नोति अशेश्छान्दसेलुङि झलोझलीति सिचोलोपः अडभावश्छान्दसः अरीन्नियच्छतीत्यर्यमा प्रमीतेस्त्रायकोदेवोमित्रः पापानां निवारयिता देवः वरुणः एतेत्रयोदेवाः सजोषसः संगताः समानं प्रीयमाणावाभवन्तः द्विषः द्वेष्टॄन् शत्रूनतिक्रम्य यंस्तोतारं नयन्ति अभिमतं देशं प्रापयन्ति तं नाष्टेत्यन्वयः ॥ १ ॥

अथ द्वितीया—

तद्धिवयंवृणीमहेवरुणमित्रार्यमन्।
येनानिरंहसोयूयंपाथनेथाचमर्त्यमतिद्विषः ॥ २ ॥

तत्। हि। वयम्। वृणीमहे। वरुण। मित्र।
अर्यमन्। येन। निः। अंहसः। यूयम्। पाथ।
नेथ। च। मर्त्यम्। अति। द्विषः ॥ २ ॥

हिरवधारणे तद्धि तदेव रक्षणं वयं वृणीमहे प्रार्थयामहे सति शिष्टोपि विकरणस्य स्वरोलसार्वधातुकस्वरं नबाधतइति वचनात्तिङएव स्वरः शिष्यते हिचेति निघातप्रतिषेधः हेवरुण हेमित्र हेअर्यमन् येन रक्षणेन मर्त्यं स्तोतारं अंहसः पापात् यूयं निःपाथ निःशेषेण रक्षथ पारक्षणे आदादिकः यद्वृत्तान्नित्यमिति निघातप्रतिषेधः येनच रक्षणेन मर्त्यं मनुष्यं स्तो-

तारं द्विषोतिनेथअतीत्यनयथ अभीष्टं प्रापयथ तद्वृणीमहइत्यन्वयः नयतेश्छान्दसः शपोलुक् ॥ २ ॥

अथ तृतीया—

तेनूनंनोयमूतयेवरुणोमित्रोअर्यमा ।
नयिष्ठाउनोनेषणिपर्षिष्ठाउनःपर्षण्यतिद्विषः ॥ ३ ॥

ते । नूनम् । नः । अयम् । ऊतये । वरुणः । मित्रः ।
अर्यमा । नयिष्ठाः । ऊँ इति । नः । नेषणि । पर्षिष्ठाः ।
ऊँ इति । नः । पर्षणि । अति । द्विषः ॥ ३ ॥

अयं वरुणोमित्रश्चार्यमाच देवानोस्माकं ऊतये रक्षणाय नूनमवश्यं भवन्तु नेषणि नेतव्ये विषये हेवरुणादयोयूयं नोस्मान्नयिष्ठाः नयत वचनव्यत्ययः यद्वा प्रत्येकाभिप्रायेण एकवचनं छान्दसोलुङ् उशब्दः समुच्चये पदपूरणोवा पर्षणि पारयितव्ये विषये नोस्मान्द्विषोतिपर्षिष्ठाः अतिपारयथ । नयिष्ठाः इतिवत्प्रक्रिया ॥ ३ ॥

अथ चतुर्थी—

यूयंविश्वंपरिपाथवरुणोमित्रोअर्यमा ।
युष्माकंशर्मणिप्रियेस्यामसुप्रणीतयोतिद्विषः ॥ ४ ॥

यूयम् । विश्वम् । परि । पाथ । वरुणः । मित्रः । अर्यमा ।
युष्माकम् । शर्मणि । प्रिये । स्याम । सुऽप्रनीतयः । अति । द्विषः ॥ ४ ॥

हेदेवावरुणादयोयूयं विश्वंसर्वं जगत्परिपाथ परितोरक्षथ हेसुप्रणीतयः शोभनप्रणयना मित्रादयः युष्माकं युष्मदीये युष्याभिर्दत्ते प्रिये अनुकूले वेद्येशर्मणि सुखे वयं स्याम भवेम द्विषः द्वेष्टॄंश्च अतिक्रामेम ॥ ४ ॥

अथ पञ्चमी—

आदित्यासोअतिस्रिधोवरुणोमित्रोअर्यमा ।
उग्रंमरुद्भीरुद्रंहुवेमेन्द्रमग्निंस्वस्तयेतिद्विषः ॥ ५ ॥

आदित्यासः । अति । स्रिधः । वरुणः । मित्रः । अर्यमा ।
उग्रम् । मरुत्ऽभिः । रुद्रम् । हुवेम । इन्द्रम् ।
अग्निम् । स्वस्तये । अति । द्विषः ॥ ५ ॥

आदित्यासः अदितेः पुत्रावरुणादयोदेवाः स्रिधः हिंसकान् शत्रून् अस्मानतिनयन्तु मरुद्भिः पुत्रैः सहितं उग्रमुद्गूर्णतेजसं रुद्रं इन्द्रमग्निंच स्वस्तये क्षेमाय हुवेम आह्वयेमहि ह्वयतेराशीर्लिङि बहुलं छन्दसीति संप्रसारणं लिङ्याशिष्यङ् आहूतास्ते अस्मान् द्विषः द्वेष्टॄनतिनयन्तु ॥ ५ ॥

अथ षष्ठी—

नेतारऊषुणस्तिरोवरुणोमित्रोअर्यमा ।
अतिविश्वानिदुरितारराजानश्चर्षणीनामतिद्विषः ॥ ६ ॥

नेतारः । ऊँ इति । सु । नः । तिरः । वरुणः । मित्रः । अर्यमा । अति ।
विश्वानि । दुःऽइता । राजानः । चर्षणीनाम् । अति । द्विषः ॥ ६ ॥

नेतारः नयनकुशलाः नयतेः साधुकारिणि तृन् वरुणादयोदेवाः नोस्माकं पापानि सुसुष्ठु तिरः तिरोधानमदर्शनं नयन्तु उइति पूरणः चर्षणीनां मनुष्याणां राजानः स्वामिनोवरुणादयोदेवाः विश्वानि सर्वाणि दुरिता दुरितानि दुर्गमनानि पापफलरूपाणि अस्मानतिनयन्तु द्विषः द्वेष्टॄन् शत्रून् चातिनयन्तु । नामन्यतरस्यामिति चर्षणिशब्दात्परस्य नामउदात्तत्वं ॥ ६ ॥

अथ सप्तमी—

शुनमस्मभ्यमूतयेवरुणोमित्रोअर्यमा ।
शर्मयच्छन्तुसप्रथआदित्यासोयदीमहेअतिद्विषः ॥ ७ ॥

शुनम् । अस्मभ्यम् । ऊतये । वरुणः । मित्रः । अर्यमा । शर्म ।
यच्छन्तु । सऽप्रथः । आदित्यासः । यत् । ईमहे । अति । द्विषः ॥७॥

वरुणादयोदेवा ऊतये रक्षायै शुनं सुखं अस्मभ्यं स्तोतृभ्यः प्रयच्छन्तु तथा आदित्यासः अदितेः पुत्राः ते सप्रथः सर्वतः पृथुविस्तीर्णं शर्म सुखंच यच्छन्तु अस्मभ्यं ददतु यच्छर्म वयमीमहे याचामहे । द्विषश्चातिनयन्तु ॥ ७ ॥

अथाष्टमी—

यथा॑ह॒त्यद्व॑सवोगौ॒र्यं॑चित्प॒दिषि॒ताममु॑ञ्चतायजत्राः ।
ए॒वो॒ष्व१॒॑स्मन्मु॑ञ्चता॒व्यंह॒ःप्रता॑र्यग्नेप्रत॒रंन॒आयु॑ः ॥८॥१३॥

यथा॑ । ह॒ । त्यत् । व॒स॒वः॒ । गौ॒र्य॑म् । चि॒त् । प॒दि । सि॒ताम् ।
अमु॑ञ्चत । य॒ज॒त्रा॒ः । ए॒वो इति॑ । सु । अ॒स्मत् । मु॒ञ्च॒त॒ । वि ।
अंह॑ः । प्र । ता॒रि॒ । अ॒ग्ने॒ । प्र॒ऽत॒रम् । न॒ः । आयु॑ः ॥ ८ ॥ १३ ॥

हेवसवोवासकाः हेयजत्राः यागार्हाः मित्रादयः देवाः अमिनक्षीत्यादिना यजेरत्रन्प्रत्ययः त्यत् तेप्रसिद्धायूयं सुपांसुलुगिति विभक्तेर्लुक् यथाखलु पदि पादे सितां बद्धां पद्दन्नित्यादिना पादशब्दस्य पदादेशः ऊडिदंपदादीत्यादिना सप्तम्याउदात्तत्वं षिञ्बंधने इत्यस्मान्निष्ठा ईदृशीं गौर्यं गौरीं गौरवर्णां सोमक्रयणीं गां षिद्गौरादिभ्यश्चेति ङीष् अमि पूर्वइत्यत्र वाछन्दसीत्यनुवर्तनात् पूर्वरूपस्य पूर्वसवर्णदीर्घस्य चाभावेयण् उदात्तस्वरितयोर्यणइति परस्यानुदात्तस्य स्वरितत्वं ईदृशीं गां अमुंचत यथाखलु यूयं विश्वावसोर्गन्धर्वान्मोचितवन्तः एवो एवमेव अस्मत् अस्मत्तः अंहः पापं सुष्ठुविमुंचत विश्लेषयत हेअग्नेनोस्माकं आयुर्जीवनं प्रतरं प्रतारि प्रकर्षेण त्वया प्रवर्धतां प्रपूर्वस्तिरतिर्वर्धनार्थः प्रशब्दात्तरपि अमुचछन्दसीति अमुप्रत्ययः ॥ ८ ॥

॥ इत्यष्टमस्य सप्तमे त्रयोदशोवर्गः ॥ १३ ॥

रात्रीत्यष्टर्चं पंचदशं सूक्तं सोभरिपुत्रस्य कुशिकस्यार्षं यद्वा भारद्वाजस्य सुता रात्र्याख्या अस्य सूक्तस्य ऋषिका गायत्रं रात्रिदेवताकं । तथाचानुक्रान्तं—रात्रीकुशिकः सौभरोरात्रिर्वाभारद्वाजी रात्रिस्तवं गायत्रमिति । दुःस्वप्नदर्शने उपोषितेन कर्त्रा पायसेन होतव्यं तत्रैतत्सूक्तं करणत्वेन विनियुक्तं । तथाचारण्यकेश्रूयते—सयद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वेति ।

तत्र प्रथमा—

रात्रीव्यंख्यदायतीपुरुत्रादेव्य१क्षभिः ।
विश्वाअधिश्रियोधित ॥ १ ॥

रात्री । वि । अख्यत् । आऽयती । पुरुऽत्रा । देवी ।
अक्षऽभिः । विश्वाः । अधि । श्रियः । अधित ॥ १ ॥

आयती आगच्छन्ती आङ्पूर्वादेतेः शतरि आदादित्वाच्छपोलुक् इणोयणिति यणादेशः उगितश्चेतिङीप् शतुरनुमइति नद्याउदात्तत्वं अक्षभिः अक्षिस्थानीयैः प्रकाशमानैर्नक्षत्रैः छन्दस्यपि दृश्यतइति अक्षिशब्दस्यानङादेशः यद्वा अक्षभिरंजकैः तेजोभिः पुरुत्रा बहुषु देशेषु देवी देवनशीला देवमनुष्यपुरुषपुरुमर्त्येभ्यइत्यादिनापुरुशब्दात्सप्तम्यर्थेत्राप्रत्ययः रात्री इयं रात्रिदेवतां व्यख्यत विचष्टे विशेषेण पश्यति रात्रेश्चाजसाविति ङीप् ख्यातेश्छान्दसेलुङि अस्यतिवक्तीत्यादिना च्लेरङादेशः अपिचैषा विश्वाः सर्वाः श्रियः शोभाः अध्यधित अधिधारयति । दधातेर्लुङि स्थाघ्वोरिच्चेतीत्वं सिचः कित्वं ह्रस्वादंगादिति सिचोलोपः ॥ १ ॥

अथ द्वितीया—

ओर्वप्राअमर्त्यानिवतोदेव्यु१द्वतः ।
ज्योतिषाबाधतेतमः ॥ २ ॥

आ । उरु । अप्राः । अमर्त्या । निऽवतः । देवी ।
उत्ऽवतः । ज्योतिषा । बाधते । तमः ॥ २ ॥

अमर्त्या मरणरहिता देवी देवनशीला रात्रिः उरु विस्तीर्णं अन्तरिक्षं आप्राः प्रथमतः तमसा आपूरयति प्रापूरणे आदादिकः लङि व्यत्ययेन मध्यमः तथानिवतः नीचीनान् लतागुल्मादीन् उद्वतः उत्थितान् वृक्षादींश्च स्वकीयेन तेजसा आवृणोति तदनन्तरं तत्तमोन्धकारं ज्योतिषा ग्रहनक्षत्रादिरूपेण तेजसा बाधते पीडयति ॥ २ ॥

अथ तृतीया—

निरुस्वसारमस्कृतोषसंदेव्यायती ।
अपेदुहासतेतमः ॥ ३ ॥

निः । ऊँ इति । स्वसारम् । अकृत । उषसम् । देवी ।
आऽयती । अप । इत् । ऊँ इति । हासते । तमः ॥ ३ ॥

आयती आगच्छन्ती देवी देवनशीलारात्रिः स्वसारं भगिनीं उषसं निरकृत निष्करोति प्रकाशेन संस्करोति निवर्तयतीत्यर्थः । तस्यामुषसि जातायां नैशं तमः अपेदुहासते अपैव गच्छति ओहाङ् गतौ लेटचडागमः सिब्बहुलमिति सिप् ॥ ३ ॥

अथ चतुर्थी—

सानोअद्ययस्यावयंनितेयामन्नविक्ष्महि ।
वृक्षेनवसतिंवयः ॥ ४ ॥

सा । नः । अद्य । यस्याः । वयम् । नि । ते । यामन् ।
अविक्ष्महि । वृक्षे । न । वसतिम् । वयः ॥ ४ ॥

अद्यास्मिन्काले नोस्माकं सारात्रिदेवता प्रसीदतु यस्याः रात्रेः यामन् यामनि प्राप्तौ सत्यां वयं न्यविक्ष्महि निविशामहे सुखेन गृहे आस्महे । विशेर्लिङि नेर्विशइत्यात्मनेपदं छान्दसः शपोलुक् । तत्रदृष्टान्तः—वयः पक्षिणः वृक्षेन यथा वृक्षे नीडाश्रये वसतिं रात्रौ निवासं कुर्वन्ति तथानिवसाम इत्यर्थः ॥ ४ ॥

अथ पंचमी—

निग्रामासोअविक्षतनिपद्वन्तोनिपक्षिणः ।
निश्येनासश्चिदर्थिनः ॥ ५ ॥

नि । ग्रामासः । अविक्षत । नि । पत्ऽवन्तः । नि ।
पक्षिणः । नि । श्येनासः । चित् । अर्थिनः ॥ ५ ॥

ग्रामासः ग्रामाः अत्र ग्रामशब्दोजनसमूहे वर्तते यथा ग्रामः आगतइति सर्वे जनान्यवि क्षत तस्यां रात्रावागतायां निविशन्ते शेरते निपूर्वाद्विशतेः छान्दसे लुङि पूर्ववदात्मनेपदं शलइ गुपधादनिटःक्सः क्सस्याचीति अकारलोपः तथा पद्वन्तः पादयुक्ताः गवाश्वादयश्च निविशन्ते तथा पक्षिणः पक्षोपेताश्च निविशन्ते अर्थिनः अर्तेरर्थोगमनं शीघ्रगमनयुक्ताः श्येनासश्चित् श्येनाअपि तस्यां रात्र्यां निविशन्ते एषारात्रिः सर्वाणि भूतजातानि अहनि संचारेण श्रांतानि स्वयमागत्य सुखयतीत्यर्थः ॥ ५ ॥

अथ षष्ठी—

यावयांवृक्यं१वृकंयवयस्तेनमूर्म्ये ।
अथांनःसुतरांभव ॥ ६ ॥

यवयं । वृक्यम् । वृकम् । यवयं । स्तेनम् । ऊर्म्ये ।
अथं । नः । सुऽतरां । भव ॥ ६ ॥

हेऊर्म्ये रात्रिनामैतत् रात्रे वृक्यं वृकस्य स्त्रियं वृकंचास्मान् हिंसन्तं यवय अस्मत्तः पृथ कुरु अस्मान्बाधितुं यथा नप्राप्नोति तथास्तेनं तस्करंच यवय अस्मत्तोवियोजय अथानन्तरं नोस्माकं सुतरा सुखेन तरणीया क्षेमकरी भव ॥ ६ ॥

अथ सप्तमी—

उपमापेपिशत्तमःकृष्णंव्यक्तमस्थित ।
उषऋणेवयातय ॥ ७ ॥

उप । मा । पेपिशत् । तमः । कृष्णम् । विऽअक्तम् ।
अस्थित । उषः । ऋणाऽइव । यातय ॥ ७ ॥

पेपिशत् भृशं पिंशत् सर्ववस्तुष्वाश्लिष्टं तमोन्धकारं कृष्णं कृष्णवर्णं व्यक्तं विशेषेण स्वभासा सर्वस्यांजकं स्पष्टरूपंवा ईदृशं नैशंतमः मामुपास्थित उपागच्छत् संगतकरणे आत्मनेपदं । हेउषः उषोदेवते त्वं ऋणेव ऋणानीव तत्तमोयातय अपगमय स्तोतॄणामृणानि यथा धनप्रदानेनापकरोषि तथातमोप्यपसारयेत्यर्थः ॥ ७ ॥

अथाष्टमी—

उप॑ते॒गाइ॑वाक॑रंवृ॒णी॒ष्वदु॑हितर्दिवः ।
रात्रि॒स्तोमं॒नजि॒ग्युषे॑ ॥ ८ ॥ १४ ॥

उप॑ । ते॒ । गाःऽइ॑व । आ । अ॒क॒र॒म् । वृ॒णी॒ष्व । दु॒हि॒तः॒ । दि॒वः॒ ।
रात्रि॑ । स्तोम॑म् । न । जि॒ग्युषे॑ ॥ ८ ॥ १४ ॥

हेरात्रि रात्रिदेवते ते त्वां गाइव पयसोदोग्ध्रीर्धेनूरिव उपेत्य आकरं स्तुतिभिरभिमुखी करोमि करोतेश्छान्दसे लुङि कृमृदृरुहिभ्यइति च्लेरङादेशः दिवोदुहितः द्योतमानस्य सूर्यस्य पुत्रि यद्वा दिवसस्य तनये परमपिच्छन्दसीति परस्य षष्ठ्यंतस्य पूर्वामंत्रितांगवद्भावात् पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वं त्वत्प्रसादाज्जिग्युषे शत्रून् जिग्युषोमम स्तोमंन स्तोत्रमिव हविरपि वृणीष्व त्वं भजस्व जयतेर्लिटः क्वसुः सन्लिटोर्जेरित्यभ्यासादुत्तरस्य जकारस्य कुत्वं षष्ठ्यर्थे चतुर्थी वक्तव्येति चतुर्थी वसोः संप्रसारणमिति संप्रसारणं ॥ ८ ॥

॥ इत्यष्टमस्य सप्तमे चतुर्दशोवर्गः ॥ १४ ॥

ममाग्नइति नवर्चं षोडशं सूक्तं आंगिरसस्य विहव्यस्यार्षं वैश्वदेवं अंत्या जगती शिष्टास्त्रिष्टुभः । अनुक्रम्यतेहि—ममाग्नेनवविहव्योवैश्वदेवं जगत्यन्तमिति । संसवे निमित्तभूते वैश्वदेवसूक्तस्य पुरस्तादेतच्छंस्यं । सूत्रितंच—ममाग्नेवर्चइति वैश्वदेवसूक्तस्यापि वैतेष्वेवनिविदोदध्यादिति । समावर्तने अनेन सूक्तेन सिष्णासुना प्रत्यृचं समिदाधातव्या । सूत्रितंच—ममाग्नेवर्चइति प्रत्यृचं समिधोभ्यादध्यादिति ।

तत्र प्रथमा—

ममा॑ग्ने॒वर्चो॑विह॒वेष्व॑स्तु॒व॒यंत्वेन्धा॑नास्त॒न्वं॑पुषेम ।
मह्यं॑नमन्तांप्र॒दिश॒श्चत॑स्र॒स्त्वयाध्य॑क्षेण॒पृत॑नाजयेम ॥ १ ॥

मम॑ । अ॒ग्ने॒ । वर्चः॑ । वि॒ऽह॒वेषु॑ । अ॒स्तु॒ । व॒यम् । त्वा॒ ।
इन्धा॑नाः । त॒न्व॑म् । पु॒षे॒म॒ । मह्य॑म् । न॒म॒न्ता॒म् । प्र॒ऽदिशः॑ ।
चत॑स्रः । त्वया॑ । अधि॑ऽअक्षेण । पृत॑नाः । ज॒ये॒म॒ ॥ १ ॥

हेअग्ने विविधमाहूयन्ते येषु शूराइति विहवाः संग्रामाः यद्वा विविधं यागार्थं देवाआहूयन्त एष्विति विहवा यज्ञाः ह्वःसंप्रसारणंचन्यभ्युपविष्वित्यधिकरणे अप् संप्रसारणंच थाथादिनोत्तरपदान्तोदात्तत्वं संग्रामेषु यज्ञेषु वा वर्चः दीप्तिः त्वदनुग्रहात् ममास्तु भवतु वयंच त्वा-त्वां इंधानाः समिद्भिः दीपयन्तः तन्वं तव शरीरं पुषेम हविर्भिर्वर्धयेम इन्धेः शानचि श्नसोरल्लोपे उदात्तनिवृत्तिस्वरेण शानच् आद्युदात्तत्वे प्राप्ते विभाषावेण्विन्धानयोरित्युदात्तत्वं । तन्वं पुषेम पुषेर्लिङि लिङ्याशिष्यङ् । अपिच मह्यं मदर्थं ङयिचेत्यस्मदआद्युदात्तत्वं चतस्रः प्रदिशः प्रकृष्टादिशः तद्वासिनोजनाइत्यर्थः नमन्तां स्वतएव प्रह्वीभवन्तु नमतेः कर्मकर्तरि लोटि नदुहस्नुनमामिति यक्प्रतिषेधः त्वया अस्माभिर्हविर्भिः प्रवर्धितेनअध्यक्षेण ईश्वरेण सता पृतनाः शत्रुसेनाः जयेम अभिभवेम ॥ १ ॥

अथ द्वितीया—

**ममदेवाविहवेसन्तुसर्वइन्द्रवन्तोमरुतोविष्णुरग्निः ।**
**ममान्तरिक्षमुरुलोकमस्तुमह्यंवातःपवतांकामेअस्मिन् ॥ २ ॥**

मम । देवाः । विऽहवे । सन्तु । सर्वे । इन्द्रऽवन्तः । मरुतः ।
विष्णुः । अग्निः । मम । अन्तरिक्षम् । उरुऽलोकम् । अस्तु ।
मह्यम् । वातः । पवताम् । कामे । अस्मिन् ॥ २ ॥

सर्वे देवाविहवे संग्रामे यज्ञेवा मम सन्तु ममैव साधकाभवन्तु केपुनस्ते इन्द्रवन्तः इन्द्रेण युक्तामरुतः विष्णुरग्निश्च तथा अन्तरिक्षं मम उरुलोकं विस्तीर्णप्रकाशकमस्तु लोकदर्शने भावेघञ् लोकआलोकः प्रकाशः उरुर्लोकोयस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं अपिचास्मिन्कामे कामयितव्ये फले निमित्तभूते सति वातः वायुः पवतां अनुगुणं प्रवातु पूङ्पवने भौवादिकः ऊडिदमित्यादिना इदमः सप्तम्याउदात्तत्वं ॥ २ ॥

अथ तृतीया—

**मयिदेवाद्रविणमायजन्तांमय्याशीरस्तुमयिदेवहूतिः ।**
**दैव्याहोतारोवनुषन्तपूर्वेरिष्टास्यामतन्वासुवीराः ॥ ३ ॥**

मयि । देवाः । द्रविणम् । आ । यजन्ताम् । मयि । आऽशीः ।
अस्तु । मयि । देवऽहूतिः । दैव्याः । होतारः । वनुषन्त । पूर्वे ।
अरिष्टाः । स्याम । तन्वा । सुऽवीराः ॥ ३ ॥

देवाः सर्वे द्रविणं धनं मयि स्तोतरि आयजन्तां गमयन्तु मह्यं ददत्वित्यर्थः तथा आशीराशंसनीयं यज्ञफलंच मय्येवास्तु देवहूतिः देवानामाह्वानं अस्मिन्निति देवहूतिर्यज्ञः सच मय्यस्तु अपिच देवानामिमेदैव्याः देवाद्यञञाविति यञ् तादृशाहोतारः साधुहोमनिष्पादकामदीयाऋत्विजः पूर्वे अन्यदीयेभ्यऋत्विग्भ्यः प्रथमभाविनः सन्तोवनुषन्त देवान्संभजन्तां वनतेश्छान्दसे लङि व्यत्ययोबहुलमिति त्रयोविकरणाः उप्रत्ययः सिप्शपौच अडभावश्छान्दसः । वयंच तन्वा शरीरेण अरिष्टाः अहिंसिताः सुवीराः सुपुत्राश्च स्याम भवेम वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वं ॥ ३ ॥

अथ चतुर्थी—

मह्यंयजन्तुममयानिहव्याकूतिःसत्यामनसोमेअस्तु ।
एनोमानिगांकतमच्चनाहंविश्वेदेवासोअधिवोचतानः ॥ ४ ॥

मह्यम् । यजन्तु । मम । यानि । हव्या । आऽकूतिः ।
सत्या । मनसः । मे । अस्तु । एनः । मा । नि । गाम् । कतमत् ।
चन । अहम् । विश्वे । देवासः । अधि । वोचत । नः ॥ ४ ॥

मह्यं मदर्थं यजन्तु ऋत्विजोदेवान्हविर्भिर्यजन्तु यद्वा षष्ठ्यर्थे चतुर्थी मह्यं मदीयाऋत्विजइत्यर्थः । मम स्वभूतानि हव्यानि यानि हवींषि चरुपुरोडाशादीनि सन्ति तैर्हविर्भिरित्यर्थः तथा मेमनसआकूतिः संकल्पनं अभीष्टस्य प्रार्थनं सत्या यथार्थास्तु । अपिच अहं कतमच्चन किमपि एनः पापं मानिगां मानियतं निकृष्टतरंवा गच्छेयं पापं माकार्षं इत्यर्थः । एतेर्माङिलुङि इणोगालुङीतिगादेशः गातिस्थेति सिचोलुक् अपिच हेविश्वे सर्वे देवासोदेवाः यूयं नोस्माकं अधिवोचत विवादेषु पक्षपातेन ब्रूत वक्तेर्लोटि व्यत्येन आट् वचउमित्युमागमः ॥ ४ ॥

अथ पंचमी–

देवीःषळुर्वीरुरुनःकृणोतविश्वेदेवासइहवीरयध्वम् ।
माहास्महिप्रजयामातनूभिर्मारधामद्विषतेसोमराजन् ॥ ५॥१५॥

देवीः । षट् । उर्वीः । उरु । नः । कृणोत । विश्वे । देवासः ।
इह । वीरयध्वम् । मा । हास्महि । प्रऽजया । मा । तनूभिः ।
मा । रधाम । द्विषते । सोम । राजन् ॥ ५ ॥ १५ ॥

हेषट् उर्वीः षट्संख्याकाउर्व्यः एताश्चान्यत्राम्नायन्ते–षण्मोर्वीरंहसः पान्तु द्यौश्च पृथिवी-चाहश्च रात्रिश्चापश्चौषधयश्चेति । ईदृश्यो हेदेवीर्देव्यः जसि वाछन्दसीति पूर्णसवर्णदीर्घः नामंत्रिते समानाधिकरणे सामान्यवचनमित्यस्याविद्यमानत्वनिषेधेन षळुर्वीरित्यनयोरामंत्रितयोः पदात्परत्वादाष्टमिकमामंत्रितानुदात्तत्वं तायूयं उरुविस्तीर्णं धनं नोस्माकं कृणोत कुरुत कृविहिंसाकरणयोः धिन्विकृण्व्योरचेत्युप्रत्ययः तप्तनप्तनथनाश्चेति तस्य तबादेशः हेविश्वे सर्वे देवासोदेवा यूयं च इहास्मिन्धने प्राप्तव्ये विषये वीरयध्वं विक्रामयत तथा वयं तद्धनं लभेमहि तथा वीर्यवन्तोयूयं प्रयच्छध्वमित्यर्थः । वीर विक्रान्तौ अपिच प्रजया पुत्रादिरूपया माहास्महि वयं मापरित्यजेमहि माच तनूभिः शरीरैः त्यजेमहि । अस्मान् कदाचिदपि पुत्रादयः शरीराणिच मापरित्याक्षुरित्यर्थः । ओहाक् त्यागे अस्मात्कर्मणि लुङि चिण्वद्भावाभावे रूपमेतत् तथा हेराजन् राजमान यद्वास्माकं स्वामिन् हेसोम द्विषते अप्रीतिं कुर्वते द्विषे द्विषः शतरि आदादित्वाच्छपोलुक् शतरनुमइति विभक्तेरुदात्तत्वं षष्ठ्यर्थे चतुर्थी वक्तव्येति चतुर्थी द्विषतः शत्रोर्मारधाम मावशं प्राप्नुयाम तथात्वं कुर्वित्यर्थः । रध्यतिर्वशगमनइति यास्कः । यद्वा द्विषते शत्रवे तदर्थं मारधाम परिपक्काहननार्हामाभूम रधहिंसासंराध्योः संराद्धिः पाकइति तद्वृत्तिः माङिलुङि पुषादित्वात् च्लेरङादेशः ॥ ५ ॥

॥ इत्यष्टमस्य सप्तमे पञ्चदशोवर्गः ॥ १५ ॥

अथ षष्ठी–

अग्नेमन्युंप्रतिनुदन्परेषामदब्धोगोपाःपरिपाहिनस्त्वम् ।
प्रत्यञ्चोयन्तुनिगुतःपुनस्तेऽमैषांचित्तंप्रबुधांविनेशत् ॥ ६ ॥

अग्ने । मन्युम् । प्रतिऽनुदन् । परेषाम् । अदब्धः । गोपाः ।
परि । पाहि । नः । त्वम् । प्रत्यञ्चः । यन्तु । निऽगुतः । पुनरिति ।
ते । अमा । एषाम् । चित्तम् । प्रऽबुधाम् । वि । नेशत् ॥ ६ ॥

हेअग्ने परेषां शत्रूणां मन्युं क्रोधं प्रतिनुदन् प्रतिमुखं प्रेरयन् तिरस्कुर्वन् अदब्धः केनाप्यहिंसितः गोपाः गोपायिता गुपूरक्षणे इत्यस्मादायप्रत्ययान्तात्क्विपि वेरपृक्तलोपात्पूर्वं वलिलोपे रूपमेतत् ईदृशस्त्वं नोस्मान् परिपाहि परितः सर्वतोरक्ष । ते शत्रवः प्रत्यञ्चः प्रत्यञ्चन्तः प्रतिनिवर्तमानाः निगुतः गुङ् अव्यक्ते शब्दे अस्मात्क्विपि तुक् भयेन गद्गदरूपमव्यक्तं शब्दं नितरां कुर्वन्तः पुनर्यन्तु स्वकीयं स्थानं पुनर्गच्छन्तु । अपिच प्रबुधां प्रबुध्यमानानां एतेषां शत्रूणां चित्तं ज्ञानसाधनं मनः अमासह युगपदेव विनेशत् विनश्यतु प्रत्येकाभिप्रायेणैकवचनं णशअदर्शने अस्माच्छान्दसोलुङ् पुषादित्वात् च्लेरङादेशः नशिमन्योरलिट्येत्वं वक्तव्यमित्यकारस्यैत्वं ॥ ६ ॥

अथ सप्तमी—

धाताधातॄणांभुवनस्ययस्पतिर्देवंत्रातारमभिमातिषाहम् ।
इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपान्तुयजमानंन्यर्थात् ॥ ७ ॥

धाता । धातॄणाम् । भुवनस्य । यः । पतिः । देवम् । त्रातारम् ।
अभिमातिऽसहम् । इमम् । यज्ञम् । अश्विना । उभा ।
बृहस्पतिः । देवाः । पान्तु । यजमानम् । निऽअर्थात् ॥ ७ ॥

धातॄणां स्रष्टॄणामपि धाता स्रष्टा भुवनस्य कृत्स्नस्य भूतजातस्येन्द्रः सवितावा पतिः पालयितातं देवनशीलं त्रातारं सर्वेभ्योभयेभ्यः पालयितारं अभिमातिषाहं अभिमातीनां शत्रूणां षोढारं अभिभवितारं एवंगुणविशिष्टं इन्द्रं सवितारं वास्तौमीतिशेषः । षहअभिभवे छन्दसि सहइति विप्रत्ययः छान्दसं विभक्त्युदात्तत्वं उभा उभौ अश्विनौ बृहस्पतिश्च एतत्प्रमुखाः सर्वे देवा इमं यज्ञं अनुष्ठीयमानं यजमानं च न्यर्थात् निकृष्टादर्थात् पापात् यद्वा अर्थस्य प्रयोजनस्याभावोन्यर्थं तस्मात्पान्तु रक्षन्तु सफलं कुर्वंत्वित्यर्थः नेरनिधानइत्युत्तरपदान्तोदात्तत्वं ॥ ७ ॥

अथाष्टमी—

उरुव्यचानोमहिषःशर्मयंसदस्मिन्हवेपुरुहूतःपुरुक्षुः ।
सनःप्रजायैहर्यश्वमृळयेन्द्रमानोरीरिषोमापरादाः ॥ ८ ॥

उरुऽव्यचाः । नः । महिषः शर्म । यंसत् । अस्मिन् । हवे ।
पुरुऽहूतः । पुरुऽक्षुः । सः । नः । प्रऽजायै । हरिऽअश्व । मृळय ।
इन्द्र । मा । नः । रिरिषः । मा । परा । दाः ॥ ८ ॥

उरुव्यचाः विस्तर्णव्यापनः महिषः महान्पूज्योवा पुरुहूतः बहुभिर्यजमानैराहूतः पुरुक्षुः बहुनिवासः क्षियतेर्मितद्र्वादिभ्यउपसंख्यानं इति डुप्रत्ययः यद्वा पुरुभिर्बहुभिः शब्यमानः स्तूयमानः पूर्ववत् डुप्रत्ययः औणादिके कर्मणि क्विपिवा अनित्यमागमशासनमिति तुगभावः ईदृशइन्द्रः अस्मिन्हवे यज्ञे हूयन्ते अस्मिन्हवींषीति हवोयज्ञः जुहोतेरधिकरणे अप् यद्वा अस्मिन् हवे त्वद्विषये आह्वाने भावेनुपसर्गस्येति ह्वयतेरप् संप्रसारणंच नोस्मभ्यं शर्म सुखं यंसत् यच्छतु ददात्वित्यर्थः यमेर्लेटच्यडागमः सिब्बहुलमिति सिप् हेहर्यश्व हरी अश्वौ यस्य तादृश हे इन्द्र सत्वं नोस्माकं प्रजायै द्वितीयार्थे चतुर्थी प्रजां पुत्रपौत्रादिकां मृळय सुखय नोस्मान् मारीरिषोमाहिंसीः माचपरादाः परादानं परित्यागः मापरित्याक्षीरित्यर्थः ॥ ८ ॥

अथ नवमी—

येनःसपत्नाअपतेभवन्त्विन्द्राग्निभ्यामवबाधामहेतान् ।
वसवोरुद्राआदित्याउपरिस्पृशंमोग्रंचेत्तारमधिराजमक्रन् ॥ ९ ॥ १६ ॥

ये । नः । सऽपत्नाः । अप । ते । भवन्तु । इन्द्राग्निऽभ्याम् । अव ।
बाधामहे । तान् । वसवः । रुद्राः । आदित्याः । उपरिऽस्पृशम् ।
मा । उग्रम् । चेत्तारम् । अधिऽराजम् । अक्रन् ॥ ९ ॥ १६ ॥

नोस्माकं ये सपत्नाः शत्रवः ते अपभवन्तु अपगताभवन्तु स्वस्थानादपगताः प्रच्युताः भवन्तु तान् सपत्नान् इन्द्राग्निभ्यां हविर्भिः स्तुत्या च प्रसन्नाभ्यां अनुगृहीतावयं अवबाधामहे निकृष्टतरं विनाशयामः । अपिच वसवोरुद्राः आदित्याश्च मा मां उपरिस्पृशं उन्नतपदसंस्प्रष्टारं

सर्वेभ्यः श्रेष्ठं अक्रन् कुर्वन्तु तथाउग्रमुद्गूर्णबलं चेत्तारं चेतितारं छान्दसइड्भावः सर्वस्य ज्ञातारं अधिराजं सर्वेषामधीश्वरं च मां कुर्वन्तु करोतेश्छान्दसे लुङि मंत्रेघसेत्यादिना च्लेर्लुक्॥ ९॥

॥ इत्यष्टमस्य सप्तमे षोडशोवर्गः ॥ १६ ॥

॥ इतिदशमे मंडले दशमोनुवाकः ॥ १० ॥

एकादशेनुवाके त्रयोविंशतिसंख्याकानि सूक्तानि तत्रनासदासीति सप्तर्चं प्रथमं सूक्तं त्रैष्टुभं परमेष्ठीनाम प्रजापतिर्ऋषिः वियदादिभावानां सृष्टिस्थितिप्रलयादीनामत्र प्रतिपाद्यत्वात् तेषां कर्ता परमात्मा देवता । तथाचानुक्रान्तं—नासत्सप्तप्रजापतिः परमेष्ठी भाववृत्तं त्विति। गतोविनियोगः ।

तत्र प्रथमा—

नासदासीन्नोसदासीत्तदानीं नासीद्रजोनोव्योमापरोयत् ।
किमावरीवः कुहकस्यशर्मन्नम्भः किमासीद्गहनंगभीरम् ॥ १ ॥

न । असत् । आसीत् । नो इति । सत् । आसीत् । तदानीम् ।
न । आसीत् । रजः । नो इति । विऽओम । परः । यत् ।
किम् । आ । अवरीवरिति । कुह । कस्य । शर्मन् । अम्भः ।
किम् । आसीत् । गहनम् । गभीरम् ॥ १ ॥

तपसस्तन्महिनाजायतैकमित्यादिना अग्रे सृष्टिः प्रतिपादयिष्यते अधुना ततः प्रागवस्था निरस्तसमस्तप्रपंचा या प्रलयावस्था सा निरूप्यते तदानीं प्रलयदशायां अवस्थितं यदस्य जगतोमूलकारणं तन्नासत् शशविषाणवन्निरुपाख्यं नासीत् नहि तादृशात् कारणादस्य सतोजगतउत्पत्तिः संभवति। तथा नोसत् नैव सत् आत्मवत् सत्त्वेन निर्वाच्यमासीत् यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपिनसंभवति कुतस्तयोस्तादात्म्यमित्युभयविलक्षणनिर्वाच्यमेवासीदित्यर्थः । ननु नोसदिति पारमार्थिकसत्वस्य निषेधः तर्ह्यात्मनोप्यनिर्वाच्यत्वप्रसंगः अथोच्यते न आनीदवातमिति तस्य सत्त्वमग्रेवक्ष्यते

परिशेषान्मायायाएवात्र सत्वं निषिध्यते इति एवमपि तदानीमिति विशेषणानर्थक्यंव्यवहारदशायामपि तस्याः पारमार्थिकसत्त्वाभावात् ।अथ व्यावहारिकसत्वस्य तदापिव्यावहारिकसत्ता पृथिव्यादीनां भावानां तदापि विद्यमानत्वात् कथं नोसदितिनिषेधः।तत्राह—नासीद्रजइत्यादि लोकारजांस्युच्यन्तइतियास्कः । अत्रच सामान्यापेक्षया एकवचनं व्योम्नोवक्ष्यमाणत्वात् तस्याधस्तनाः पातालादयः पृथिव्यंतानासन् इत्यर्थः तथा व्योमान्तरिक्षं तदपि नो नैवासीत् परइति सकारान्तं परस्तादित्यर्थे वर्तते परशब्दाच्छान्दसस्तासेरर्थे असिप्रत्ययः परः व्योम्नः परस्तादुपरि देशे द्युलोकप्रभृतिसत्यलोकान्तं यदस्ति तदपि नासीदित्यर्थः अनेन चतुर्दशभुवनगर्भं ब्रह्मांडरूपेण निषिद्धं भवति । अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधयति—किमावरीवरिति । किमावरणीयं तत्वं आवरकभूतजातं आवरीवः अत्यन्तमावृणुयात् आवार्याभावात्तदावरकमपि नासीदित्यर्थः वृणोतेर्यङ्लुगन्ताच्छान्दसे लङि तिपि रूपमेतत् । यद्वा किमिति प्रथमैव किंतत्वमावरकमावृणुयात् आवार्याभावात् आव्रियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः । आवृण्वत् तत्तत्वं कुह कुत्र देशे अवस्थायावृणोति आधारभूतस्तादृशोदेशोपि नासीदित्यर्थः । किंशब्दात्सप्तम्यर्थे हप्रत्ययः कुतिहोरिति प्रकृतेः कु आदेशः कस्यशर्मन् कस्य वा भोक्तुः जीवस्य शर्मणि सुखे सुखदुःखसाक्षात्कारलक्षणेवा निमित्तभूते सति तदावरकं तत्वमावृणुयात् जीवानामुपभोगार्थाहिसृष्टिः तस्यां हि सत्यां ब्रह्मांडस्य भूतैरावरणं प्रलयदशायां च भोक्तारोजीवाः उपाधिविलयात् प्रविलीनाइति कस्यकश्चिदपि भोक्तान संभवति इत्यावरणस्य निमित्तत्वाभावादपि तन्न घटतइत्यर्थः । एतेन भोग्यप्रपञ्चवत् भोक्तृप्रपंचोपि तदानीं नासीदित्युक्तं भवति । किंशब्दादुत्तरस्य ङसः सावेकाचइति प्राप्तस्योदात्तत्वस्य नगोश्वन्त्सावर्णेति प्रतिषेधः । सुपांसुलुगितिशर्मणः सप्तम्यालुक् । यद्यपि सावरणस्य ब्रह्मांडस्य निषेधेन तदन्तर्गतं अप्सत्वमपि निराकृतं तथाप्यापोवाइदमग्रे सलिलमासीत् इत्यादिश्रुत्या कश्चिदपांसद्भावमाशंकेत तं प्रत्याचष्टे अंभःकिमासीदिति । गहनं दुःप्रवेशं गभीरं दुरवस्थानं अत्यगाधं ईदृशमंभः किमासीत्तदपि नैवासीदित्यर्थः । श्रुतिस्त्ववान्तरप्रलयविषया ॥ १ ॥

अथ द्वितीया—

**नमृ॒त्युरा॑सीद॒मृतं॒नत॒र्हि॒नरात्र्या॒अह्न॑आसीत्प्र॒के॒तः ।**

**आनी॑दवा॒तंस्व॒धया॒तदेकं॒तस्मा॑द्धा॒न्यन्नप॒रः॒किंच॒नास॑ ॥ २ ॥**

न । मृत्युः । आसीत् । अमृतम् । न । तर्हि । न । रात्र्याः ।
अह्नः । आसीत् । प्रऽकेतः । आनीत् । अवातम् । स्वधया । तत् ।
एकम् । तस्मात् । ह । अन्यत् । न । परः । किम् । चन । आस ॥ २ ॥

ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् सएव संहर्ता मृत्युर्विद्यतइत्यतआह—नमृत्युरासीदिति । ननु यदि सनासीत् तर्हि तदभावकृतं अमृतं अमरणं प्राणिनामवस्थानं तदानामपि स्यात् तत्राह अमृतं न तर्हीति ।तर्हि तस्मिन् प्रतिहारसमये । अयं भावः—सर्वेषां प्राणिनां परिपक्कं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत् तदा भोगाभावात् निष्प्रयोजनमिदं जगत् इति परमेश्वरस्य मनसि संजिहीर्षा जायते तयैव समृत्युः सर्वं जगत्संहरतइति । किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादिति । एतदेवाभिप्रेत्य कठैराम्नायते—यस्यब्रह्मचक्षत्रंचोभेभवत ओदनंमृत्युर्यस्योपसेचनंकइत्थावेदयत्रसइति । नन्वेतस्य सर्वस्याधिकरणभूतः कालोविद्यतइत्यतआह नरात्र्याइति रात्र्याअह्नश्च प्रकेतः प्रज्ञानं नासीत् तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात् एतेनाहोरात्रनिषेधेन तदात्मकोमासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः । कथं तर्हि नोसदासीत्तदानीमिति कालवाची प्रत्ययः उपचारादिति ब्रूमः यथेदानीन्तननिषेधस्य कालोवच्छेदकः तथा मायापि तदवच्छेदहेतुरिति अवच्छेदकत्वसाम्येन अकालेपि कालवाची प्रत्ययः । यदवादिष्म ब्रह्मणः परमार्थसत्व मग्रे वक्ष्यतइति तदिदानीं दर्शयत्यानीदिति । तत्सकलवेदान्तप्रसिद्धं ब्रह्मतत्वमानीत् प्राणितवत् नन्वेवं प्राणनकर्तुः जीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यान्न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः अप्राणोह्यमनाःशुद्धइति तस्य प्राणसंबन्धाभावात् । तत्राह अवातमिति अयमाशयः आनीदित्यत्र धात्वर्थः क्रिया तत्कर्ता तस्य च भूतकालसंबन्धइति त्रयोर्थाः प्रतीयन्ते तत्र समुदायोन विधीयते यथाग्नयेष्टाकपालइति । येन ब्रह्मणः सत्त्वं न स्यात् । किंतर्हि अनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणोगुणोविधीयते दध्नाजुहोतीति वाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुणविधानं तत्राप्यनेनकर्तृत्वविशिष्टस्य न पूर्वकालसत्ताविधीयते तन्निषेधानुपपत्तिप्रसंगात् अतोनेनकर्तृत्वेनेदानींतनेनोपलक्षितं यन्निरुपाधिकं परं ब्रह्म तस्यैव भूतकालसत्ताविधीयतइति न कश्चिद्दोषइति । नन्वीदृशस्य ब्रह्मणः मायया सह संबन्धासंभवात् संख्याभिमता स्वतंत्रा सद्रूपा सत्वरजस्तमोगुणात्मिका मूलप्रकृतिरेवाभिमतेति किंनोसदिति निषेधः तत्राह—स्वधयेति । स्वस्मिन् धीयते ध्रियते आश्रित्यवर्ततइति स्वधा माया तया तद्ब्रह्म एक

अविभागापन्नमासीत् सहयुक्तेप्रधानइति तृतीया सहशब्दयोगाभावेपि सहार्थयोगे भवति वृद्धोयूनेति निपातनात् लिंगात् अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातंत्र्यं निवार्यते यद्यप्यसंगस्य ब्रह्मणः तया सह संबन्धोन संभवति तथापि तस्मिन्नविद्यया तत्स्वरूपमिव संबन्धोप्यध्यस्यते यथा शुक्तिकायां रजतस्य एतेन सद्रूपत्वमपितस्याः प्रत्याख्यातं । ननु यदि मायाब्रह्मणा सहाविभागापन्ना तर्हि तस्याअनिर्वाच्यत्वाद्ब्रह्मणोपि तत्प्रसंगइति कथं तस्य सत्वमुक्तमानीदवातमिति ब्रह्मणो वा॰त्वात्तस्या अपि सत्त्वप्रसंगइति कथं नोसदासीति सत्वप्रतिषेधः । मैवं अनुभवदृष्ट्या ऐक्यावभासेपि युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं ब्रह्मणः सत्वंच प्रतिपादितं ननु दृग्दृश्याविति द्वावेव पदार्थौ आनीदवातंस्वधयेति तौचेदंगीक्रियेते तत्किमपरमवशिष्यते यन्नासीद्रजइत्यादिना प्रतिषिध्येत तत्राह तस्मादिति तस्माद्ध तस्मात्खलु पूर्वोक्तान्मायासहिताद्ब्रह्मणः अन्यत्किंचन किमपि वस्तु भूतभौतिकात्मकं जगन्नास न बभूव छन्दस्युभयथेति लिटः सार्वधातुकत्वादस्तेर्भूभावाभावः ननु तदानीमन्यस्य सत्वनिषेधोन शंक्यः असत्त्वेचाप्रसक्तत्वान्न निषेधोपयोगइत्यतआह परइति परः परस्तात्सृष्टेः ऊर्ध्वं वर्तमानं इदं जगत् तदानीं न बभूवेत्यर्थः अन्यथा उक्तरीत्या क्वचिदपि निषेधोन स्यादिति भावः ॥ २ ॥

अथ तृतीया—

तम॑आसीत्तम॑सागू॒ळ्हमग्रे॑ऽप्रके॒तं स॑लि॒लं सर्व॑मा इ॒दम् ।
तु॒च्छ्येना॒भ्वपि॑हितं॒ यदासी॒त्तप॑स॒स्तन्म॑हि॒नाजा॑य॒तैक॑म् ॥ ३ ॥

तमः॑ । आ॒सी॒त् । तम॑सा । गू॒ळ्हम् । अग्रे॑ । अ॒प्र॒ऽके॒तम् । स॒लि॒लम् । सर्व॑म् । आ॒: । इ॒दम् । तु॒च्छ्येन॑ । आ॒भु । अपि॑ऽहितम् । यत् । आसी॑त् । तप॑सः । तत् । म॒हि॒ना । अ॒जा॒य॒त । एक॑म् ॥ ३ ॥

ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् कारकं च कारणावान्तरविशेषइति कारकस्य सतोनियतपूर्वक्षणवर्तित्वस्यावश्यंभावात् अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपितद्विद्यतइत्युच्यते कथं तस्य जन्म अतआह-तमसागूळ्हमग्रइति । अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जग

त् तमसा गूढं यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत् आत्मतत्वस्यावरकत्वान्मायापर-संज्ञं भावरूपाज्ञानमत्र तमइत्युच्यते तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भव-ति आच्छादकात्तस्मात् तमसोनामरूपाभ्यां यदाविर्भवनं तदेवतस्यजन्मेत्युच्यते एतेन कारणा-वस्थायामसदेवकार्यमुत्पद्यतइत्यसद्वादिनोसत्कार्यवादिनो येमन्यन्ते ते प्रत्याख्याताः। ननु का-रणे तमसितज्जगदात्मकं कार्यं विद्यते चेत्कथं नासीद्रजइत्यादि निषेधः। तत्राह—तमआसीदि-ति तमोभावरूपाज्ञानं मूलकारणं तद्रूपता तदात्मना यतः सर्वं जगत् प्राक् तम आसीत् अतोनि-षिध्यतइत्यर्थः नन्वावरकत्वादावरकं तमः कर्तृ आवार्यत्वात् जगत्कर्म कथं तयोः कर्मकर्त्रो-स्तादात्म्यं तत्राह अप्रकेतमिति। अप्रकेतं अप्रज्ञायमानं। अयमर्थः यद्यपि जगतः तमसश्च कर्म-कर्तृभावोयौक्तिकोविद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायतइति तादात्म्यवर्णनं। अतएव मनुना स्मर्यते—आसीदिदंतमोभूतमप्रज्ञातमलक्षणं। अप्रतर्क्यमनिर्देश्यंप्रसुप्तमिवसर्वतइति। कुतोवा नप्रज्ञायते तत्राह—सलिलं सलगतौ औणा-दिकः इलच् इदं दृश्यमानं सर्वं जगत्सलिलं कारणेन संगतं अविभागापन्नं आः आसीत् अस्तेर्लङि तिपि बहुलंछन्दसीति इडभावे हल्ङ्याब्भ्यइति तिलोपे तिप्यनस्तेरिति पर्यु-दासादीकाराभावः यद्वा सलिलमिति लुप्तोपमं सलिलमिव यथा क्षीरेणाविभागापन्नं नी-रंदुर्विज्ञानंतथा तमसा अविभागापन्नं जगत् नशक्यविज्ञानमित्यर्थः। ननु विविधविचित्र-रूपभूयसः प्रपंचस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः तथा तमोपि क्षी-रवद्बलवदित्येवोच्यते तर्हि दुर्बलस्य जगतः सर्गसमयेपि नोद्भवसंभवइत्यतआह तुच्छ्ये-नेति। आसमन्ताद्भवतीत्याभु तुच्छ्येन छान्दसोयकारोपजनः तुच्छेन तुच्छकल्पनेन सदस द्विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत् दधातेः कर्मणि निष्ठा दधातेर्हिः गतिरनन्तरइति गतेः प्रकृतिस्वरत्वं। एकं एकीभूतं कारणेन तमसा अविभागतां प्राप्तमपि तत्कार्यजातं तपसः स्रष्टव्यपर्यालोचनरूपस्यमहिना माहात्म्येनाजायत उत्पन्नं। तपसः स्रष्टव्य-पर्यालोचनरूपत्वंचान्यत्राम्नायते—यः सर्वज्ञः सर्वविद्यस्यज्ञानमयंतपइति ॥ ३ ॥

अथ चतुर्थी—

**का॒म॒स्तद॑ग्रे॒सम॑वर्त॒ताधि॒मन॑सो॒रेतः॑प्रथ॒मंयदासी॑त् ।**
**स॒तोबन्धु॒मस॑ति॒निर॑विन्दन्हृ॒दिप्र॒तीष्या॑क॒वयो॑मनी॒षा ॥ ४ ॥**

कामः । तत् । अग्रे । सम् । अवर्तत । अधि । मनसः । रेतः ।
प्रथमम् । यत् । आसीत् । सतः । बन्धुम् । असति । निः ।
अविन्दन् । हृदि । प्रतिऽइष्य । कवयः । मनीषा ॥ ४ ॥

ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव किंनिबन्धनमित्यतआह कामस्तदग्रइति । अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत सिसृक्षा जातेत्यर्थः । ईश्वस्य सिसृक्षावा किंहेतुकेत्यतआह मनसइति । मनसः अन्तःकरणस्थ संबन्धिवासनाशेषेण मायायां विलीनेन्तःकरणे समवेतं सामान्यापेक्षमेकवचनं सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः एतेनात्मनोगुणाधारत्वं मत्याख्यातं । तादृशं रेतः भाविनः प्रपंचस्य बीजभूतं प्रथममतीतेकल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवत् भूष्णु वर्धिष्णवजायत परिपक्कं सत् फलोन्मुखमासीदित्यर्थः तत् ततोहेतोः फलप्रदस्यसर्वसाक्षिणः कर्माध्यक्षस्यपरमेश्वरस्यमनसि सिसृक्षाजायतइत्यर्थः । तस्यां च जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं जगत्सृजति । तथाचाम्नायते—सोकामयत बहुःस्यांप्रजायेयेति सतपोतप्यत सतपस्तप्त्वा इदꣳसर्वमसृजत यदिदंकिंचेति । श्रुतिरात्मनाइत्थमवगमितेर्थे विद्वदनुभवमप्यनुग्राहकत्वेनप्रमाणयति सतइति । ततः सत्वेनेदानीमनुभूयमानस्य सर्वस्य जगतोबन्धुं बन्धकं हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रान्तदर्शनाः अतीतानागतवर्तमानाभिज्ञायोगिनः हृदि हृदये निरुद्ध्या मनीषा मनीषयाबुद्ध्या सुपांसुलुगिति तृतीयायालुक् प्रतीष्य विचार्य अन्येषामपीति सांहितिकोदीर्घः असति सद्विलक्षणे अव्याकृते कारणे निरविन्दन् निःकृष्यालभन्त विविच्याजानन्नित्यर्थः ॥ ४ ॥

अथ पञ्चमी—

तिरश्चीनोविततोरश्मिरेषामधःस्विदासीꣳदुपरिस्विदासी३त् ।
रेतोधाआसन्महिमानआसन्त्स्वधाअवस्तात्प्रयतिःपरस्तात् ॥५॥

तिरश्चीनः । विऽततः । रश्मिः । एषाम् । अधः । स्वित् । आसी३त् ।
उपरि । स्वित् । आसी३त् । रेतःऽधाः । आसन् । महिमानः ।
आसन् । स्वधा । अवस्तात् । प्रऽयतिः । परस्तात् ॥ ५ ॥

एवमविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते येयं नासदासीदित्यविद्या प्रतिपादिता यश्च कामस्तदग्रइति कामः मनसोरेतःप्रथमंयदासीत् इति यत्कर्म एषामविद्याकामकर्मणां वियदादिभूतजातानि सृजतां रश्मिः रश्मिसदृशः यथा सूर्यरश्मिरुदयानन्तरं निमेषमात्रेण युगपत्सर्वं जगद्व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन् यःकार्यवर्गोविततोविस्तृतआसीत् स्विदासीदिति वक्ष्यमाणमत्रापि संबध्यते विचार्यमाणानामिति प्लुतः तत्रोदात्तइत्यनुवृत्तेः सचोदात्तः स्विदिति वितर्के सकार्यवर्गः प्रथमतः किं तिरश्चीनः तिर्यगवस्थितोमध्ये स्थितआसीत् किंवा अधः अधस्तादासीत् आहोस्वित् उपरि उपरिष्टात्किमासीत्।उपरिस्विदासीदितिच इत्यनुदात्तःप्लुतः। आत्मनआकाशःसंभूतः आकाशाद्वायुःवायोरग्निरित्यादिकया पञ्चमीश्रुत्या ततउद्गातारं ततोहोतारमितिवत् क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत् सर्गस्य शीघ्रव्यापनेन तस्य क्रमस्य दुर्लक्षणत्वात् एतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते एवं नाम शीघ्रं सर्वतोदिक्षु सर्गोनिष्पन्नइत्यर्थः। एतदेव विभजते सृष्टेषु कार्येषु मध्ये केचिद्धावारेतोधाः रेतसोबीजभूतस्य कर्मणोविधातारः कर्तारः भोक्तारश्च जीवाआसन् अन्ये भावामहिमानः स्वार्थिकइमनिच् महान्तोवियदादयोभोग्याआसन् एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः अयमेवार्थस्तैत्तिरीयके—तत्सृष्ट्वा तदेवानुप्राविशदित्यारभ्य प्रतिपाद्यते। तत्रच भोक्तृभोग्ययोर्मध्ये स्वधा अन्ननामैतत् भोग्यप्रपञ्चः अवस्तात् अवरः निकृष्टआसीत् प्रयतिः प्रयतिता भोक्ता परस्तात् परः उत्कृष्टआसीत् भोग्यप्रपंचं भोक्तृप्रपंचस्य शेषभूतं कृतवानित्यर्थः। विभाषापरावराभ्यामिति प्रथमार्थे अस्तातिः अस्तातिचेत्यवरशब्दस्य अवादेशः अवस्तादिति संहितायां ईषाअक्षादित्वात्प्रकृतिभावः॥ ५॥

अथ षष्ठी—

**कोअद्धावेदकइहप्रवोचत्कुतआजाताकुतइयंविसृष्टिः।**
**अर्वाग्देवाअस्यविसर्जनेनाथाकोवेदयतआबभूव ॥ ६ ॥**

कः। अद्धा। वेद। कः। इह। प्र। वोचत्। कुतः। आऽजाता। कुतः। इयम्। विऽसृष्टिः। अर्वाक्। देवाः। अस्य। विऽसर्जनेन। अथ। कः। वेद। यतः। आऽबभूव॥ ६॥

एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता एतावद्वाइदं अन्नंचैवान्नादश्च सोमएवान्नमग्निरन्नादइतिवत् अथेदानीं सा सृष्टिः दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह कोअद्धेति। कः पुरुषः अद्धा पारमार्थ्येन वेदजानाति कोवा इहास्मिन्लोके प्रवोचत् प्रब्रूयात् इयं दृश्यमानाविसृष्टिः विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारासृष्टिः कुतः कस्मादुपादानकारणात् कुतः कस्माच्च निमित्तकारणादाजाता समन्ताज्जाता प्रादुर्भूता एतदुभयं सम्यक् कोवेद कोवा विस्तरेण वक्तुंशक्नुयादित्यर्थः। ननुदेवाअजानन्तः सर्वज्ञास्ते ज्ञास्यंति वक्तुं च शक्नुवन्तीत्यतआह—अर्वागिति देवाश्चास्य जगतोविसर्जनेन वियदादिभूतोत्पत्त्यनन्तरं विविधं यद्भौतिकं सर्जनंसृष्टिः तेनअर्वाक् अर्वाचीनाः कृताः भूतसृष्टेः पश्चाज्जाताइत्यर्थः तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः अजानन्तोवा कथं प्रब्रूयुः उक्तं दुर्ज्ञानत्वं निगमयति-अथ एवं सति देवाअपि न जानन्ति किल तद्व्यतिरिक्तः कोनाम मनुष्यादिर्वेद तत् जगत्कारणं जानाति यतः कारणात्कृत्स्नं जगदाबभूव अजायत॥ ६॥

अथ सप्तमी—

**इयंविसृष्टिर्यतआबभूवयदिवादधेयदिवान।**
**योअस्याध्यक्षःपरमेव्योमन्त्सोअङ्गवेदयदिवानवेद ॥ ७॥ १७॥**

इयम्। विऽसृष्टिः। यतः। आऽबभूव। यदि। वा। दधे। यदि। वा। न। यः। अस्य। अधिऽअक्षः। परमे। विऽओमन्। सः। अङ्ग। वेद। यदि। वा। न। वेद॥ ७॥ १७॥

उक्तप्रकारेण यथाइदं जगत्सर्जनदुर्विज्ञानं एवं सृष्टं जगत् तद्धरमपीत्याह इयमिति। यतः उपादानभूतात्परमात्मनः इयं विसृष्टिः विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिः आबभूव आजाता सोपि किल यदिवा दधे धारयति यदिवा न धारयति एवं च कोनामान्योधर्तुं शक्नुयात् यदि धारयेत् ईश्वरएव धारयेत् नान्यइत्यर्थः एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मणउपादानकारणत्वमुक्तं भवति। तथाच पारमार्षसूत्रं—प्रकृतिश्चप्रतिज्ञादृष्टान्तानुपरोधादिति। यद्वा अनेनार्धर्चेन पूर्वोक्तं सृष्टिदुर्ज्ञानत्वमेव दृढयतिकोवेदेत्यनुवर्तते इयं विविधा सृष्टिर्यतआबभूव आसमन्तादजायतेति कोवेद न कोपि नास्त्येव जगतो जन्म कदाचिदनीदृशं जगदिति बहवोभ्रान्ताः भवन्त्यपि यतः जनिकर्तुः प्रकृतिरित्यपादानसंज्ञायां पंचम्यास्तसिल् यस्मात्परमात्म-

नउपादानभूतादाबभूव तं परमात्मानं कोवेद न कोपि प्रकृतितः परमाणुभ्योवा जगज्जन्मेति हि बहवोभ्रान्ताः । तथा सएवोपादानभूतः परमात्मा स्वयमेव निमित्तभूतोपि सन् यदिवा दधेविद्धे इदं जगत्ससर्ज यदिवा न ससर्ज । असंदिग्धे संदिग्धवचनमेतत् शास्त्राणि चेत्प्रमाणं स्युरिति यथा । सएव विद्धे तं कोवेद अजानन्तोपि बहवोजडात्प्रधानादकर्तृकमेवेदं जगत्स्वयमजायतेति विपरीतं प्रतिपन्नाः विदधतो विधानमजानन्तोपि सएवोपादानभूतइत्यपि कोवेद न कोपि उपादानादन्यः तटस्थएवेश्वरोविदधइति हि बहवः प्रतिपन्नाः देवाअपि यं न जानन्ति तदर्वाचीनानां एषां तत्परिज्ञाने कैव कथेत्यर्थः । यद्येवं जगत्सृष्टिरत्यन्तदुरवबोधना तर्हि सा प्रमाणपद्धतिमध्यास्तइत्याशंक्य तत्सद्भावे ईश्वरः वेदं प्रमाणयति योअस्येति अस्य भूतभौतिकात्मकस्य जगतोयोध्यक्षईश्वरः परमे उत्कृष्टे सत्यभूते व्योमन् व्योमनि आकाशे आकाशवन्निर्मले स्वप्रकाशे यद्वा अवतेस्तर्पणार्थादन्येभ्योपिदृश्यन्तइति मनिन् नेड्वशिकृतीतीट्प्रतिषेधः ज्वरत्वरेत्यादिना वकारोपधयोरूठ् सप्तम्यालुक् नङिसंबुध्योरिति नलोपप्रतिषेधः व्योमनि विशेषेण तृप्तेनिरतिशयानन्दस्वरूपइत्यर्थः । यद्वा अवतिर्गत्यर्थः । व्योमनि विशेषेण गन्तव्ये देशकालवस्तुभिरपरिच्छिन्नइत्यर्थः । अथवा अवतिर्ज्ञानार्थः व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि ईदृशे स्वात्मनि प्रतिष्ठितः । श्रूयतेहि—सनत्कुमारनारदयोः संवादे—सभगवः कस्मिन् प्रतिष्ठितइति । स्वेमहिम्नीति । ईदृशोयः परमेश्वरः सोअंग अंगेति प्रसिद्धौ सोपि नाम वेद जानाति यदिवा न वेद न जानाति कोनामान्योजानीयात् सर्वज्ञईश्वरएव तां सृष्टिं जानीयात् नान्यइत्यर्थः ॥ ७ ॥

॥ इत्यष्टमस्य सप्तमे सप्तदशोवर्गः ॥ १७ ॥

योयज्ञइति सप्तर्चंद्वितीयंसूक्तं प्रजापतिपुत्रस्य यज्ञाख्यस्यार्षं आद्या जगती शिष्टास्त्रिष्टुभः अत्रापि यज्ञादीनां केषांचिद्भावानां सृष्टिः प्रतिपाद्यते अतः स्रष्टव्यत्वेन प्रधानभूतोयोर्थः सैव देवता तत्कर्ता प्रजापतिरेव देवता । तथाचानुक्रान्तं—योयज्ञोयज्ञः प्राजापत्योजगत्याद्येति । गतोविनियोगः ।

तत्र प्रथमा—

**योयज्ञोविश्वतस्तन्तुंभिस्तृतएकंशतंदेवकर्मेभिरायंतः ।**
**इमेवंयन्तिपितरोयआंययुःप्रवयापंवयेत्यांसतेतते ॥ १ ॥**

यः । य॒ज्ञः । वि॒श्वतः॑ । तन्तु॑ऽभिः । त॒तः । एक॑ऽशतम् ।
दे॒व॒ऽक॒र्मेभिः॑ । आऽय॑तः । इ॒मे । व॒य॒न्ति॒ । पि॒तरः॑ । ये ।
आ॒ऽय॒युः । प्र । व॒य॒ । अप॑ । व॒य॒ । इति॑ । आ॒स॒ते॒ । त॒ते ॥ १ ॥

तन्तुभिस्तनितृभिः विस्तारयितृभिः वियदादिभूतैर्यः सर्गात्मकोयज्ञः विश्वतः सर्वतस्ततोविस्तृतः तथा एकशतं एकं च शतं च एकशतं संख्ययेति पूर्वपदप्रकृति स्वरत्वं एकोत्तरशतमित्यर्थः ब्रह्मा येषु शतसंख्येष्वात्मीयसंवत्सरेषु जीवति तदभिप्रायेणात्रशतसंख्या जीवता तेन प्रजापतिना सार्धमेकशतमित्युच्यते यथा शतायुर्वैपुरुषः शतवीर्यआत्मैकशतइति अत्यन्तसंयोगे द्वितीया ब्रह्मणः शतसंवत्सरपर्यन्तं देवकर्मभिर्देवानुद्दिश्यभोक्तृभिः कृतैः कर्मभिरायतः दीर्घीभूतः तावत्कालावस्थायी एवमायामविस्तारवान् । पितरः पालकाः प्रजापतेः प्राणभूताः विश्वसृजोदेवाः वयन्ति निर्मिमते ये देवाः आययुः स्रष्टव्यं सर्वं जगत् स्ववयनेन व्यापुः अपिच प्रवयापवयेति । प्रवाणं नाम प्रकृष्टस्य चेतनस्य भोक्तृप्रपंचस्य सर्जनं अपवानं नाम अप्रकृष्टस्यनिकृष्टस्याचेतनस्य भोग्यप्रपंचस्य सर्जनं वेञ्तन्तुसन्ताने समुच्चयेन्यतरस्यामिति लोट् तस्यहिस्वावित्यनुवृत्तेर्हिरादेशः शब्गुणायादेशाः अतोहेरिति लुक् प्रवयापवयेति वयन्तः प्रवाणमपवानं च कुर्वन्तइत्यर्थः एवंभूताःसन्तः ते विश्वसृजः तते विस्तृते सत्यलोके आसते प्राणरूपेण प्रजापतिमुपासते यद्वा ज्योतिष्टोमादिर्यज्ञएवं रूपकत्वेन पटात्मना वर्ण्यते योयज्ञोज्योतिष्टोमादिः तन्तुभिः तन्तुस्थानीयैः अग्निष्टोमात्यग्निष्टोमादिसंस्थाभेदैः सप्तभिश्छन्दोभिर्वा विश्वतः सर्वतस्ततोविस्तृतः तथा एकशतं तृतीयार्थे प्रथमा एकाधिकेनाग्निचयनेनयुक्तैः देवकर्मभिः गवामयनप्रभृतिकैः विश्वसृजामयनान्तैः एकाहादिसत्रात्मकैर्वा आयतोदीर्घीभूतः एवमायतोविस्तारवान् यज्ञात्मकोयं पटः प्रजापतिना सृष्टः तं पटं पितरोस्माकं पितृभूताः इमे अंगिरसः वयन्ति तस्य पटस्य प्राचीनतन्तुस्थानीयानि स्तुतशस्त्राणि प्रवय त्वं कुरु अपवय तिरश्चीनतन्तुस्थानीयानि यजूंषि त्वं कुरु एवं परस्परं नियुंजानाआसते नियुंजन्ति । एवं विस्तृतस्य यज्ञस्य प्रजापतेः सकाशादुत्पत्तिरुत्तरया प्रतिपाद्यते ॥ १ ॥

सैषा द्वितीया—

पुमाँ॑ए॒नं॑तनुत॒उत्कृ॑णत्ति॒पुमा॒न्वित॑त्ने॒अधि॒नाके॑अ॒स्मिन् ।
इ॒मेम॒यूखा॒उप॑सेदुरू॒सदः॒सामा॑निचक्रु॒स्तस॑रा॒ण्योत॑वे ॥ २ ॥

पुमा॑न् । ए॒न॒म् । त॒नु॒ते॒ । उत् । कृ॒ण॒त्ति॒ । पुमा॑न् । वि । त॒त्ने॒ । अधि॑ । नाके॑ । अ॒स्मिन् । इ॒मे । म॒यूखाः॑ । उप॑ । से॒दुः॒ । ऊँ॒ इति॑ । सद॑ः । सामा॑नि । च॒क्रुः॒ । तस॑राणि । ओत॑वे ॥ २ ॥

पुमान् पुरुषः आदिपुरुषः प्रजापतिः एनं यज्ञं तनुते विस्तारयति सृष्टवानित्यर्थः। तथा-च ब्राह्मणं—सप्रजापतिर्यज्ञमतनुत तमाहरत्तेनायजते[1]ति। प्रजापतिर्यज्ञमसृजत यज्ञंसृष्टमनुब्र-ह्मक्षत्रे असृज्येतामिति[2]च। सएवपुमान् सृष्टंतं यज्ञं उत्कृणत्ति उद्वेष्टयति कृती वेष्टने रौधादि-कः सएव पुमान् प्रजापतिः अस्मिन् भूलोके नाके अकं दुःखं नास्त्यस्मिन्निति नाकः स्वर्गो-लोकः नभ्राणूनपादित्यादिना नञः प्रकृतिभावः तत्रच वितत्ने इमं यज्ञं विस्तारयति अधिः सप्तम्यर्थानुवादी तनोतेर्लिटि तनिपत्योश्छन्दसीत्युपधालोपः तस्य स्थानिवद्भावात् द्विर्वचनं मयूखाः रश्मिभूताः तस्य प्रजापतेः प्राणात्मकाइमे विश्वसृजोदेवाः सदा सदनं देवयजनं स्थानं उपसेदुः विश्वसर्जनहेतुभूतं विश्वसृजामयनाख्यं यज्ञं कर्तुंउपसीदन्ति उपसद्य च सामानि रथन्तरादीन्योतवे वयनाय यज्ञाख्यं वस्त्रमोतुं तसराणि तिर्यक्सराणि तिरश्ची-नसूत्राणि चक्रुः ॥ २ ॥

अथ तृतीया—

कासी॑त्प्र॒मा प्र॑ति॒मा किं नि॒दान॒माज्यं॒ किमा॑सीत्परि॒धिः क आ॑सीत् । छन्दः॒ किमा॑सी॒त्प्रउ॑गं॒ किमु॒क्थं यद्दे॒वा दे॒वमय॑जन्त॒ विश्वे॑ ॥ ३ ॥

का । आ॒सी॒त् । प्र॒ऽमा । प्र॒ति॒ऽमा । किम् । नि॒ऽदान॑म् । आज्य॑म् । किम् । आ॒सी॒त् । प॒रि॒ऽधिः । कः । आ॒सी॒त् । छन्द॑ः । किम् । आ॒सी॒त् । प्रउ॑गम् । किम् । उ॒क्थम् । यत् । दे॒वाः । दे॒वम् । अय॑जन्त । विश्वे॑ ॥ ३ ॥

विश्वसर्जनोपायत्वेन प्रजापतिना सृष्टे यज्ञे विश्वस्य स्रष्टारोविश्वसृजोदेवाः विश्वसर्ज-नाय तं यज्ञमन्वतिष्ठन् तस्मिन्समये जगतोनुत्पत्तेः जगदन्तःपातिनोयागोपकरणभूताः पदा-र्थाः कथमासन्नित्यनया प्रश्नः क्रियते यद्यदा विश्वे सर्वे साध्यादेवाः देवंप्रजापतिं अयजन्त

१ ऐ० ब्रा० ५. ३२। २ ऐ० ब्रा० ७. १९।

तदानीं तस्य यज्ञस्य प्रमा प्रमाणं इयत्ता का कथंभूतासीत् तथा प्रतिमा हविःप्रतियोगित्वेन मीयते निर्मीयते इति प्रतिमा देवता सा वा तस्य यज्ञस्य कासीत् तथा निदानमादिकारणं यागे अप्रवृत्तस्य प्रवर्तकं फलं किमासीत् तथा आज्यं घृतं एतदुपलक्षितं हविर्वा तस्य यज्ञस्य किमासीत् तथा परिधिः परितोधीयन्तइति त्रयः परिधयोबाहुमात्राः पलाशादिवृक्षजन्याः परिपूर्वाद्दधातेः उपसर्गेघोःकिरिति किप्रत्ययः सामान्यापेक्षमेकवचनं परिधयः के आसन्नित्यर्थः तथा तस्य यज्ञस्य गायत्र्यादिकं छन्दः किमासीत् तथा प्रउगमुक्थं उपलक्षणमेतत् आज्यप्रउगादीनि उक्थानि शस्त्राणि वा कान्यासन् एतेषु प्रश्नेषु त्रयाणां उत्तरं तृचेनाह ॥ ३ ॥

अथ चतुर्थी—

अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहयासविता संबभूव ।
अनुष्टुभा सोमउक्थैर्महस्वान्बृहस्पतेर्बृहती वाचमावत् ॥ ४ ॥

अग्नेः । गायत्री । अभवत् । सऽयुग्वा । उष्णिहया । सविता ।
सम् । बभूव । अनुऽस्तुभा । सोमः । उक्थैः । महस्वान् ।
बृहस्पतेः । बृहती । वाचम् । आवत् ॥ ४ ॥

सहयुग्वा सहयुक्ताग्नेः सहायभूता गायत्री अभवत् यष्टव्यात्प्रजापतेः मुखादजायत देवतासु मध्येग्निः छन्दःसु गायत्री च उभावपि अजायेतामित्यर्थः । तथाच तैत्तिरीयकं—प्रजापतिरकामयत प्रजायेयेति समुखतस्त्रिवृतंनिरमिमीत तमग्निर्देवतान्वसृज्यत गायत्रीछन्दइति । उष्णिहया उष्णिक्छन्दसा सह सविता देवः संबभूव तस्मात्प्रजापतेः जज्ञे टापंचापिहलन्तानामिति वचनात् उष्णिहशब्दात् टाप् तथा महस्वान् तेजस्वी सोमः उक्थैः स्तुतशस्त्रैः अनुष्टुभा अनुष्टुप्छन्दसा च सार्धं तस्मादेव प्रजापतेरजायत तथा बृहस्पतेः देवस्य वाचं वाक्यं बृहतीछन्दः आवत् अरक्षत् अगच्छत् वा बृहत्यासार्धं बृहस्पतिरपि तस्मात्प्रजापतेर्जज्ञइत्यर्थः ॥ ४ ॥

अथ पञ्चमी—

विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्यत्रिष्टुबिहभागोअह्नः ।
विश्वान्देवाञ्जगत्याविवेशतेनचाकॢप्रऋषयोमनुष्याः ॥ ५ ॥

वि॒ऽराट् । मि॒त्रावरु॑णयोः । अ॒भि॒ऽश्रीः । इन्द्र॑स्य । त्रि॒ऽस्तुप् ।
इ॒ह । भा॒गः । अह्नः॑ । विश्वा॑न् । दे॒वान् । जग॑ती । आ ।
वि॒वे॒श । तेन॑ । चा॒क्लृ॒प्रे॒ । ऋष॑यः । म॒नु॒ष्याः॑ ॥ ५ ॥

अपिच मित्रावरुणयोर्देवयोः विराट्छन्दः अभिश्रीः अभिश्रिता आश्रिता आसीत् विराजा सह मित्रावरुणावपि प्रजापतेः सकाशादजायेतामित्यर्थः। इहास्मिन्यज्ञे अह्नः सवनत्रयरूपस्य भागोमध्यंदिनसवनाख्योंशः त्रिष्टुप्छन्दश्च इन्द्रस्य अभिश्रयणीयावास्तां ताविन्द्रश्च प्रजापतेः सकाशादजायन्तेत्यर्थः। तथाचतैत्तिरीयकं—उरसोबाहुभ्यांपञ्चदशंनिरमिमीत तमिन्द्रोदेवतान्वसृज्यत तत्रत्रिष्टुप्छन्दोबृहत्सामेति।तथाविश्वान् सर्वान्देवान् जगतीछन्दः आविवेश प्रविष्टवती विश्वेदेवाजगती च प्रजापतेरजायन्तेत्यर्थः। तथाच तैत्तिरीयकं—तंविश्वेदेवादेवताअन्वसृज्यन्त जगतीछन्दोवैरूपंसामेति। उक्तेन प्रकारेण प्रतिमा कासीत् छन्दः किमासीत् प्रउगं किमुक्थमिति त्रयाणामुत्तरं जातं। आज्यं किमासीत् परिधिः कआसीत् इत्यनयोरुत्तरं पुरुषसूक्ते द्रष्टव्यं। तत्रह्येवमाम्नायते—देवायज्ञमतन्वत वसन्तोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः। सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताःइति। अयमर्थः—सर्वरसोत्पादकोवसन्तः तस्य जगत्सर्जनसाधनस्य यज्ञस्याज्यमासीत् आज्यदध्यादिभीरसैः सार्धं तादृशोवसन्तोजायतेत्यर्थः। सर्वरसानां शोषकोग्रीष्मऋतुः इध्मआसीत् शुष्कैः काष्ठैः सार्धं ग्रीष्मोजायतेत्यर्थः। पच्यमानव्रीहियुक्तः शरदृतुः तस्य यज्ञस्य हविरासीत् सप्तच्छदांसि त्रिः सप्त एकविंशतिधा भूत्वा अष्टादशसमिधः त्रयः परिधयश्चासन्। कासीत्प्रमाप्रतिमाकिंनिदानमित्यनयोरपि प्रश्नयोरप्येवमुत्तरं पूर्वे विश्वसृजोऽमृताः शतं वर्षसहस्राणि दीक्षिताः सत्रमासतेति एतेनवैविश्वसृजइदंविश्वमसृजन्तेतिचतैत्तिरीयके समाम्नायते। अतस्तस्य यज्ञस्य सहस्रसंवत्सरपरिमितः कालः प्रमाणं विश्वस्य जगतः सर्जनमादिकारणं प्रवर्तकंफलमित्यर्थः। एतदुक्तं भवति—यदा विश्वसृजोदेवाः देवं प्रजापतिं विश्वसृजामयनाख्येन यागेनायजन् तदा उक्ताः सर्वायागोपकरणाः प्रजापतेः सकाशादजायन्तेति। यतोग्न्यादिदेवताभिः सह गायत्र्यादीनि सप्तच्छन्दांसि जातानि अतोहेतोः तेषां छन्दसां अग्न्यादयोदेवता इति। छन्दोविचितौ सूत्रितंच—अग्निःसवितासोमोबृहस्पतिर्मित्रावरुणाविन्द्रोविश्वेदेवादेवताइति। एवं प्राजापत्योयज्ञोनुष्ठितः तेन यज्ञेन ऋषयोमनुष्याश्च चाक्लृप्रे चक्लृपिरे क्लृप्ताः सृष्टाआसन् क्लृपेः कर्मणि लिटि इरयोरिति रे-

आदेशः क्रपेरोलइति लत्वं तुजादित्वादभ्यासदीर्घः तेनैव यज्ञेन सर्वं जगदसृजन्नि-त्यर्थः ॥ ५ ॥

अथ षष्ठी—

चाकॢप्रेतेनऋषयोमनुष्यायज्ञेजातेपितरोनःपुराणे ।
पश्यन्मन्येमनसाचक्षसातान्यइमंयज्ञमयजन्तपूर्वे ॥ ६ ॥

चाकॢप्रे । तेन । ऋषयः । मनुष्याः । यज्ञे । जाते । पितरः ।
नः । पुराणे । पश्यन् । मन्ये । मनसा । चक्षसा । तान् । ये ।
इमम् । यज्ञम् । अयजन्त । पूर्वे ॥ ६ ॥

पुराणे चिरन्तने तस्मिन्यज्ञे जाते विश्वसृड्भिः देवैः सम्यगनुष्ठिते सति तेन यज्ञेन ऋषयोमनुष्यानोस्माकं पितरः पूर्वपुरुषाश्च चाकॢप्रे अकल्प्यन्त असृज्यन्त इममीदृशं यज्ञं ये पूर्वे साध्यादेवाः प्रजापतेः प्राणभूताः अयजन्त अन्वतिष्ठन् तान् देवान् प्राणात्मना सर्वत्र वर्तमानान् चक्षसा दर्शनहेतुना मनसा पश्यन् जानन् मन्ये तानेव विश्वस्रष्टृन् देवान् स्तौमि मन्यतिरर्चतिकर्मा ॥ ६ ॥

अथ सप्तमी—

सहस्तोमाःसहछन्दसआवृतःसहप्रमाऋषयःसप्तदैव्याः ।
पूर्वेषांपन्थामनुदृश्यधीराअन्वालेभिरेरथ्योनरश्मीन् ॥७॥१८॥

सहऽस्तोमाः । सहऽछन्दसः । आऽवृतः । सहऽप्रमाः । ऋषयः ।
सप्त । दैव्याः । पूर्वेषाम् । पन्थाम् । अनुऽदृश्य । धीराः ।
अनुऽआलेभिरे । रथ्यः । न । रश्मीन् ॥ ७ ॥ १८ ॥

स्तोमैः त्रिवृत्पंचदशादिभिः सह वर्तमानाः सहस्तोमाः सहछन्दसः गायत्र्यादिभिः छन्दोभिः सहवर्तमानाः आवृत आवर्तमानाः सहप्रमाः प्रमितिःप्रमा यज्ञस्येयत्तापरिज्ञानं तेन सह वर्तमानाः दैव्याः देवस्य प्रजापतेः संबन्धिनः यद्वा देवानां यष्टव्यानां संबन्धिनः ऋषयोद्रष्टारः स

प्तसंख्याकाः शीर्षण्याः यद्वा मरीचिप्रमुखाः सप्तऋषयः होत्रादयः सप्तवषट्कर्तारोवा एवंविधाएते पूर्वेषां पूर्वपुरुषाणां अङ्गिरःप्रभृतीनां विश्वसृजां देवानां वा पंथां पंथानं अनुष्ठानमार्गं अनुदृश्य क्रमेण ज्ञात्वा धीराः धीमन्तः सन्तः अन्वालेभिरे अनुक्रमेणारब्धवन्तः यागानुष्ठाने प्रवृत्ताइत्यर्थः रथ्योन यथा रथिनः रथेन युक्ताः रथस्य नेतारः सूताः रश्मीन् रथे अश्वनियोजनार्थान् प्रग्रहान् सम्यग्रथस्य नयनाय हस्तेनान्वारभंते अन्वारभ्य च सम्यक् तं रथं प्रवर्तयन्ति एवमेतेपि अनुष्ठानमार्गं श्रुतितोवगम्य सम्यगन्वतिष्ठन् इत्यर्थः ॥ ७ ॥

॥ इत्यष्टमस्य सप्तमे ष्टादशोवर्गः ॥ १८ ॥

अपप्राचइति सप्तर्चं तृतीयं सूक्तं कक्षीवतः पुत्रस्य सुकीर्तेरार्षं चतुर्थी अनुष्टुप् शिष्टास्त्रिष्टुभः चतुर्थीपञ्चम्यौ अश्विदेवत्ये शिष्टाऐन्द्र्यः तथाचानुक्रान्तं—अपप्राचः सुकीर्तिः काक्षीवतोमध्येनुष्टुप् चोत्तराचाश्विन्याविति । षष्ठेहनि ब्राह्मणाच्छंसिनः उक्थशस्त्रे एतत्सूक्तं । सूत्रितंच—सुकीर्तिंब्राह्मणाच्छंसी वृषाकपिंचपंक्तिशंसमिति । चातुर्विंशिकेहनि माध्यंदिनसवने मैत्रावरुणस्य अपप्राचइत्येषा आरंभणीया कद्वत्प्रगाथानन्तरं शंसनीया । सूत्रितंच—कद्वन्तः प्रगाथाअपप्राचइन्द्रविश्वाँअमित्रानिति । अहर्गणेष्वपि द्वितीयादिष्वहस्सु तस्यैव तस्मिन्नेव शस्त्रे आरंभणीया । सूत्रितंच—आरंभणीयाः पर्यासान् कद्वतोहरहः शस्यानीति होत्रकाद्वितीयादिष्वेवेति ।

सैषा प्रथमा—

अपप्राचंइन्द्रविश्वाँअमित्रानपापाचोअभिभूतेनुदस्व ।
अपोदीचोअपशूराधराचंउरौयथातवशर्मन्मदेम ॥ १ ॥

अप । प्राचः । इन्द्र । विश्वान् । अमित्रान् । अप । अपाचः ।
अभिऽभूते । नुदस्व । अप । उदीचः । अप । शूर । अधराचः ।
उरौ । यथा । तव । शर्मन् । मदेम ॥ १ ॥

हे इन्द्र प्राचः प्रमुखमंचतः प्राग्देशे वर्तमानान् अस्मत्तः पूर्वभागे वर्तमानानित्यर्थः प्रपूर्वादंचतेः ऋत्विगित्यादिना क्विन् अनिदितामिति न लोपः शसि अचइत्यकारलो-

पे चाविति दीर्घत्वं अनिगन्तोंचतौवप्रत्ययइति गतेः प्रकृतिस्वरत्वं । तादृशान् विश्वान् सर्वान् अमित्रान् शत्रूनपनुदस्व अस्मत्तोपगमय तथा हे अभिभूते शत्रूणामभिभवित- रिन्द्र अपाचः अपमुखमंचतः पृष्ठभागे वर्तमानान् सर्वान् शत्रूनपनुदस्व अपिच उदीचः ऊर्ध्वं अंचतः उपरिवर्तमानान् उत्पूर्वादंचतेः पूर्ववत्क्विनि उदईदित्यंचतेरकारस्यईकारः पू- र्ववत्स्वरः तथाविधानपि शत्रूनपनुदस्व तथा हे शूर शौर्यवन्निन्द्र अधराचः अधरदे- शमधोभागमंचतश्च अधस्तनानपि शत्रूनपनुदस्व अधरशब्दोपपदादंचतेः शसि पूर्ववत्प्र- क्रिया चाविति पूर्वपदान्तोदात्तः उरौ विस्तीर्णे तव संबन्धिनि त्वया दत्ते शर्मन् शर्मणि गृहे सुखे वा यथा वयं मदेम निरुपद्रवाः सन्तोहृष्येम तथा त्वं सर्वत्रवर्तमानानस्मदीयान् शत्रून्विनाशयेत्यर्थः ॥ १ ॥

अथ द्वितीया—

कुविदङ्गयवमन्तोयवंचिद्यथादान्त्यनुपूर्वंवियूय ।
इहेहैषांकृणुहिभोजनानियेबर्हिषोनमोवृक्तिंनजग्मुः ॥ २ ॥

कुवित् । अङ्ग । यवऽमन्तः । यवम् । चित् । यथा । दान्ति । अनुऽपूर्वम् । विऽयूय । इहऽइह । एषाम् । कृणुहि । भोजनानि । ये । बर्हिषः । नमःऽवृक्तिम् । न । जग्मुः ॥ २ ॥

अंग हे इन्द्र यवमन्तः यवादिधान्ययुक्ताःकर्षकाः यवंचित् उपलक्षणमेतत् यवगोधूमादीन् अनुपूर्वंयोयोधान्यविशेषः प्रथमं पच्यते तेनानुपूर्व्येण वियूय पृथक्कृत्य यथा कुविद्बहुलंदान्ति लुनन्ति दाप् लवने आदादिकः विपूर्वाद्यौतेर्ल्यपि युप्लुवोर्दीर्घश्छन्दसीतिदीर्घः एवं इहेह अस्मिन्नस्मिन् देशे सर्वस्मिन् एषां यजमानानां भोजनानि धननामैतत् भोगसाधनानि धनानि कृणुहि कुरु यस्य यस्मिन्देशे यद्धनं अपेक्षितं तदनुगुणं प्रयच्छेत्यर्थः उतश्चप्रत्ययाच्छन्दसिवावचनमिति हेर्लुगभावः । एषामित्युक्तं केपुनरिमइत्यतआह हे यजमानाबर्हिषः यज्ञस्य नमोवृक्तिं नमसोहविर्लक्षणस्यान्नस्य नमस्कारात्मकस्य स्तोत्रस्य वा वर्जनं अकरणं न जग्मुः न प्राप्नुवन्ति किंतु सर्वदा हविर्भिर्यजन्ति स्तुतिभिः स्तुवन्ति च एषां कृणुहीत्यन्वयः ॥ २ ॥

अथ तृतीया—

नहिस्थूर्यृतुथायातमस्तिनोतश्रवोविविदेसंगमेषु ।
गव्यन्तइन्द्रंसख्यायविप्राअश्वायन्तोवृषणंवाजयन्तः ॥ ३ ॥

नहि । स्थूरि । ऋतुऽथा । यातम् । अस्ति । न । उत । श्रवः । विविदे । सम्ऽगमेषु । गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् । वाजयन्तः ॥ ३ ॥

एकेन धुर्येण युक्तमनः स्थूरीत्युच्यते ऋतुथा ऋतौ यद्यस्मिन्काले प्राप्तव्यं तद्योग्यकाले स्थूर्यनः यातं तं देशं प्राप्तं नह्यस्ति नहिभवति एकेन धुर्येण युक्तः शकटः शीघ्रं गन्तव्यं नप्राप्नोतीत्यर्थः । उतापिच संगमेषु संग्रामेषु श्रवोन्नं यशोवा न विविदे न लभते इन्द्रस्तूक्तविलक्षणः वृषणं वर्षितारं तमिन्द्रं गव्यन्तः गाइच्छन्तोविप्राः मेधाविनोवयं सख्याय सखिकर्मणे आह्वयामइतिशेषः । कथंभूताः अश्वायन्तः अश्वानप्यात्मनइच्छन्तः वाजयन्तः अन्नकामाबलकामाश्च ॥ ३ ॥

सौत्रामण्यां सुराग्रहाणां पुरोनुवाक्या युवमित्येषा । सूत्रितंच-युवंसुराममश्विनेति ग्रहाणांपुरोनुवाक्येति ।

सैषा चतुर्थी—

युवंसुराममश्विनानमुचावासुरेसचा ।
विपिपानाशुभस्पतीइन्द्रंकर्मस्वावतम् ॥ ४ ॥

युवम् । सुरामम् अश्विना । निमुचौ । आसुरे । सचा । विऽपिपाना । शुभः । पती इति । इन्द्रम् । कर्मऽसु । आवतम् ॥ ४ ॥

हे अश्विना अश्विनौ हे शुभस्पती उदकस्य शोभनालंकारस्य वा पती पालयितारौ सुरामं सुष्ठु रमणसाधनं इदं हविः विपिपाना विशेषेण पीतवन्तौ युवं युवां सचासन्तौसंगतौ आसुरे असुरपुत्रे नमुचौ एतत्संज्ञे असुरे हन्तव्ये सति कर्मसु योधनकर्मसु इन्द्रमावतंरक्षतं

विपिपाना पापाने इत्यस्मात् लिटः कानच् बहुलंछन्दसीत्यभ्यासस्येत्वं शुभस्पती इति सुबामंत्रितइति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामंत्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वं ॥ ४ ॥

पूर्वोक्तानामेव ग्रहाणां पुत्रमिवेति याज्या । सूत्रितंच—पुत्रमिवपितरावश्विनोभेति याज्येति ।

सैषा पंचमी—

पुत्रमिवपितरावश्विनोभेन्द्रावथुःकाव्यैर्दंसनाभिः ।
यत्सुरामंव्यपिबःशचीभिःसरस्वतीत्वामघवन्नभिष्णक् ॥ ५ ॥

पुत्रम्ऽइव । पितरौ । अश्विना । उभा । इन्द्र । आवथुः ।
काव्यैः । दंसनाभिः । यत् । सुरामम् । वि । अपिबः । शचीभिः ।
सरस्वती । त्वा । मघऽवन् । अभिष्णक् ॥ ५ ॥

हे इन्द्र त्वां पितरौ मातापितरौ पुत्रमिव पितामात्रेति पितुः शेषः उभा उभावश्विनौ काव्यैः प्रशस्यैः दंसनाभिः आत्मीयैः कर्मभिः आवथुः मध्यमोव्यत्ययेन आवतुः ररक्षतुः त्वंच सुरामं सुखेन रमणसाधनं हविः यद्यदा शचीभिः शक्तिभिः सार्धं व्यपिबः विशेषेण पीतवानसि तदा हे मघवन् धनवन् इन्द्र सरस्वती देवी त्वा त्वां अभिष्णक् उपासेवत भिष्णक् उपसेवायां कंड्वादिः छान्दसोयगभावः लङि बहुलंछन्दसीति शपोलुक् हल्ङ्याब्भ्यइतिलोपः ॥ ५ ॥

अथ षष्ठी—

इन्द्रःसुत्रामास्ववाँअवोभिःसुमृळीकोभवतुविश्ववेदाः ।
बाधतांद्वेषोअभयंकृणोतुसुवीर्यस्यपतयःस्याम ॥ ६ ॥

इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृळीकः । भवतु ।
विश्वऽवेदाः । बाधताम् । द्वेषः । अभयम् ।
कृणोतु । सुऽवीर्यस्य । पतयः स्याम ॥ ६ ॥

अथ सप्तमी—

तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ।
ससुत्रामास्ववाँइन्द्रोअस्मेआराच्चिद्द्वेषःसनुतर्युयोतु ॥ ७ ॥ १९ ॥

तस्यं । व॒यम् । सु॒ऽम॒तौ । य॒ज्ञियंस्य । अपिं । भ॒द्रे ।
सौ॒म॒न॒से । स्या॒म॒ । सः । सु॒ऽत्रामा॑ । स्वऽवा॑न् । इन्द्रः॑ । अ॒स्मे इति॑ ।
आ॒रात् । चि॒त् । द्वेषः॑ । स॒नु॒तः । यु॒यो॒तु॒ ॥ ७ ॥ १९ ॥

इमे त्रातारमिन्द्रमित्यस्मिन्वर्गे ( ऋ. स. ४. ७. ३२ ) व्याख्याते ।

अक्षरार्थस्तु—सुष्ठु त्राता धनवान् सर्वस्य वेदिता इन्द्रः रक्षणैः सुष्ठु सुखयिता भवतु शत्रूंश्चहिनस्तु भयराहित्यं च करोत्वस्माकं अतोवयं शोभनवीर्योपेतस्य धनस्य स्वामिनोभवेमेति । सप्तम्यास्तु तस्य यज्ञार्हस्येन्द्रस्यानुग्रहबुद्धौ भजनीयेसौमनस्येच वयं विषयभूताभवेम सुष्ठु त्राता धनवान्सइन्द्रः अस्मत्तोदूरदेशे द्वेष्टॄनन्तर्धानं योजयत्विति ॥ ६ ॥ ७ ॥

॥ इत्यष्टमस्य सप्तमे एकोनविंशोवर्गः ॥ १९ ॥

ईजानमितिसप्तर्चं चतुर्थं सूक्तं नृमेधपुत्रस्य शकपूतस्यार्षं मित्रावरुणदेवताकं आद्यातु लिंगोक्तद्युभूम्यश्विदेवताका न्यंकुसारिणी द्वितीयद्वादकत्र्यष्टकवती द्वितीयाषष्ठ्यौ प्रस्तारपंक्ती द्विद्वादशकव्यष्टकवत्यौ । सप्तमी महासतोबृहती त्र्यष्टकद्विद्वादशकवती । शिष्टास्तिस्रोविराड्रूपा एकादशिनस्त्रयोष्टकश्चेतिलक्षणलक्षिताः । तथाचानुक्रान्तं—ईजानं शकपूतोनार्मेधोमैत्रावरुणं न्यंकुसारिण्याद्यालिंगोक्तदेवतान्त्या महासतोबृहती उपाद्योपांत्ये प्रस्तारपंक्ती शेषाविराड्रूपा इति । गतोविनियोगः ।

तत्र प्रथमा—

ई॒जा॒नमिद्द्यौर्गू॒र्ताव॑सुरीजा॒नंभूमि॑र॒भिप्र॑भू॒षणि॑ ।
ई॒जा॒नंदे॒वाव॒श्विना॑व॒भिसु॒म्नैर॑वर्धताम् ॥ १ ॥

ई॒जा॒नम् । इत् । द्यौः । गू॒र्तऽव॑सुः । ई॒जा॒नम् । भूमिः॑ ।
अ॒भि । प्र॒ऽभू॒षणि॑ । ई॒जा॒नम् । दे॒वौ । अ॒श्विनौ॑ । अ॒भि ।
सु॒म्नैः । अ॒व॒र्ध॒ता॒म् ॥ १ ॥

गूर्तवसुः गूर्तमुद्यतं स्तोतृभ्यः दानाय हस्तेधृतं वसु धनं यस्याः सा तथोक्ता गूरी उद्यमने निष्ठा श्वीदितोनिष्ठायामितीट्प्रतिषेधः नसत्तनिषत्तेत्यादिना निपातनान्निष्ठानत्वाभावः अन्येषामपीति सांहितिकोदीर्घः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वं ईदृशीद्यौः द्युलोकाभिमानिनी देवता ईजानमित् यज्ञैरिष्टवन्तमेव पुरुषं अभिवर्धयति यजेर्लिटः कानच् वचिस्वपीति संप्रसारणे द्विर्वचनं तथा भूमिश्च प्रभूषणि प्रभवने यद्वा प्रकृष्टभूषणे अलंकारे निमित्तभूते सति ईजानं अभिवर्धयति अपिच देवौ दानादिगुणयुक्तौ अश्विनौ ईजानं इष्टवन्तं पुरुषं सुम्नैः धनैः अभ्यवर्धतां अभिवर्धयतः वृधेरन्तर्भावितण्यर्थात् छान्दसोलङ् ॥ १ ॥

अथ द्वितीया—

तावांमित्रावरुणाधारयत्क्षितीसुषुम्नेषितत्वतांयजामसि ।
युवोःक्राणायंसख्यैरभिष्यांमरक्षसंः ॥ २ ॥

ता । वाम् । मित्रावरुणा । धारयत्क्षिती इति धारयत्ऽक्षिती ।
सुऽसुम्ना । इषितत्वता । यजामसि । युवोः । क्राणायं ।
सख्यैः । अभि । स्याम । रक्षसंः ॥ २ ॥

हे मित्रावरुणौ धारयत्क्षिती ध्रियमाणभूमिकौ यद्वा क्षितिरितिमनुष्यनाम हवींषिधारयन्तः क्षितयोमनुष्याः ययोः स्वभूतास्तथाविधौ सुषुम्ना सुषुम्नौ सुधनौ सुमुखौ वा ता तौ वां युवां इषितत्वता इषितत्वेन तृतीयैकवचने छान्दसस्तकारोपजनः यद्वा भावप्रत्ययान्तात्पुनरपि भावप्रत्ययः विकरणद्वयवत् इषितव्यत्वेन प्राप्तव्यत्वेन हेतौ तृतीया यतोयुवां देवेषु मध्ये प्राप्तव्यौ ततोहेतोः यजामसि हविर्भिर्यजामः इदंतोमसीति मसइकारागमः एवंच युवोः युवयोः सख्यैः सखित्वैः सख्युर्यः क्राणाय कुर्वते यजमानाय करोतेः शानचि छान्दसोविकरणस्य लुक् तादर्थ्ये चतुर्थी यजमानार्थं रक्षसः यज्ञस्य बाधकान् राक्षसान् अभिष्याम अभिभवेम उपसर्गप्रादुर्भ्यामित्यस्तेः सकारस्य षत्वं ॥ २ ॥

अथ तृतीया—

अधांचिन्नुयद्दिधिषामहेवामभिप्रियंरेक्णःपत्यमानाः ।
दद्वाँवायत्पुष्यंतिरेक्णःसम्वारंनकिरस्यमघानि ॥ ३ ॥

अध॑ । चि॒त् । नु । यत् । दिधि॑षामहे । वा॒म् । अ॒भि । प्रि॒यम् ।
रेक्ण॑ः । पत्य॑माना: । द॒द्वान् । वा॒ । यत् । पुष्य॑ति । रेक्ण॑ः । सम् ।
ऊँ इति॑ । आ॒र॒न् । नकि॑ः । अ॒स्य॒ । म॒घानि॑ ॥ ३ ॥

हे मित्रावरुणौ वां युवाभ्यां युवयोरर्थं यद्यदा दिधिषामहे हवींषि धारयामः यद्वा धिषशब्दे वां युवां स्तुमहे अधाचित् अनन्तरमेव नुक्षिप्रं प्रियमभीष्टं रेक्णः धननामैतत् धनं अभिपत्यमानाः अभिपतन्तः अभिप्राप्नुवन्तौ भवामः दद्वान् ददिवान् ददातेर्लिटः क्वसुः छन्दस्युभयथेति वसोः सार्वधातुकत्वात् श्नाभ्यस्तयोरातइत्याकार-लोपः अतएवेडभावश्च संहितायां नकारस्य दीर्घादटिसमानपादइति रुत्वं आतोटिनि-त्यमिति सानुनासिकआकारः वाशब्दश्चार्थे हवींषि दत्तवांश्च यद्योयजमानः रेक्णोधनं पुष्यति वर्धयति अस्य दत्तवतोयजमानस्य मघानि धनानि नकिः समारन् नैवाप-गच्छन्ति किन्तु तमेव सर्वदा भजन्ते समित्येतदपेत्येतस्यार्थे उइति पूरणः अर्तेश्छा-न्दसेलुङि सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः ऋदृशोङिगुणः ॥ ३ ॥

अथ चतुर्थी—

अ॒साव॒न्यो अ॑सुर सूयत॒ द्यौस्त्वं विश्वे॑षां वरुणासि॒ राजा॑ ।
मू॒र्धा रथ॑स्य चाक॒न्नैताव॒तैन॑सान्तक॒ध्रुक् ॥ ४ ॥

अ॒सौ । अ॒न्यः । अ॒सु॒र॒ । सू॒य॒त॒ । द्यौः । त्वम् । विश्वे॑षाम् ।
व॒रु॒ण॒ । अ॒सि॒ । राजा॑ । मू॒र्धा । रथ॑स्य । चा॒क॒न् । न ।
ए॒ताव॑ता । एन॑सा । अ॒न्त॒क॒ऽध्रुक् ॥ ४ ॥

हे असुर तमसः क्षेपक यद्वा असवः प्राणाः तान् ददाति मनुष्येभ्यः स्वोदये-न प्रयच्छतीत्यसुरः ईदृश हे मित्र द्यौः द्युलोकः देवनशीलाअदितिर्वा अन्यः सुपां-सुलुगिति द्वितीयायाः सुआदेशः वरुणापेक्षया अन्यं असौ अमुं नभसि दृश्यमानं त्वां सूयत असूत षूङ् प्राणिप्रसवे छान्दसोडभावः हे वरुण त्वं च विश्वेषां सर्वेषां प्रा-णिनां राजासि ईश्वरोभवसि तादृशयोर्युवयोः रथस्य मूर्धा शिरः चाकन् अस्मद्यज्ञं

कामयते यद्वा रथस्य रंहणशीलस्य यज्ञस्य मूर्धान मूर्धेव प्रधानः सोमः चाकन् युवां कामयते कनीदीप्तिकान्तिगतिषु अस्माद्यङ्लुगन्ताच्छान्दसोलङ् यतएवमतः कारणात् अन्तकध्रुक् अन्तकस्य सहनशीलस्य राक्षसादेः यमस्यैव वा द्रोग्धा द्रुह जिघांसायां सत्सूद्विषेत्यादिना क्विप् वाद्रुहमुहष्णुहष्णिहामिति घत्वं भष्भावः। ईदृशः सयज्ञः एतावता एनसा इयत्परिमाणेनापि पापलेशेनापि न युज्यते॥ ४॥

अथ पंचमी—

अस्मिन्त्स्वे३तच्छकंपूतएनोहितेमित्रेनिगंतान्हन्तिवीरान्।
अवोर्वायद्धात्तनूष्ववंःप्रियासुयज्ञियास्ववीं॥ ५॥

अस्मिन्। सु। एतत्। शकंऽपूते। एनंः। हिते। मित्रे।
निऽगंतान्। हन्ति। वीरान्। अवोः। वा। यत्। धात्।
तनूषु। अवंः। प्रियासुं। यज्ञियासु। अर्वा॥ ५॥

योयं शकपूताख्यऋषिः अस्मिन् शकपूते स्थितं एतदेनः पापं शत्रूणां पापकरमायुधं वा मित्रेदेवे हिते हिताचरणपरे अनुकूले सति निगतान् निगन्तव्यान् हननार्थं नियमेन प्राप्तव्यान् वीरान् शत्रोः पुत्रादीन् सु सुष्टु हन्ति हिनस्ति अस्मिन्नृषौ समवेतं यत्पापं तन्मित्रस्य प्रसादेन तदीयेषु शत्रुषु स्वकार्यं दुःखं जनयतीत्यर्थः निगतान् निपूर्वाद्गमेः कर्मणि निष्ठा गतिरनन्तर इति गतेः प्रकृतिस्वरत्वं। कदेत्यतआह—अवोः हविर्भिः तर्पयितुः अवतेरौणादिकउप्रत्ययः तस्य यजमानस्य यज्ञियासु यज्ञार्हासु क्रियासु तनूषु शरीरेषु अर्वा अभिगन्तामित्रोवरुणो वा यत् यदा अवोरक्षणं धात् दधाति निदधाति स्थापयति यद्वा यदा अर्वा अभिगन्ता सऋषिः अवितुः रक्षितुः मित्रस्य वरुणस्य वा यागार्हासु प्रियासु तनूषु शरीरेषु अवोहविर्लक्षणमन्नं धात् धारयति तदानीं मित्रे वरुणे चानुकूले सति तदेनोवीरान् हन्तीत्यर्थः॥ ५॥

अथ षष्ठी—

युवोर्हिमातादितिर्विचेतसाद्यौर्नभूमिःपयंसापुपूतनि।
अवंप्रियादिदिष्टनसूरोनिनिक्तरश्मिभिः॥ ६॥

युवोः । हि । माता । अदितिः । विऽचेतसा । द्यौः । न । भूमिः । पयसा । पुपूतनि । अव । प्रिया । दिदिष्टन । सूरः । निनिक्त । रश्मिऽभिः ॥ ६ ॥

हे विचेतसा विशिष्टज्ञानौ मित्रावरुणौ युवोर्हि युवयोः खलु माता जननी अदितिरदीना अखं इनीया वा भवति सैवभूमिः इयंवाअदितिरितिश्रुतेः । द्यौर्न यथा द्युलोकः पयसा वृष्ट्युदकेन सर्वं जगत्पुनाति एवमेषासा भूमिः पयसा आत्मीयेन रसेन हविरात्मना परिणतेन पुपूतनि परिपवने यजमानानां पापस्य शोधने हेतुर्भवतीत्यर्थः पूतशब्दादाचारक्विबन्तादौणादिकः कनि प्रत्ययः छान्दसं द्विर्वचनं तौ युवामतिदिश्य यूयं प्रिया प्रियाणि धनानि अवदिदिष्टन अवाङ्मुखं अस्मदभिमुखं दिशत दत्त दिशअतिसर्जने अस्माल्लोटि छान्दसः शपःश्लुः तप्तनप्तनथनाश्चेति तशब्दस्य तनादेशः अपिच सूरः सूर्यस्य रश्मिभिः किरणैः निनिक्त अस्मान् शोधयत पोषयत वा णिजिर् शौचपोषणयोः जौहोत्यादिकः संज्ञापूर्वकोविधिरनित्यइति णिजांत्रयाणामित्य भ्यासस्य गुणोन क्रियते ॥ ६ ॥

अथ सप्तमी—

युवंह्यप्नराजावसीदतंतिष्ठद्रथंनधूर्षदंवनर्षदम् ।
तानःकणूकयन्तीर्नृमेधस्तत्रेअंहसःसुमेधस्तत्रेअंहसः ॥७॥२०॥

युवम् । हि । अप्नऽराजौ । असीदतम् । तिष्ठत् । रथम् । न । धूःऽसदम् । वनऽसदम् । ताः । नः । कणूकऽयन्तीः । नृऽमेधः । तत्रे । अंहसः । सुऽमेधः । तत्रे । अंहसः ॥ ७ ॥ २० ॥

हे मित्रावरुणौ युवं हि युवां खलु अप्नराजौ अप्नसा कर्मणा प्रवर्षणप्रकाशादिना राजमानौ दीप्यमानौ सन्तौ असीदतं स्वकीये स्थाने निषीदथः आसाथे अप्नइति कर्मनाम आपःकर्माख्यायांह्रस्वोनुट्चेत्यामोतेरसुन् तस्य नुडागमोधातोर्ह्रस्वश्च तस्मिन्नुपपदे राजतेः सत्सूद्विषेत्यादिना क्विप् पीवोपवसनादीनांछन्दसिलोपोवक्तव्यः इत्यप्नसः सकारलोपः तौ मित्रावरुणौ कणूकयन्तीः कणतिः शब्दार्थः कणनं आक्रोशरूपं शब्दनं इच्छन्तीः ताः प्रसिद्धाः

शात्रवीः प्रजाः अभिभवितुं नसंप्रत्यर्थे संप्रति रथं तिष्ठत् अभितिष्ठतां तिष्ठतेर्लेट्यडागमः इतश्चलोपइतीकारलोपः प्रत्येकाभिप्रायेणैकवचनं । कीदृशं रथं धूर्षदं धुरि अश्वयोर्वहनदेशे सीदन्तं वनर्षदं वनेषूद्यानेषु क्रीडार्थं निषीदन्तं यद्वा वनमित्युदकनाम समुद्रमध्ये हि वरुणोनिवसति वने समुद्रोदके निषीदन्तं उभयत्रापि पूर्ववत् क्विप् वनसदमित्यत्र छान्दसः सांहितिकोरेफोपजनः हे मित्रावरुणौ युवाभ्यां नृमेधोमम पिता अंहसः पापात् तत्रे ररक्षे रक्षितोबभूव त्रैङ् पालने इत्यस्मात् कर्मणि लिट् यद्वा उपचाराज्जन्ये जनकशब्दः नृमेधस्य पुत्रः शकपूतोहं पापात् युवाभ्यां तत्रे रक्षितोस्मि सुमेधः अन्योपि सुयज्ञोयजमानः अंहसः पापात् तत्रे युवाभ्यामेवारक्षयत भीत्रार्थानामित्यंहसोपादानसंज्ञा ॥ ७ ॥

॥ इत्यष्टमस्य सप्तमे विंशोवर्गः ॥ २० ॥

प्रोष्विति सप्तर्चं पञ्चमं सूक्तं पिजवनपुत्रस्य सुदासआर्षं ऐन्द्रं आद्यस्तृचः शाक्करः षट्पंचाशदक्षराशक्करी । द्वितीयस्तृचोमहापांक्तः षळष्टका महापंक्तिः । सप्तमी त्रिष्टुप् । तथाचानुक्रान्तं—प्रोषुसुदाः पैजवनः शाक्करमहापांकावाद्यौ तृचावन्त्यात्रिष्टुबिति । षोळशिशस्त्रे आद्यस्तृचः शंसनीयः । सूत्रितंच—त्रिकद्रुकेषुमहिषोयवाशिरंप्रोष्वस्मैपुरोरथमिति तृचावातिच्छन्दसाविति । महाव्रते माध्यंदिनसवने ब्रह्मशस्त्रे अनुरूपतृचस्य प्रोष्वस्माइत्येका । तथैव पञ्चमारण्यके सूत्रितं—प्रोष्वस्मै पुरोरथमित्यनुरूपइति ।

सैषा प्रथमा—

प्रोष्वंस्मैपुरोरथमिन्द्रायशूषमंर्चत ।
अभीकेचिदुलोककृत्सङ्गेसमत्सुंवृत्रहास्माकं
बोधिचोदितानभंन्तामन्यकेषांज्याकाअधिधन्वंसु ॥ १॥

प्रो इति । सु । अस्मै । पुरःऽरथम् । इन्द्राय । शूषम् । अर्चत ।
अभीके । चित् । ऊँ इति । लोकऽकृत् । सम्ऽगे । समत्ऽसु ।
वृत्रऽहा । अस्माकम् । बोधि । चोदिता । नभन्ताम् । अन्यकेषाम् ।
ज्याकाः । अधि । धन्वऽसु ॥ १ ॥

अस्माइन्द्राय षष्ठ्यर्थे चतुर्थी अस्येन्द्रस्य पुरोरथं रथस्य पुरः पुरतोपुरोव्ययमिति गतित्वात् गतिसमासः रथस्याग्रतोवर्तमानं शूषं बलं सुप्रो अर्चत हे स्तोतारः सुष्ठु प्रपूजयत प्रउ इतिनिपातसमुदायः प्रो इति ओदिति प्रगृह्यसंज्ञा इन्द्रोविशेष्यते समत्सु समानं माद्यंत्यत्रेति समदः संग्रामाः औणादिकोधिकरणेक्विप् समानस्यच्छन्दसीति सभावः समत्सु संग्रामेषु संगे संगमनीये शत्रुबले डोन्यत्रापि दृश्यतइति गमेर्डः अभीकेचित् अभ्यर्णेपि निकटं प्राप्तेपि केशाकेश्यवस्थायामपि लोककृत् स्थितिकृत् न पलायिता स्थित्वा वृत्रहा वृत्राणामावरकाणां हन्ता एवंविधः सइन्द्रः अस्माकं स्तोतॄणां चोदिता धनानां प्रेरितासन् बोधि अस्माभिः कृतानि परिचरणानि बुध्यतां बुधेः छान्दसे लुङि दीपजनबुधेत्यादिना कर्तरि च्लेश्चिणादेशः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। अपिच अन्यकेषां कुत्सितानामन्येषां शत्रूणां अधिधन्वसु धनुःषु अधिरोपिताज्याकाः कुत्सिताज्याः नभन्तां हिंस्यंतां नश्यन्तु ज्याशब्दात् कुत्सायां प्रागिवात्कः नभतुर्भहिंसायां क्रैयादिकः व्यत्ययेनशप् ॥ १ ॥

अथ द्वितीया—

त्वंसिन्धूँरवासृजोधराचोअहन्नहिम् ।
अशत्रुरिन्द्रजज्ञिषेविश्वंपुष्यसिवार्यंतंत्वापरि
ष्वजामहेनभन्तामन्यकेषांज्याकाअधिधन्वसु ॥ २ ॥

त्वम् । सिन्धून् । अव । असृजः । अधराचः । अहन् । अहिम् ।
अशत्रुः । इन्द्र । जज्ञिषे । विश्वम् । पुष्यसि । वार्यम् । तम् ।
त्वा । परि । स्वजामहे । नभन्ताम् । अन्यकेषाम् । ज्याकाः ।
अधि । धन्वऽसु ॥ २ ॥

हे इन्द्र सिंधून् स्यन्दनशीलान् जलपूरान् अधराचः अधरमधोमुखं अंचतोगंतॄन् अवासृजः मेघान्निरगमयः यतस्त्वमहिं अन्तरिक्षेगतं मेघं अहन् हतवानसि यद्वा अहिं आगत्य हन्तारं सर्वस्य जगतआवरकं वृत्रमसुरं अहन् हतवानसि अतः हे इन्द्र त्वं अशत्रुः शत्रुरहि-

तोजज्ञिषे जायसे न संति शत्रवोस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं जनेर्लिं-टिगमहनेत्यादिनोपधालोपः द्विर्वचनेचीति स्थानिवद्भावात् द्विर्वचनं तथा विश्वं सर्वं वार्यं वरणीयं संभजनीयं धनं पुष्यसि वर्धयसि वृङ्संभक्तौ ऋहलोर्ण्यत् ईडवंदवृशंसदुहांण्यतइत्युदात्तत्वं तादृशं त्वां परिष्वजामहे हविर्भिः स्तुतिभिश्चालिंगनं कुर्मः वशीकुर्मइत्यर्थः ष्वं-जपरिष्वंगे दंशसंजष्वंजांशपीत्यनुनासिकलोपः ॥ २ ॥

अथ तृतीया—

विषुविश्वाअरातयोर्योनशन्तनोधियः ।
अस्तासिशत्रवेवधंयोनइन्द्रजिघांसतियातेराति
र्ददिर्वसुनभन्तामन्यकेषांज्याकाअधिधन्वसु ॥ ३ ॥

वि । सु । विश्वाः । अरातयः । अर्यः । नशन्त । नः । धियः ।
अस्ता । असि । शत्रवे । वधम् । यः । नः । इन्द्र । जिघांसति ।
या । ते । रातिः । ददिः । वसु । नभन्ताम् । अन्यकेषाम् ।
ज्याकाः । अधि । धन्वऽसु ॥ ३ ॥

विश्वाः सर्वाः अरातयः अदात्र्यः आर्याअभिगंत्र्यः नोस्माकं शत्रुभूताः प्रजाः सु सुष्ठु विनशन्त विनश्यन्तु हे इन्द्र त्वदर्थंधियः कर्माणि स्तुतयोवा प्रवर्तंतां हे इन्द्र योनोस्मान् जिघांसति हन्तुं इच्छति हन्तेः सनि अज्झनगमांसनीति दीर्घः अभ्यासाच्चेति कुत्वं तस्मै श-त्रवे वधं हननसाधनमायुधं अस्तासि क्षेप्ताभवसि असुक्षेपणे ताच्छीलिकस्तृन् ते तव या रातिः धनप्रदानहेतुः हस्तः रादाने करणेक्तिन् मंत्रेवृषेषपचमनविदभूवीराउदात्तइति क्तिनउदा-त्तत्वं सा रातिः वसु धनं ददिः अस्मभ्यं दाता भवतु आदृगमहनइति ददातेः किप्रत्ययः नलोकाव्ययेति वसुशब्दात् षष्ठ्यभावः । सिद्धमन्यत् ॥ ३ ॥

अथ चतुर्थी—

योनइन्द्राभितोजनोवृकायुरादिदेशति ।
अधस्पदंतमींकृधिविबाधोअसिसासहिर्न
भन्तामन्यकेषांज्याकाअधिधन्वसु ॥ ४ ॥

यः । नः । इन्द्र । अभितः । जनः । वृकऽयुः । आऽदिदेशति ।
अधःऽपदम् । तम् । ईम् । कृधि । विऽबाधः । असि । ससहिः ।
नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ ४ ॥

हे इन्द्र योजनः वृकायुः वृकोहिंसकः अरण्यश्वा स्तेनोवा सइवाचरन् नोस्मानभितः सर्वतः आदिदेशति अभिलक्ष्यायुधान्यतिसृजति दिशतेर्लेटयडागमः छान्दसः शपः श्लुः नाभ्यस्तस्याचिपितीत्यत्र बहुलं छन्दसीति वक्तव्यमिति वचनात्प्रतिषेधाभावेलघूपधगुणः अभ्यस्तानामादिरित्याद्युदात्तत्वं तमीं तमिमं जनं अधस्पदं पादस्याधस्तात् वर्तमानं कृधिकुरु करोतेश्छान्दसोविकरणस्य लुक् । श्रुशृणुपृकृवृभ्यइति हेर्धिः यतस्त्वं विबाधोविशेषेण बाधिता शत्रूणां सासहिः अभिभविता चासि । सिद्धःशेषः ॥ ४ ॥

अथ पंचमी—

योनइन्द्राभिदासतिसनाभिर्यश्चनिष्टयः ।
अवतस्यबलंतिरमहीवद्यौरधत्मनानभन्ता
मन्यकेषांज्याकाअधिधन्वसु ॥ ५ ॥

यः । नः । इन्द्र । अभिऽदासति । सऽनाभिः । यः । च । निष्टयः ।
अव । तस्य । बलम् । तिर । महीऽइव । द्यौः । अध । त्मना ।
नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ ५ ॥

हे इन्द्र यः सनाभिः समानजन्माशत्रुर्नोस्मानभिदासति उपक्षयति यश्च निष्टयोनिकृष्टजन्मा अस्मानुपक्षयति जातार्थे निकृष्टवाचिनोनिःशब्दात् अव्ययात्त्यप् ह्रस्वात्तादौतद्धितइतिषत्वं अधानन्तरमेव महीव द्यौर्महतीद्यौरिव विस्तृतं तस्य शत्रोर्बलं त्मना आत्मना मंत्रेष्वाङ्यादेरात्मनइत्याकारलोपः स्वयमेव अवतिर जहि अवतिरतिर्वधकर्मा । गतमन्यत् ॥ ५ ॥

अथ षष्ठी—

वयमिन्द्रत्वायवःसखित्वमारभामहे ।
ऋतस्यनःपथानयातिविश्वानिदुरिता
नभन्तामन्यकेषांज्याकाअधिधन्वसु ॥ ६ ॥

वयम् । इन्द्र । त्वाऽयवः । सखिऽत्वम् । आ । रभामहे । ऋतस्य ।
नः । पथा । नय । अति । विश्वानि । दुःऽइता ।
नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ ६ ॥

हे इन्द्र त्वायवः त्वामात्मनइच्छन्तो वयं सखित्वं सखिकर्म यज्ञात्मकमारभामहे उपक्रमामहे ऋतस्य सत्यस्य यज्ञस्य पथा मार्गेण भस्यटेर्लोपः उदात्तनिवृत्तिस्वरेण तृतीयायाउदात्तत्वं विश्वानि सर्वाणि दुरितादुरितानि दुर्गमनानि पापानि तत्फलानि च नोस्मानतिनय अतिपारय । गतमन्यत् ॥ ६ ॥

अथ सप्तमी—

अस्मभ्यंसुत्वमिन्द्रतांशिक्षयादोहतेप्रतिवरंजरित्रे ।
अच्छिद्रोध्नीपीपयद्यथानःसहस्रधारापयसामहीगौः ॥ ७ ॥२१॥

अस्मभ्यम् । सु । त्वम् । इन्द्र । ताम् । शिक्ष । या । दोहते ।
प्रति । वरम् । जरित्रे । अच्छिद्रऽऊध्नी । पीपयत् । यथा । नः ।
सहस्रऽधारा । पयसा । मही । गौः ॥ ७ ॥ २१ ॥

हे इन्द्र त्वं तां गामस्मभ्यं स्तोतृभ्यः सुशिक्ष प्रदेहि शिक्षतिर्दानकर्मा यागौर्जरित्रे स्तोत्रे वरं वरणीयं पयः प्रतिदोहते प्रतिदिनं नैरन्तर्येण दुग्धे दुहेर्बहुलंछंदसीति शपोलुगभावः अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्वादनुदात्तत्वं धातुस्वरः शिष्यते वरं वृञ्वरणे इत्यस्मात् ग्रहवृदृनिश्चिगमश्चेति कर्मण्यण् सा मत्ता गौः अच्छिद्रोध्नी निबिडोधस्का अतएव सहस्रधारा बहुभिः क्षीरधाराभिः उपेता मही महती सती यथा नोस्मान् पयसाक्षीरेण पीपयत् प्रवर्धयेत् तथा तां कुर्विति शेषः ओप्यायी वृद्धौ ण्यन्ताच्छान्दसोलुङ् व्यत्ययेन धातोः पीभावः अडभावश्छान्दसः ॥ ७ ॥

॥ इत्यष्टमस्य सप्तमे एकविंशोवर्गः ॥ २१ ॥

उभेयदिति सप्तर्चं षष्ठं सूक्तं युवनाश्वपुत्रस्य मान्धातुरार्षं पूर्वेणेत्यर्धर्चसहितायाः सप्तम्यास्तु गोधा नाम ब्रह्मवादिनी ऋषिः सप्तमीपंक्तिः शिष्टाः षळष्टकामहापंक्तयः इन्द्रोदेवता । तथाचानुक्रान्तं—उभेयन्मान्धाता यौवनाश्वोमहापांक्तं पंक्तिरन्त्यातामध्यर्धां गोधापश्यदिति । गतःसूक्तविनियोगः । चातुर्विंशिकेहनि माध्यंदिने अच्छावाकस्य आद्यस्तृचोवैकल्पिकः स्तोत्रियः । सूत्रितंच—उभेयदिन्द्ररोदसी अवयत्त्वंशतक्रतोइति ।

तत्र प्रथमा—

उभेयदिन्द्ररोदसीआपप्राथोषाइव ।
महान्तंत्वामहीनांसम्राजंचर्षणीनांदेवी
जनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ १ ॥

उभे इति । यत् । इन्द्र । रोदसी इति । आऽपप्राथ । उषाःऽइव ।
महान्तम् । त्वा । महीनाम् । सम्ऽराजम् । चर्षणीनाम् । देवी ।
जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥ १ ॥

हे इन्द्र उभे रोदसी द्यावापृथिव्यौ यद्यस्त्वं अपप्राथ तेजसा आप्रयथसि आपूरयसि प्रा पूरणे आदादिकः छान्दसोलिट् उषाइव यथा उषाः स्वभासा सर्वं जगदापूरयति तद्वत् तं महीनां महतां देवानामपि महान्तं अधिकं चर्षणीनां मनुष्याणामपि सम्राजमीश्वरमिन्द्रं त्वा त्वां देवी देवनशीला जनित्री जनयित्री अदितिः अजीजनत् अजनयत् जनेर्ण्यन्ताल्लुङि चङि रूपमेतत् यस्मादेषा जनित्री ईदृशं पुत्रमजीजनत् अतःकारणात् सा भद्रा कल्याणी प्रशस्ता जाता जनेर्ण्यन्तात्साधुकारिणि तृन् जनितामंत्रइति इडादौ णिलोपोनिपात्यते ऋन्नेभ्यइति ङीप् ॥ १ ॥

अथ द्वितीया—

अवंस्मदुर्हणायतोमर्तस्यतनुहिस्थिरम् ।
अधस्पदंतमींकृधियोअस्माँआदिदेशतिदेवी
जनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ २ ॥

अवं । स्म । दुःऽहनायतः । मर्तस्य । तनुहि । स्थिरम् । अधःऽपदम् । तम् । ईम् । कृधि । यः । अस्मान् । आऽदिदेशति । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥ २ ॥

दुर्हणायतोदुःखप्रदं हननमाचरतोमर्तस्य मनुष्यस्य शत्रोः स्थिरं दृढं बलं अवतनुहि अवततं नीचीनं कुरु स्मेति पूरकः तं शत्रुं ईमेनं अधस्पदं पादयोरधस्ताद्वर्तमानं कृधि कुरु यः शत्रुरस्मान् आदिदेशति जिघांसति । समानमन्यत् ॥ २ ॥

अथ तृतीया—

अवत्याबृहतीरिषोविश्वश्चंन्द्राअमित्रहन् ।
शचीभिःशक्रधूनुहीन्द्रविश्वाभिरूतिभिर्देवीज
नित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ ३ ॥

अवं । त्याः । बृहतीः । इषः । विश्वऽचंन्द्राः । अमित्रऽहन् । शचीभिः । शक्र । धूनुहि । इन्द्र । विश्वाभिः । ऊतिऽभिः । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥ ३ ॥

हे अमित्रहन् अमित्राणां शत्रूणां हन्तः हे शक्रेन्द्र शचीभिः आत्मीयाभिः शक्तिभिः आत्मीयैः कर्मभिर्वा त्याः ताः प्रसिद्धाः बृहतीर्महतीः बृहन्महतोरुपसंख्यानमिति ङीपउदात्तत्वं विश्वश्चन्द्राः विश्वानि सर्वाणि चन्द्राणि हिरण्यानि यासां तादृशीः ह्रस्वाच्चन्द्रोत्तरपदेमंत्रइति सुडागमः बहुव्रीहौविश्वंसंज्ञायामिति पूर्वपदान्तोदात्तत्वं एवंभूताइषोन्नानि विश्वाभिः सर्वाभिरूतिभीरक्षाभिः सार्धं अवधूनुहि अस्मास्ववाङ्मुखं कंपय अस्मदभिमुखं गमयेत्यर्थः । गतमन्यत् ॥ ३ ॥

चातुर्विंशिकेहनि माध्यंदिनेच्छावकस्यावयत्त्वमिति तृचोवैकल्पिकोनुरूपः सूत्रंतु—सूक्तादावुदाहृतं ।

तृचे प्रथमा सूक्ते चतुर्थी–

अवयत्त्वंशतक्रतविन्द्रविश्वांनिधूनुषे ।
रयिंनसुन्वतेसचासहस्रिणीभिरूतिभिर्देवीज
निव्यजीजनद्भद्राजनिव्यजीजनत् ॥ ४ ॥

अवं । यत् । त्वम् । शतक्रतो इतिं शतऽक्रतो । इन्द्रं । विश्वांनि । धूनुषे । रयिम् । न । सुन्वते । सचां । सहस्रिणीभिः । ऊतिऽभिः । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥ ४ ॥

हे शतक्रतो बहुकर्मन् बहुप्रज्ञ वेन्द्र सुन्वते सोमाभिषवं कुर्वते सुनोतेर्लटः शतृ हुश्नुवोःसार्वधातुकइतियण् शतुरनुमइति विभक्तेरुदात्तत्वं ईदृशाय यजमानाय यद्यदा त्वं विश्वानि व्याप्तानि अन्नानि वा अवधूनुषे अभिगमयसि ददासीत्यर्थः तदा रयिं न रयिं च पुत्ररूपं धनं च सहस्रिणीभिः सहस्रसंख्यायुक्ताभिरूतिभीरक्षाभिः सचा सह प्रदेहि । गतमन्यत् ॥ ४ ॥

अथ पंचमी–

अवस्वेदाइवाभितोविष्वंक्पतन्तुदिद्यवंः ।
दूर्वायाइवतन्तंवो१व्य१स्मदेंतुदुर्मतिर्देवीजनि
त्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ ५ ॥

अवं । स्वेदाःऽइव । अभितः । विष्वंक् । पतन्तु । दिद्यवंः ।
दूर्वायाःऽइव । तन्तंवः । वि । अस्मत् । एतु ।
दुःऽमतिः । देवी । जनित्री । अजीजनत् ।
भद्रा । जनित्री । अजीजनत् ॥ ५ ।

स्वेदाइव गात्रात्स्वेदबिन्दव इव अभितः सर्वतः दिद्यवोद्योतमानान्यायुधानि इन्द्रस्य दीप्तयोवा विष्वक् नानामुखाः अवपतन्तु निपतन्तु दूर्वायाइव तन्तवः यथा दूर्वाकांडाः बहुशः प्ररोहन्ति एवं बहुशोविस्तृताद्दृश्यन्ते दुर्मतिः दुष्टाभिसन्धिः शत्रुः अस्मत् अस्मत्तोव्येतु वियता गच्छतु । गतमन्यत् ॥ ५ ॥

अथ षष्ठी—

दीर्घंह्यंकुशंयथाशक्तिंबिभर्षिमन्तुमः ।
पूर्वेणमघवन्पदाजोवयांयथायमो
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ ६ ॥

दीर्घम् । हि । अंकुशम् । यथा । शक्तिम् । बिभर्षि । मन्तुऽमः ।
पूर्वेण । मघऽवन् । पदा । अजः । वयाम् । यथा । यमः । देवी ।
जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥ ६ ॥

दीर्घमायतमंकुशं सृणिं यथा बिभर्षि एवं आयतां शक्तिं हे मन्तुमः मन्तुर्ज्ञानं तद्वन् मतुवसोरुरिति संबुद्धौ नकारस्य रुत्वं ईदृशेन्द्र बिभर्षि धारयसि डुभृञ् धारणपोषणयोः जौहोत्यादिकः श्लौ भृञामिदित्यभ्यासस्येत्वं हे मघवन् धनवन्निन्द्र यथा पूर्वेण देहस्य पूर्वभागे वर्तमानेन पदा पादेन अजः छागोवयां शाखामाकर्षति तथा पूर्वोक्तया शक्त्या आकृष्य यमः शत्रून् नियच्छसि यमेर्लेटयडागमः बहुलंछन्दसीति शपोलुक् । गतमन्यत् ॥ ६ ॥

अथ सप्तमी—

नकिर्देवामिनीमसिनकिरायोपयामसिमन्त्रश्रुत्यंचरामसि ।
पक्षेभिरपिकक्षेभिरत्राभिसंरभामहे ॥ ७ ॥ २२ ॥

नकिः । देवाः । मिनीमसि । नकिः । आ । योपयामसि ।
मंत्रऽश्रुत्यम् । चरामसि । पक्षेभिः । अपिऽकक्षेभिः ।
अत्र । अभि । सम् । रभामहे ॥ ७ ॥ २२ ॥

हे देवाइन्द्रादयः युष्मद्विषये नकिर्मिनीमसि नकिमपि हिंस्मः मीङ् हिंसायां क्रैयादिकः मीनातेर्निगमइति ह्रस्वः इदन्तोमसिः आकारः समुच्चये नकिर्नकिंच योपयामसि योपयामः अननुष्ठानेन विमोहयामः युपविमोहने किंतर्हि मंत्रश्रुत्यं मंत्रेण स्मार्यं श्रुतौ विधिवाक्ये प्रतिपाद्यं युष्मद्विषयं कर्म तच्चरामसि आचरामः अनुति-

ष्ठामः । अपिच पक्षेभिः पक्षैः पक्षस्थानीयैः स्तुतशस्त्रैः अपिकक्षेभिः अपिकक्षोनाम बाह्वोर्मध्यभागः यज्ञस्य अपिकक्षभूतैः हविर्भिः अत्रास्मिन्यज्ञे अभितः सर्वतोयुष्मान् संरभामहे सम्यगवलंबामहे ॥ ७ ॥

॥ इत्यष्टमस्य सप्तमे द्वाविंशोवर्गः ॥ २२ ॥

यस्मिन्निति सप्तर्चं सप्तमं सूक्तं यमगोत्रस्य कुमारस्यार्षं आनुष्टुभं यमदेवत्यं । तथाचानुक्रान्तं—यस्मिन्कुमारोयामायनोयाममानुष्टुभंत्विति । गतोविनियोगः ।

तत्र प्रथमा—

**यस्मिन्वृक्षेसुपलाशेदेवैःसंपिबतेयमः ।**
**अत्रानोविश्पतिःपितापुराणाँअनुवेनति ॥ १ ॥**

यस्मिन् । वृक्षे । सुऽपलाशे । देवैः । सम्ऽपिबते । यमः ।
अत्र । नः । विश्पतिः । पिता । पुराणान् । अनु । वेनति ॥ १ ॥

वृक्षे लुप्तोपममेतत् वृक्षवत् सुपलाशे शोभनपलाशोपेते शोभनोद्यानसहिते यद्वा शोभनपर्णोपेते वृक्षे तादृशस्य वृक्षस्य मूलं यथा उष्णजनितश्रमापनोदनेन सुखकरं भवति तद्वत्सुखकरे यस्मिन् स्थाने देवैः परिजनभूतैः यमोनियन्ता वैवस्वतः संपिबते सहभुंक्ते पिबतीत्यर्थः। विश्पतिर्विशां प्रजानामधिपतिः पिता नः व्यत्ययेन बहुवचनं मम नचिकेतसोजनकोवाजश्रवसः अत्रास्मिन्यमस्य स्थाने पुराणान्पुरातनान् अत्र चिरकालं निवसतः पितॄननु तेषां पश्चात्तत्समीपे निवसत्वयमिति वेनति मां कामयते नचिकेता नाम कुमारः वाजश्रवसेन पित्रा यमलोकं प्रस्थापितःसन् यमंदृष्ट्वा प्रसाद्य पुनरपीमंलोकमाजगाम अयमर्थः इदमादिकैर्मंत्रैः प्रतिपाद्यते। यद्वा कुमारोनाम नचिकेतसोन्यः कश्चिदृषिः यच्छतीति यमआदित्यः तमनेन सूक्तेनतुष्टाव सुपलाशे वृक्षइव यस्मिन् शोभने स्थाने यमआदित्यः देवैः दीव्यन्तीति देवारश्मयः तैः संपिबते संगच्छते उपसर्गवशात्पिबतिरत्र गत्यर्थः व्यत्ययेनात्मनेपदं अत्रास्मिन्स्थाने स्थितोविश्पतिर्विशां प्रजानां प्रकाशनप्रवर्षणादिना पालयिता प्राणात्मना सर्वेषां जनकः सआदित्यः पुराणान् चिरंतनान् स्तोतॄन्नोस्मानपि वेनति अनुग्राह्यत्वेन कामयते यद्वा अत्र स्थाने स्थितान् नोस्माकं पुराणान् पूर्वपुरुषान् अनुवेनति अनुक्रमेण कामयते ॥ १ ॥

अथ द्वितीया—

पुराणाँअनुवेनन्तंचरन्तंपापयामुया ।
असूयन्नभ्यचाकशंतस्माअस्पृहयंपुनः ॥ २ ॥

पुराणान् । अनुऽवेनन्तम् । चरन्तम् । पापया । अमुया । असूयन् ।
अभि । अचाकशम् । तस्मै । अस्पृहयम् । पुनरिति ॥ २ ॥

पुराणान् पुरातनान् पितॄननुवेनन्तं मामनुगतं कामयमानं अमुयाअनया पापया निकृष्टया बुद्ध्या सह चरन्तं वर्तमानं पितरं वाजश्रवसं असूयन् सुखेन जीवन्तं मां मृत्युसमीपं प्रेहीत्युक्तवान् इतिमानसेनोपतापेनयुक्तः सन् प्रथममभ्यचाकशं अयं पश्यतिकर्मा अभ्यपश्यं असुञ् मानसउपतापे कंड्वादिः । पुनः पश्चात्तस्माअस्पृहयं पितुराज्ञया तं मृत्युमाप्तुमैच्छं स्पृहईप्सायां चुरादिरदन्तः स्पृहेरीप्सितइति संप्रदानसंज्ञायां तच्छब्दाच्चतुर्थी । यद्वा पुराणान् चिरन्तनान् स्तोतॄन् पूर्वपुरुषान्पितॄन्वा अनुवेनन्तं अनुक्रमेण कामयमानं चरन्तं उदयास्तमयाभ्यां दिवि परिवर्तमानं अनया पापया निकृष्टया स्तोतुमसमर्थया बुध्याअसूयन् गुणेषु दोषाविष्करणमसूया परकीयगुणेषु दूषणान्याविष्कुर्वन् अभ्यचाकशं अयमपिकश्चिदिति सामान्यरूपेणाभ्यपश्यं इदानीं तु पुनः तस्यादित्यस्य माहात्म्यं जानन् तस्माअस्पृहयं तमेवादित्यं स्तुतिभिः परिचरणात्मकैः कर्मभिश्च आप्तुमैच्छं ॥ २ ॥

अथ तृतीया—

यंकुमारनवंरथमचक्रंमनसाकृणोः ।
एकेषंविश्वतःप्राञ्चमपश्यन्नधितिष्ठसि ॥ ३ ॥

यम् । कुमार । नवम् । रथम् । अचक्रम् । मनसा । अकृणोः ।
एकऽईषम् । विश्वतः । प्राञ्चम् । अपश्यन् । अधि । तिष्ठसि ॥ ३ ॥

नचिकेतसंज्ञं कुमारं यमः अनयोत्तरया च प्रलोभयति हे कुमार नवमभिनवं इतः पूर्वमदृष्टं अभिनवत्वमेव व्यनक्ति अचक्रं चक्ररहितं एकेषं एका ईषा यस्य तादृशं तथापि विश्वतः सर्वतः प्राञ्चं प्रकर्षेणाञ्चन्तं गच्छन्तं यं रथं मनसा अकृणोः मत्समीपं प्रतिगमनाय

अध्यवसायात्मकं ईदृशं यं रथमकरोः कृत्वा चापश्यन् कर्तव्याकर्तव्यविभागमजानन्नधि तिष्ठसि रथमारोहसि । यद्वा स्तोतारं कुमाराख्यमृषिमादित्यः प्रत्यक्षः सन् देहात्मनोर्विवेकं बोधयति हे कुमार ऋषे चक्ररहितं एकेषं एकः प्राणईषास्थानीयोयस्य ईदृशमभिनवं सर्वतोगच्छन्तं शरीरात्मकं यं रथं मनसा अन्तःकरणेन अकृणोः अकरोः संकल्पात्मकेन मनसा हि कामोजायते सत्यां हि कामनायां पुण्यपापात्मकं कर्म क्रियते तेन च भोगप्रदानायेदं शरीरमारभ्यतइति परंपरया मनसः शरीरनिष्पादकत्वं तं शरीरात्मकं रथं अपश्यन्नजानन् लक्षणहेत्वोरिति हेतौ शतृप्रत्ययः सत्स्वरूपापरिज्ञानाद्धेतोरधितिष्ठसि भोगायतनत्वेन स्वीकरोषि ॥ ३ ॥

अथ चतुर्थी—

यंकु॑मार॒प्राव॑र्तयो॒रथं॒विप्रे॑भ्य॒स्परि॑ ।
तंसामानु॒प्राव॑र्त॒तसमि॒तोना॒व्याहि॑तम् ॥ ४ ॥

यम् । कु॒मा॒र॒ । प्र । अव॑र्तयः । रथ॑म् । विप्रे॑भ्यः । परि॑ । तम् ।
साम॑ । अनु॑ । प्र । अ॒व॒र्त॒त॒ । सम् । इ॒तः । ना॒वि । आऽहि॑तम् ॥ ४ ॥

हे कुमार नचिकेतः यं पूर्वोक्तमधिष्ठितं रथं प्रावर्तयः मत्समीपं प्रत्यगमयः विप्रेभ्यो-मेधाविभ्यः परि उपरि भूलोके वर्तमानानां मेधाविनां बान्धवानामुपरिष्टादन्तरिक्षइत्यर्थः पंचम्याः परावध्यर्थइति विसर्जनीयस्य सत्वं । तं रथं साम पित्राकृतं सान्त्वनं यमसमीपं गत्वा एवमेव त्वया वक्तव्यमिति प्रत्यागमनकारणं उपायोपदेशनं अनुप्रावर्तत इतोस्माल्लोकादन्व गच्छत् कथंभूतं नावि नौवत् तरणसाधनायां बुद्धौ समाहितं सम्यग्धृतं यद्वा हे कुमार ऋषे यं शरीरात्मकं रथं अधिष्ठितं प्रावर्तयः संसारे प्रवर्तितवानसि मेधाविनां मध्ये तं रथं अनु-साम उपलक्षणमेतत् ऋक्सामादिसाध्यं स्तोत्रं नावि नौवत्तारयित्र्यां वाचि वेदात्मिकायां समाहितं सम्यक् प्रतिपाद्यत्वेन हितं कर्म च इतः अस्मिन् लोके प्रावर्तत प्रवृत्तमभूत् इत्थं आत्मस्वरूपापरिज्ञानेन शरीरबन्धनं तेन कर्तव्यं व्यवहारजातं चोक्तं । अथतु सत्यज्ञानादिस्वरूपं अकर्तारं परमात्मानं यदि स्वात्मतया साक्षात्करोति तदोक्तं नसंभवतीत्यभिप्रायः ॥ ४ ॥

अथ पञ्चमी—

कःकुमारमजनयद्रथंकोनिरवर्तयत् ।
कःस्वित्तदद्यनोब्रूयादनुदेयीयथाभवत् ॥ ५ ॥

कः । कुमारम् । अजनयत् । रथम् । कः । निः । अवर्तयत् । कः । स्वित् । तत् । अद्य । नः । ब्रूयात् । अनुऽदेयी । यथा । अभवत् ॥ ५ ॥

कः पुरुषः इमं कुमारं अजनयत् अधिक्षेपे किंशब्दः कीदृशं बालं यमसमीपं प्रहिण्वन् कथं पिता समीचीनः स्यात् तत्तावदास्तां कोवा पुरुषः अस्य बालस्य यमसमीपं प्रतिगमनाथ तं रथं निरवर्तयत् निर्वर्तितवान् सोपिमूर्खइत्यर्थः । यथा येन प्रकारेण अयं कुमारः अनुदेयी अनुदातव्योभवत् भवति तत्तदनुगुणं वचनं उपायकथनं अद्यास्मिन्काले नोस्माकं कः स्वित् कोनाम ब्रूयात् अभिदध्यात् प्रथमं यमसमीपं गत्वा पश्चात्ततोनिर्गमनोपायं ब्रुवन्नपि न प्राज्ञइत्यर्थः । अथवा कुमाराख्यऋषिः आत्मनः सार्वात्म्यमवगच्छन् स्वव्यतिरिक्तस्यान्यस्यासंभवं किंशब्देन आक्षेपवाचिना दर्शयति । कुमारं मां कः पिता अजनयत् नकोपि अजोनित्यःशाश्वतइति श्रुत्युक्तरूपोहंभवामि कश्च शरीरात्मकं रथं निरवर्तयत् निर्वर्तयति मद्व्यतिरिक्तस्य निर्वर्तयितुरभावात् तथा निर्वर्त्यस्यान्यस्यासंभवाच्च अद्यास्मिन्काले सार्वात्म्यानुभवदशायां तंतं प्रकारं कःस्वित् कोनाम नोस्माकं ब्रूयात् यथा येन प्रकारेण अनुदेयी अनुदातव्या मद्व्यतिरिक्तापदार्थसत्ता अभवत् भवति सप्रकारोपि दुर्वचइत्यर्थः ॥ ५ ॥

अथ षष्ठी—

यथाभवदनुदेयीततोअग्रमजायत ।
पुरस्ताद्बुध्नआततःपश्चान्निरयणंकृतम् ॥ ६ ॥

यथा । अभवत् । अनुऽदेयी । ततः । अग्रम् । अजायत । पुरस्तात् । बुध्नः । आऽततः । पश्चात् । निःऽअयनम् । कृतम् ॥ ६ ॥

अनुदेयी अनुदातव्यः यथा येन प्रकारेण पितरमनुलक्ष्य अयं कुमारोयमेन दत्तोभवत् भवति । तथा ततः तस्माद्वाजश्रवसात्पितुः अग्रं यमसमीपं गच्छेति वचनस्य

अग्रतोवर्तमानं नचिकेतसा यमेन सह वदितव्यं । तंवैप्रवसन्तंगतासीतिहोवाचेत्यादिकंब्राह्मणान्तरोक्तं अजायत प्रादुरभवत् पितोपदिष्टवानित्यर्थः पुरस्तात्ततः पूर्वंबुध्नः उक्तस्याग्रस्य मूलभूतं यमगृहं प्रति गच्छेतिवचनं आततः अतिविस्तृतमासीत् अतस्तदशक्यपरिहारमिति पश्चात्क्रोधं परित्यज्य निरयणं तस्माद्यमान्निर्गमनोपायं कृतं पित्राआचरितं । यद्वा अनुदेयी आत्मानमनुदातव्या आत्मस्वरूपव्यतिरिक्तान्यपदार्थसत्ता यथाभवत् भवति तदनुगुणं ततः तस्मान्मायाविशिष्टादात्मनः अग्रं स्रष्टव्यविकारजातस्य आद्यं मनस्तत्वं सिसृक्षाकारणमजायत उदपद्यत पुरस्तात्सृष्टेः प्रागवस्थायां बुध्नोमूलं अव्याकृतं मायात्मकं कारणमेव आततः आसमन्तात्ततं विस्तृतमासीत् पश्चात्तमसः उत्पत्त्यनन्तरं निरयणं उद्गतानां कार्याणां तस्मात्कारणान्निर्गमनं घटपटादिभेदेन स्वरूपालंभनं कृतं ब्रह्मणानिर्मितं तथामृद्विकारोघटादिर्मृदोन्योन भवति आदित्यानुग्रहाद्ब्रह्मभावं प्राप्तस्य मम विकारः प्रपंचोमदन्योन भवति इति व्यतिरिक्तस्य पित्रादेराक्षेपः पूर्वोक्तः समर्थितः ॥ ६ ॥

अथ सप्तमी—

इ॒दं य॒मस्य॒ साद॑नं देवमा॒नं यदु॒च्यते॑ ।
इ॒यम॑स्य धम्यते ना॒ळीर॒यं गी॒र्भिः परि॑ष्कृतः ॥ ७ ॥ २३ ॥

इ॒दम् । य॒मस्य॑ । सद॑नम् । दे॒व॒ऽमा॒नम् । यत् । उ॒च्यते॑ । इ॒यम् ।
अ॒स्य॒ । ध॒म्य॒ते॒ । ना॒ळीः । अ॒यम् । गीः॒ऽभिः । परि॑ऽकृतः ॥ ७ ॥ २३ ॥

इदं यमस्य नियन्तुरादित्यस्य वैवस्वतस्य वा सदनं स्थानं छान्दसः सांहितिकोदीर्घः यत्सदनं देवमानं देवैर्निर्मितमित्युच्यते सर्वत्राभिधीयते यद्वा देवानां रश्मीनां निर्माणसाधनमिति गीयते अस्य यमस्य प्रीणनाय इयं नाळीः वाद्यविशेषोवेणुः धम्यते वाद्यते यद्वा नाळीति वाङ्नाम इयं स्तुतिरूपा वाक् अस्य प्रीणनाय धम्यते उच्चार्यते एवं सति अयं यमः गीर्भिः स्तुतिभिः परिष्कृतः अलंकृतोभूत् संपर्युपेभ्यइति सुडागमः परिनिविभ्यइति षत्वं गतिरनन्तरइति गतेः प्रकृतिस्वरत्वं ॥ ७ ॥

॥ इत्यष्टमस्य सप्तमे त्रयोविंशोवर्गः ॥ २३ ॥

केशीति सप्तर्चमष्टमं सूक्तं अग्निसूर्यवायुदेवताकं वातरशनपुत्राः जूतिवातजूतिप्रभृतयः प्रत्यृचं क्रमेण ऋषयः । तथाचानुक्रान्तं—केशी मुनयोवातरशनाजूतिर्वातजूतिर्विप्रजूतिर्वृषाणकःकरिक्रतएतशऋष्यश्रृंगश्चैकर्चाः केशिनमिति । गतोविनियोगः ।

तत्र प्रथमा—

केश्य१ग्निंकेशीविषंकेशीबिभर्तिरोदसी ।
केशीविश्वंस्वर्दृशेकेशीदंज्योतिरुच्यते ॥ १ ॥

केशी । अग्निम् । केशी । विषम् । केशी । बिभर्ति ।
रोदसी इति । केशी । विश्वम् । स्वः । दृशे । केशी ।
इदम् । ज्योतिः । उच्यते ॥ १ ॥

केशाः केशस्थानीयारश्मयः तद्वन्तः केशिनः अग्निर्वायुः सूर्यश्च एते त्रयः स्तूयन्ते केशी रश्मिभिर्युक्तः प्रकाशमानोवा सूर्यः अग्निं बिभर्ति हविर्भिः पोषयति धारयति वा कालविशेषेहि अग्नेः पोषणाय होमः सच कालविशेषः सूर्यगत्यधीनइति सूर्यएव बिभर्तीत्युच्यते । तथा विषं उदकनामैतत् उदकं रश्मिभिः घर्मसमये आहृतं अयमेव केशी बिभर्ति विसृष्टुं तथा रोदसी द्यावापृथिव्यावपि अयमेव बिभर्ति अपिच विश्वं व्याप्तं स्वः सर्वं जगत् दृशे दर्शनाय अयमेव केशी करोति प्रकाशयतीत्यर्थः । इत्थं महानुभावः केशी कोनामेत्यतआह—इदं दृश्यमानं मंडलस्थं यत् ज्योतिः इदमेव केशीत्युच्यते नान्यइत्यर्थः ॥ १ ॥

अथ द्वितीया—

मुनयोवातरशनाःपिशंगावसतेमला ।
वातस्यानुध्राजिंयन्तियद्देवासोअविक्षत ॥ २ ॥

मुनयः । वातऽरशनाः । पिशङ्गा । वसते । मला । वातस्य । अनु ।
ध्राजिम् । यन्ति । यत् । देवासः । अविक्षत ॥ २ ॥

वातरशना वातरशनस्य पुत्रामुनयः अतीन्द्रियार्थदर्शिनः जूतिवातजूतिप्रभृतयः पिशंगा पिशंगानि कपिलवर्णानि मला मलिनानि वल्कलरूपाणि वासांसि वसते आच्छादयन्ति वस

आच्छादने आदादिकः ईदृशास्ते यद्यदा देवासोदेवाः तपसोमहिम्ना दीप्यमानाः सन्तः अविक्षत देवतास्वरूपं प्राविशन् विशेर्लुङि शलइगुपधादनिटःक्सः व्यत्ययेनात्मनेपदं तदा ते वातस्य वायोः ध्राजिं गतिमनुयन्ति अनुगच्छंति प्राणोपासनया प्राणरूपिणोवायुभावं प्रपन्नाइत्यर्थः ॥ २ ॥

अथ तृतीया—

उन्मंदितामौनेयेनवातान्आतंस्थिमावयम् ।
शरीरेदस्माकंयूयंमर्तासोअभिपश्यथ ॥ ३ ॥

उत्ऽमंदिताः । मौनेयेन । वातान् । आ । तस्थिम । वयम् । शरीरा । इत् । अस्माकम् । यूयम् । मर्तासः । अभि । पश्यथ ॥ ३ ॥

मौनेयेन मुनिभावेन लौकिकसर्वव्यवहारविसर्जनेन उन्मदिताः उन्मत्ताः उन्मत्तवदाचरन्तः यद्वा उत्कृष्टं मदं हर्षं प्राप्तावयं वातान् वायूनस्माभिरुपास्यमानानातस्थिम आस्थितवन्तः हे मर्तासः मनुष्याः अस्माकं शरीरेत् शरीराण्येव यूयं केवलमभिपश्यथ नोस्मान् यतोवयं नीरूपेण वायुना सायुज्यं प्राप्ताः ॥ ३ ॥

अथ चतुर्थी—

अन्तरिक्षेणपततिविश्वारूपावचाकशत् ।
मुनिर्देवस्यदेवस्यसौकृत्यायसखाहितः ॥ ४ ॥

अन्तरिक्षेण । पतति । विश्वा । रूपा । अवऽचाकशत् । मुनिः । देवस्यऽदेवस्य । सौकृत्याय । सखा । हितः ॥ ४ ॥

मुनिः अस्या ऋचोद्रष्टा वृषाणकऋषिः वातरूपतां सूर्यात्मतां वा तत्तदुपासनया प्राप्तः सन् अन्तरिक्षेणाकाशेन पतति गच्छति किंकुर्वन् विश्वा विश्वानि सर्वाणि रूपाणि रूप्यमाणानि पदार्थजातानि अवचाकशत् अभिपश्यन् स्वतेजसा दर्शयन् तथा देवस्यदेवस्य नित्यवीप्सयोरिति द्विर्वचनं अनुदात्तंचेति परस्याम्रेडितस्यानुदात्तत्वं सर्वस्यापि देवस्य सखा सखिभूतः अतएव सौकृत्याय सुष्ठु देवानुद्दिश्य क्रियमाणं यागात्मकं कर्म सुकृतं तस्य भावाय सम्यगनुष्ठापनाय हितः निहितः स्थापितोभवति ॥ ४॥

अथ पंचमी–

वातस्याश्वोवायोःसखाथोदेवेषितोमुनिः ।
उभौसमुद्रावाक्षेतियश्चपूर्वउतापरः ॥ ५ ॥

वातस्य । अश्वः । वायोः । सखा । अथो इति । देवऽइंषितः ।
मुनिः । उभौ । समुद्रौ । आ । क्षेति । यः । च । पूर्वः । उत । अपरः॥५॥

वातस्य वायोः गतिरिव अश्वोव्याप्तः यद्वा वायोरशिता भोक्ता वायुरेव तस्याहारइत्यर्थः अतएव वायोः सखा मित्रभूतः अथो अपिच देवेषितः देवेन द्योतमानेन वायुना सूर्येणवा इषितः प्राप्तः तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरत्वं ईदृशोमुनिः करिक्रताख्यऋषिः उक्तप्रकारेण वायुरूपः सूर्यरूपोवा सन् उभौ समुद्रौ उदधी आक्षेति अभिगच्छति क्षिनिवासगत्योः छान्दसोविकरणस्य लुक् कौ तौ समुद्रौ यः पूर्वः समुद्रः उतशब्दश्चार्थे यश्चापरः समुद्रः ॥ ५ ॥

अथ षष्ठी–

अप्सरसांगन्धर्वाणांमृगाणांचरणेचरंन् ।
केशीकेतस्यविद्वान्सखास्वादुर्मदिन्तमः ॥ ६ ॥

अप्सरसाम् । गन्धर्वाणाम् । मृगाणाम् । चरणे । चरन् । केशी ।
केतस्य । विद्वान् । सखा । स्वादुः । मदिन्ऽतमः ॥ ६ ॥

अप्सरसां देवस्त्रीणां गन्धर्वाणां चरणे संचारणे संचारभूते दिव्यन्तरिक्षे च तथा मृगाणां सिंहादीनां संचारस्थले पृथिव्यां चरन् व्याप्य संचरन् केशी अग्निर्वायुः सूर्योवा केतस्य ज्ञातव्यस्य सर्वस्यार्थजातस्य विद्वान् यद्वा ज्ञातव्यस्यास्य ऋषेः एतशस्य सखा विद्वान् अविशेषात्सर्वं जानन् स्वादुः स्वादयिता रसयिता सर्वस्य रसस्योत्पादकः अतएव मदिन्तमः मादयितृतमोभवति नाद्धस्येतिनुडागमः ॥ ६ ॥

अथ सप्तमी—

वायुरस्माउपामन्थत्पिनष्टिस्माकुनन्नमा ।
केशीविषस्यपात्रेणयद्रुद्रेणापिबत्सह ॥ ७ ॥ २४ ॥

वायुः । अस्मै । उप । अमन्थत् । पिनष्टि । स्म । कुनन्नमा । केशी ।
विषस्य । पात्रेण । यत् । रुद्रेण । अपिबत् । सह ॥ ७ ॥ २४ ॥

केशी रश्मिभिर्युक्तः सूर्यः रुद्रेण रुद्रपुत्रेण मरुद्गणेन । यद्वा रुद्रोवाएषयदग्निरितिश्रवणात् । रुद्रोवैद्युताग्निः तेन सह वर्तमानः विषस्य उदकनामैतत् क्रियाग्रहणंकर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी विषमुदकं पात्रेण पानसाधनेन रश्मिजालेन यद्यदा अपिबत् पिबति तदा अस्मै केशिने वायुरुपामंथत् भूगतं सर्वरसं उपमथ्नाति । यद्वा अपिबत् पीतवान् भवति तदा सूर्यमंडले घनीभूतं अस्य तदुदकं वायुरुपमथ्नाति मंथनेन वैद्युताग्निना आलोडयति । तथा कुनंनमा कुत्सितमपि भृशं नमयित्री स्वयं नमयितुमशक्या स्वतंत्रा माध्यमिकावाक् पिनष्टिस्म यथा अधस्तात् स्रवति तथा चूर्णीकरोति स्मेति प्रसिद्धौ कुपूर्वान्नमयतेः पचाद्यचि यङोचिचेति यङोलुक् थाथादिनोत्तरपदान्तोदात्तत्वं ॥ ७ ॥

॥ इत्यष्टमस्य सप्तमे चतुर्विंशोवर्गः ॥ २४ ॥

उतदेवाइति सप्तर्चं नवमं सूक्तं आनुष्टुभं वैश्वदेवं भरद्वाजकश्यपगौतमात्रिविश्वामित्रजमदग्निवसिष्ठाइति क्रमेण प्रत्यृचमृषयः । तथाचानुक्रान्तं—उतदेवाः सप्तर्षयएकर्चावैश्वदेवमिति । गतोविनियोगः ।

तत्र प्रथमा—

उतदेवाअवहितंदेवाउन्नयथापुनः ।
उतागश्चक्रुषंदेवादेवाजीवयथापुनः ॥ १ ॥

उत । देवाः । अवऽहितम् । देवाः । उत् । नयथ । पुनरिति ।
उत । आगः । चकुषम् । देवाः । देवाः । जीवयथ । पुनरिति ॥ १ ॥

उतापिच हे देवाः अवहितमुन्नयथ उतापिच हेदेवाः आगः अपराधं चकुषं कृतवन्तं मां तस्मादागसोरक्षत हे देवाः रक्षित्वा च पुनः पश्चाज्जीवयथ चिरंजीविनं कुरुत ॥ १ ॥

अथ द्वितीया—

द्वाविमौवातौवातआसिन्धोरापरावतः ।
दक्षंतेअन्यआवातुपरान्योवातुयद्रपः ॥ २ ॥

द्वौ । इमौ । वातौ । वातः । आ । सिन्धोः । आ । पराऽवतः । दक्षम् ।
ते । अन्यः । आ । वातु । परा । अन्यः । वातु । यत् । रपः ॥ २ ॥

इमौ दृश्यमानौ द्वौ वातौ पुरोवातः पश्चाद्वातश्च आसिन्धोः आसमुद्रात् मर्यादायामाकारः यद्वा आपरावतः समुद्रादपि योदूरदेशः तं देशमवधीकृत्य वातः गच्छतः । वा गतिगंधनयोः आदादिकः ।तयोर्वातयोः अन्यएकः हेस्तोतः ते तव दक्षं बलं आवातु आगमयतु अन्यश्च त्वदीयं यद्रपः पापं तत्परावातु परागमयतु ॥ २ ॥

अथ तृतीया—

आवातवाहिभेषजंविवातवाहियद्रपः ।
त्वंहिविश्वभेषजोदेवानांदूतईयसे ॥ ३ ॥

आ । वात । वाहि । भेषजम् । वि । वात । वाहि । यत् । रपः ।
त्वम् । हि । विश्वऽभेषजः । देवानाम् । दूतः । ईयसे ॥ ३ ॥

हे वात भेषजं सुखं व्याध्युपशमनमौषधं वा आवाहि आगमय हे वात यद्रपोस्मदीयं पापं तद्विवाहि विगमय अस्मत्तोविश्लेषय त्वं हि खलु देवानां दूतः विश्वभेषजः विश्वानि भेषजानि यस्मिन् बहुव्रीहौविश्वंसंज्ञायामिति पूर्वपदान्तोदात्तत्वं ईदृशश्चसन् ईयसे सततंगच्छसि ईङ्गतौ दैवादिकः श्यनोनित्वात् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं हिचेति निघातप्रतिषेधः ॥ ३ ॥

अथ चतुर्थी—

आत्वांगमंशंतातिभिरथोअरिष्टतातिभिः ।
दक्षंतेभद्रमाभार्षंपरायक्ष्मंसुवामिते ॥ ४ ॥

आ । त्वा । अगमम् । शन्तातिऽभिः । अथो इति । अरिष्टतातिऽभिः ।
दक्षम् । ते । भद्रम् । आ । अभार्षम् । परा । यक्ष्मम् । सुवामि । ते ॥ ४ ॥

हे स्तोतः त्वा त्वां शंतातिभिः सुखकरैः अथो अपिच अरिष्टतातिभिः अहिंसाकरैश्च रक्षणैः आगमं आगतवानस्मि शिवशमरिष्टस्यकरइति उभयत्र तातिल् प्रत्ययः लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । अपिच भद्रं कल्याणं ते तव दक्षं बलं आभार्षं आहार्षं वायुसकाशादानैषं तथा ते तव यक्ष्मं रोगं च परासुवामि विनाशयामि ॥ ४ ॥

अथ पंचमी—

त्रायंन्तामिहदेवास्त्रायंतांमरुतांगणः ।
त्रायंन्तांविश्वांभूतानियथायमंरपाअसंत् ॥ ५ ॥

त्रायंन्ताम् । इह । देवाः । त्रायंताम् । मरुताम् । गणः । त्रायंन्ताम् ।
विश्वा । भूतानि । यथा । अयम् । अरपाः । असंत् ॥ ५ ॥

इहास्मिन्देशे सर्वे देवाः त्रायन्तां अस्मान्पालयन्तां तथा मरुतां गणः संघः सत्रायन्तां विश्वा विश्वानि सर्वाणि अन्यानिच भूतानि भूतजातानि त्रायन्तां अस्मान् रक्षन्तु यथा अयमस्मदीयः शरीरादिः अरपाअसत् पापरहितोभवति तथेत्यर्थः रपइति पापनाम नञाबहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं अस्तेर्लेटयडागमः यावद्यथाभ्यामिति निघाताभावः ॥५॥

अथ षष्ठी—

आपइद्वाउंभेषजीरापोंअमीवचातंनीः ।
आपःसर्वस्यभेषजीस्तास्तेंकृण्वन्तुभेषजम् ॥ ६ ॥

आपः । इत् । वै । ऊँ इति । भेषजीः । आपः । अमीवऽचातनीः ।
आपः । सर्वस्य । भेषजीः । ताः । ते । कृण्वन्तु । भेषजम् ॥ ६ ॥

आपइद्वै आपएवखलु भेषजीः भेषजभूताः स्नानपानादिना सुखहेतवः यद्वा ओषधिरूपेण परिणतारोगोपशमनहेतवोभवन्ति केवलमामकेत्यादिना भेषजशब्दात् ङीप् उदात्तनिवृत्तिस्वरेण ङीपउदात्तत्वं जसिवाछन्दसीति पूर्वसवर्णदीर्घः यतएवमतःकारणात् आपः अमीवचातनीः अमीवचातन्यः रोगाणां नाशयित्र्योभवन्ति चातयतिर्वधकर्मा किंच आपः सर्वस्य प्राणिजातस्य भेषजीर्भेषजभूताभवन्ति नकेतिपयस्य तास्तथाविधाआपः ते तव भेषजं कृण्वन्तु कुर्वन्तु ॥ ६ ॥

अथ सप्तमी—

हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरोगवी ।
अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ ७ ॥ २५ ॥

हस्ताभ्याम् । दशऽशाखाभ्याम् । जिह्वा । वाचः । पुरःऽगवी ।
अनामयित्नुऽभ्याम् । त्वा । ताभ्याम् । त्वा । उप । स्पृशामसि ॥ ७ ॥ २५ ॥

दशशाखाभ्यां दशाङ्गुलयः शाखाभूताययोः तादृशाभ्यां प्रजापतेर्हस्ताभ्यां सृज्यमानाजिह्वा रसना वाचः शब्दस्य पुरोगवी पुरतोगंत्री जातायत्रयत्र शब्दः तत्र सर्वत्र तस्य शब्दस्योच्चारणाय पुरतोव्याप्रियते इत्यर्थः अनामयित्नुभ्यां सम्यगारोग्यहेतुभ्यां ताभ्यां हस्ताभ्यां हेस्तोतः त्वा त्वां उपस्पृशामसि उपस्पृशामः इदन्तोमसिः त्वेतिपुनरुक्तिः पूरणार्था ॥ ७ ॥

॥ इत्यष्टमस्य सप्तमे पञ्चविंशोवर्गः ॥ २५ ॥

तवत्यइति षळृचं दशमं सूक्तं उरुनाम्नः पुत्रस्य अंगाख्यस्यार्षं जागतमैन्द्रं तथाचानुक्रान्तं—तवत्येषळंगऔरवोजागतमिति । गतोविनियोगः ।

तत्र प्रथमा—

तवत्यइन्द्रसख्येषुवह्नयऋतंमन्वानाव्यदर्दिरुर्वलम् ।
यत्रादशस्यन्नुषसोरिणन्नपःकुत्सायमन्मन्नह्यश्चदंसयः ॥ १ ॥

तव॑ । त्ये । इ॒न्द्र॒ । स॒ख्येषु॑ । वह्न॑यः । ऋ॒तम् । म॒न्वा॒नाः । वि ।
अ॒द॒र्दि॒रुः॒ । व॒लम् । यत्र॑ । द॒श॒स्यन् । उ॒षसः॑ । रि॒णन् । अ॒पः ।
कुत्सा॑य । मन्म॑न् । अ॒ह्यः॑ । च॒ । दं॒सयः॑ ॥ १ ॥

हे इन्द्र तव सख्येषु सखित्वेषु सत्सु त्ये ते प्रसिद्धावह्नयोवोढारः हविषां स्तुतीनां वा अतएव ऋतं यज्ञं मन्वानाः अवबुध्यमानाअंगिरसः वलं गवामपहर्तारं एतत्संज्ञकमसुरं व्यदर्दिरुः अत्यर्थं व्यदारयन् दृविदारणे अस्माद्यङ्लुगन्तात् लुङि सिजभ्यस्तेति झेर्जुस् जुसिचेतिगुणः व्यत्ययेनेत्वं । अपिच यत्र यस्मिन्काले मन्मन् मन्मनि स्तोत्रे सति कुत्साय महर्षये उषसः उषःकालान् वृत्रेणावृतत्वात् पूर्वमसत्प्रायान् तदपनोदनेन दशस्यन् प्रयच्छन् तथा अपोवृत्रेणावृतान्युदकानिच रिणन् तस्मान्निर्गमयन्वर्तसे रीगतिरेषणयोः क्रैयादिकः प्वादीनां ह्रस्वत्वं तदानीं अह्यः अहेर्वृत्रस्य च दंसयः कर्माणि वितथान्यासन्नित्यर्थः ॥ १ ॥

अथ द्वितीया—

**अवा॑सृजः प्र॒स्वः॑ श्व॒ञ्चयो॑ गि॒रीनुदा॑जउ॒स्रा अपि॑बो॒ मधु॑ प्रि॒यम् ।**
**अव॑र्धयो व॒निनो॑ अस्य॒ दंस॑सा शुशोच॒ सूर्य॑ ऋ॒तजा॑तया गि॒रा ॥ २ ॥**

अव॑ । अ॒सृ॒जः॒ । प्र॒ऽस्वः॑ । श्व॒ञ्चयः॑ । गि॒रीन् । उत् । आ॒जः॒ ।
उ॒स्राः । अपि॑बः । मधु॑ । प्रि॒यम् । अव॑र्धयः । व॒निनः॑ । अ॒स्य॒ ।
दंस॑सा । शु॒शोच॑ । सूर्यः॑ । ऋ॒तऽजा॑तया । गि॒रा ॥ २ ॥

हे इन्द्र प्रस्वः प्रसूतिर्जन्म तद्धेतुभूता अपः अवासृजः आवरकान्मेघादधः पातितवानसि तथा गिरीन् पर्वतान् वलेन गोमतोबिलस्य पिधानाय निहितान् श्वंचयः अभैत्सीरित्यर्थः श्वचिगतौ अस्मात्ण्यन्ताल्लङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः समानवाक्ये निघातयुष्मदस्मदादेशावक्तव्याइति वचनात्पूर्वपदस्यासमानवाक्यगतत्वेनास्य तिङ्ङतिङइति निघाताभावः तथा वलासुरेण बिलेनिहिताउस्रागाः पर्वतभेदनानन्तरं उदाजः उदगमयः ततः पयोदध्याज्यादिकं प्रियमनुकूलं मधु मधुरं हविः अपिबः पीतवानसि यद्वा श्रयणसाधनासु तासु गोष्वाग-

तासु यजमानैः प्रियमभीष्टं मधु सोमात्मकं अपिबः पिबसि तथा वनिनः वनसंबद्धान् वृक्षान् यद्वा वनमित्युदकनाम तद्युक्तान् समुद्रान् अवर्धयः वृष्टिप्रदानेन वर्धयसि ऋतजातया ऋतं यज्ञं तदर्थं जातं जन्म यस्याः तया गिरा वेदात्मिकया वाचा स्तूयमानस्येन्द्रस्य दंससा कर्मणा आवृण्वता वृत्रादेरपि नोदनात्मकेन सूर्यः शुशोच नभसि प्रदिदीपे यद्वा ऋतजातया गिरेति सूर्यस्यैव विशेषणं त्रयीरूपया वाचा प्रदीप्यतइत्यर्थः ऋग्भिः पूर्वाह्णेदिविदेवईयते इत्यादिकं तैत्तिरीयकमन्त्रानुसंधेयं । शुशोचेत्यस्य पदात्परत्वेपि पादादित्वादपादादाविति पर्युदासस्यानुवृत्तेर्निघाताभावः ॥ २ ॥

अथ तृतीया—

विसूर्योमध्येअमुचद्रथंदिवोविदद्दासायप्रतिमानमार्यः ।
दृह्ळानिपिप्रोरसुरस्यमायिनइन्द्रोव्यास्यच्चकृवाँऋजिश्वना ॥ ३ ॥

वि । सूर्यः । मध्ये । अमुचत् । रथम् । दिवः । विदत् । दासाय । प्रतिऽमानम् । आर्यः । दृह्ळानि । पिप्रोः । असुरस्य । मायिनः । इन्द्रः । वि । आस्यत् । चकृऽवान् । ऋजिश्वना ॥ ३ ॥

दिवः द्युलोकस्य मध्ये सूर्यः आदित्यः रथं प्रस्थानाय व्यमुचत् विमुक्तवान् मुचेर्लुङि लृदित्वाच्च्लेरङादेशः । कदेतिचेदुच्यते यदा आर्यः अभिज्ञइन्द्रः दासायोपक्षपयित्रे वृत्रादये प्रतिमानं प्रतिकृतिं प्रतीकारं विदत् वेत्ति जानाति अलभत वा । अपिच मायिनः मायाविनः मायाशब्दस्य व्रीह्यादिषुपाठात् व्रीह्यादिभ्यश्चेति इनिप्रत्ययः पिप्रोः एतन्नाम्नोसुरस्य दृह्ळानि दृढानि स्थिराणि पुराणि बलानि वा ऋजिश्वना राजर्षिणा चकृवान् सख्यं कुर्वन् इन्द्रोव्यास्यत् व्यक्षिपत् विविधमाक्षिप्तवान् व्यनीनशदित्यर्थः । असुक्षेपणे ॥ ३ ॥

अथ चतुर्थी—

अनाधृष्टानिधृषितोव्यास्यन्निधीँरदेवाँअमृणदयास्यः ।
मासेवसूर्योवसुपुर्यमाददेगृणानःशत्रूँरशृणाद्विरुक्मता ॥ ४ ॥

अनाधृष्टानि । धृषितः । वि । आस्यत् । निऽधीन् । अदेवान् ।
अमृणत् । अयास्यः । मासाऽइव । सूर्यः । वसु । पुर्यम् । आ ।
ददे । गृणानः । शत्रून् । अशृणात् । विरुक्मता ॥ ४ ॥

धृषितः शत्रूणां धर्षयिता प्रगल्भइन्द्रः अनाधृष्टानि इतःपूर्वं शत्रुभिरप्रधृष्टान्यबाधितानि असुरबलानि व्यास्यन् व्याक्षिप्तवान् तथा अयास्यः अयासनीयः चालयितुमशक्यः यद्वा अयास्योंगिराः स्तोतृवाचिना शब्देन स्तुत्योलक्ष्यते अयास्येन ऋषिणा स्तुत्यइन्द्रः निधीन् असुरैर्निहितान् धनसमूहान् यद्वा निधातॄन् नितरां बलानां धारयितॄन् अदेवान् देवविरोधिनोसुरानमृणत् अहिंसीत् मृणहिंसायां तौदादिकः । अपिच सूर्योमासेव मासेनेव पद्दन्नित्यादिना मासशब्दस्य मासूभावः सयथा मासविशेषेण भौमान् रसानादत्ते तथा पुर्यं असुराणां पुरिभवं भवेछन्दसीतियत् हलिचेति दीर्घस्य नभकुर्छुरामिति प्रतिषेधः यतोनावइत्याद्युदात्तत्वं ईदृशं वसु धनं आददे आदत्ते स्म आङोदोनास्यविहरणइत्यात्मनेपदं तथा गृणानः स्तोतृभिः स्तूयमानः सन् व्यत्ययेन कर्मणि कर्तृप्रत्ययः शत्रून् शातयितॄन् असुरान् विरुक्मता विरोचमानेन वज्रेण अशृणात् अहिंसीत् ॥ ४ ॥

अथ पंचमी—

अयुद्धसेनोविभ्वाविभिन्दतादाशद्वृत्रहातुज्यानितेजते ।
इन्द्रस्यवज्रादबिभेदभिश्नथःप्राक्रामच्छुन्ध्यूरजहादुषाअनः॥५॥

अयुद्धऽसेनः । विभ्वा । विऽभिन्दता । दाशत् । वृत्रऽहा ।
तुज्यानि । तेजते । इन्द्रस्य । वज्रात् । अबिभेत् । अभिऽश्नथः ।
प्र । अक्रामत् । शुन्ध्यूः । अजहात् । उषाः । अनः ॥ ५ ॥

विभ्वा विभुना व्याप्तेन विभिन्दता विदारयता एवंविधेनापि परकीयबलेन अयुद्धसेनः अप्रहतसेनः यद्वा विभ्वा विभुर्व्याप्तः विभिन्दता शत्रुबलानि विदारयता वज्रेण वृत्रहा वृत्रंहतवान् एवंविधइन्द्रः दाशत् दाशति स्तोतृभ्योधनं प्रयच्छति दाश्रृदाने लेटयडागमः तथा तुज्यानि प्रे-

र्याणि शत्रुबलानि तेजते तनूकरोति अल्पीकरोति तिजनिशाने। यद्वा शत्रून्प्रति मेर्याण्यायुधानि तेजते निश्यति तीक्ष्णीकरोति ईदृशस्येन्द्रस्य अभिश्नथः अभितोहिंसकात् वज्रात् सर्वं शत्रुजातं अबिभेत् भीतिं प्रापोत् एवमसुरेष्विन्द्रेण निरस्तेषु शुन्ध्यूः शोधयिता आदित्यः प्राक्रामत् जगत्प्रकाशनाय गन्तुं प्रक्रान्तवान् उषाः उषोदेवता च अनः स्वकीयं शकटं रथं अजहात् गन्तुं पर्यत्यजत् ओहाक् त्यागे ॥ ५ ॥

अथ षष्ठी—

एतात्यातेश्रुत्यानिकेवलायदेकएकमकृणोरयज्ञम् ।
मासांविधानमदधाअधिद्यवित्वयाविभिन्नंभरतिप्रधिंपिता॥६॥२६॥

एता । त्या । ते । श्रुत्यानि । केवला । यत् । एकः । एकम् । अकृणोः । अयज्ञम् । मासाम् । विऽधानम् । अदधाः । अधि । द्यवि । त्वया । विऽभिन्नम् । भरति । प्रऽधिम् । पिता ॥ ६ ॥ २६ ॥

हे इन्द्र त्या तानि ते तव त्वदीयानि वीर्यकर्माणि एता एतान्येव केवला केवलानि श्रुत्यानि श्रोतव्यानि स्तुत्यर्हाणि नान्यदीयानि। कानि पुनस्तानि एकः असहायस्त्वं एकं प्रधानभूतं अयज्ञं यज्ञरहितं असुरं अकृणोः अहिंसीरिति यत् एतदेकं कर्म कृवि हिंसाकरणयोः अत्र हिंसार्थः इदित्वान्नुम् धिन्विकृण्व्योरचेत्युप्रत्ययः अकारान्तादेशश्च तस्य योगे सति स्थानिवद्भावात् लघूपधगुणाभावः। तथा मासां मासानां पद्दन्नित्यादिना मासशब्दस्य मास्भावः ऊडिदमित्यादिना विभक्तेरुदात्तत्वं मासानां विधानं विधातारं कर्तारं सूर्यं अधिद्यवि द्युलोके उपरि अदधाः अधारयः विपूर्वाद्दधातेः कृत्यल्युटोबहुलमिति कर्तरि ल्युट् इदमपरं कर्म तथा पिता पालकोद्युलोकः विभिन्नं विदारितं वृत्राद्विभक्तं प्रधिं रथचक्रस्य पार्श्वं पार्श्वफलके प्रधीइत्युच्यते ईदृशं सूर्यरथसंबन्धिनं प्रधिं अन्यैः धारयितुमशक्यं त्वयैव भरति धारयति इदमदरं कर्म एतत्प्रभृतीनि त्वयाकृतानि कर्माणि परेषामसाधारणानि सर्वदा स्तोतव्यानीत्यर्थः ॥ ६ ॥

॥ इत्यष्टमस्य सप्तमे षड्विंशोवर्गः ॥ २६ ॥

सूर्यरश्मिरिति षळृचं एकादशं सूक्तं त्रैष्टुभं विश्वावसुर्नाम गंधर्वऋषिः सच पूर्वेण तृचेन सवितारं स्तुतवान् उत्तरेण स्वात्मानं अतः प्रथमतृचस्य सविता देवता द्वितीयस्य गंधर्वः। तथाचानुक्रान्तं—सूर्यरश्मिर्देवगंधर्वोविश्वावसुरात्मानमस्तौत् पूर्वार्धे सवितारमिति। गतोविनियोगः।

तत्र प्रथमा—

सूर्यरश्मिर्हरिकेशः पुरस्तात्सविताज्योतिरुदयाँअजस्रम्।
तस्यपूषाप्रसवेयातिविद्वान्त्संपश्यन्विश्वाभुवनानिगोपाः॥ १॥

सूर्यऽरश्मिः। हरिऽकेशः। पुरस्तात्। सविता। ज्योतिः। उत्। अयान्। अजस्रम्। तस्य। पूषा। प्रऽसवे। याति। विद्वान्। सम्ऽपश्यन्। विश्वा। भुवनानि। गोपाः॥ १॥

सूर्यरश्मिः उषसः प्रादुर्भावानन्तरं सूर्यस्योदयात्पूर्वं यः कालः तस्य कालस्याभिमानीदेवः सवितेत्युच्यते सूर्यरश्मिः सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य रश्मिरेव रश्मिर्यस्य सतथोक्तः हरिकेशः हरयोहरणशीलाहरितवर्णावा केशस्थानीयाः प्रकाशमानावा दीप्तयोयस्य ईदृशः सविता सर्वस्य प्रेरकोदेवः पुरस्तात् पूर्वस्यां दिशि अजस्रं अनवरतं ज्योतिस्तेजः उदयान् उद्याति उद्गमयति यातेरन्तर्भावितण्यर्थाच्छान्दसोलङ् व्यत्ययेन बहुवचनं संहितायां दीर्घादटिमानपादइति नकारस्य रुत्वं आतोटिनित्यमिति सानुनासिकआकारः।तस्य सवितुःप्रसवे प्रेरणे अनुज्ञायां सत्यां विद्वान् जानन् गोपाः गोपायिता रक्षिता पूषा पोषकोदेवआदित्योयाति नभसि गच्छति किंकुर्वन् विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि संपश्यन् सम्यक् प्रकाशयन्॥ १॥

अथ द्वितीया—

नृचक्षाएषदिवोमध्यआस्तआपप्रिवान्रोदसीअन्तरिक्षम्।
सविश्वाचीरभिचष्टेघृताचीरन्तरापूर्वमपरञ्चकेतुम्॥ २॥

नृऽचक्षाः । एषः । दिवः । मध्ये । आस्ते । आपप्रिऽवान् ।
रोदसी इति । अन्तरिक्षम् । सः । विश्वाचीः । अभि । चष्टे ।
घृताचीः । अन्तरा । पूर्वम् । अपरम् । च । केतुम् ॥ २ ॥

नृचक्षाः नॄन् मनुष्यान् पश्यन् यद्वा नृभिः नेतृभीरश्मिभिः प्रकाशमानः एषसविता देवः द्युलोकस्य मध्ये आस्ते निषीदति किंकुर्वन् रोदसी द्यावापृथिव्यौ अन्तरिक्षं च आपप्रिवान् स्वतेजसा आपूरयन् प्रापूरणे अस्माच्छान्दसोलिट् क्वसुश्चेतितस्य क्वसुरादेशः वस्वेकाजाद्घसामितीडागमः सदेवोविश्वाचीर्विश्वमंचंतीः सर्वव्यापिनीः प्राच्यादिमहादिशोभिचष्टे प्रकाशयति तथा घृताचीर्घृतं दीप्तं रूपं अंचन्तीः आग्नेयादिविदिशश्च प्रकाशयति अंचतेः क्विन्नन्तात् अंचतेश्चोपसंख्यानमिति ङीप् ततोभसंज्ञायामचइत्याकारलोपे चाविति दीर्घत्वं उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वे प्राप्ते चाविति पूर्वस्याचउदात्तत्वं । तथा पूर्वं पूर्वभागं केतुं प्रज्ञापनीयं अपरं पृष्ठभागं च अन्तरा अन्तरालं च अभिचष्टे प्रकाशयति ॥ २ ॥

अथ तृतीया—

रायोबुध्नःसंगमनोवसूनांविश्वारूपाभिचष्टेशचीभिः ।
देवइवसवितासत्यधर्मेन्द्रोनतस्थौसमरेधनानाम् ॥ ३ ॥

रायः । बुध्नः । सम्ऽगमनः । वसूनाम् । विश्वा । रूपा । अभि ।
चष्टे । शचीभिः । देवःऽइव । सविता । सत्यऽधर्मा । इन्द्रः ।
न । तस्थौ । सम्ऽअरे । धनानाम् ॥ ३ ॥

रायोधनस्य बुध्नः बन्धकः मूलभूतोवा ऊडिदमित्यादिना रैशब्दाद्विभक्तेरुदात्तत्वं तथा वसूनां धनानां संगमनः संगमयिता प्रापयिता ईदृशः सविता शचीभिः दीप्तिभिः विश्वारूपा सर्वाणि रूपाणि निरूपणीयानि पदार्थजातानि अभिचष्टे अभिपश्यति प्रकाशयति । अपिच देवइवायंसविता सावकोदेवः सत्यधर्मा सत्यमवितथं धर्म धारणं धारणहेतुभूतं कर्म वा यस्य तादृशोभवति तथा इन्द्रो न इन्द्रइव धनानां समरे संग्रामे सम्यक् प्रापणे तस्थौ अयं सविता उद्युक्तः सन् तिष्ठति ॥ ३ ॥

अथ चतुर्थी—

विश्वावसुं सोम गन्धर्वमापो ददृशुषीस्तदृतेना व्यायन् ।
तदन्ववैदिन्द्रो रारहाण आसां परि सूर्यस्य परिधीँरपश्यत् ॥ ४ ॥

विश्वऽवसुम् । सोम । गन्धर्वम् । आपः । ददृशुषीः । तत् ।
ऋतेन । वि । आयन् । तत् । अनुऽअवैत् । इन्द्रः । ररहाणः ।
आसाम् । परि । सूर्यस्य । परिऽधीन् । अपश्यत् ॥ ४ ॥

हे सोम त्वया सहितं गंधर्वं गीतरूपं गोशब्दं धारयन्तं विश्वावसुं एतत्संज्ञं मां उत्तरत्र तच्छब्दश्रुतेर्यच्छब्दाध्याहारः यदापोवसतीवर्याख्याः ददृशुषीः दृष्टवत्यः दृशेर्लिटः क्वसुः उगितश्चेति ङीप् वसोःसंप्रसारणमिति संप्रसारणं जसि वाछन्दसीति पूर्वसवर्णदीर्घः तत्तदानीं ऋतेन यज्ञेन हेतुना व्यायन् विविधमगच्छन् यष्टृजनाः तद्गमनमासामपां ररहाणः गमयिता इन्द्रः अन्ववैत् अनुबुध्यत बुध्वा च कुत्र यज्ञः प्रवृत्तइति सूर्यस्य परिधीन् परितोधीयमानान् प्राच्यादिदिग्भागान् पर्यपश्यत् परितोदृष्टवान् ॥ ४ ॥

अथ पंचमी—

विश्वावसुरभि तन्नो गृणातु दिव्यो गन्धर्वो रजसो विमानः ।
यद्वा घा सत्यमुत यन्न विद्म धियो हिन्वानो धिय इन्नो अव्याः ॥ ५ ॥

विश्वऽवसुः । अभि । तत् । नः । गृणातु । दिव्यः । गन्धर्वः ।
रजसः । विऽमानः । यत् । वा । घ । सत्यम् । उत । यत् । न ।
विद्म । धियः । हिन्वानः । धियः । इत् । नः । अव्याः ॥ ५ ॥

विश्वावसुर्गंधर्वः नोस्माकं तदभिगृणातु अभिमुखं ब्रवीतु गॄशब्दे क्र्यादिकः प्वादित्वात् ह्रस्वः कीदृशः दिव्यः दिविभवः तथा रजसः उदकस्य विमानोनिर्माता किंपुनस्तत् यद्वाघ यच्चखलु सत्यं अवितथं यथार्थफलं कर्मजातं उतशब्दश्चार्थे यच्च नविद्म नजा-

नीमः तदुभयं ब्रवीत्वित्यर्थः ऋचितुनुघेत्यादिना घशब्दस्य सांहितिकोदीर्घः । शिष्टः पादः प्र- त्यक्षकृतः । हे विश्वावसो धियः कर्माणि हिन्वानः सोमेन प्रवर्धयन् हिगतौ वृद्धौच यद्वा धियः स्तुतीः हिन्वानः प्रामुवन् नोस्माकं धियइत् कर्माण्येव बुद्धीरेव वा अव्याः रक्ष ॥ ५ ॥

अथ षष्ठी–

सस्निमविन्दच्चरणेनदीनामपावृणोद्दुरोअश्मव्रजानाम् ।
प्रासांगन्धर्वोअमृतानिवोचदिन्द्रोदक्षंपरिजानादहीनाम् ॥ ६ ॥ २७ ॥

सस्निम् । अविन्दत् । चरणे । नदीनाम् । अप । अवृणोत् । दुरः ।
अश्मऽव्रजानाम् । प्र । आसाम् । गन्धर्वः । अमृतानि । वोचत् ।
इन्द्रः । दक्षम् । परि । जानात् । अहीनाम् ॥ ६ ॥ २७ ॥

सस्निं अद्भिः संस्नातं प्रकर्षेण सर्वस्य जगतः स्नापयितारं मेघं ष्णाशौचे आदृगमह- नइति किन्प्रत्ययः लिङ्वद्भावात् द्विर्वचनं नदीनां शब्दकारिणीनां अपां चरणे संचरणस्थाने अन्तरिक्षे अविन्दत् इन्द्रोलभत लब्ध्वाच अश्मव्रजानां अश्मा व्याप्तोमेघः तत्रव्रजन्तीनां यद्वा मेघोव्रजोगोष्ठं निवासस्थानं यासां तादृशीनां अपां दुरः द्वाराणि मेघान्निर्गमनप्रदेशान् अ- पावृणोत् अपावृतवान् यद्वा अश्मसु शिलासु व्रजन्तीनां गच्छन्तीनां व्याप्तगमनानां वा नदीनां गंगायमुनादीनां चरणे संचरणे प्रवहणे निमित्तभूते सति तदर्थमिन्द्रः सस्निं मेघं अविंदत् अलभत लब्ध्वाच अन्तर्गतानामपां निर्गमसाधनानि मेघस्य दुरः द्वाराणि अपावृणोदपवृत- वान् तथासांनदीनां अमृतान्यमरणसाधकान्युदकानि गंधर्वोगोर्व्रजस्य धर्ता विश्वावसुरूपेण वर्तमानइन्द्रः प्रावोचत् प्रब्रवीति प्रवोढुमनुजानाति तथा दक्षं दक्षत्युदकं प्रयच्छतीति दक्षोवर्ष- णसमर्थोमेघः तादृशं मेघमहीनां मेघानां मध्ये परिजानात् परितः सर्वतोजानाति ज्ञाअवबोधने लेटचडागमः ज्ञाजनोर्जेति जादेशः ॥ ६ ॥

॥ इत्यष्टमस्य षष्ठे सप्तविंशोवर्गः ॥ २७ ॥

अग्नेतवेति षळृचं द्वादशं सूक्तं पावकगुणविशिष्टोग्निर्ऋषिः शुद्धाग्निर्देवता आद्याविष्टा- रपंक्तिः अष्टकद्विर्द्वादशाष्टकवती अथ तिस्रः सतोबृहत्यः अयुजौजागताविति लक्षणोपेताः

पञ्चम्युपरिष्टाज्ज्योतिः षष्ठीत्रिष्टुप् । तथाचानुक्रान्तं—अग्नेतवाग्निः पावकआग्नेयं विष्टारपंक्तिस्तिस्रः सतोबृहत्यउपरिष्टाज्ज्योतिरिति । महाव्रते आग्निमारुतशस्त्रे इदं सूक्तं स्तोत्रियानुरूपार्थं । तथैवपंचमारण्यके सूत्रितं ।

तत्र प्रथमा—

अग्नेतवश्रवोवयोमहिभ्राजन्तेअर्चयोविभावसो ।
बृहद्भानोशवसावाजमुक्थ्यं१दधासिदाशुषेकवे ॥ १ ॥

अग्ने । तव । श्रवः । वयः । महि । भ्राजन्ते । अर्चयः ।
विभावसो इति विभाऽवसो । बृहद्भानो इति बृहत्ऽभानो ।
शवसा । वाजम् । उक्थ्यम् । दधासि । दाशुषे । कवे ॥ १ ॥

हे अग्ने तव वयोन्नं श्रवः श्रवणीयं प्रशस्यं हविरात्मकस्य तस्य मंत्रसंस्कृतत्वेन प्रशस्तत्वात् अन्नेषु मध्ये तवैवान्नं श्रेष्ठमित्यर्थः हे विभावसो विशिष्टदीप्तिर्विभा सैव वसु धनं यस्य तादृशाग्ने अर्चयः दीप्तयः महि महत् बहुलं भ्राजन्ते भ्राजृदीप्तौ अनुदात्तेत् भौवादिकः हे बृहद्भानो प्रौढदीप्ते कवे क्रान्तदर्शिन्नग्ने एवं महानुभावस्त्वं शवसा बलेनोपेतं उक्थ्यं प्रशस्यं यद्वा उक्थोयज्ञः तद्योग्यं वाजमन्नं दाशुषे हवींषि दत्तवते यजमानाय दधासि ददासिप्रयच्छसि ॥१॥

अथ द्वितीया—

पावकवर्चाःशुक्रवर्चाअनूनवर्चाउदियर्षिभानुना ।
पुत्रोमातराविचरन्नुपावसिपृणक्षिरोदसीउभे ॥ २ ॥

पावकऽवर्चाः । शुक्रऽवर्चाः । अनूनऽवर्चाः । उत् । इयर्षि ।
भानुना । पुत्रः । मातरा । विऽचरन् । उप । अवसि ।
पृणक्षि । रोदसी इति । उभे इति ॥ २ ॥

पावकवर्चाः शोधकदीप्तिः शुक्रवर्चाः निर्मलतेजस्कः अनूनवर्चाः संपूर्णतेजस्कः हे अग्ने ईदृशस्त्वं भानुना तेजसा उदियर्षि उद्गच्छसि ऋमृगतौ जौहोत्यादिकः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्त्वं । सत्वं पुत्रः सन् मातरा मातृभूते अरण्यौ विचरन् यागावसाने विशेषेण प्राप्नुवन् उपावसि उपगतान्यजमानान् रक्षसि तथा उभे रोदसी द्यावापृथिव्यौ पृणक्षि संयोजयसि हविषा द्युलोकं वृष्ट्या इमं लोकं च पूरयसीत्यर्थः पृची संपर्के रौधादिकः ॥ २ ॥

अथ तृतीया—

ऊर्जोनपाज्जातवेदःसुशस्तिभिर्मन्दस्वधीतिभिर्हितः ।
त्वेइषःसंदधुर्भूरिवर्पसश्चित्रोतयोवामजाताः ॥ ३ ॥

ऊर्जः । नपात् । जातऽवेदः । सुशस्तिऽभिः । मन्दस्व ।
धीतिऽभिः । हितः । त्वे इति । इषः । सम् । दधुः ।
भूरिऽवर्पसः । चित्रऽऊतयः । वामऽजाताः ॥ ३ ॥

हे ऊर्जोनपात् ऊर्जोन्नस्य पार्थिवस्य अरण्यादेः पुत्र हे जातवेदः जातानां वेदितरग्ने सुशस्तिभिः अस्माभिः क्रियमाणैः मन्दस्व मोदस्व तथा धीतिभिः कर्मभिः अस्माभिः क्रियमाणैः अग्निहोत्रादिभिः कर्मभिः हितः सुहितः तृप्तोभव ।अपिच भूरिवर्पसः वर्पइति रूपनाम बहुविधरूपाः चित्रोतयः चित्रा विचित्रा ऊतिः तृप्तिर्यासां तास्तथोक्ताः वामजाताः वामं वननीयं जातं जन्म यासां तादृशीः इषोन्नानि हविर्लक्षणानि त्वे त्वय्येव सन्दधुः संदधति सम्यक्जुह्वति यजमानाः । यद्वा भूरिवर्पसइत्यादिकं कर्तृविशेषणं तदानीं चित्रोतयः इत्यस्य विचित्ररक्षाइति योज्यं ॥ ३ ॥

अथ चतुर्थी—

इरज्यन्नग्नेप्रथयस्वजन्तुभिरस्मेरायोअमर्त्य ।
सदर्शतस्यवपुषोविराजसिपृणक्षिसानसिंक्रतुम् ॥ ४ ॥

इरज्यन् । अग्ने । प्रथयस्व । जन्तुऽभिः । अस्मे इति ।
रायः । अमर्त्य । सः । दर्शतस्य । वपुषः । वि ।
राजसि । पृणक्षि । सानसिम् । क्रतुम् ॥ ४ ॥

हे अग्ने जन्तुभिः जातैः शत्रुभिः सह इरज्यन् ईर्ष्यन् स्पर्धां कुर्वन् इरज् ईर्ष्यायां कंड्वादिः यद्वा इरज्यतिरैश्वर्यकर्मा जन्तुभिर्जायमानैः आत्मीयैस्तेजोभिः इरज्यन् ईश्वरोभवन् हे अमर्त्य मरणरहिताग्ने अस्मे अस्माकं सुपांसुलुगिति षष्ठ्याः शेआदेशः रायोधनानि प्रथयस्व विस्तारय रयिशब्दात् शसः स्थाने व्यत्ययेन जस् शसोवाव्यत्ययेन ऊडिदमिति विभक्त्युदात्तत्वं नक्रियते सत्वं दर्शतस्य दर्शनीयस्य वपुषः तेजोमयस्य शरीरस्य विराजसि तृतीयार्थे षष्ठीवा ईदृशेन शरीरेण विशेषेण दीप्यसे यद्वा राजतिरैश्वर्यकर्मा वपुरिति च रूपनाम दर्शनीयेन रूपेण विराजसि विशेषेण ईशिषे अतएव सानसिं संभजनीयं क्रतुं कर्म पृणक्षि अस्माभिः संपर्चयसि फलेन वा संयोजयसि ॥ ४ ॥

अथ पंचमी—

इष्कर्तारमध्वरस्यप्रचेतसंक्षयन्तंराधसोमहः ।
रातिंवामस्यसुभगांमहीमिषंदधासिसानसिंरयिम् ॥ ५ ॥

इष्कर्तारम् । अध्वरस्य । प्रऽचेतसम् । क्षयन्तम् । राधसः ।
महः । रातिम् । वामस्य । सुऽभगाम् । महीम् ।
इषम् । दधासि । सानसिम् । रयिम् ॥ ५ ॥

इष्कर्तारं निष्कर्तारं छान्दसोवर्णलोपः अध्वरस्य यज्ञस्य निष्कर्तारं संस्कर्तारं प्रचेतसं प्रकृष्टज्ञानं महोमहतोराधसोधनस्य क्षयन्तं ईश्वरं क्षयतिरैश्वर्यकर्मा वामस्य वननीयस्य धनस्य रातिं दातारं रातेः कर्तरि क्तिच् ईदृशं त्वां स्तुमइति शेषः सत्वं सुभगां सौभाग्योपेतां महीं महतीं इषमन्नं सानसिं संभक्तव्यं रयिं धनंच दधासि स्तोतृभ्योददासि ॥ ५ ॥

अथ षष्ठी—

ऋतावानंमहिषंविश्वदर्शतमग्निंसुम्नायदधिरेपुरोजनाः ।
श्रुत्कर्णंसप्रथस्तमंत्वागिरादैव्यंमानुषायुगा ॥ ६ ॥ २८ ॥

ऋतऽवानम् । महिषम् । विश्वऽदर्शतम् । अग्निम् । सुम्नाय ।
दधिरे । पुरः । जनाः । श्रुत्ऽकर्णम् । सप्रथःऽतमम् ।
त्वा । गिरा । दैव्यम् । मानुषा । युगा ॥ ६ ॥ २८ ॥

ऋतावानं सत्यवन्तं यज्ञवन्तं वा छन्दसीवनिपाविति मत्वर्थीयोवनिप् महिषं महान्तं पूज्यं वा विश्वदर्शतं विश्वैः सर्वैर्दर्शनीयं यद्वा विश्वं दर्शनं यस्य बहुव्रीहौविश्वंसंज्ञायामिति पूर्वपदान्तोदात्तत्वं ईदृशमग्निं सुम्नाय सुखार्थं जनाः ऋत्विग्यजमानरूपाः पुरोदधिरे पुरोदधते सर्वकर्मभ्यः पुरस्ताद्धारयन्ति यद्वा पुरः पुरस्तात् पूर्वस्यां दिशि आहवनीयरूपेण धारयन्ति । परोर्धर्चः प्रत्यक्षकृतः । अपिच हे अग्ने श्रुत्कर्णं श्रुत् श्रुतीः सम्यक् शृण्वन् कर्णः श्रोत्रेन्द्रियं यस्य तादृशं सप्रथस्तमं अतिशयेन प्रख्यातं यद्वा सर्वतोविस्तार्यमाणं दैव्यं देवानां हविर्वोढृत्वेन संबन्धिनं ईदृशं त्वा त्वां मानुषा मानुषाणि मनोरपत्यानि युगा युगानि युगलानि पत्नीयजमानरूपाणि गिरा स्तुत्या स्तुवन्तीति शेषः ॥ ६ ॥

॥ इत्यष्टमस्य सप्तमेष्टाविंशोवर्गः ॥ २८ ॥

अग्नइति षळृचं त्रयोदशं सूक्तं तापसगुणविशिष्टस्याग्नेरार्षं वैश्वदेवमानुष्टुभं । तथाचानुक्रान्तं—अग्नेग्निस्तापसोवैश्वदेवमानुष्टुभंहीति । गतोविनियोगः ।

तत्र प्रथमा—

अग्नेअच्छावदेहनःप्रत्यङ्नःसुमनाभव ।
प्रनोयच्छविशस्पतेधनदाअसिनस्त्वम् ॥ १ ॥

अग्ने । अच्छ । वद । इह । नः । प्रत्यङ् । नः । सुऽमनाः । भव ।
प्र । नः । यच्छ । विशः । पते । धनऽदाः । असि । नः । त्वम् ॥ १ ॥

हे अग्ने इहास्मिन्देशे नोस्मानच्छवद आभिमुख्येन प्रियं ब्रूहि तथा प्रत्यङ् अस्मान् प्रत्यंचन् सुमनाः शोभनमनस्कोभव हेविशस्पते यजमानलक्षणायाः प्रजायाः पालयितः नोस्मभ्यं प्रयच्छ धनानि प्रदेहि यतस्त्वं नोस्माकं धनदाअसि धनानां दाता भवसि ॥ १ ॥

अथ द्वितीया—

प्रनोयच्छत्वर्यमाप्रभगःप्रबृहस्पतिः ।
प्रदेवाःप्रोतसूनृतारायोदेवीददातुनः ॥ २ ॥

प्र । नः । यच्छतु । अर्यमा । प्र । भगः । प्र । बृहस्पतिः । प्र । देवाः
प्र । उत । सूनृता । रायः । देवी । ददातु । नः ॥ २ ॥

अर्यमा अरीणां नियन्ता अर्याणां निर्मातावा एतत्संज्ञोदेवः नोस्मभ्यं प्रयच्छतु धनं तथा भगएतत्संज्ञकोदेवश्च प्रयच्छतु बृहस्पतिश्च प्रयच्छतु सर्वेदेवाश्च प्रयच्छन्तु उतापिच सूनृता प्रियसत्या वाग्रूपा देवी देवनशीला सरस्वती रायोधनानि नोस्मभ्यं प्रददातु ऊडिदमित्यादिना रायोविभक्तिरुदात्ता ॥ २ ॥

अथ तृतीया—

सोमंराजानमवसेग्निंगीर्भिर्हवामहे ।
आदित्यान्विष्णुंसूर्यंब्रह्माणंचबृहस्पतिम् ॥ ३ ॥

सोमम् । राजानम् । अवसे । अग्निम् । गीःऽभिः । हवामहे ।
आदित्यान् । विष्णुम् । सूर्यम् । ब्रह्माणम् । च । बृहस्पतिम् ॥ ३ ॥

राजानं राजमानं ईश्वरं वा सोमं अग्निं च गीर्भिः स्तुतिभिः अवसे रक्षणार्थं हवामहे आह्वयामहे तथादित्यानदितेः पुत्रान् मित्रादीन् विष्णुं सूर्यं ब्रह्माणं प्रजापतिं बृहस्पतिं च रक्षणार्थमाह्वयामहे ॥ ३ ॥

अथ चतुर्थी—

इन्द्रवायूबृहस्पतिंसुहवेहहवामहे ।
यथानःसर्वइज्जनःसङ्गत्यांसुमनाअसत् ॥ ४ ॥

इन्द्रवायू इति । बृहस्पतिम् । सुऽहवा । इह । हवामहे । यथा ।
नः । सर्वः । इत् । जनः । सम्ऽगत्याम् । सुऽमनाः । असत् ॥ ४ ॥

इन्द्रश्च वायुश्च इन्द्रवायू उभयत्र वायोः प्रतिषेधोवक्तव्यइत्यानङःप्रतिषेधः नोत्तरपदेनुदात्तादाविति देवताद्वंद्वेचेति प्राप्तस्योभयपदप्रकृतिस्वरस्य निषेधः समासस्येत्यन्तोदात्तत्वं बृहस्पतिं बृहतां देवानां पालकं तद्बृहतोःकरपत्योरिति सुट्तलोपौ वनस्पत्यादित्वादुभयपदप्रकृतिस्वरत्वं सुहवा सुहवौ सुह्वानाविन्द्रवायू बृहस्पतिं च इहास्मिन्कर्मणि हवामहे आह्वयामहे यथा नोस्माकं सर्वइत् सर्वएव जनः संगत्यां संगमने धनस्य प्राप्तौ सुमनाः असत् शोभनमनस्को भवेत् तथा ह्वयामइत्यर्थः अस्तेर्लेटचडागमः ॥ ४ ॥

अथ पंचमी—

अर्यमणंबृहस्पतिमिन्द्रंदानायचोदय ।
वातंविष्णुंसरस्वतींसवितारंचवाजिनम् ॥ ५ ॥

अर्यमणम् । बृहस्पतिम् । इन्द्रम् । दानाय । चोदय । वातम् ।
विष्णुम् । सरस्वतीम् । सवितारम् । च । वाजिनम् ॥ ५ ॥

हे स्तोतः अर्यमादीन्देवान् दानाय धनप्रदानाय चोदय स्तुत्या प्रेरय तथा वातं वायुं विष्णुं सरस्वतीं वाजिनमन्नवन्तं बलवन्तं वा सवितारं च दानाय प्रेरय ॥ ५ ॥

अथ षष्ठी—

त्वंनोअग्नेअग्निभिर्ब्रह्मयज्ञंचवर्धय ।
त्वंनोदेवतातयेरायोदानायचोदय ॥ ६ ॥ २९ ॥

त्वम् । नः । अग्ने । अग्निऽभिः । ब्रह्म । यज्ञम् । च । वर्धय । त्वम् ।
नः । देवऽतांतये । रायः । दानाय । चोदय ॥ ६ ॥ २९ ॥

हे अग्ने त्वं अग्निभिः त्वद्विभूतिभूतैरन्यैः अग्निभिः सार्धं नोस्माकं ब्रह्म स्तोत्रं यज्ञं च वर्धय तथा त्वं नोस्माकं देवतातये यज्ञनामैतत् यागार्थं रायोधनस्य दानाय प्रदानाय चोदय दातॄन्प्रेरय ॥ ६ ॥

॥ इत्यष्टमस्य सप्तमे एकोनत्रिंशोवर्गः ॥ २९ ॥

अयमग्नइत्यष्टर्चं चतुर्दशं सूक्तं आग्नेयं शार्ङ्गइति पक्षिविशेषस्याख्या शार्ङ्गजातयोजरितृप्रभृतयश्चत्वारश्चतुर्णां द्वृचानां क्रमेण द्रष्टारः आदितोद्वे जगत्यौ ततश्चतस्रस्त्रिष्टुभः ततोद्वे अनुष्टुभौ । तथाचानुक्रान्तं—अयमष्टौ द्वृचाः शार्ङ्गाजरिता द्रोणः सारिसृक्कः स्तंबमित्रश्चाग्नेयमाद्येजगत्यौ चतस्रस्त्रिष्टुभः ।

तत्र प्रथमा—

अयमग्नेजरितात्वेअभूदपिसहसःसूनोनह्यन्यदस्त्याप्यम् ।
भद्रंहिशर्मत्रिवरूथमस्तितआरेहिंसानामपदिद्युमाकृधि ॥ १ ॥

अयम् । अग्ने । जरिता । त्वे इति । अभूत् । अपि । सहसः ।
सूनो इति । नहि । अन्यत् । अस्ति । आप्यम् । भद्रम् । हि । शर्म ।
त्रिऽवरूथम् । अस्ति । ते । आरे । हिंसानाम् । अप ।
दिद्युम् । आ । कृधि ॥ १ ॥

हे अग्ने त्वे त्वयि सुपां सुलुगितिसप्तम्याः शे आदेशः अयमृषिः जरिता स्तोता अभूदपि अपिशब्दः संभावनायां इदानीं स्तोतृत्वेन संभाव्यते । तत्रकारणमाह हे सहसःसूनो बलस्य पुत्र त्वत्तोन्यत् आप्यं आप्तव्यं नह्यस्ति नखलु विद्यते अतः प्राप्तव्यं त्वामेव स्तुत्या प्राप्नोमि भद्रं कल्याणं त्रिवरूथं दुःखत्रयस्य निवारकं शर्म सुखंहि यस्मात् ते तवास्ति विद्यते अथवा शोभनंत्रिवरूथं त्रिभूमिकं गृहं तवास्ति हि अतः हिंसानां हिंस्यमानानां अस्माकं आरे दूरे

दिद्युं दीप्यमानामात्मीयां ज्वालां अपाक्तधि अपाकुरु निवारय करोतेश्छान्दसोविकरणस्य लुक् श्रुशृणुपृकृवृभ्यइति हेर्धिभावः ॥ १ ॥

अथ द्वितीया—

प्रवत्तेअग्नेजनिमापितूयतःसाचीवविश्वाभुवनान्यृंजसे ।
प्रसप्तयःप्रसनिषन्तनोधियःपुरश्चरन्तिपशुपाइवत्मना ॥ २ ॥

प्रऽवत् । ते । अग्ने । जनिम । पितुऽयतः । साचीऽइव । विश्वा । भुवना । नि । ऋञ्जसे । प्र । सप्तयः । प्र । सनिषन्त । नः । धियः । पुरः । चरन्ति । पशुपाःऽइव । त्मना ॥ २ ॥

हे अग्ने पितूयतः पितुमन्नं भक्ष्यं इच्छतः ते तव जनिम जन्म प्रादुर्भावं प्रवत् प्रकृष्टमुत्कृष्टं भवति उपसर्गाच्छन्दसिधात्वर्थइति वतिः। सत्वं साचीव सचिवइव विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि न्यृंजसे प्रसाधयसि वशीकरोषीत्यर्थः। सप्तयः सर्पणशीलाः नोस्माकं धियः स्तुतयः तादृशं त्वां प्रसनिषन्त प्रकर्षेण संभजन्ते एकः प्रशब्दः पूरकः। यद्वा सप्तयः लुप्तोपममेतत् सर्पणशीलाः अश्वाः यथा आजिं प्रकर्षेण संभजन्ते तथा अस्मदीयाधियइत्यर्थः अनन्तरं पुरः तव पुरस्तात् त्मना आत्मना स्वयमेव चरन्ति व्याप्य वर्तन्ते पशुपाइव यथा पशूनां पालकागोपालाः पालयितव्यानां पुरस्तात् संचरन्ति तद्वत् ॥ २ ॥

अथ तृतीया—

उतवाउपरिवृणक्षिबप्सद्बहोरग्नउलपस्यस्वधावः ।
उतखिल्याउर्वराणांभवन्तिमातेहेतिंतविषींचुक्रुधाम ॥ ३ ॥

उत । वै । ऊँ इति । परि । वृणक्षि । बप्सत् । बहोः । अग्ने । उलपस्य । स्वधाऽवः । उत । खिल्याः । उर्वराणाम् । भवन्ति । मा । ते । हेतिम् । तविषीम् । चुक्रुधाम ॥ ३ ॥

हे स्वधावः दीप्तिमन् अग्ने बप्सद्दहन् भसभर्त्सनदीप्त्योः जौहोत्यादिकः शतरि घसिभसोर्हलिचेत्युपधालोपः नाभ्यस्ताच्छतुरिति नुमःप्रतिषेधः बहोर्बहुलस्य उलपस्य तृणजातस्य कर्मणिषष्ठी सर्वं वनं उतवै अपिखलु परिवृणक्षि परिवर्जयसि विनाशयसि । उ इतिपूरकः । उतापिच उर्वराणां सस्याढ्याभूमयउर्वराः तासां संबन्धिनः प्रदेशाः खिल्याः खिलाः प्राणिभिर्गन्तुं योग्याभवन्ति त्वया दग्धाइति शेषः तविषीं महतीं ते तव हेतिं हननहेतुभूतां ज्वालां माचुक्रुधाम माक्रोधयाम अपितु स्तुतिभिः प्रसादयामः ऊतियूतीत्यादिना हन्तेः क्तिनि हेतिरित्यन्तोदात्तोनिपात्यते चुक्रुधामेति क्रुधेर्ण्यन्ताल्लुङि चङि रूपं ॥ ३ ॥

अथ चतुर्थी—

यदुद्वतोनिवतोयासिबप्सत्पृथगेषिप्रगर्धिनीवसेना ।
यदातेवातोअनुवातिशोचिर्वप्तेवश्मश्रुवपसिप्रभूम ॥ ४ ॥

यत् । उत्ऽवतः । निऽवतः । यासि । बप्सत् । पृथक् । एषि ।
प्रगर्धिनीऽइव । सेना । यदा । ते । वातः । अनुऽवाति । शोचिः ।
वप्ताऽइव । श्मश्रु । वपसि । प्र । भूम ॥ ४ ॥

यत् यदा उद्वतः उद्गतानुच्छ्रितान् निवतः नीचीनांस्तरुगुल्मादीन् हे अग्ने बप्सत् दहन् यासि प्राप्नोषि तदानीं बह्वीभिर्ज्वालाभिः पृथक् विभिन्नः सन् एषि गच्छसि । तत्रदृष्टान्तः— प्रगर्धिनीवसेना गृधु अभिकांक्षायां परराष्ट्रं गच्छतोराज्ञः सेना तत्रत्यं धनजातं अभिकांक्षमाणा इतस्ततः संघशोगच्छति तद्वत् वातः वायुश्च ते तव शोचिः दीप्तिं यदा यस्मिन्काले अनुवाति अनुगुणं प्रवर्तते तदा श्मश्रु श्म शरीरं तत्रश्रितं स्थितं केशरोमादिकं वप्तेव यथा वप्ता नापितः वपति मुंडयति तथा भूम भूमिं प्रवपसि प्रकर्षेण मुंडयसि सर्वं वनं निःशेषेण दहसीत्यर्थः ॥ ४ ॥

अथ पंचमी—

प्रत्यस्यश्रेणयोददृश्रएकंनियानंबहवोरथासः ।
बाहूयदग्नेअनुमर्मृजानोन्यङ्ङुत्तानामन्वेषिभूमिम् ॥ ५ ॥

प्रति॑ । अ॒स्य॒ । श्रेण॑यः । द॒दृ॒श्रे॒ । एक॑म् । नि॒ऽयान॑म् । ब॒हवः॑ । रथा॑सः । बा॒हू इति॑ । यत् । अ॒ग्ने॒ । अ॒नु॒ऽमर्मृ॑जानः । न्य॑ङ् । उ॒त्ता॒नाम् । अ॒नु॒ऽएषि॑ । भूमि॑म् ॥ ५ ॥

अस्याग्नेः दहतः श्रेणयः ज्वालापंक्तयः प्रतिददृश्रे प्रतिदृश्यन्ते तद्वत् अत्र सामर्थ्याद् उपमानप्रतीतिः हे अग्ने बाहू तृतीयार्थे प्रथमा बाहुभ्यां बाहुस्थानीयैः ज्वालासमूहै रनुमर्मृ-जानः सर्वं वनं मृजन् शोधयन् दहन्नित्यर्थः न्यङ् न्यंचन् प्रह्वीभवन् उत्तानां ऊर्ध्वाभिमुखां भूमिं यद्यदा अन्वेषि अनुगच्छसि तदानीं अस्य श्रेणयोददृश्रइत्यन्वयः ॥ ५ ॥

अथ षष्ठी—

उत्ते॒शुष्मा॑जिहता॒मुत्ते॑अ॒र्चिरुत्ते॑अग्नेशशमा॒नस्य॒वाजा॑ः । उच्छ्व॑ञ्चस्व॒निनं॑म॒वर्ध॑मान॒आत्वा॒द्यविश्वे॒वस॑वःसदन्तु ॥ ६ ॥

उत् । ते॒ । शुष्मा॑ः । जि॒ह॒ता॒म् । उत् । ते॒ । अ॒र्चिः । उत् । ते॒ । अ॒ग्ने॒ । श॒श॒मा॒नस्य॑ । वाजा॑ः । उत् । श्व॒ञ्च॒स्व॒ । नि । न॒म॒ । वर्ध॑मानः । आ । त्वा॒ । अ॒द्य । विश्वे॑ । वस॑वः । स॒द॒न्तु॒ ॥ ६ ॥

हे अग्ने ते तव शुष्माः शोषकाज्वालाउज्जिहतां उद्गच्छन्तु तथा ते तव आर्चिः दीप्तिश्चो-द्गच्छतु शशमानस्य शंसमानस्य स्तूयमानस्य यद्वा शशप्लुतगतौ अस्माताच्छीलिकश्चानश् त-स्य सार्वधातुकत्वेसति लसार्वधातुकत्वाभावात् चितइत्यन्तोदात्तत्वमेव शिष्यते शशमानस्य स-र्वं वनमाक्रम्य शीघ्रं गच्छतस्तव वाजाः वेगाः हे अग्ने उज्जिहतां सत्वं वर्धमानः सन् उच्छ्वंचस्व वनउद्गच्छस्व श्वचिगतौ भौवादिकः इदित्वान्नुम् तथा निनम प्रह्वीभव उन्नतं वृक्षादिकं प्राप्योच्छ्रितोभव अवनतं गुल्मादिकं प्राप्यावनतोभवेत्यर्थः। ईदृशं त्वा त्वां अद्यास्मिनन्काले विश्वे सर्वे वसवः वासयितारोरश्मयोदेवावा आसदन्तु आसीदन्तु प्राप्नुवन्तु सदेर्व्यत्ययेन सी-दादेशाभावः शपिप्राप्ते व्यत्ययेन अद्भ्वा कर्तव्यः ॥ ६ ॥

अथ सप्तमी—

अपामिदंन्ययनंसमुद्रस्यंनिवेशनम् ।
अन्यंकृणुष्वेतःपन्थांतेनयाहिवशाँअनु ॥ ७ ॥

अपाम् । इदम् । निऽअयनम् । समुद्रस्य । निऽवेशनम् । अन्यम् ।
कृणुष्व । इतः । पन्थाम् । तेन । याहि । वशान् । अनु ॥ ७ ॥

इत्थं खांडववनस्य दाहे प्रवृत्तमग्निं जरितृप्रभृतयः स्वात्मनोरक्षणकामाः तुष्टुवुः इदानीं च स्तंबमित्रः स्वनिवासभूमेर्दहनाभावाय अग्नेरन्यत्र गमनं प्रार्थयते इदमस्मदीयं निवासस्थानं अपामुदकानां न्ययनं नियन्ति नितरां गच्छन्ति अस्मिन्निति न्ययनं ह्रदः तथा समुद्रस्य उदधेश्च निवेशनं गृहं यथा ह्रदः समुद्रस्य स्थानं च यथा दग्धुं न शक्यते तथा दाहयोग्यं न भवत्वित्यर्थः । इतोस्मादस्मदीयात् स्थानात् अन्यं पंथां पथानं मार्गं हे अग्ने कृणुष्व कुरुष्व तेन पथा वशान् अनु यथाकामं याहिगच्छ ॥ ७ ॥

अथाष्टमी—

आयंनेतेपरायणेदूर्वारोहन्तुपुष्पिणीः ।
ह्रदाश्चंपुण्डरीकाणिसमुद्रस्यंगृहाइमे ॥ ८ ॥ ३० ॥

आऽअयने । ते । पराऽअयने । दूर्वाः । रोहन्तु । पुष्पिणीः ।
ह्रदाः । च । पुण्डरीकाणि । समुद्रस्य । गृहाः । इमे ॥ ८ ॥ ३० ॥

अनयापि स्वनिवासस्य दाहानर्हता प्रतिपाद्यते हे अग्ने ते तव आयने आगमने परायणे परागमने वा सति अस्यां निवासभूमौ पुष्पिणीः पुष्पवत्यः दूर्वारोहन्तु प्ररोहन्तु तथा ह्रदाः अशोष्योदकाः जलाशयाश्च भवन्तु पुंडरीकाणि पद्मानि च तेषु ह्रदेषु जायन्तां किंबहुना समुद्रस्य जलधेः इमे अस्मिन्निवासप्रदेशेगृहाः आश्रयभूताभवन्तु यथा समुद्रावासभूमिः कदाचिदपि न दह्यते एवं कदाचिदपि अस्मत्स्थानं न दह्यतामित्यर्थः एतदुक्तं भवति दूर्वाकांड

प्ररोहणप्रार्थनेन स्वाश्रयस्य शीतलत्वं ह्रदप्रार्थनेन तृष्णोपशमनकारणस्य जलस्य सत्वं पुंडरीकसद्भावप्रार्थनेनोपभोग्यस्य फलादेः सत्ता समुद्रगृहत्वप्रार्थनेन दाहानर्हताचेत्येतत्सर्वं प्रतिपाद्यते इति ॥ ८ ॥

॥ इत्यष्टमस्य सप्तमे त्रिंशोवर्गः ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये अष्टमाष्टके सप्तमोध्यायः ॥ ७॥



## ॥ श्रीगणेशाय नमः ॥



यस्य निःश्वसितं वेदायोवेदेभ्योखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

दशमे मण्डले एकादशेनुवाके चतुर्दशसूक्तानि व्याकृतानि त्यंचिदिति षळृचं पंचदशं सूक्तं संख्यपुत्रस्यात्रेरार्षं आनुष्टुभं अश्विदेवताकं। तथाचानुक्रान्तम्—त्यंषट्सांख्योत्रिराश्विनमिति। प्रातरनुवाकाश्विनशस्त्रयोरानुष्टुभे छन्दसीदं सूक्तं। सूत्र्यतेहि—आनोविश्वाभिस्त्यंचिदत्रिमित्यानुष्टुभमिति।

तत्र प्रथमा—

ॐम् त्यंचिदत्रिमृतजुरमर्थमश्वंनयातवे।
कक्षीवन्तंयदीपुनारथंनकृणुथोनवम् ॥ १ ॥

त्यम्। चित्। अत्रिम्। ऋतऽजुरम्। अर्थम्। अश्वम्। न।
यातवे। कक्षीवन्तम्। यदि। पुनरिति। रथम्। न।
कृणुथः। नवम् ॥ १ ॥

हे अश्विनौ शतद्वारे पीडायंत्रगृहे असुरैः प्रक्षिप्तोबद्धांगोयोत्रिरस्ति त्यंचित् तमप्यत्रिं ऋतजुरं ऋतं यज्ञः स्तोत्रं वा तेन जीर्यन्तं सर्वदा युवयोः परिचरणशीलमित्यर्थः जीर्यतेः क्विपि बहुलंछन्दसीति उत्वं यद्वा ऋतेन प्राप्तेनासुरकृतोपद्रवेण ज्वरितं रुग्णं ज्वररोगे ज्वरत्वरेत्यादिना वकारस्योपधायाश्च स्थाने ऊठ् जूरी हिंसागत्योरित्यस्माद्वा क्विप् अनयोः पक्षयोश्छान्दसोह्रस्वः। ईदृशं तमत्रिं अर्थं अर्थनीयं प्राप्तव्यं यातवे गन्तुं युवां कृतवन्तौ। तत्र दृष्टान्तः—अश्वं न यथा अश्वः बन्धाद्विमुक्तः सन् शीघ्रं गच्छति। एवमयं अपि युवयोः प्रसादात् असुरकृतादुपद्रवजातात् विमुच्यमानोयथास्थानमगच्छदित्यर्थः। यामापणइत्यस्मात्तुमर्थेसेसेनिति तवेन्प्रत्ययः यदि अपिचेत्यर्थः कक्षीवन्तं कक्ष्यारज्जुरश्वस्य तद्वन्तं आसंदीव-

दष्ठीवदित्यादौ निपातनात् संप्रसारणं। दीर्घतमसः पुत्रं उशिक्प्रसूतमृषिं मन्दबुद्धिं सन्तं युवां पुनर्नवं पुनरभिनवमङ्गं कृणुथः अकृणुतं अकुरुतं। रथं न यथा कश्चित् शिल्पी जीर्णं रथं पुनरभिनवं करोति तद्वत्। कृविहिंसाकरणयोश्च इदित्वान्नुम् लङर्थे व्यत्ययेनलट् धिन्विकृण्व्योरचेत्युप्रत्ययः तत्संनियोगेन अकारान्तादेशश्च तस्यातोलोपे सति स्थानिवद्भावाल्लघूपधगुणाभावः सतिशिष्टोपि विकरणस्वरोलसार्वधातुकस्वरं न बाधते इतिवचनात् तिङएव स्वरः शिष्यते निपातैर्यद्यदिहन्तेति निघातप्रतिषेधः ॥ १ ॥

अथ द्वितीया—

त्यंचि॒दश्वं॒नवा॒जिनं॑मरे॒णवो॒यमत्नं॑त।
दृ॒ळ्हंग्र॒न्थिंनवि॑ष्यत॒मत्रिं॒यवि॑ष्ठ॒मारजः॑ ॥ २ ॥

त्यम्। चि॒त्। अश्वं॑म्। न। वा॒जिनं॑म्। अ॒रे॒णवः॑। यम्।
अत्नं॑त। दृ॒ळ्हम्। ग्र॒न्थिम्। न। वि। स्य॒त॒म्। अत्रि॑म्।
यवि॑ष्ठम्। आ। रजः॑ ॥ २ ॥

अरेणवोहिंस्यमानाः प्रबलाअसुराः वाजिनं वेगवन्तं अश्वं न अश्वमिव यमत्रिं अत्नत अतन्वत बद्धमकुर्वत तनोतेर्लुङि तनिपत्योश्छन्दसीत्युपधालोपः त्यंचित् तंचात्रिं यविष्ठं युवतमं स्तुतेर्मिश्रयितृतमं वा रजः रजन्त्यस्मिन् जनाः इति रजोभूलोकः रजः इमं लोकं आ अभि हे अश्विनौ विष्यतं व्यमुंचतं दृढं स्थिरतरं ग्रंथिंन ग्रंथिमिव यथा कश्चित् तादृशं ग्रंथिं अयत्नेन विमुंचति तथा युवां तमृषिं असुरकृताद्बंधनात् मोचितवन्तौ इत्यर्थः। स्यतमिति षोन्तकर्मणीत्यस्माल्लङि श्यनि ओतःश्यनीत्योकारलोपे रूपं छान्दसोडभावः। यद्वा अत्रिं मां बंधनाद्विष्यतं विमुंचतमिति ऋषिरसुरैर्बद्धः सन्नश्विनौ प्रार्थयते ॥ २ ॥

अथ तृतीया—

नरा॒दंसि॑ष्ठा॒वत्र॑ये॒शुभ्रा॒सिषा॑सतं॒धियः॑।
अथा॒हिवां॑दि॒वोन॑रा॒पुनः॒स्तोमो॒नवि॒शसे॑ ॥ ३ ॥

नरा । दंसिष्ठौ । अत्रये । शुभ्रा । सिसासतम् । धियः ।
अथ । हि । वाम् । दिवः । नरा । पुनरिति । स्तोमः ।
न । विऽशसे ॥ ३ ॥

हे नरा नरौ नेतारौ हे दंसिष्ठौ दर्शनीयतमौ शुभ्रा शोभमानौ ईदृशौ हे अश्विनौ अत्रये ऋषये मह्यं धियः कर्माणि बुद्धीर्वा सिषासतं दातुमिच्छतं । षणु दाने । यद्वा अत्रयइति षष्ठ्यर्थे चतुर्थी अत्रेर्मम धियः स्तुतीः कर्माणि वा सिषासतं संभक्तुमिच्छतं सेवेथामित्यर्थः । वनषण संभक्तौ अस्मात्सनतेः सनोतेर्वा सनि सनीवंतर्धेति विकल्पनादिडभावे जनसनखनामित्यात्वं शुभ्रेत्यस्यामंत्रितस्य आमंत्रितंपूर्वमविद्यमानवदित्यविद्यमानवत्वेन पदादपरत्वेन पादादित्वात् तिङ्ङतिङइति निघाताभावः अदुपदेशाल्लसार्वधातुकानुदात्तत्वे सनोनित्वादाद्युदात्तत्वं । तथाहि अनंतरमेव दिवः दीव्यतीति स्तौतीति द्यौः स्तोता तस्य मम स्तोमोन नशब्दश्चार्थे स्तोत्रं च हे नरा नेतारावश्विनौ वां युवां पुनर्विशसे पुनरेव अद्यापि विशेषेण शंसितुं प्रभवतीति शेषः ॥ ३ ॥

अथ चतुर्थी—

चितेतद्वांसुराधसारातिःसुमतिरश्विना ।
आयन्नःसदनेपृथौसमनेपर्षथोनरा ॥ ४ ॥

चिते । तत् । वाम् । सुऽराधसा । रातिः । सुऽमतिः । अश्विना ।
आ । यत् । नः । सदने । पृथौ । समने । पर्षथः । नरा ॥ ४ ॥

हे सुराधसा शोभनदानौ अश्विना हे अश्विनौ सुमतिः शोभना स्तुतिः अस्मदीया रातिः हविर्दानं च तत्तस्मात्कारणात् वां युवयोः चिते ज्ञानाय भवति । चिती संज्ञाने अस्मात्संपदादिलक्षणोभावे क्विप् सावेकाचइति विभक्तेरुदात्तत्वं यद्यस्मात्कारणात्सदने यज्ञगृहे पृथौ विस्तीर्णे समने यज्ञे नोस्मान् हे नरा नेतारौ आपर्षथः आपूरयथः अभितोरक्षथोवा तस्माद्युवामस्मदीयं परिचरणं ज्ञातवन्ताविति अनुमीमहे । पृपालनपूरणयोरित्यस्माल्लेटि सिब्बहुलमिति सिप् ततः शप् ॥ ४ ॥

अथ पंचमी—

युवंभुज्युंसमुद्रआरजसःपारईङ्खितम्।
यातमच्छापतत्रिभिर्नासत्यासातयेकृतम्॥ ५ ॥

युवम्। भुज्युम्। समुद्रे। आ। रजसः। पारे। ईङ्खितम्। यातम्।
अच्छ। पतत्रिऽभिः। नासत्या। सातये। कृतम्॥ ५ ॥

हे अश्विनौ युवं युवां समुद्रे उदधौ निमग्नं रजसः उदकस्य पारे प्रान्ते तरंगसमूहे ईंखितं डोलायितं एवंभूतं भुज्युं तुग्रपुत्रं अच्छाभि पतत्रिभिः पक्षोपेतैः नौविशेषैः सह आयातं आगतवन्तौ स्थः आगत्य च हे नासत्या सत्यस्य नेतारौ सत्यस्वभावौ वा हे अश्विनौ सातये युवयोः संभजनाय समर्थं कृतं पुनर्युवानं कुरुतं करोतेर्लङि छान्दसोविकरणस्य लुक् अडभावश्च॥ ५ ॥

अथ षष्ठी—

आवांसुम्नैःशंयूइवमंहिष्ठाविश्ववेदसा।
समस्मेभूषतंनरोत्संनपिप्युषीरिषः॥ ६ ॥ १ ॥

आ। वाम्। सुम्नैः। शंयूइवेति शंयूऽइव। मंहिष्ठा। विश्वऽवेदसा।
सम्। अस्मे इति। भूषतम्। नरा। उत्सम्। न।
पिप्युषीः। इषः॥ ६ ॥ १ ॥

हे विश्ववेदसा सर्वज्ञौ सर्वधनौ वा हे नरा नेतारौ वां युवां शंयू इव सुखयुक्तौ राजानाविव मंहिष्ठा दातृतमौ अतिशयेन पूज्यौ वा सन्तौ सुम्नैरस्मभ्यं दातव्यैः सुखैः सार्धं आ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः आगच्छतं यद्वा उपसर्गस्य भूषतमित्यनेन संबन्धः मंहिष्ठेत्यपि संबोधनं हे मंहिष्ठा दातृतमौ उक्तगुणावश्विनौ वां युवां सुम्नैः सार्धं शंयू इव अस्मे अस्मान् सम्यक् आभूषतं अभिप्राप्नुतं। भूप्राप्तौ अस्मात् लोटि व्यत्ययेन सिप्शपौ भूषअलंकारे आसमन्तात्सम्यक्भूषतं अलंकुरुतं। पिप्युषीः प्रवृद्धानि इषः इष्यमाणानि पयांसि उत्सं न गोरूधइव यथा बहुभिः पयोभिः ऊधोलंकृतं सत् दृश्यते अस्मानपि एवंबहुभिर्धनैरलं-

कुरुतमित्यर्थः। पिप्युषीरिति प्यायतेर्लिटः क्वसुः लिड्यङोश्चेति पीभावः जसि वाछन्दसीति पूर्वसवर्णदीर्घः। यद्वा उत्सः प्रवाहो यथा पिप्युषीः वृद्धानि इषोन्नानि अलंकरोति तद्वत्॥ ६॥

॥ इत्यष्टमस्याष्टमे प्रथमोवर्गः॥ १॥

अयंहीति षळृचं षोडशं सूक्तं तार्क्ष्यपुत्रस्य सुपर्णस्यार्षं यमगोत्रस्य ऊर्ध्वकृशनस्य वा आद्यागायत्री द्वितीया बृहती तृतीयाचतुर्थ्यौ गायत्र्यौ पंचमी सतोबृहती षष्ठी विष्टारपंक्तिः अष्टकद्विद्वादशकवती अनादेशपरिभाषया इंद्रोदेवता। तथाचानुक्रान्तं—अयंहितार्क्ष्यपुत्रः सुपर्णोयामायनो वोर्ध्वकृशनोगायत्री बृहतीगायत्र्यौ सतोबृहती विष्टारपंक्तिरिति। गतोविनियोगः।

तत्र प्रथमा—

अयंहितेअमर्त्यइन्दुरत्योनपत्यते। दक्षोविश्वायुर्वेधसे॥ १॥

अयम्। हि। ते। अमर्त्यः। इन्दुः। अत्यः। न।
पत्यते। दक्षः। विश्वऽआयुः। वेधसे॥ १॥

हे इंद्र वेधसे विधात्रे ते तुभ्यं त्वदर्थं अमर्त्योमरणरहितः अमृतत्वप्रापकः अयंहि अयंखलु इन्दुः सोमः अत्योनसततगामी अश्वइव पत्यते गच्छति यद्वा पत्यतिरैश्वर्यकर्मा तव स्वभूतोयं सोमः वेधसे विधानाय मदस्यकरणाय ईष्टे। कीदृशइन्दुः दक्षः प्रवृद्धः बलहेतुर्वा विश्वायुः विश्वैः सर्वैरेतव्यः प्राप्तव्यः यद्वा विश्वेषामायुर्जीवनहेतुः अथवा आयुरित्यन्ननाम सर्वैः चरुपुरोडाशादिभिरन्नैः हविर्भिरुपेतः॥ १॥

अथ द्वितीया—

अयमस्मासुकाव्यऋभुर्वज्रोदास्वते।
अयंबिभर्त्यूर्ध्वकृशनंमदमृभुर्नकृत्व्यंमदम्॥ २॥

अयम्। अस्मासु। काव्यः। ऋभुः। वज्रः। दास्वते। अयम्।
बिभर्ति। ऊर्ध्वऽकृशनम्। मदम्। ऋभुः। न। कृत्व्यम्। मदम्॥२॥

अस्मासु स्तोतृषु काव्यः स्तुत्योयमिन्द्रः ऋभुर्दीप्तः सन् दास्वते दानयुक्ताय यजमानाय वज्रः शत्रूणां वर्जकोभवति यद्वा दास्वतइति षष्ठ्यर्थे चतुर्थी अस्मासु दास्वते दानवते इन्द्रस्य वज्रः कुलिशः ऋभुः उरुभासमानोभवति अपिचायं ऊर्ध्वंकृशनं उद्गततैक्ष्ण्यं एतत्संज्ञं वा यामायनमृषिं मदं स्तोतारं बिभर्ति पोषयति तथा ऋभुर्न सौधन्वनः पुत्राणामाद्यऋभुः सइव कृत्व्यं कर्मणां कर्तारं अतएव मदं मोदयितारं यजमानं चबिभर्ति ॥ २ ॥

अथ तृतीया—

घृषुः॑श्ये॒नाय॒कृत्व॑नआ॒सुस्वासु॒वंस॑गः । अव॑दीधेदही॒शुवः॑ ॥ ३ ॥

घृषुः॑ । श्ये॒नाय॑ । कृत्व॑ने । आ॒सु । स्वासु॑ । वंस॑गः । अव॑ । दी॒धे॒त् । अ॒ही॒शुवः॑ ॥ ३ ॥

घृषुः घर्षयिता दीप्तोवा स्वासु स्वकीयासु यजमानलक्षणासु प्रजासु वंसगः वननीयगतिः एवंभूतइन्द्रः कृत्वने कर्मणां कर्त्रे करोतेरन्येभ्योपिदृश्यतेइति क्वनिप् श्येनाय सुपर्णाय तार्क्ष्यपुत्राय मह्यमृषये अहीशुवः अहीनव्यापनान् अहीनवृद्धिंवा अस्मदीयान्पुत्रादीन् अवदीधेत् अवदीपयतु दीधीङ्दीप्तिदेवनयोः अस्माच्छान्दसेलिङि व्यत्ययेन परस्मैपदं यद्वा हे इन्द्र त्वदीयः सोमः घृष्ट्यादिगुणयुक्तःसन् दीप्यतइति योज्यम् ॥ ३ ॥

अथ चतुर्थी—

यं सु॒प॒र्णः प॑रा॒वतः॑ श्ये॒नस्य॑ पु॒त्र आभ॑रत् । श॒तच॑क्रं॒ यो॒ऽह्यो॑ वर्त॒निः ॥ ४ ॥

यम् । सु॒ऽप॒र्णः । प॒रा॒ऽवतः॑ । श्ये॒नस्य॑ । पु॒त्रः । आ । अभ॑रत् । श॒त॒ऽच॑क्रम् । यः । अ॒ह्यः॑ । व॒र्त॒निः ॥ ४ ॥

श्येनस्य तार्क्ष्यस्य पुत्रस्तनयः सुपर्णोयं सोमं परावतः परागतात् दूरात् द्युलोकात् आभरत् आहरत् । कीदृशं शतचक्रं शतमिति बहुनाम बहुधनस्य कर्तारं मूलविभुजादित्वात्कप्रत्ययः यद्वा शतकरणसाधनं बहुयागनिष्पादनमित्यर्थः घञर्थे कविधानमिति कप्रत्ययः कृञादीनां कइति द्विर्वचनं यः सोमः अह्यः अहेर्वृत्रस्य वर्तनिः वर्तयिता प्रेरयिता यद्वा अहगतौ अह्यः गंतव्यः वर्तनिर्मार्गभूतः एनावयइति वक्ष्यमाणेनैकवाक्यता ॥ ४ ॥

अथ पंचमी–

यंतेंश्येनश्चारुंमवृकंपदाभंरदरुणंमानमन्धंसः ।
एनावयोवितार्यायुंर्जीवसंएनाजांगारबन्धुतां ॥ ५ ॥

यम् । ते । श्येनः । चारुंम् । अवृकम् । पदा । आ । अभंरत् ।
अरुणम् । मानम् । अन्धंसः । एना । वयंः । वि । तारि ।
आयुंः । जीवसें । एना । जागार । बन्धुतां ॥ ५ ॥

हेइन्द्र तेतुभ्यं त्वदर्थं श्येनः सुपर्णः पक्षिराट् यं सोमं पदा वचनव्यत्ययः पद्भ्यां आभरत् द्युलोकादाहरत् । दिवं सुपर्णोगत्वायसोमं वज्रिण आभरदिति निगमान्तरं । कीदृशं चारुं शोभनं अवृकं बाधकरहितं अरुणमारोचमानं अरुणवर्णंवा अंधसोन्नस्य मानं यागद्वारानिर्मातारं एना एतेन अनेन सोमेन तुभ्यं दीयमानेन वयोन्नं जीवसे जीवनाय आयुर्जीवितंच वितारि मादायि तथा एना एतेनैव सोमेन बन्धुता बंधुसमूहोजागार जजागार जाग्रत् प्रबुद्धः सन् वर्तते जागर्तेर्लिटि छन्दसिवेति वक्तव्यमिति द्विर्वचनाभावः ॥ ५ ॥

अथ षष्ठी–

एवातदिन्द्रइन्दुंनादेवेषुंचिद्धारयातेमहित्यजः ।
क्रत्वावयोवितार्यायुंःसुक्रतोक्रत्वायमस्मदासुतः ॥ ६ ॥ २ ॥

एव । तत् । इन्द्रंः । इन्दुंना । देवेषुं । चित् । धारयाते । महिं । त्यजंः ।
क्रत्वां । वयंः । वि । तारि । आयुंः । सुक्रतो इतिं सुऽक्रतो ।
क्रत्वां । अयम् । अस्मत् । आ । सुतः ॥ ६ ॥ २ ॥

एव एवमनेन प्रकारेण तत् तेनेंदुना सोमेन तृप्यन् इन्द्रः देवेषु चित् देवेषु अस्मासुच महि महत् त्यजः तेजः दुःखस्य वर्जयितृ रक्षकंवा धारयाते धारयति । शिष्टः प्रत्यक्षकृतः हे सुक्रतो शोभनकर्मन्निन्द्र क्रत्वा क्रतुना अस्माभिरनुष्ठितेन कर्मणा प्रीतेन त्वया वयोन्नं आयु-

---

१ ऋ० सं० ६. ७. ४ ।

जीवनं च वितारि अस्मभ्यं प्रादायि योयमिन्दुःक्रत्वा कर्मणा प्रज्ञानेन वा अस्मत् अस्माभिः आसुतः अभिषुतः यद्वा अस्मत् अस्मत्तः त्वदाभिमुख्येन सुतः प्रेरितः तेनेन्दुनेत्यन्वयः ॥ ६ ॥

॥ इत्यष्टमस्याष्टमे द्वितीयोवर्गः ॥ २ ॥

इमामिति षळृचं सप्तदशं सूक्तं इन्द्राण्याआर्षं षष्ठीपंक्तिः शिष्टाअनुष्टुभः अनेन सूक्तेन सपत्न्याबाधनं प्रतिपाद्यते । अतएतत्सूक्तजपादिना सपत्न्याविनाशोभवति अतस्तद्देवताकमिदं । तथाचानुक्रान्तम्—इमामिन्द्राण्युपनिषत्सपत्नीबाधनमानुष्टुभंतुपंक्त्यंतमिति । अस्य सूक्तस्य विनियोगोभगवता आपस्तंबेन कस्मिंश्चित्सपत्नीघ्ने प्रयोगविशेषे दर्शितः त्रिःसप्तैर्यवैः पाठांपरिकिरति यदि वारुण्यसि वरुणात्त्वानिष्क्रीणामि यदि सौम्यसि सोमात्त्वानिष्क्रीणामीति । श्वोभूतउत्तरयोत्थाप्यउत्तराभिस्तिसृभिः अभिमंत्र्योत्तरया प्रतिच्छन्नां हस्तयोराबध्य शयनकाले बाहुभ्यां भर्तारं परिगृह्णीयात् उपधानलिंगयावश्योभवति सपत्नीबाधनं चेति । अयमर्थः आद्यया पाठानामौषधिः खातव्या ततस्तिसृभिः ओषधेरभिमंत्रणं षष्ठ्याबद्धासौषधिः यथा भर्तारं स्पृशति तथा तस्य भर्तुरालिंगनमिति ।

तत्र प्रथमा—

इमांखनाम्योषधिंवीरुधंबलवत्तमाम् ।
यया॑सपत्नींबाधतेययासंविंदतेपतिम् ॥ १ ॥

इमाम् । खनामि । ओषधिम् । वीरुधम् । बलवत्ऽतमाम् ।
यया । सऽपत्नीम् । बाधते । यया । सम्ऽविन्दते । पतिम् ॥ १ ॥

इमामोषधिं पाठाख्यां वीरुधं लतारूपां बलवत्तमां स्वकार्यकरणे अतिशयेन बलवतीं खनामि उन्मूलयामि यया ओषध्या सपत्नीं समानएकः पतिर्यस्याःसा सपत्नी तां एषा वधूर्बाधते हिनस्ति ययाच पतिं भर्तारं संविन्दते सम्यगसाधारण्येन लभते ॥ १ ॥

अथ द्वितीया—

उत्तानपर्णेसुभगेदेवजूतेसहस्वति ।
सपत्नींमेपराधमपतिंमेकेवलंकुरु ॥ २ ॥

उत्ता॑नऽपर्णे । सुऽभ॑गे । दे॒वऽजू॑ते । सह॑स्वति । स॒ऽपत्नी॑म् ।
मे॒ । परा॑ । ध॒म॒ । पति॑म् । मे॒ । केव॑लम् । कु॒रु॒ ॥ २ ॥

हेउत्तानपर्णे उत्तानान्यूर्ध्वमुखानि पर्णानि पत्राणि यस्यास्तादृशि हे सुभगे सौभाग्यहेतुभूते हेदेवजूते देवेन स्रष्ट्रा प्रेरिते हेसहस्वति अभिभवनवति ईदृशे हेपाठे मे मम सपत्नीं स्त्रियं पराधम परागमय धमतिर्गतिकर्मा पतिंच मे ममैव केवलमसाधारणं कुरु ॥ २ ॥

अथ तृतीया—

उत्त॑रा॒हमु॑त्तर॒उत्त॒रेदुत्त॑राभ्यः । अथा॑स॒पत्नी॒याममा॒धरा॒साध॑राभ्यः॥३॥

उत्ऽत॑रा । अ॒हम् । उ॒त्ऽत॒रे॒ । उत्ऽत॑रा । इत् । उत्ऽत॑राभ्यः ।
अथ॑ । स॒ऽपत्नी॑ । या । मम॑ । अध॑रा । सा । अध॑राभ्यः ॥ ३ ॥

हेउत्तरे उत्कृष्टतरे पाठे अहं उत्तरा उत्कृष्टतरा भूयासं उत्तराभ्यः लोके या उत्कृष्टतराः सन्ति ताभ्योप्यहं उत्तरोत् उत्कृष्टतरैव त्वत्प्रसादाद्भवेयं । अथानन्तरं मम या सपत्नी साअधराभ्यः निकृष्टाभ्योपि अधरा निकृष्टतरा भवतु ॥ ३ ॥



अथ चतुर्थी—

न॒ह्य॑स्या॒नाम॑गृ॒भ्णामि॒नोअ॒स्मिन्र॑मते॒जने॑ ।
परा॑मे॒वप॑रा॒वतं॑स॒पत्नीं॑गमयामसि ॥ ४ ॥

न॒हि । अ॒स्याः॒ । नाम॑ । गृ॒भ्णामि॑ । नो इति॑ । अ॒स्मिन् । र॒म॒ते॒ ।
जने॑ । परा॑म् । ए॒व । प॒रा॒ऽवत॑म् । स॒ऽपत्नी॑म् । ग॒म॒या॒म॒सि॒ ॥ ४ ॥

अस्याः सपत्न्याः नामसंज्ञामपि नहि गृभ्णामि नैव गृह्णामि उच्चारयामि नोखलुकाचिदस्मिन् जने सपत्न्याख्ये रमते क्रीडति अपिच तां सपत्नीं परां परावतमेव अतिशयेन दूरदेशमेव गमयामसि प्रापयामः अतिशयेन भर्त्रा वियोजयामइत्यर्थः ॥ ४ ॥

अथ पंचमी—

अहमस्मिसहमानाथत्वमसिसासहिः ।
उभेसहस्वतीभूत्वीसपत्नींमेसहावहै ॥ ५ ॥

अहम् । अस्मि । सहमाना । अथ । त्वम् । असि । ससहिः ।
उभे इति । सहस्वती इति । भूत्वी । सऽपत्नीम् । मे । सहावहै ॥ ५ ॥

हेओषधि अहं त्वत्प्रसादात्सहमानास्मि सपत्न्या अभिभवित्री भवामि अथापिच त्वमपि सासहिरसि तस्याअभिभवित्री भवसि आवामुभेअपि सहस्वती अभिभवित्र्यौ भूत्वी भूत्वा मेमम सपत्नीं सहावहै अभिभवाम ॥ ५ ॥

अथ षष्ठी—

उपतेधांसहमानामभित्वाधांसहीयसा ।
मामनुप्रतेमनोवत्संगौरिवधावतुपथावारिवधावतु ॥ ६ ॥ ३ ॥

उप । ते । अधाम् । सहमानाम् । अभि । त्वा । अधाम् ।
सहीयसा । माम् । अनु । प्र । ते । मनः । वत्सम् ।
गौःऽइव । धावतु । पथा । वाःऽइव । धावतु ॥ ६ ॥ ३ ॥

हेपते ते तव सहमानां सपत्न्याअभिभवित्रीं इमामोषधिं उपाधां शिरसउपधानं करोमि सहीयसा अभिभवितृतरेण तेनोपधानेन त्वामभ्यधां अभितोधारयामि ते तव भर्तुर्मनः मामनुलक्ष्य प्रधावतु प्रकर्षेण शीघ्रं गच्छतु तत्र निदर्शनद्वयमुच्यते गौरिव यथा गौर्वत्सं शीघ्रं गच्छति पथा निम्नेन मार्गेण वारिव वाः उदकं यथा स्वभावतोगच्छति तद्वत् अनेन निदर्शनद्वयेन औत्सुक्यातिशयः स्वाभाविकत्वंच प्रतिपाद्यते ॥ ६ ॥

॥ इत्यष्टमस्याष्टमे तृतीयोवर्गः ॥ ३ ॥

अरण्यानीति षळृचमष्टादशं सूक्तं इरंमदपुत्रस्य देवमुनेरार्षं महदरण्यमरण्यानी तद्देवताकं आनुष्टुभं । तथाचानुक्रान्तं—अरण्यान्यैरंमदोदेवमुनिररण्यानीं तुष्टावेति । गतोविनियोगः ।

तत्र प्रथमा—

अरण्यान्यरण्यान्यसौयाप्रेवनश्यसि ।
कथाग्रामंनपृच्छसिनत्वाभीरिवविन्दतीइँ ॥ १ ॥

अरण्यानि । अरण्यानि । असौ । या । प्रऽइव । नश्यसि ।
कथा । ग्रामम् । न । पृच्छसि । न । त्वा । भीःऽइव । विन्दतीइँ ॥१॥

हेअरण्यानि अरण्यस्य पालयित्री काचिदधिदेवता अरण्यानीति नैरुक्ताः वैयाकरणास्तुहिमारण्ययोर्महत्वइति अरण्यस्य महत्वे ङीषं स्मरन्ति । अरण्याधिदेवते अरण्यानि कान्ताराणि प्रति यासौ त्वं प्रेवनश्यसि इवः संप्रत्यर्थे नशतिः प्राप्तिकर्मा अत्र व्यत्ययेन श्यन् संप्रति रक्षणाय प्राप्नोषि यद्वा निर्जने देशे वर्तमानत्वान्नष्टेव प्रतीयसे सात्वं कथा कथं ग्रामं न पृच्छसि निर्जने अरण्ये कथं रमसे नूनं त्वा त्वां भीः भयं नविन्दति नलभतेकिं । वितर्केप्लुतः इवःसंप्रत्यर्थे परिभयार्थेवा । अत्र निरुक्तं—अरण्यान्यरण्यस्य पत्न्यरण्यमपार्णं ग्रामादरमणं भवतीतिवा अरण्यानीत्येनामामंत्रयते यासावरण्यानि वनानि पराचीवनश्यसि कथं ग्रामंन पृच्छसि नत्वाभीर्विंदतीवेतीवः परिभयार्थेवेति[1] ॥ १ ॥

अथ द्वितीया—

वृषारवायवदंतेयदुपावंतिचिच्चिकः ।
आघाटिभिरिवधावयंन्नरण्यानिर्महीयते ॥ २ ॥

वृषऽरवाय । वदंते । यत् । उपऽअवंति । चिच्चिकः ।
आघाटिभिःऽइव । धावयंन् । अरण्यानिः । महीयते ॥ २ ॥

वृषारवाय वृषा सेचनसमर्थः रवः शब्दोयस्य सूक्ष्मजन्तुविशेषस्य झिल्लयाख्यस्य सतथोक्तः कटुकशब्दवानित्यर्थः तस्मै वृषारवाख्याय वदते चीचीशब्दं कुर्वते चिच्चिकःचीचीशब्दं कुर्वन् अन्योजन्तुः यद्यदा उपावति वृषारवाय स्वशब्दस्य प्रत्युत्तररूपेण चीचीशब्दकरणे उपग-

---

१ नि० ९. ३० ।

च्छति उपेत्य पालयतिवा । तत्र दृष्टान्तः—आघाटिभिरिव आघाटयोघाटलिकाः कांडवीणास्ताभिः धावयन् निषादादिसप्तस्वरान् शोधयन् गायकइव तदा अरण्यानिः साअरण्यानी महीयते पूज्यते । इन्द्रवरुणेत्यादिनाङीष् तत्संनियोगेन आनुगागमः छान्दसोह्रस्वः अतएव हल्ङ्यादिसुलोपाभावः ॥ २ ॥

अथ तृतीया—

उतगावंइवादन्त्युतवेश्मेवदृश्यते ।
उतोअरण्यानिःसायंशकटीरिवसर्जति ॥ ३ ॥

उत । गावःऽइव । अदन्ति । उत । वेश्मऽइव । दृश्यते ।
उतो इति । अरण्यानिः । सायम् । शकटीःऽइव । सर्जति ॥ ३ ॥

उतापिच गावइव गवयाद्यामृगाः अस्यां अरण्यान्यां अदन्ति तृणादिकं भक्षयन्ति उतापिच लतागुल्मादिकं वेश्मेव गृहमिव दृश्यते उतोअपिच अरण्यानिः इयमरण्यानी सायं सायंकाले इवः संप्रत्यर्थे संप्रति शकटीः शकटान् दार्वाद्याहरणायागतान् सर्जति विसर्जयति यद्वा शकटीः सर्जतीव दृश्यते अहनिमहदरण्यं शकटीभिः प्राप्य सर्वे जनाः अरण्येक्षत्तं काष्ठादिकं शकटीष्वध्यारोप्य सायंकाले तस्मान्निर्गच्छन्ति तदभिप्रायेणेदं वचनम् ॥ ३ ॥

अथ चतुर्थी—

गामङ्गैषआह्वयतिदार्वङ्गैषोअपावधीत् ।
वसन्नरण्यान्यांसायमक्रुक्षदितिमन्यते ॥ ४ ॥

गाम् । अङ्ग । एषः । आ । ह्वयति । दारु । अङ्ग । एषः ।
अप । अवधीत् । वसन् । अरण्यान्याम् । सायम् ।
अक्रुक्षत् । इति । मन्यते ॥ ४ ॥

अंग हेअरण्यानि एषः त्वदधिष्ठिते महारण्ये संप्रति वर्तमानः गामाह्वयति एषचान्योदारुकाष्ठमपावधीत् अपहन्ति तथा सायंकाले रात्रौ अरण्यान्यांमहारण्ये निवसन् मनुष्यः

नानाविधं पक्षिमृगादिकं शब्दं शृण्वन् अक्रुक्षत कश्चित् तस्करादिराक्रोशतीतिभीतः सन् मन्यते बुध्यते ॥ ४ ॥

अथ पञ्चमी—

नवाअरण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति ।
स्वादोःफलस्यजग्ध्वायंयथाकामंनिपद्यते ॥ ५ ॥

न । वै । अरण्यानिः । हन्ति । अन्यः । च । इत् । न ।
अभिऽगच्छति । स्वादोः । फलस्य । जग्ध्वाय ।
यथाऽकामम् । नि । पद्यते ॥ ५ ॥

नवै नखलु अरण्यानिररण्यानी हन्ति तत्र निवसन्तं हिनस्ति यद्यन्योव्याघ्रचौरादिर्नाभिगच्छति तर्हि स्वादोरसवतः आम्रादेः फलस्य द्वितीयार्थेषष्ठी फलं जग्ध्वाय भक्षयित्वा तत्र निवसन् पुरुषः यथाकामं यथेच्छं निपद्यते निगच्छति वर्तते । क्त्वाप्रत्यये अदोजग्धिर्ल्यप्तिकितीति जग्ध्यादेशः क्त्वोयगिति यक् ॥ ५ ॥

अथ षष्ठी—

आञ्जनगन्धिंसुरभिंबह्वन्नामकृषीवलाम् ।
प्राहंमृगाणांमातरंमरण्यानिमंशंसिषम् ॥ ६ ॥ ४ ॥

आञ्जनऽगन्धिम् । सुरभिम् । बहुऽअन्नाम् । अकृषिऽवलाम् । प्र ।
अहम् । मृगाणाम् । मातरम् । अरण्यानिम् । अशंसिषम् ॥ ६ ॥ ४ ॥

आंजनगंधिं अंजनस्येदं आंजनं कस्तूर्यादि तस्य गंधइव गंधोयस्यास्तादृशी उपमानाच्चेति गंधस्येदन्तादेशः अतएव सुरभिं सौरभ्योपेतां बह्वन्नां बहुभिरन्नैरदनीयैः फलमूलादिभिरुपेतां कृषीवलां कृषिरेषामस्तीति कृषीवलाः कर्षकाः रजः कृषीत्यादिना वलच् वलइति दीर्घः तैर्युक्तां तादृशीं मृगाणां मातरं जनयित्रीं अरण्यानिं अरण्यानीं अहं प्राशंसिषं उक्तेन प्रकारेण स्तुतवानस्मि ॥ ६ ॥

॥ इत्यष्टमस्याष्टमे चतुर्थोवर्गः ॥ ४ ॥

अत्तइति पंचर्चं एकोनविंशं सूक्तं शिरीषपुत्रस्य सुवेदसआर्षं पंचमी त्रिष्टुप् शिष्टाजगत्यः इन्द्रोदेवता । अनुक्रम्यतेहि—अत्तेपंचसुवेदाः शैरीषस्त्रिष्टुबन्तमिति । तृतीये रात्रिपर्याये प्रशास्तुः शस्त्रे इदं सूक्तं । सूत्रितंच—अत्तेदधामीदंत्यतपात्रमिंद्रपानमिति याज्येति ।

तत्र प्रथमा—

अत्तेदधामिप्रथमायमन्यवेहन्यद्वृत्रंनर्यंविवेरपः ।
उभेयत्वाभवंतोरोदंसीअनुरेजंतेशुष्मांत्पृथिवीचिदद्रिवः ॥ १ ॥

अत् । ते । दधामि । प्रथमायं । मन्यवें । अहंन् । यत् ।
वृत्रम् । नर्यम् । विवेः । अपः । उभे इति । यत् । त्वा । भवंतः ।
रोदंसी इति । अनुं । रेजंते । शुष्मांत् । पृथिवी । चित् । अद्रिऽवः ॥१॥

हेइन्द्र तेतव मन्यवे कोपाय तेजसे वा प्रथमाय मुख्याय श्रद्दधामि श्रद्धानामादरातिशयः तद्विषयं करोमि यद्येन मन्युना त्वं वृत्रं आवरकमसुरं मेघंवा नर्यं नेतव्यं अहन् अवधीः हत्वाचानेनावृताः अपः उदकानिच विवेः इमं लोकं प्रत्यागमः तस्मै मन्यवइत्यन्वयः । यद्यदा उभेरोदसी द्यावापृथिव्यौ त्वात्वामनुसृत्य भवतोवर्तेते तेत्वदधीने अभूतामित्यर्थः तदानीं पृथिवीचित् पृथिवीत्यन्तरिक्षनाम प्रथितं विस्तीर्णमन्तरिक्षमपि हेअद्रिवोवज्रवन्निन्द्र शुष्मात् त्वदीयाद्बलात् रेजते कंपते ॥ १ ॥

अथ द्वितीया—

त्वंमायाभिरनवद्यमायिनंश्रवस्यतामनंसावृत्रमंर्दयः ।
त्वामिन्नरोवृणतेगविंष्टिषुत्वांविश्वांसुहव्यास्विष्टिषु ॥ २ ॥

त्वम् । मायाभिः । अनवद्य । मायिनंम् । श्रवस्यता । मनंसा ।
वृत्रम् । अर्दयः । त्वाम् । इत् । नरः । वृणते । गोऽइंष्टिषु ।
त्वाम् । विश्वांसु । हव्यांसु । इष्टिषु ॥ २ ॥

हेअनवद्य अवद्यरहित प्रशस्येन्द्र त्वं मायिनं मायाविनं वृत्रं मायाभिर्वंचनाभिर्बुद्धि-विशेषैर्वा श्रवस्यता श्रवः श्रवणीयं यशोन्नंवा इच्छता मनसा अर्दयः आहिंसीः। अपिच नरोनेतारोंगिरसः त्वामित् त्वामेव गविष्टिषु गवां पणिभिरपहृतानां एषणेषु प्रापणेषु विषयभूतेषु वृणते संभजते तथा विश्वासु सर्वासु हव्यासु आह्वातव्यासु प्रार्थनीयासु इष्टिषु यागक्रियासु त्वामेव वृणते ॥ २ ॥

अथ तृतीया—

ऐषुंचाकन्धिपुरुहूतसूरिषुंवृधासोयेमंघवन्नानशुर्मंघम्।
अर्चंन्तितोकेतनंयेपरिंष्टिषुमेधसांतावाजिनमह्नंयेधनें ॥ ३ ॥

आ। एषु। चाकन्धि। पुरुऽहूत। सूरिषुं। वृधासंः। ये। मघऽवन्। आनशुः। मघम्। अर्चंन्ति। तोके। तनंये। परिंष्टिषु। मेधऽसांता। वाजिनंम्। अह्नंये। धनें ॥ ३ ॥

हेपुरुहूतेन्द्र एषु सूरिषु आचाकंधि अत्यर्थमभिदीप्यस्व अभिकामयस्व कनीदीप्तिकान्तिगतिषु अस्मात् चर्करीतमेतत् हेमघवन्धनवन्निंद्र येसूरयोवृधासः त्वत्प्रसादाद्वर्धमानाः सन्तः मघं धनं आनशुः आप्नुवन्ति अपिच मेधसाता मेधसातौ यज्ञे वाजिनं बलवन्तं अन्नवन्तं वेजनवन्तंवा त्वां येअर्चंति पूजयन्ति तोके पुत्रेतनये तत्पुत्रे परिष्टिषु परितइष्यमाणेषु अन्येष्वपि फलेषु अह्नये अलज्जाकरे धनेच एतेषु निमित्तभूतेषु सत्सु त्वामेव स्तुत्यादिभिः पूजयन्तीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

सइन्नुरायःसुभृंतस्यचाकनन्मदंयोअंस्यरंह्यंचिकेंतति।
त्वावृंधोमघवन्दाश्वंध्वरोमक्षूसवाजंभरतेधनानृभिः ॥ ४ ॥

सः। इत्। रायः। सुऽभृंतस्य। चाकनत्। मदंम्। यः। अस्य। रंह्यंम्। चिकेंतति। त्वाऽवृंधः। मघऽवन्। दाशुऽअंध्वरः। मक्षु। सः। वाजंम्। भरते। धना। नृऽभिः ॥ ४ ॥

सइत् सएव स्तोता सुभृतस्य सुष्ठुसंपादितस्य रायोधनस्य द्वितीयार्थे षष्ठी इंद्रशंधनं नुक्षिप्रं चाकनत् कामयते लभतइत्यर्थः रंह्यं रंहोवेगः तदर्हं अस्येंद्रस्य मदं सोमपानजन्यं हर्षं यः स्तोता चिकेतति स्तुतिपदैर्जानाति हेमघवन् त्वावृधः त्वया वर्धितः दाश्वध्वरः दत्तयज्ञः यजमानः नृभिर्नेतृभिः ऋत्विग्भिः भृत्यैर्वा धना धनानि वाजमन्नंच मक्षु शीघ्रं भरते संपादयति ॥ ४ ॥

अथ पंचमी—

त्वंशर्धा॑यमहि॒नागृ॑णा॒नउ॒रुकृ॑धिमघव॒ञ्छ॒ग्धिरा॒यः ।
त्वंनो॑मि॒त्रोवरु॑णो॒नमा॒यीपि॒त्वोनद॑स्मदयसेवि॒भ॒क्ता ॥ ५ ॥ ५ ॥

त्वम् । शर्धा॑य । म॒हि॒ना । गृ॒णा॒नः । उ॒रु । कृ॒धि॒ । म॒घ॒ऽव॒न् ।
श॒ग्धि । रा॒यः । त्वम् । न॒ः । मि॒त्रः । वरु॑णः । न । मा॒यी ।
पि॒त्वः । न । द॒स्म॒ । द॒य॒से॒ । वि॒ऽभ॒क्ता ॥ ५ ॥ ५ ॥

हे इन्द्र त्वं महिना महता स्तोत्रेण गृणानः स्तूयमानः सन् शर्धाय शर्धं बलं उरुकृधि विस्तीर्णं कुरु हेमघवन् रायोधनानिच शग्धि अस्मभ्यं प्रयच्छ । हेदस्म दर्शनीयेन्द्र विभक्ता विशेषेण धनानां भाजयिता त्वं मित्रोवरुणोन मित्रवद्वरुणवच्च मायी प्रज्ञायुक्तः सन् नोस्मभ्यं नः संप्रत्यर्थे संप्रति पित्वोन्नानि दयसे प्रयच्छसि ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे पंचमोवर्गः ॥ ५ ॥

सुष्वाणासइति पंचर्चं विंशं सूक्तं वेनपुत्रस्य पृथोरार्षं त्रैष्टुभमैन्द्रं । अनुक्रान्तंच—सुष्वाणासः पृथुर्वैन्यइति । गतोविनियोगः ।

तत्र प्रथमा—

सु॒ष्वा॒णास॑इन्द्रस्तु॒मसि॑त्वास॒स॒वांस॑श्चतु॒विनृ॒म्णवाज॑म् ।
आनो॑भरसु॒वि॒तंयस्य॑चा॒कन्त्मना॒तना॑सनु॒याम॒त्वोताः ॥ १ ॥

सु॒स्वा॒नासः॑ । इ॒न्द्र॒ । स्तु॒मसि॑ । त्वा॒ । स॒स॒ऽवांसः॑ । च॒ ।
तु॒वि॒ऽनृ॒म्ण॒ । वाज॑म् । आ । न॒ः । भ॒र॒ । सु॒वि॒तम् । यस्य॑ ।
चा॒कन् । त्मना॑ । तना॑ । स॒नु॒या॒म॒ । त्वाऽऊ॑ताः ॥ १ ॥

हेइन्द्र सुष्वाणासः सोममभिषुतवन्तोवयं त्वां स्तुमसि स्तुमः हेतुविनृम्ण बहुलधन वाजं चरुपुरोडाशादिलक्षणमन्नं ससवांसः संभक्तवन्तश्च वयं त्वां स्तुमः यतएवमतोहेतोर्नोस्मभ्यं सुवितं सुष्ठुप्राप्तव्यं शोभनं धनं आभराहर प्रयच्छ। यद्वा यस्य यद्धनं अतिप्रियत्वेन चाकन् त्वं कामयसे तद्धनमाभरेत्यर्थः । वयंच त्वोताः त्वया रक्षिताः सन्तः तना धननामैतत् विस्तृतानि धनानि त्मना आत्मना स्वयमेवान्यनैरपेक्ष्येणैव सनुयाम तव प्रसादाल्लभेमहि॥१॥

अथ द्वितीया—

**ऋष्वस्त्वमिन्द्रशूरजातोदासीर्विशःसूर्येणसह्याः ।**
**गुहाहितंगुह्यंगूळ्हमप्सुबिभृमसिप्रस्रवणेनसोमम् ॥ २ ॥**

ऋष्वः । त्वम् । इन्द्र । शूर । जातः । दासीः । विशः ।
सूर्येण । सह्याः । गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्ऽसु ।
बिभृमसि । प्रऽस्रवणे । न । सोमम् ॥ २ ॥

हेशूर शौर्यवन्निन्द्र ऋष्वः महान् दर्शनीयोवात्वं जातः जातमात्रएव दासीः उपक्षयकारिणोदासाः असुराः तत्संबंधिनीर्विशः जातः सूर्येण सूर्यात्मना सह्याः अभ्यभवेः तथा गुहा गुहायां हितं निहितं अतएव गुह्यं अदृश्यं वलाख्यमसुरं अप्सु उदकेषु गूढं निगूढं कुयवाख्यं च त्वमभिभूतवानसि वयमपि प्रस्रवणे प्रवर्षणेसति नः संप्रत्यर्थे संप्रति सोमं बिभृमसि त्वदर्थं बिभृमः धारयामः ॥ २ ॥

अथ तृतीया—

**अर्योवागिरोअभ्यर्चविद्वानृषीणांविप्रःसुमतिंचकानः ।**
**तेस्यामयेरणयन्तसोमैरेनोततुभ्यंरथोळ्हभक्षैः ॥ ३ ॥**

अर्यः । वा । गिरः । अभि । अर्च । विद्वान् । ऋषीणाम् ।
विप्रः । सुऽमतिम् । चकानः । ते । स्याम । ये । रणयन्त ।
सोमैः । एना । उत । तुभ्यम् । रथऽओळ्ह । भक्षैः ॥ ३ ॥

विप्रोमेधावी ऋषीणां मंत्रदर्शिनां सुमतिं सुष्टुतिं चकानः कामयमानः विद्वान् जानन् अर्योवा स्वामीच भवन् हेइन्द्र ईदृशस्त्वं गिरः स्तोतॄन् स्तुतीर्वा अभ्यर्च सम्यक् स्तुतमिति अभिपूजय। अपिच ते वयं स्याम भवेम ये सोमैः त्वांरणयन्त रमयन्ति उतापिच हेरथोह्ळ रथैरभ्युह्यमान आ ऊढः ओढः रथेन ओढोरथोढः ओमाङोश्चेति पररूपं ईदृशेन्द्र भक्षैः भक्षणीयैः चरुपुरोडाशादिभिः सार्धं एना इमानि स्तोत्राणि तुभ्यं त्वदर्थं क्रियन्ते ॥ ३ ॥

अथ चतुर्थी—

इमाब्रह्मेन्द्रतुभ्यंशंसिदानृभ्योनृणांशूरशवः ।
तेभिर्भवसक्रतुर्येषुचाकन्नुतत्रायस्वगृणतउतस्तीन् ॥ ४ ॥

इमा । ब्रह्म । इन्द्र । तुभ्यम् । शंसि । दाः । नृऽभ्यः ।
नृणाम् । शूर । शवः । तेभिः । भव । सऽक्रतुः । येषु ।
चाकन् । उत । त्रायस्व । गृणतः । उत । स्तीन् ॥ ४ ॥

हेइन्द्र त्वदर्थं इमा इमानि पुरोवर्तीनि ब्रह्म ब्रह्माणि परिवृढानि स्तोत्राणि शंसि अशंसिषत शस्यंते शंसेश्छांदसे कर्मणिलुङि व्यत्ययेनैकवचनं हेशूर शौर्यवन्निन्द्र त्वं नृणां मनुष्याणां मध्ये नृभ्यः स्तुत्यादेर्नेतृभ्यः शवोबलं दाः देहि। अपिच तेभिः तैः सक्रतुः समानकर्मा समानप्रज्ञोवा भव येषु स्तोतृषु चाकन् हविरादि कामयसे कनीदीप्तिकान्तिगतिषु अस्माद्यङ्लुगन्तात् छान्दसे लङि सिपि रूपमेतत् ततः कर्मेर्वा पूर्ववत्सिपि मोनोधातोरिति नत्वं। उतापिच गृणतः स्तोतॄन् त्रायस्व पालय उतापिच स्तीन् स्त्यायतेरेतद्रूपं संघीभूय स्थितान् यजमानानपि त्रायस्व ॥ ४ ॥

अथ पंचमी—

श्रुधीहवमिन्द्रशूरपृथ्याउतस्तवसेवेन्यस्यार्कैः ।
आयस्तेयोनिंघृतवन्तमस्वारूर्मिर्ननिम्नैर्द्रवयन्तवक्वाः ॥ ५ ॥ ६ ॥

श्रुधि । हवम् । इन्द्र । शूर । पृथ्याः । उत । स्तवसे । वेन्यस्य ।
अर्कैः । आ । यः । ते । योनिम् । घृतऽवन्तम् । अस्वाः ।
ऊर्मिः । न । निम्नैः । द्रवयन्त । वक्वाः ॥ ५ ॥ ६ ॥

हेशूरेन्द्र पृथ्याः पृथोर्ऋषेः मम हवमाह्वानं श्रुधि शृणु उतापिच वैन्यस्य वेनपुत्रस्य मम अर्कैः मंत्रैः स्तवसे स्तूयसे। यकि प्राप्ते व्यत्ययेन शप् यः स्तोता घृतवन्तं उदकवन्तं ते तव योनिं निवासभूमिं आस्वाः अभ्यस्वार्षीत् अभ्यष्टौत्। स्वृशब्दोपतापयोः अस्माल्लुङि तिपि बहुलंछन्दसीति इडभावे हल्ङ्यादिलोपेच रात्सस्येति सलोपः यद्वा घृतवन्तमाज्यादिना हविषोपेतं योनिं गृहनामैतत् यज्ञगृहं प्राप्य ते त्वां योभिष्टौति तस्य वैन्यस्यार्कैरित्यन्वयः। अपिच वक्वा वक्वानः वचेरन्येभ्योपिदृश्यन्तइति वनिप् अंत्यविकारश्छान्दसः जसि पृषोदरादित्वाद्वर्णलोपः। अन्येपि सर्वे स्तोतारः निम्नैः प्रवणैर्मार्गैः ऊर्मिर्न उदकसंघइव द्रवयन्त स्तुतिभिस्त्वामेवाभिद्रवन्ति अभिगच्छंति ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे षष्ठोवर्गः ॥ ६ ॥

सविता यंत्रैरिति पंचर्चमेकविंशं सूक्तं हिरण्यस्तूपपुत्रस्यार्चतआर्षं त्रैष्टुभं सवितृदेवत्यं। अनुक्रान्तंच—सविताार्चन्हैरण्यस्तूपः सावित्रमिति। गतोविनियोगः।

तत्र प्रथमा—

**स॒वि॒ता य॒न्त्रैः पृ॑थि॒वीम॑रम्णादस्कम्भ॒ने स॑वि॒ता द्याम॑दृंहत्।**
**अश्व॑मिवाधुक्ष॒द्धुनि॑म॒न्तरि॑क्षम॒तूर्ते॑ ब॒द्धं स॑वि॒ता स॑मु॒द्रम् ॥ १ ॥**

**स॒वि॒ता। य॒न्त्रैः। पृ॒थि॒वीम्। अ॒र॒म्णा॒त्। अ॒स्क॒म्भ॒ने। स॒वि॒ता। द्याम्। अ॒दृं॒ह॒त्। अश्व॑म्ऽइव। अ॒धु॒क्ष॒त्। धुनि॑म्। अ॒न्तरि॑क्षम्। अ॒तूर्ते॑। ब॒द्धम्। स॒वि॒ता। स॒मु॒द्रम् ॥ १ ॥**

सविता सर्वस्य प्रसविता प्रेरकोमध्यमस्थानोदेवः सोयं यंत्रैः यमनसाधनैः वृष्टिप्रदानादिभिरुपायैः वायवीयैः पाशैर्वा पृथिवीं प्रथितां भूमिं अरम्णात् अरमयत् सुखेनावस्थापयति तथा सएव सविता अस्कंभने पतनप्रतिबंधकमालंबनं स्कंभनंतद्रहितस्थले द्यां द्युलोकमपि अदृंहत् दृढीकृतवान् यथा अधोन पतति तथा आत्मीयैरेवोपायैः अवस्थापितवानित्यर्थः। अश्वमिव धुनिं कंपयितव्यं कंपयितारंवा अन्तरिक्षं अन्तराक्षांतं मध्यमस्थानगतं अतूर्ते केनाप्यहिंसिते अत्वरमाणेवा नभसि वायवीयैः पाशैर्बद्धं समुद्रं मेघमयमेव सविता धुक्ष-

त् उदकानि दोग्धि यद्वान्तरिक्षमिति सप्तम्यर्थे प्रथमा अतूर्तेन्तरिक्षे बद्धं समुदितारं धुनिं कंपनीयं मेघं अश्वमिव अधुक्षत् सविताक्लेशयति । धुक्षधिक्ष संदीपनक्लेशनजीवनेषु यथा शिक्षकः अश्वं क्लेशयति एवं वर्षणाय मेघं क्लेशयतीत्यर्थः । अत्र निरुक्तम्—सविता यंत्रैः पृथिवीमरमयदनारंभणेन्तरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्णइतिवा त्वरमाणइतिवा सविता समुदितारमिति[1] ॥ १ ॥

अथ द्वितीया—

**यत्रासमुद्रःस्कंभितोव्यौनदपांनपात्सवितातस्यवेद ।**
**अतोभूरतआउत्थितंरजोतोद्यावापृथिवीअप्रथेताम् ॥ २ ॥**

**यत्र । समुद्रः । स्कभितः । वि । औनत् । अपाम् । नपात् ।**
**सविता । तस्य । वेद । अतः । भूः । अतः । आः । उत्थितम् ।**
**रजः । अतः । द्यावापृथिवी इति । अप्रथेताम् ॥ २ ॥**

यत्र यस्मिन्नंतरिक्षे समुद्रः समुन्दनशीलोमेघः स्कभितः स्तंभितोवायुपाशैर्बद्धः सन् व्यौनत् विशेषेण भूमिमुनत्ति उदकैः क्लेदयति उन्दीक्लेदने अस्माच्छान्दसे लङि रूपमेतत् हेअपांनपात् मध्यमस्थानवैद्युताग्ने तवसंबंधी सविता प्रेरकोदेवः तस्य तत्स्थानं वेद वेत्ति जानाति । अतोस्मादेव सवितुः भूः भूमिरासीत् अतएव उत्थितं ऊर्ध्वमेवस्थितं रजोन्तरिक्षं आः आसीत् अजायत अस्तेर्लुङि बहुलं छन्दसीति इडभावः हल्ङ्याब्भ्यइति लोपः अतः अस्मादेव सवितुः द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां विस्तीर्णे अप्यभूताम् ॥ २ ॥

अथ तृतीया—

**पश्चेदमन्यदभवद्यजत्रममर्त्यस्यभुवनस्यभूना ।**
**सुपर्णोअङ्गसवितुर्गरुत्मान्पूर्वोजातःसउअस्यानुधर्म ॥ ३ ॥**

**पश्चा । इदम् । अन्यत् । अभवत् । यजत्रम् । अमर्त्यस्य ।**
**भुवनस्य । भूना । सुऽपर्णः । अङ्ग । सवितुः । गरुत्मान् ।**
**पूर्वः । जातः । सः । ऊँ इति । अस्य । अनु । धर्म ॥ ३ ॥**

---

1 नि० १०. ३२ ।

अन्यत् सवितृव्यतिरिक्तं इदं देवतान्तरं पश्चा पश्चात् पश्चपश्चाचछन्दसीति निपात्यते सवितृप्रेरणानंतरमेव यजत्रं यष्टव्यमभवत् । केन साधनेन अमर्त्यस्य मरणरहितस्य भुवनस्य लोकस्य स्वर्गाख्यस्य संबंधिना भूना भूतेन स्वर्गे उत्पन्नेन सोमेनेत्यर्थः यद्वा अमर्त्यस्य भुवनस्य संबधि इदं देवतान्तरं भूना भूम्ना बहुत्वेन युक्तं यष्टव्यमभवत् कुतइत्यतआह—हेअंग स्तोतः सुपर्णः शोभनपतनः गरुत्मान् सोमस्यापहर्ता तार्क्ष्यः सवितुः प्रेरकादस्माद्देवात् पूर्वः प्रथमभावी सन् जातः अतोहेतुभूतः सुपर्णोगरुत्मान् अस्य सवितुः धर्मधारणमनुसृत्य वर्तते सवितृप्रेरणाधीनत्वात्सर्वगतीनां सोमाहरणमपि तदधीनमिति सवितृप्रेरणानंतरमेव सर्वे सोमयागाः प्रवर्ततइत्यर्थः । उइति पूरकः ॥ ३ ॥

अथ चतुर्थी—

गावंइवग्रामंयूयुधिरिवाश्वान्वाश्रेवंवत्संसुमनादुहाना ।
पतिरिवजायामभिनोन्येतुधर्तादिवःसविताविश्ववारः ॥ ४ ॥

गावःऽइव । ग्रामम् । यूयुधिःऽइव । अश्वान् । वाश्राऽइव ।
वत्सम् । सुऽमनाः । दुहाना । पतिःऽइव । जायाम् । अभि ।
नः । नि । एतु । धर्ता । दिवः । सविता । विश्वऽवारः ॥ ४ ॥

गावइव यथा अरण्ये संचरन्तोगावः ग्रामं शीघ्रमभिगच्छंति युयुधिरिव यथाच युद्धार्थं अश्वानभिगच्छति । युधसंप्रहारे आदृगमहनइत्यत्रोत्सर्गश्छन्दसीति वचनात्किन् प्रत्ययः छान्दसं सांहितिकमभ्यासदीर्घत्वं सुमनाः शोभनमनस्का दुहाना दोग्ध्री बहुपयस्का वाश्रेव हंभारवात्मकं शब्दं कुर्वती गौर्यथा आत्मीयं वत्सं अभिगच्छति पतिरिव यथा भर्ता जायां स्वभार्यां शीघ्रमभिगच्छति एवमेव सविता नोस्मानभ्येतु नितरामभिगच्छतु । कीदृशः दिवोद्युलोकस्य धर्ता धारयितावस्थापयिता वा अतएव विश्ववारः सर्वैर्वरणीयः ॥ ४ ॥

अथ पंचमी—

हिरंण्यस्तूपःसवितर्यथांत्वाङ्गिरसोजुह्वेवाजेअस्मिन् ।
एवात्वार्चन्नवंसेवन्दंमानःसोमंस्येवांशुंप्रतिजागराहम् ॥ ५ ॥७॥

हिरण्यऽस्तूपः । सवितः । यथा । त्वा । आङ्गिरसः । जुह्वे ।
वाजे । अस्मिन् । एव । त्वा । अर्चन् । अवसे । वन्दमानः ।
सोमस्यऽइव । अंशुम् । प्रति । जागर । अहम् ॥ ५ ॥ ७ ॥

हेसवितः प्रेरक त्वा त्वां आंगिरसः अंगिरसः पुत्रः हिरण्यस्तूपोमम पिता अस्मिन् वाजे अन्ने निमित्तभूते सति यथा जुह्वे आहूतवान् एवैवमर्चन्नेतत्संज्ञोहं त्वा त्वां अवसे अवनाय रक्षणार्थं वन्दमानः स्तुवन् आह्वयामीति शेषः आहूयच सोमस्येवांशुं यथा सोमलतां प्रति यजमानाः जाग्रति यागपर्यंतं रक्षणे प्रबुद्धावर्तन्ते तथा अहं त्वत्परिचर्यां प्रति जागर जागर्मि । जागर्तेर्णलि उत्तमैकवचनेरूपं । अत्र निरुक्तं—हिरण्यस्तूपोहिरण्यमयस्तूपोहिरण्मयस्तूपोस्येतिवा स्तूपःस्त्यायतेःसंघातः सवितर्यथा त्वांगिरसोजुह्वे वाजेन्नेस्मिन्नेवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रति जागर्म्यहमिति[1] ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे सप्तमोवर्गः ॥ ७ ॥

समिद्धइति पंचर्चं द्वाविंशं सूक्तं वसिष्ठपुत्रस्य मृळीकस्यार्षं आग्नेयं चतुर्थी पञ्चम्यौ उपरिष्टाज्ज्योतिषी त्रिद्वादशकाष्टकवत्यौ अक्षरव्यूहेन चतुर्थी जगतीवा शिष्टाबृहत्यः । तथाचानुक्रान्तं—समिद्धोमृळीकोवासिष्ठआग्नेयं बार्हतमंत्ये उपरिष्टाज्ज्योतिषी जगत्युपान्त्यावेति । गतो विनियोगः ।

सैषा प्रथमा—

**समिद्धश्चित्समिद्ध्यसेदेवेभ्योहव्यवाहन ।**
**आदित्यैरुद्रैर्वसुभिर्नआगहिमृळीकायनआगहि ॥ १ ॥**

समऽइद्धः । चित् । सम् । इध्यसे । देवेभ्यः । हव्यऽवाहन ।
आदित्यैः । रुद्रैः । वसुऽभिः । नः । आ । गहि । मृळीकाय ।
नः । आ । गहि ॥ १ ॥

---

१ नि० १०. ३३ ।

हेहव्यवाहन हविषां वोढरग्ने समिद्धः चित् संदीप्तोपि देवेभ्योयागार्थं समिध्यसेपुनरपि ऋत्विग्भिः संदीप्यसे सत्वं आदित्यैः आदित्यादिभिः त्रिभिर्गणैः सार्धं नोस्मानागहि आगच्छ तथानोस्माकं मृळीकाय सुखाय तदर्थमप्यागहि । यद्वा मृळीकाय एतत्संज्ञाय नोमह्यं ऋषये श्रेयांसि कर्तुं आगच्छ ॥ १ ॥

अथ द्वितीया—

इमंयज्ञमिदंवचोजुजुषाणउपागहि ।
मर्तासस्त्वासमिधानहवामहेमृळीकायहवामहे ॥ २ ॥

इमम् । यज्ञम् । इदम् । वचः । जुजुषाणः । उपऽआगहि । मर्तासः ।
त्वा । सम्ऽइधान । हवामहे । मृळीकाय । हवामहे ॥ २ ॥

हेअग्ने इममस्माभिः क्रियमाणं पुरोवर्तिनं यज्ञं इदं वचः स्तोत्रं च जुजुषाणः सेवमानः उपागहि उपागच्छ । हेसमिधान समिध्यमान मर्तासोमर्तामनुष्याः त्वा त्वां हवामहे आह्वयामहे मृळीकाय सुखाय एतत्संज्ञायवाऋषये त्वामेवाह्वयामहे ॥ २ ॥

अथ तृतीया—

त्वामुंजातवेदसंविश्ववारंगृणेधिया ।
अग्नेदेवाँआवहनःप्रियव्रतान्मृळीकायप्रियव्रतान् ॥ ३ ॥

त्वाम् । ऊँ इति । जातऽवेदसम् । विश्वऽवारम् । गृणे ।
धिया । अग्ने । देवान् । आ । वह । नः । प्रियऽव्रतान् ।
मृळीकाय । प्रियऽव्रतान् ॥ ३ ॥

हे अग्ने विश्ववारं विश्वैः सर्वैः वरणीयं जातवेदसं जातानां वेदितारं जातप्रज्ञं जातधनंवा त्वामु त्वामेव धिया स्तुत्या गृणे स्तौमि गृशब्दे क्र्यादिकः प्वादित्वाद्ध्रस्वः प्रियव्रतान् प्रियाणि व्रतानि कर्माणि येषां तादृशान् देवान् नोस्मदर्थमावह आनय अस्मद्यज्ञं प्रापय मृळीकाय सुखार्थं एतत्संज्ञायवा मह्यं प्रियव्रतांस्तानेवावह ॥ ३ ॥

अथ चतुर्थी—

अग्निर्देवोदेवानामभवत्पुरोहितोग्निंमनुष्याऋषयःसमीधिरे ।
अग्निंमहोधनसातावहंहुवेमृळीकंधनसातये ॥ ४ ॥

अग्निः । देवः । देवानाम् । अभवत् । पुरःऽहितः । अग्निम् ।
मनुष्याः । ऋषयः । सम् । ईधिरे । अग्निम् । महः ।
धनऽसातौ । अहम् । हुवे । मृळीकम् । धनऽसातये ॥ ४ ॥

देवोदानादिगुणयुक्तोग्निः देवानामन्येषां पुरोहितः पुरस्ताद्धृतोभवत् यद्वा पुरोहितवद्धितकार्यभवत् यतएवमतःकारणात् तमेवाग्निं ऋषयः अतींद्रियार्थदर्शिनः मनुष्याः मानवा यजमानाः समीधिरे संदीपयन्ति । अपिच तमग्निं महोमहतः धनसातौ धनस्य संभजनेनिमित्तभूते अहं हुवे आह्वये विशेषणसापेक्षस्यापि धनशब्दस्य छान्दसः समासः यद्वा महतोयागस्य कर्तारमग्निं इत्यर्थः धनस्य सातये धनलाभार्थं मृळीकं सुखं एतत्संज्ञं वा मां सोग्निः करोत्वित्यर्थः ॥ ४ ॥

अथ पंचमी—

अग्निरत्रिंभरद्वाजंगविष्ठिरंप्रावन्नःकण्वंत्रसदस्युमाहवे ।
अग्निंवसिष्ठोहवतेपुरोहितोमृळीकायपुरोहितः ॥ ५ ॥ ८ ॥

अग्निः । अत्रिम् । भरत्ऽवाजम् । गविष्ठिरम् । प्र । आवत् ।
नः । कण्वम् । त्रसदस्युम् । आऽहवे । अग्निम् । वसिष्ठः ।
हवते । पुरःऽहितः । मृळीकाय । पुरःऽहितः ॥ ५ ॥ ८ ॥

अत्रिं भरद्वाजं गविष्ठिरं कण्वं त्रसदस्युं च नोस्मानाहवे संग्रामे अयमग्निः प्रावत् प्ररक्षतु । पुरोहितः पुरोहितवद्धितकारी मम पिता वसिष्ठऋषिः अग्निं हवते स्तुतिभिराह्वयति सचाहूतोमृळीकाय सुखार्थं एतत्संज्ञाय वा मह्यं पुरोहितः पुरोधा देवानां पुरःस्थापयिता भवतु ॥ ५ ॥

॥ इत्यष्टमस्याष्टमेष्टमोवर्गः ॥ ८ ॥

श्रद्धयेति पंचर्चं त्रयोविंशं सूक्तं आनुष्टुभं श्रद्धादेवत्यं कामगोत्रजा श्रद्धानाम ऋषिका। तथाचानुक्रम्यते—श्रद्धया श्रद्धाकामायनी श्राद्धमानुष्टुभं त्विति। लैंगिकोविनियोगः।

तत्र प्रथमा—

श्रद्धयाग्निःसमिध्यतेश्रद्धयाहूयतेहविः।
श्रद्धांभगस्यमूर्धनिवचसावेदयामसि॥ १॥

श्रद्धया। अग्निः। सम्। इध्यते। श्रद्धया। हूयते। हविः।
श्रद्धाम्। भगस्य। मूर्धनि। वचसा। आ। वेदयामसि॥ १॥

पुरुषगतोभिलाषविशेषः श्रद्धा तया श्रद्धयाग्निर्गार्हपत्यादिः समिध्यते संदीप्यते यदाहि पुरुषे श्रद्धा अग्निगोचरआदरातिशयोजायते तदैव पुरुषोग्नीन् प्रज्वालयति नान्यदा। श्रद्धयैव हविः पुरोडाशादिहविश्च हूयते आहवनीये प्रक्षिप्यते। यद्वा अस्य सूक्तस्य द्रष्ट्र्या श्रद्धाख्यया अग्निः समिध्यते श्रद्धां उक्तलक्षणायाः श्रद्धायाः अभिमानिदेवतां भगस्य भजनीयस्य धनस्य मूर्धनि प्रधानभूते स्थानेवस्थितां वचसा वचनेन स्तोत्रेण आवेदयामसि अभितः प्रख्यापयामः इदन्तोमसिः॥ १॥

अथ द्वितीया—

प्रियंश्रद्धेददतःप्रियंश्रद्धेदिदासतः।
प्रियंभोजेषुयज्वस्विदंमउदितंकृधि॥ २॥

प्रियम्। श्रद्धे। ददतः। प्रियम्। श्रद्धे। दिदासतः। प्रियम्।
भोजेषु। यज्वऽसु। इदम्। मे। उदितम्। कृधि॥ २॥

हेश्रद्धे ददतः चरुपुरोडाशादीनि प्रयच्छतः यजमानस्य प्रियं अभीष्टफलं कुरु दिदासतः दातुमिच्छतश्च हेश्रद्धे प्रियं कुरु मे मम संबंधिषु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु कृतयज्ञेषु जनेषुच इदमुदितमुक्तं प्रियं कृधि कुरु॥ २॥

अथ तृतीया—

**यथादेवाअसुरेषुश्रद्धामुग्रेषुचक्रिरे ।**
**एवंभोजेषुयज्वस्वस्माकमुदितंकृधि ॥ ३ ॥**

यथा । देवाः । असुरेषु । श्रद्धाम् । उग्रेषु । चक्रिरे । एवम् ।
भोजेषु । यज्वऽसु । अस्माकम् । उदितम् । कृधि ॥ ३ ॥

देवाइन्द्रादयः असुरेषु उद्गूर्णबलेषु यथा श्रद्धां चक्रिरे अवश्यमिमेहन्तव्याइति आदरातिशयं कृतवन्तः । एवं श्रद्धावत्सु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु यष्टृषु अस्माकं अस्मत्संबन्धिषु तेषु उदितं तैरुक्तं प्रार्थितं फलजातं कृधि कुरु ॥ ३ ॥

अथ चतुर्थी—

**श्रद्धांदेवायजमानावायुगोपाउपासते ।**
**श्रद्धांहृदय्ययाकूत्याश्रद्धयाविन्दतेवसु ॥ ४ ॥**

श्रद्धाम् । देवाः । यजमानाः । वायुऽगोपाः । उप । आसते ।
श्रद्धाम् । हृदय्यया । आऽकूत्या । श्रद्धया । विन्दते । वसु ॥ ४ ॥

देवायजमानामनुष्याश्च वायुगोपाः वायुर्गोपा रक्षिता येषां ते तादृशाः सन्तः श्रद्धां देवीमुपासते प्रार्थयन्ते हृदय्यया हृदये भवा हृदय्या तथाविधया आकूत्या संकल्परूपया क्रियया श्रद्धामेव परिचरंति सर्वे जनाः । कुतइत्यतआह—यतः कारणात् श्रद्धया हेतुभूतया वसु धनं विन्दते लभते श्रद्धावान् जनः ततइत्यर्थः ॥ ४ ॥

अथ पंचमी—

**श्रद्धांप्रातर्हवामहेश्रद्धांमध्यंदिनंपरि ।**
**श्रद्धांसूर्यस्यनिम्रुचिश्रद्धेश्रद्धापयेहनः ॥ ५ ॥ १ ॥**

श्रद्धाम् । प्रातः । हवामहे । श्रद्धाम् । मध्यन्दिनम् । परि । श्रद्धाम् ।
सूर्यस्य । निऽम्रुचि । श्रद्धे । श्रत् । धापय । इह । नः ॥ ५ ॥ १ ॥

श्रद्धां देवीं प्रातः पूर्वाह्णे हवामहे तथा मध्यंदिनंपरि लक्षणे परेः कर्मं प्रवचनीयत्वं मध्यन्दिनं परिलक्ष्य मध्यन्दिनइत्यर्थः मध्याह्नेपि तां श्रद्धां आह्वयामहे सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य निम्रुचि अस्तमयवेलायां सायं समयेपि तामेव श्रद्धामाह्वयामहे ईदृग्रूपे हेश्रद्धे नोस्मानिह लोके कर्मणिवा श्रद्धापय श्रद्धावतः कुरु ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे नवमोवर्गः ॥ ९ ॥

॥ इति दशमे मंडले एकादशोनुवाकः ॥११॥

द्वादशेनुवाके चत्वारिंशत्सूक्तानि तत्र शासइत्थेति पंचर्चं प्रथमं सूक्तं शासनाम्नआर्षं आनुष्टुभमैन्द्रं । अनुक्रान्तंच—शासःशासोभारद्वाजइति । युद्धाय सन्नद्धं राजानं अनेनेक्षेत । तथाच सूत्रितं—अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैरिति ।

तत्र प्रथमा—

**शासइत्थामहाँअस्यमित्रखादोअद्भुतः ।**
**नयस्यंहन्यतेसखानजीयंतेकदांचन ॥ १ ॥**

**शासः । इत्था । महान् । असि । अमित्रऽखादः । अद्भुतः ।**
**न । यस्यं । हन्यते । सखा । न । जीयंते । कदा । चन ॥ १ ॥**

शासः तत्संज्ञोहं इत्थमनेन वक्ष्यमाणप्रकारेण इन्द्रं स्तौमीतिशेषः । हेइन्द्र त्वं महान् असि सर्वेभ्योधिकोभवसि । अमित्रखादः अमित्राणां शत्रूणां खादिता विनाशयिता अतएवाद्भुतः आश्चर्यभूतश्च भवसीति यस्येन्द्रस्य सखा मित्रभूतः पुरुषः कदाचन कदाचिदपि नहन्यते नहिंस्यते नजीयते नच शत्रुभिः पराजितोभवति सत्वं महांअसीत्यन्वयः ॥ १ ॥

अथ द्वितीया—

**स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी ।**
**वृषेन्द्रःपुरएंतुनःसोमपाअंभयङ्करः ॥ २ ॥**

**स्वस्तिऽदाः । विशः । पतिः । वृत्रऽहा । विऽमृधः । वशी । वृषा ।**
**इन्द्रः । पुरः । एतु । नः । सोमऽपाः । अभयम्ऽकरः ॥ २ ॥**

स्वस्तिदाः स्वस्तेरविनाशस्य दाता विशस्पतिः सर्वस्याः प्रजायाः पालयिता वृत्रहा वृत्राणां शत्रूणां हन्ता विमृधः संग्रामकारी वशी वशीकर्ता वृषा वर्षिताकामानां सोमपाः सोमस्य पाता एवं विधइन्द्रः अभयंकरः अभयस्य भयराहित्यस्य कर्तासन् नोस्माकं पुरएतु पुरतोगच्छतु ॥ २ ॥

अथ तृतीया—

**विरक्षोविमृधोजहिविवृत्रस्यहनूरुज ।**
**विमन्युमिन्द्रवृत्रहन्नमित्रस्याभिदासतः ॥ ३ ॥**

वि । रक्षः । वि । मृधः । जहि । वि । वृत्रस्य । हनू इति । रुज ।
वि । मन्युम् । इन्द्र । वृत्रऽहन् । अमित्रस्य । अभिऽदासतः ॥ ३ ॥

हेइन्द्र रक्षोराक्षसजातं विजहि विनाशय मृधः संग्रामकारिणः शत्रूंश्च विजहि वृत्रस्यावरकस्यासुरस्य हनू कपोलमान्तौ विरुज विशेषेण भग्नौ कुरु हेवृत्रहन्निन्द्र अभिदासतः अस्मानुपक्षयतोमित्रस्य शत्रोर्मन्युं क्रोधमपि विनाशय ॥ ३ ॥

विनइन्द्रेति वैमृधस्य हविषोनुवाक्या । सूत्रितंच—विनइन्द्रमृधोजहि मृगोनभीमः कुचरागिरिष्ठाइति ।

सैषा चतुर्थी—

**विनइन्द्रमृधोजहिनीचायच्छपृतन्यतः ।**
**योअस्माँअभिदासत्यधरंगमयातमः ॥ ४ ॥**

वि । नः । इन्द्र । मृधः । जहि । नीचा । यच्छ । पृतन्यतः ।
यः । अस्मान् । अभिऽदासति । अधरम् । गमय । तमः ॥ ४ ॥

हेइन्द्र नोस्माकं मृधः संग्रामकारिणः शत्रून् विजहि विनाशय तथा पृतन्यतः पृतनाः सेनाः आत्मनइच्छतः युयुत्समानानपि नीचायच्छ नीचीनं अवाङ्मुखं यच्छ गमय यः शत्रुः अस्मानभिदासति अभितउपक्षपयति तं अधरं निकृष्टं तमोंधकारं मरणलक्षणं गमय प्रापय ॥ ४ ॥

अथ पंचमी–

अपेन्द्रद्विषतोमनोपजिज्यासतोवधम् ।
विमन्योःशर्मयच्छवरीयोयवयावधम् ॥ ५ ॥ १० ॥

अप । इन्द्र । द्विषतः । मनः । अप । जिज्यासतः । वधम् । वि ।
मन्योः । शर्म । यच्छ । वरीयः । यवय । वधम् ॥ ५ ॥ १० ॥

हे इन्द्र द्विषतोद्वेष्टुः शत्रोर्मनः अपजहि जिज्यासतः अस्माकं वयोहानिमिच्छतश्च वधं हननसाधनमायुधं चापं जहि मन्योः शत्रुसंबन्धिनः क्रोधाच्चास्मान् रक्ष वरीयः उरुतरं शर्म सुखं विशेषेण यच्छ देहि वधं शत्रुकृतं हननंच यवय अस्मत्तः पृथक्कुरु ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे दशमोवर्गः ॥ १० ॥

ईंखयन्तीरिति पंचर्चं द्वितीयं सूक्तं गायत्रमैन्द्रं देवानां स्वसृभूताइन्द्रमातरोनामऋषिकाः । तथाचानुक्रान्तं–ईंखयन्तोर्देवजामयइन्द्रमातरोगायत्रमिति । द्वितीये पर्याये प्रशास्तुः शस्त्रे इदं सूक्तं । सूत्रितंच–ईंखयन्तीरहंदांपातासुतमिति । महाव्रतेपि प्रातःसवनिके ब्रह्मशस्त्रे एतत् सूक्तं ।

तत्र प्रथमा–

ईङ्खयन्तीरपस्युवइन्द्रंजातमुपासते । भेजानासःसुवीर्यम् ॥ १ ॥

ईङ्खयन्तीः । अपस्युवः । इन्द्रम् । जातम् । उप । आसते ।
भेजानासः । सुऽवीर्यम् ॥ १ ॥

ईंखयन्तीर्गच्छन्त्यः स्तुत्यादिभिरिन्द्रं प्राप्नुवंत्यः अपस्युवः अपः कर्मात्मनः इच्छन्त्यः इन्द्रमातरः अस्य सूक्तस्य द्रष्ट्र्यः जातं प्रादुर्भूतमिन्द्रं उपासते परिचरंति सुवीर्यं शोभनवीर्योपेतं धनंच भेजानासः तस्मादिन्द्रात्संभक्तवत्योभवन्ति ॥ १ ॥

अथ द्वितीया–

त्वमिन्द्रबलादधिसहसोजातओजसः । त्वंवृषन्वृषेदसि ॥ २ ॥

त्वम् । इन्द्र । बलात् । अधि । सहसः । जातः । ओजसः ।
त्वम् । वृषन् । वृषा । इत् । असि ॥ २ ॥

हे इन्द्र त्वं सहसः परेषामभिभावुकात् बलात् अधिजातोसि अधिः पञ्चम्यर्थानुवादकः वृत्रादिवधहेतुभूताद्बलात् हेतोस्त्वं प्रख्यातोभवसीत्यर्थः । अपिच ओजसः ओजोनामबलहेतुहृदयगतं धैर्यं तस्मादपि त्वं जातोसि हेवृषन् वर्षितस्त्वं वृषेत् असि कामानां वर्षितैव भवसि ॥२॥

अथ तृतीया—

त्वमिन्द्रासिवृत्रहाव्य१न्तरिक्षमतिरः । उद्द्यामस्तभ्ना ओजसा ॥३॥

त्वम् । इन्द्र । असि । वृत्रऽहा । वि । अन्तरिक्षम् । अतिरः ।
उत् । द्याम् । अस्तभ्नाः । ओजसा ॥ ३ ॥

हेइन्द्र त्वं वृत्रहासि शत्रूणां हन्ता भवसि अन्तरिक्षं मध्यमस्थानंच व्यतिरः आवारकापनोदनेन प्रावर्धयः द्यां द्युलोकंच ओजसा बलेन उदस्तभ्नाः ऊर्ध्वमस्तंभीः यथा अधोनपतति तथा उपर्यवस्थापितवानित्यर्थः ॥ ३ ॥

अथ चतुर्थी—

त्वमिन्द्रसजोषसमर्कंबिभर्षिबाह्वोः । वज्रंशिशानओजसा ॥ ४ ॥

त्वम् । इन्द्र । सऽजोषसम् । अर्कम् । बिभर्षि । बाह्वोः ।
वज्रम् । शिशानः । ओजसा ॥ ४ ॥

हेइन्द्र त्वं सजोषसं सह प्रीयमाणं अर्कं स्तुत्यं वज्रं आत्मीयमायुधं ओजसा बलेन शिशानः निश्यन् तीक्ष्णीकुर्वन् बाह्वोर्हस्तयोर्बिभर्षि धारयसि शत्रूणां वधार्थं ॥ ४ ॥

अथ पञ्चमी—

त्वमिन्द्राभिभूरसिविश्वाजातान्योजसा । सविश्वाभुवआभवः ॥५॥११॥

त्वम् । इन्द्र । अभिऽभूः । असि । विश्वा । जातानि । ओजसा ।
सः । विश्वाः । भुवः । आ । अभवः ॥ ५ ॥ ११ ॥

हेइन्द्र त्वं विश्वा सर्वाणि जातानि जनिमंति भूतानि ओजसा बलेन अभिभूः अ-भिभविता भवसि तथा सताद्दशस्त्वं विश्वाभुवः सर्वाभूमीः प्राप्तव्यानि सर्वाण्यपि स्थाना-नि आभवः अभितः प्राप्तोः भूमाप्तौ ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे एकादशोवर्गः ॥ ११ ॥

सोमइति पंचर्चं तृतीयं सूक्तं आनुष्टुभं विवस्वतोदुहिता यमी ऋषिः म्रियमाणानां यज-मानादीनां वर्तनमत्रप्रतिपाद्यते अतस्तद्देवताकमिदं । तथाचानुक्रान्तं—सोमोयमीभाववृत्तमानु-ष्टुभंत्विति । प्रेतोपस्थानएतत्सूक्तं । सूत्रितंच—सोमएकेभ्यउरूणसावसुतृपाउदुंबलाविति ।

तत्र प्रथमा—

सोमएकेभ्यःपवतेघृतमेकउपासते ।
येभ्योमधुप्रधावतितांश्चिदेवापिगच्छतात् ॥ १ ॥

सोमः । एकेभ्यः । पवते । घृतम् । एके । उप । आसते । येभ्यः ।
मधु । प्रऽधावति । तान् । चित् । एव । अपि । गच्छतात् ॥ १ ॥

एकेभ्यः केभ्यश्चित् पितृभ्यः सोमः पवते उपभोगायकुल्यारूपेण प्रवहति एषां गोत्र-जाः सामानि ब्रह्मयज्ञसमये धीयते । श्रूयते हि—यत्सामानि सोमएभ्यः पवतइति । एके अन्ये पितरः घृतं आज्यं उपासते उपगच्छन्ति उपभुंजतइत्यर्थः । एषां पुत्रादयोयजूंषि ब्रह्मयज्ञका-ले अधीयते । श्रुतिश्च भवति—यद्यजूंषिघृतस्यकुल्याइति । येभ्यः पितृभ्यः तादर्थ्ये चतुर्थी उ-पभोगार्थं मधुक्षौद्रं प्रधावति प्रवाहरूपेण शीघ्रं गच्छति यआथर्वणान् मंत्रान् ब्रह्मयज्ञार्थमधी-यते तेषां पितॄन् मधुकुल्या प्रवहति । तथाचाम्नायते—यदाथर्वणांगिरसोमधोः कुल्याइति । तांश्चिदेव तान् पूर्वोक्तान् सर्वानेव हेप्रेत त्वं प्रति अपि गच्छतात् अपिगच्छ प्राप्नुहि ॥ १ ॥

अथ द्वितीया—

तपसायेअनाधृष्यास्तपसायेस्वर्ययुः ।
तपोयेचक्रिरेमहस्तांश्चिदेवापिगच्छतात् ॥ २ ॥

तप॑सा । ये । अ॒ना॒धृ॒ष्याः । तप॑सा । ये । स्वः॑ । य॒युः । तपः॑ ।
ये । च॒क्रि॒रे । महः॑ । तान् । चि॒त् । ए॒व । अपि॑ । ग॒च्छ॒ता॒त् ॥ २ ॥

येजनाः तपसा कृच्छ्रचान्द्रायणादिना युक्ताः सन्तः अनाधृष्याः पापैरप्रधृष्याभवन्ति । येच तपसा यागादिरूपेण साधनेन स्वर्ययुः स्वर्गं यान्ति प्राप्नुवन्ति येच महः महत्तपः अन्यैः दुष्करं राजसूयाश्वमेधादिकं हिरण्यगर्भाद्युपासनंवा चक्रिरे कुर्वन्ति एतेषु प्रवर्तन्ते तेषु लोकेषु तांश्चित् तानेव तपस्विनः हेप्रेत अपिगच्छ ॥ २ ॥

अथ तृतीया—

ये॒युध्य॑न्तेप्र॒धने॑षु॒शूरा॑सो॒येत॑नू॒त्यजः॑ ।
येवा॑स॒हस्र॑दक्षिणा॒स्तांश्चि॑दे॒वापि॑गच्छतात् ॥ ३ ॥

ये । यु॒ध्य॑न्ते । प्र॒ऽध॒नेषु॑ । शूरा॑सः । ये । त॒नू॒ऽत्यजः॑ । ये ।
वा॒ । स॒हस्र॑ऽदक्षिणाः । तान् । चि॒त् । ए॒व । अपि॑ । ग॒च्छ॒ता॒त् ॥ ३ ॥

प्रधनेषु प्रकीर्णान्यस्मिन् धनानि भवन्तीति प्रधनाः संग्रामाः तेषु शूरासः शौर्यवन्तोये युध्यन्ते शत्रून् संप्रहरन्ति येच तनूत्यजः शरीराणां तत्र त्यक्तारोभवन्ति येवा येच सहस्रदक्षिणाः सहस्रदक्षिणान् क्रतून् अनुष्ठितवन्तः तान् सर्वानेव त्वमपिगच्छ येषूत्तमेषु लोकेषु ते निवसन्ति तं लोकं प्राप्नुहीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

ये॒चि॒त्पूर्व॑ऋ॒तसा॑प॒ऋ॒तावा॑नऋ॒ता॒वृधः॑ ।
पि॒तॄन्तप॑स्वतोयम॒तांश्चि॑दे॒वापि॑गच्छतात् ॥ ४ ॥

ये । चि॒त् । पूर्वे॑ । ऋ॒त॒ऽसापः॑ । ऋ॒त॒ऽवा॑नः । ऋ॒त॒ऽवृधः॑ । पि॒तॄन् ।
तप॑स्वतः । य॒म॒ । तान् । चि॒त् । ए॒व । अपि॑ । ग॒च्छ॒ता॒त् ॥ ४ ॥

येचित् येच पूर्वे पूर्वपुरुषाः ऋतसापः ऋतं सत्यं यज्ञंवा स्पृशन्तः अतएव ऋतावानः ऋतेन युक्ताः ऋतवृधः ऋतस्य वर्धकाश्च भवन्ति तपस्वतः तपसा युक्तान् तानेव पितॄन् हेयम नियत त्वं अपि गच्छ ॥ ४ ॥

अथ पंचमी—

सहस्रंणीथाःकवयोयेगोपायन्तिसूर्यम् ।
ऋषीन्तपंस्वतोयमतपोजाँअपिंगच्छतात् ॥ ५ ॥ १२ ॥

सहस्रंऽनीथाः । कवयः । ये । गोपायन्ति । सूर्यम् । ऋषीन् ।
तपंस्वतः । यम । तपःऽजान् । अपि । गच्छतात् ॥ ५ ॥ १२ ॥

सहस्रनीथाः सहस्रनयनाः कवयः क्रान्तदर्शिनः ये सूर्यममुमादित्यं गोपायन्ति रक्षन्ति तपस्वतः तपसा युक्तान् तपोजान् तपसः सकाशादेवोत्पन्नान् तान् ऋषीन् हेयम नियत त्वमपि गच्छ ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे द्वादशोवर्गः ॥ १२ ॥

अरायीतिपंचर्चं चतुर्थं सूक्तं भरद्वाजपुत्रस्य शिरिंबिठस्यार्षं आनुष्टुभं जपहोमादिभिरिदं सूक्तं अश्रीनाशकरं तत्राद्योपान्त्ययोः तादृशोर्थएव देवता द्वितीयातृतीये ब्राह्मणस्पत्ये पंचमो वैश्वदेवी । अनुक्रम्यतेहि—अरायिशिरिंबिठोभारद्वाजोऽलक्ष्मीघ्नं द्वितीयातृतीये ब्राह्मणस्पत्येन्त्यावैश्वदेवीति । गतोविनियोगः ।

तत्र प्रथमा—

अरांयिकाणेविकंटेगिरिंगंच्छसदान्वे ।
शिरिंबिंठस्यसत्वंभिस्तेभिंष्ट्वाचातयामसि ॥ १ ॥

अरांयि । काणें । विऽकंटे । गिरिम् । गच्छ । सदान्वे ।
शिरिम्बिंठस्य । सत्वंऽभिः । तेभिः । त्वा । चातयामसि ॥ १ ॥

हेअरायि अदायिनि दानविरोधिनि हेकाणे कुत्सितशब्दकारिणि कुत्सितदर्शने वा हेविकटे विकृतगमने विकृतांगि वा हेसदान्वे सदानोनुवे सर्वदा आक्रोशकारिणि दुर्भिक्षाधिदेवते गिरिं पर्वतं निर्जनदेशं गच्छ अस्मान् माबाधिष्ठाः शिरिंबिठस्य बिठमन्तरिक्षं शीर्यते बिठे अन्तरिक्षे इति शिरिंबिठोमेघः तस्य सत्वभिः अन्तर्वर्तमानैरुदकैस्तेभिः तैः त्वा त्वां चा

तयामसि चातयामः विनाशयामः यद्वा शिरिंबिठस्य एतत्संज्ञकस्य भरद्वाजपुत्रस्य तेभिः तैरनुष्ठितैः सत्वभिः कर्मभिः हेअलक्ष्मि त्वां विनाशयामः इतस्त्वमेव शीघ्रंगिरिं गच्छ ॥ १ ॥

अथद्वितीया—

चत्तोइतश्चत्तामुतःसर्वाभ्रूणान्यारुषी ।
अराय्यंब्रह्मणस्पतेतीक्ष्णशृङ्गोदृषन्निहि ॥ २ ॥

चत्तो इति । इतः । चत्ता । अमुतः । सर्वा । भ्रूणानि । आरुषी ।
अराय्यम् । ब्रह्मणः । पते । तीक्ष्णऽशृङ्ग । उत्ऽऋषन् । इहि ॥ २ ॥

सा अलक्ष्मीः इतोस्मात् लोकात् चत्तोचत्तैव अस्माभिर्नाशितैव अमुतोमुष्मादपि लोकात् चत्ता हिंसिता भवतु या अलक्ष्मीः सर्वा सर्वाणि भ्रूणानि गर्भजातानि सर्वासामोषधीनामंकुराणि यादुर्भिक्षाधिदेवता आरुषी आहंत्री भवति अराय्यं दानविरोधिनीं तां हेब्रह्मणस्पते मंत्रपालयितः देव हेतीक्ष्णश्रृंग तीक्ष्णतेजस्क उद्दषन् अस्मात्स्थानात् उद्गमयन् इहि गच्छ ॥ २ ॥

अथ तृतीया—

अदोयद्दारुप्लवतेसिन्धोःपारेअपूरुषम् ।
तदारभस्वदुर्हणोतेनगच्छपरस्तरम् ॥ ३ ॥

अदः । यत् । दारु । प्लवते । सिन्धोः । पारे । अपुरुषम् । तत् ।
आ । रभस्व । दुर्हनो इति दुःऽहनो । तेन । गच्छ । परःऽतरम् ॥ ३ ॥

अदोविप्रकृष्टदेशे वर्तमानं अपूरुषं निर्मात्रा पुरुषेण रहितं यद्दारु दारुमयं पुरुषोत्तमाख्यं देवताशरीरं सिंधोः पारे समुद्रतीरे प्लवते जलस्योपरिवर्तते तद्दारु हे दुर्हणोदुःखेन हननीय केनापि हन्तुमशक्य हेस्तोतः आरभस्व आलंबस्व उपास्वेत्यर्थः तेन दारुमयेन देवेन उपास्यमानेन परस्तरं अतिशयेन तरणीयं उत्कृष्टं वैष्णवं लोकं गच्छ । अपरआह—हे दुर्हणो दुःखेन हननीये दुष्टहनुयुक्तेवा हे अलक्ष्मि सिंधोः पारे समुद्रतीरप्रान्ते अपूरुषं पुरुषैर्जनैर्वियुक्तं अदः अस्मत्तोदूरेदेशेवर्तमानं यद्दारु दारुमयी नौःप्लवते तद्दारुआरभस्व परिगृहाण

गृहीत्वाच तेनदारुणा परस्तरं अतिशयेन तरणीयं ब्रह्मणस्पतिना प्रेरितासती द्वीपान्तरं गच्छ ॥ ३ ॥

षष्ठेहनि तृतीयसवने ब्रह्मशस्त्रे यद्धप्राचीरित्येषा । सूत्रितंच—कपृन्नरोयद्धप्राचीरजगन्तेतिचैतेइति ।

अथ चतुर्थी—

यद्धप्राचीरजंगन्तोरोमण्डूरधाणिकीः ।
हताइन्द्रस्यशत्रवःसर्वेबुद्बुदयाशवः ॥ ४ ॥

यत् । ह । प्राचीः । अजंगन्त । उरः । मण्डूरऽधाणिकीः ।
हताः । इन्द्रस्य । शत्रवः । सर्वे । बुद्बुदऽयाशवः ॥ ४ ॥

हेमंडूरधाणिकीः मंडूरवत् कुत्सितशब्दकारिण्यः मंदनस्य धनस्य धारयित्र्योवा अलक्ष्म्यःउरः उर्वी हिंसार्थः अस्मात्क्विपि राल्लोपइति वलोपः ततोजसि रूपमेतत् हिंसित्र्यो-यूयं प्राचीः प्रकर्षेण अंचन्त्यः प्रकृष्टगमनाः सत्यः यद्ध यदा खलु अजगन्त अगच्छत गमेर्लङि मध्यमबहुवचने छान्दसः शपः श्लुः तप्तनप्तनथनाश्चेति तस्य तनबादेशः अतएव ङित्वाभावात् अनुनासिकलोपोनभवति तदानीमेव सर्वे इन्द्रस्य शत्रवः बुद्बुदयाशवः यान्ति गच्छंतीति याः अश्नुवत इत्याशवः याश्चते आशवश्च याशवः बुद्बुदवत् यातारोव्यापनशीलाश्च सन्तः हतानष्टाआसन् ॥ ४ ॥

अथ पंचमी—

परीमेगामनेषतपर्यग्निमहृषत ।
देवेष्वक्रतश्रवःकइमाँआदधर्षति ॥ ५ ॥ १२ ॥

परि । इमे । गाम् । अनेषत । परि । अग्निम् । अहृषत । देवेषु ।
अक्रत । श्रवः । कः । इमान् । आ । दधर्षति ॥ ५ ॥ १२ ॥

इमे विश्वेदेवाः गां जात्यभिप्रायमेकवचनं पणिभिरपहृताः सर्वादेवगवीः पर्यनेषत पर्यनयत यद्वांगिरसः परिप्रापयन् ततोग्निं च पर्यहृषत परितोव्यहरन् यागार्थं तत्र तत्र गार्हपत्या-

दिरूपेण स्थापितवन्तइत्यर्थः एवं कृत्वा देवेषु यष्टव्येष्विन्द्रादिषु श्रवोन्नं अक्रत अकुर्वत कः शत्रुः असुरादिरिमान् विश्वान् देवान् आदधर्षति अभिभवितुं शक्नोति नकश्चिदित्यर्थः ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे त्रयोदशोवर्गः ॥ १३ ॥

अग्निंहिन्वंतुनइति पंचर्चं पंचमं सूक्तं अग्निपुत्रस्यकेतुनाम्नआर्षं गायत्रमाग्नेयं । तथा-चानुक्रान्तं—अग्निंकेतुराग्नेय आग्नेयं गायत्रमिति । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसीदं शस्यं । सूत्रितंच—अग्निंहिन्वंतुनः प्राग्नयेवाचमितिसूक्ते इति ।

तत्र प्रथमा—

अ॒ग्निं हि॑न्वन्तु नो॒ धियः॒ सप्ति॑मा॒शुमि॑वा॒जिषु॑ । तेन॑ जेष्म॒ धनं॑धनम् ॥ १ ॥

अ॒ग्निम् । हि॒न्व॒न्तु॒ । नः॒ । धियः॑ । सप्ति॑म् । आ॒शुम्ऽइ॑व ।
आ॒जिषु॑ । तेन॑ । जे॒ष्म॒ । धन॑म्ऽधनम् ॥ १ ॥

नोस्माकं धियः कर्माणि स्तुतयोवा अग्निं हिन्वन्तु प्रेरयन्तु यागार्थं उद्योजयन्तु प्रवर्धयन्तुवा हिगतौ वृद्धौच । तत्र दृष्टान्तः—आजिषु संग्रामेषु आशुमिव यथाआशुं शीघ्रगामिनं सप्तिं सर्पणशीलं अश्वं योद्धारः प्रेरयन्ति तद्वत् तेनाग्निना धनंधनं सर्वं धनं जेष्म वयं जयेम ॥ १ ॥

अथ द्वितीया—

यया॒ गा आ॒करा॑महे॒ सेन॑याग्ने॒ तवो॒त्या । तां नो॑ हिन्व म॒घत्त॑ये ॥ २ ॥

यया॑ । गाः । आ॒ऽकरा॑महे । सेन॑या । अग्ने॑ । तव॑ । ऊ॒त्या ।
ताम् । नः॒ । हि॒न्व॒ । म॒घत्त॑ये ॥ २ ॥

हेअग्ने सेनयाइनेन सहवर्तमानया सेनारूपया वा यया तवोत्या रक्षया गाआकरामहे आभिमुख्येन कुर्महे लभामहइत्यर्थः । तांऊतिं नोस्मान् हिन्व गमय किमर्थं मघत्तये धनस्य दानार्थं अस्माकं धनलाभायेत्यर्थः ॥ २ ॥

आभिप्लविकेषूक्थ्येषु प्रशास्तुः शस्त्रे आग्नेस्थूरमिति तृचोवैकल्पिकोनुरूपः । सूत्रितंच-आतेवत्सोमनोयमदाग्नेस्थूरंरयिंभरेति ।

तत्राद्या सूक्ते तृतीया–

आग्नेस्थूरंरयिंभरपृथुंगोमन्तमश्विनम्। अङ्धिखंवर्तयापणिम्॥३॥

आ। अग्ने। स्थूरम्। रयिम्। भर। पृथुम्। गोऽमन्तम्। अश्विनम्। अङ्धि। खम्। वर्तय। पणिम्॥ ३॥

हेअग्ने स्थूरं स्थूलं वृद्धं पृथु विस्तीर्णं गोमन्तं गोभिर्युक्तं अश्विनं अश्वैश्चोपेतं रयिं धनं आभर अस्मभ्यमाहर प्रयच्छ। खं अन्तरिक्षं अङ्धि वृष्ट्युदकैः सिंच यद्वा आत्मीयैस्तेजोभिः व्यंजय प्रकाशय पणिं वणिजमदातारं असुरं वा वर्तय इतोनिर्गमय यद्वा दाने प्रवर्तय॥ ३॥

अथ चतुर्थी–

अग्नेनक्षत्रमजरमासूर्यंरोहयोदिवि। दधज्ज्योतिर्जनेभ्यः॥ ४॥

अग्ने। नक्षत्रम्। अजरम्। आ। सूर्यम्। रोहयः। दिवि। दधत्। ज्योतिः। जनेभ्यः॥ ४॥

हेअग्ने नक्षत्रं नक्षति सततं गच्छतीति नक्षत्रः नक्षिगतौ अमिनक्षीत्यादिना त्रन्प्रत्ययः सततं गन्तारं अजरं जरारहितं सूर्यं सर्वस्य प्रेरकमादित्यं दिवि अन्तरिक्षे आरोहयः उपर्यवस्थितवानसि यद्वा नक्षत्रं कृत्तिकादिकं सूर्यंच दिव्यारोहयः किंकुर्वन् जनेभ्यः सर्वेभ्यः प्राणिभ्योव्यवहारार्थं ज्योतिः प्रकाशं दधत् विदधत् कुर्वन् यथा सर्वेषां प्रकाशो भवति तथोन्नते देशे सूर्यमगमयइत्यर्थः॥ ४॥

अथ पंचमी–

अग्नेकेतुर्विशामसिप्रेष्ठःश्रेष्ठउपस्थसत्। बोधास्तोत्रेवयोदधत्॥५॥१४॥

अग्ने। केतुः। विशाम्। असि। प्रेष्ठः। श्रेष्ठः। उपस्थऽसत्। बोध। स्तोत्रे। वयः। दधत्॥ ५॥ १४॥

हेअग्ने विशां प्रजानां यजमानानां केतुः केतयितासि ज्ञापयिताभवसि अतएव प्रेष्ठः प्रियतमः श्रेष्ठः प्रशस्यतमश्च भवसि सत्वं उपस्थसत् उपस्थाने यज्ञगृहे निषीदन् बोध अ-

स्मदीयं स्तोत्रं अवगच्छ किंकुर्वन् स्तोत्रे स्तुवते जनाय वयोन्नं दधत् विदधत् कुर्वन् प्रयच्छन् ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे चतुर्दशोवर्गः ॥ १४ ॥

इमानुकमिति पंचर्चं षष्ठं सूक्तं आप्त्यपुत्रस्य भुवनस्यार्षं भुवनपुत्रस्य साधनसंज्ञस्य वा वैश्वदेवं सर्वाद्विपदास्त्रिष्टुभः । तथाचानुक्रान्तं—इमानुभुवनआप्त्यः साधनोवाभौवनोवैश्वदेवं द्वैपदं त्रैष्टुभमिति । दशरात्रस्य द्वितीये छंदोमे वैश्वदेवशस्त्रे वैश्वदेवान्निविद्धानात्पूर्वमिदं शंसनीयं । सूत्रितंच—आयाहिवनसेमानुकं बभ्रुरेकइति द्विपदासूक्तानीति । षष्ठेहनि तृतीयसवने ब्राह्मणाच्छंसिनउक्थशस्त्रे आद्यस्तृचः स्तोत्रियः ततोद्वे अनुरूपार्थे । सूत्रितंच—ब्राह्मणाच्छंसिनइमानुकं भुवनासीषधामेतिपंचेति ।

तत्र प्रथमा—

इमानुकंभुवनासीषधामेन्द्रश्चविश्वेचदेवाः ॥ १ ॥

इमा । नु । कम् । भुवना । सीसधाम । इन्द्रः । च ।
विश्वे । च । देवाः ॥ १ ॥

इमा इमानि प्रदृश्यमानानि भुवना भुवनानि नु क्षिप्रं सीषधाम साधयामः वशीकुर्मः कमितिपूरकः । यद्वा इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधाम साधयन्तु पुरुषव्यत्ययः । इन्द्रश्च विश्वे सर्वे अन्ये देवाश्च स्तुत्या प्रीताइममर्थं साधयन्तु ॥ १ ॥

अथ द्वितीया—

यज्ञंचंनस्तन्वंचप्रजांचादित्यैरिन्द्रःसहचीकॢपाति ॥ २ ॥

यज्ञम् । च । नः । तन्वम् । च । प्रऽजाम् । च । आदित्यैः ।
इन्द्रः । सह । चीकॢपाति ॥ २ ॥

नोस्माकं यज्ञं ज्योतिष्टोमादिकं यागं तन्वं शरीरं च प्रजां पुत्रादिकांच आदित्यैरदितिपुत्रैरन्यैर्देवैः सह वर्तमानइन्द्रः चीकॢपाति कल्पयतु यज्ञादिकं स्वव्यापारसमर्थं करोतु ॥ २ ॥

अथ तृतीया—

**आदित्यैरिन्द्रः सगणो मरुद्भिरस्माकं भूत्वविता तनूनाम् ॥ ३ ॥**

**आदित्यैः । इन्द्रः । सऽगणः । मरुत्ऽभिः । अस्माकम् । भूतु । अविता । तनूनाम् ॥ ३ ॥**

आदित्यैरदितिपुत्रैः मित्रादिभिः मरुद्भिश्च सगणः सहितइन्द्रः अस्माकं तनूनां शरीराणां तनयानां वा अविताभूतु रक्षिताभवतु ॥ ३ ॥

अथ चतुर्थी—

**हत्वाय देवा असुरान्यदायन्देवा देवत्वमभिरक्षमाणाः ॥ ४ ॥**

**हत्वाय । देवाः । असुरान् । यत् । आयन् । देवाः । देवऽत्वम् । अभिऽरक्षमाणाः ॥ ४ ॥**

देवाइन्द्रादयः असुरान् क्षेप्तॄन् वृत्रादीन् हत्वाय हत्वा विनाश्य यद्यदा आयन् आगच्छन् स्वकीयं स्थानं प्राप्नुवन् तदानीं तेदेवाः देवत्वं आत्मीयं अमृतत्वं अभिरक्षमाणाः अभितः सर्वतो रक्षन्तोभूवन् बाधकाभावात् सर्वत्र प्रख्यापितवन्तइत्यर्थः ॥ ४ ॥

अथ पंचमी—

**प्रत्यञ्चमर्कमनयञ्छचीभिरादित्स्वधामिषिरां पर्यपश्यन् ॥ ५ ॥ १५ ॥**

**प्रत्यञ्चम् । अर्कम् । अनयन् । शचीभिः । आत् । इत् । स्वधाम् । इषिराम् । परि । अपश्यन् ॥ ५ ॥ १५ ॥**

शचीभिः कर्मभिः परिचरणात्मकैः सार्धं अर्कं अर्चनसाधनं स्तोत्रं प्रत्यंचं इन्द्रादीन् प्रत्यंचत् अनयन् स्तोतारः प्रापयन् यदैवं आदित् अनंतरमेव इषिरांगमनशीलां स्वधां वृष्ट्युदकं पर्यपश्यन् सर्वेजनाः परितः पश्यन्ति यद्वा इषिरां एषणीयां स्वधां अन्ननामैतत् हविर्लक्षणमन्नं सर्वेदेवाः परिपश्यन्ति ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे पञ्चदशोवर्गः ॥ १५ ॥

सूर्यमिति पञ्चर्चं सप्तमं सूक्तं सूर्यपुत्रस्य चक्षुःसंज्ञस्यार्षं सूर्यदेवत्यं गायत्रं। तथाचानुक्रान्तं—सूर्योनश्चक्षुः सौर्यः सौर्यंगायत्रमिति। आश्विनशस्त्रे सूर्योदयादुत्तरकालीने सौर्यकांडे इदं सूक्तं। सूत्रितंच—सूर्योनोदिवउदुत्यंजातवेदसमिति नवेति। दर्शपूर्णमासयोः स्रुगादापनात्पूर्वभाविनि जपे सूर्योनइत्येषा। सूत्रितंच—सूर्योनोदिवस्पातुनमोमहद्भ्योनमोअर्भकेभ्यइति।

तत्र प्रथमा—

**सूर्योनोदिवस्पातुवातोअन्तरिक्षात्। अग्निर्नःपार्थिवेभ्यः॥ १॥**

सूर्यः। नः। दिवः। पातु। वातः। अन्तरिक्षात्।
अग्निः। नः। पार्थिवेभ्यः॥ १॥

सूर्यः सर्वस्य प्रेरकः शोभनीयोवा देवः दिवः द्युलोकात् द्युलोकवर्तिनोजनान्नोस्मान् पातु रक्षतु वातो वायुश्चान्तरिक्षात् मध्यमस्थानगतात् बाधकात् अस्मान् रक्षतु तथा पृथिवीस्थानोग्निश्च पार्थिवेभ्यः पृथिव्यां वर्तमानेभ्यः शत्रुभ्योनोस्मान्रक्षतु॥ १॥

अथ द्वितीया—

**जोषासवितर्यस्यतेहरःशतंसवाँअर्हति।**
**पाहिनोदिद्युतःपतन्त्याः॥ २॥**

जोषं। सवितः। यस्यं। ते। हरः। शतम्। सवान्।
अर्हति। पाहि। नः। दिद्युतः। पतन्त्याः॥ २॥

हेसवितः सर्वस्य प्रेरकसूर्य जोष अस्मत्स्तुत्यादिकं सेवस्व यस्य ते तव हरः रसहरण शीलं तेजः शतंसवान् बहून् यज्ञान् प्रति अर्हति योग्यंभवति यद्वा प्रकाशनादिद्वारा पूजयति सत्वं नोस्मान् पतंत्याः निपतन्त्याः शत्रुभिरस्मासु क्षिप्यमाणायाः दिद्युतः वज्रनामैतत् द्योतमानायाः शक्तेरायुधात्पाहिरक्ष॥ २॥

अथ तृतीया—

**चक्षुर्नोदेवःसविताचक्षुर्नउतपर्वतः। चक्षुर्धातादधातुनः॥ ३॥**

चक्षुः । नः । देवः । सविता । चक्षुः । नः । उत । पर्वतः ।
चक्षुः । धाता । दधातु । नः ॥ ३ ॥

सविता प्रेरकोदेवः नोस्माकं चक्षुः प्रकाशकमिन्द्रियंइन्द्रियानुग्राहकं तेजोवा दधातु उतापिच पर्वतः इन्द्रसहचरः पर्वताख्योपि देवोनोस्माकं चक्षुर्दधातु धाता सर्वस्य विधाता आदित्यानामन्यतमश्च नोस्माकं चक्षुर्विदधातु ॥ ३॥

अथ चतुर्थी—

चक्षुर्नोधेहिचक्षुषेचक्षुर्विख्यैतनूभ्यः । संचेदंविचपश्येम ॥ ४ ॥

चक्षुः । नः । धेहि । चक्षुषे । चक्षुः । विऽख्यै । तनूभ्यः ।
सम् । च । इदम् । वि । च । पश्येम ॥ ४ ॥

नोस्माकं चक्षुषे रूपोपलब्धिकारणायेन्द्रियाय चक्षुःप्रकाशकंतदनुग्राहकं तेजः हेसूर्य धेहि विधेहि कुरु यद्वा नइतिव्यत्येन बहुवचनं चक्षुषे चक्षुःसंज्ञाय नोमह्यं चक्षुरिन्द्रियं वा तेजोवा हेसूर्य धेहि प्रयच्छ तनूभ्यः अस्माकं शरीरेभ्यः तनयेभ्योवा विख्यै विख्यानाय प्रकाशनाय चक्षुः त्वदीयं प्रकाशं विधेहि यतएवं तस्मात्कारणात् त्वदीयेन तेजसा वयंच इदं सर्वं जगत् संपश्येम सम्यक्द्रष्टारोभवेम विपश्येमच विविधंच सविशेषं द्रष्टारोभवेम ॥ ४ ॥

अथ पंचमी—

सुसंदृशंत्वावयंप्रतिपश्येमसूर्य । विपश्येमनृचक्षसः ॥ ५ ॥ १६॥

सुऽसन्दृशम् । त्वा । वयम् । प्रति । पश्येम । सूर्य । वि ।
पश्येम । नृऽचक्षसः ॥ ५॥ १६ ॥

हेसूर्य सुसंदृशं सुष्ठुसंद्रष्टारं त्वा त्वां वयं प्रतिपश्येम प्रत्येकं द्रष्टारोभूयास्म तथा नृचक्षसः नृभिर्मनुष्यैरस्माभिर्द्रष्टव्यान् पदार्थान् विपश्येम विद्रष्टारोभवेम यद्वा नृचक्षसः नृणां शत्रुमनुष्याणां हिंसकाः सन्तोवयं विशिष्टज्ञानाभवेम ॥ ५ ॥

॥ इष्टमस्याष्टमे षोडशोवर्गः ॥ १६ ॥

उदसाविति षळृचमष्टमं सूक्तं आनुष्टुभं पुलोमतनया शची स्वात्मानमनेनास्तौत् अतः सैव ऋषिः सैवदेवता । तथाचानुक्रान्तं—उदसौषट्पौलोमीशच्यात्मानंतुष्टावानुष्टुभमिति । विनियोगोलिंगादवगन्तव्यः । आपस्तंबस्तु सपत्नीनाशने सूर्योपस्थाने इदं सूक्तं विनियुक्तवान् । सूत्र्यतेहि—एतेनैव कामेनोत्तरेणानुवाकेन सदादित्यमुपतिष्ठतइति । अत्रैतेनेति प्रकृतं सपत्नीबाधनं परामृश्यते ।

तत्र प्रथमा—

उदसौसूर्योअगादुदयंमामकोभगः ।
अहंतद्विद्वलापतिमभ्यसाक्षिविषासहिः ॥ १ ॥

उत् । असौ । सूर्यः । अगात् । उत् । अयम् । मामकः । भगः ।
अहम् । तत् । विद्वला । पतिम् । अभि । असाक्षि । विऽससहिः ॥ १ ॥

असौ द्युलोकस्थः सूर्यः उदगात् उदयं प्राप्तवान् मामकोमदीयोभगोभजनीयोयमिन्द्रश्च सूर्यात्मना उदगात् । यद्वा मामकोभगोमदीयमिदं सौभाग्यमुदगात् तदुद्यतं सूर्यस्य तेजः विद्वला ज्ञातवती यद्वा पतिं भर्तारं विद्वला लब्धवती अहं विषासहिः विशेषेण अभिभवित्री सती अभ्यसाक्षि अभ्यभूवं सपत्नीरिति शेषः सहतेरभिभवार्थस्य लुङ्येतद्रूपं । यद्वा विषासहिः सपत्नीनामभिभवित्री सती पतिमभ्यसाक्षि भर्तारमपि अभ्यभूवं यथा मय्येव वशीकृतश्चिरं वर्तते तथा अकार्षमित्यर्थः ॥ १ ॥

अथ द्वितीया—

अहंकेतुरहंमूर्धाहमुग्राविवाचनी ।
ममेदनुक्रतुंपतिःसेहानायाउपाचरेत् ॥ २ ॥

अहम् । केतुः । अहम् । मूर्धा । अहम् । उग्रा । विऽवाचनी । मम ।
इत् । अनु । क्रतुम् । पतिः । सेहानायाः । उपऽआचरेत् ॥ २ ॥

अहं केतुः केतयित्री सर्वस्य ज्ञात्री भवामि अहं मूर्धा सर्वेष्ववयवेषु शिरइव प्रधानभूताच भवामि अहमुग्रा उद्गूर्णा सती विवाचनी विशेषेण पतिं वाचयित्री भवामि क्रोधावि-

ष्टमपि पतिं मयि सर्वदा प्रियवचनयुक्तं करोमीत्यर्थः सेहानायाः सपत्नीनामभिभवित्र्याः म-मेत् ममैव क्रतुं कर्म बुद्धिंवा अनुलक्ष्य पतिः पालयिता भर्ता उपाचरेत् उपागच्छेत् ना-न्यासां पत्नीनां ॥ २ ॥

अथ तृतीया—

ममंपुत्राःशंत्रुहणोथोमेदुहितावि॒राट् ।
उ॒ताहम॑स्मिसंज॒यापत्यौमे॒श्लोकंउत्त॒मः ॥ ३ ॥

मर्म । पु॒त्राः । श॒त्रु॒ऽहनः । अथो॒ इति॑ । मे॒ । दु॒हि॒ता ।
वि॒ऽराट् । उ॒त । अ॒हम् । अ॒स्मि॒ । स॒म्ऽज॒या । पत्यौ ।
मे॒ । श्लोकः । उ॒त्ऽत॒मः ॥ ३ ॥

ममैव पुत्रास्तनयाः शत्रुहणः शत्रूणां सपत्नीनां हन्तारोभवन्ति अथो अपिच मे मदीया दुहिता पुत्री विराट् विशेषेण राजमाना भवति उतापिच अहं संजया सम्यक्जेत्री सपत्नीनां अस्मि ताअभिभवामि अतोहेतोः पत्यौ भर्तरींद्रेमे ममश्लोकः उपश्लोकनीयं यशः उत्तमः उद्गततमं अतिशयेनोत्कृष्टं विद्यते ॥ ३ ॥

अथ चतुर्थी—

येनेन्द्रोह॒विषा॑कृ॒त्व्यभ॑वद्द्यु॒म्न्युं॑त्त॒मः ।
इ॒दंतद॑क्रिदे॒वाअसप॒त्नाकिला॑भुवम् ॥ ४ ॥

येन॑ । इन्द्रः॑ । ह॒विषा॑ । कृ॒त्वी । अभ॑वत् । द्यु॒म्नी । उ॒त्ऽत॒मः ।
इ॒दम् । तत् । अ॒क्रि॒ । दे॒वाः॒ । अ॒स॒प॒त्नाः । किल॑ । अ॒भु॒व॒म् ॥ ४ ॥

येन हविषा इन्द्रोमम भर्ता कृत्वी कर्मणां कर्ता अभवत् भवति तथा द्युम्नी द्युम्नं द्योत-मानं यशोन्नंवा तद्वानुत्तमः उत्कृष्टतमश्च येन हविषा भवति हेदेवाः स्तोतारऋत्विजः तदिदं हविः अक्रि अकारि जयार्थिभिर्भवद्भिः क्रियतां । यद्वा हेयष्टव्यादेवाः तदिदं हविः अक्रि अहमपि । करोतेर्लुङि मंत्रेघसेति च्लेर्लुक् अतएव कारणादहं असपत्नाकिल शत्रुरहिता खलु अ-भुवं अभूवं छांदसोह्रस्वः ॥ ४ ॥

अथ पंचमी–

**असपत्नासपत्नघ्नीजयन्त्यभिभूवरी ।**
**आवृक्षमन्यासांवर्चोराधोअस्थेयसामिव ॥ ५ ॥**

असपत्ना । सपत्नऽघ्नी । जयन्ती । अभिऽभूवरी । आ । अवृक्षम् । अन्यासाम् । वर्चः । राधः । अस्थेयसाम्ऽइव ॥ ५ ॥

असपत्ना अशत्रुका भवामि कुतइत्यतआह–सपत्नघ्नी शत्रूणां हंत्री अतएव जयन्तीजयं प्राप्नुवती अभिभूवरि अभिभवित्री भवतेरन्येभ्योपि दृश्यन्ते इति क्वनिप् वनोरचेति ङीब्रेफौ ईदृशी अहं अन्यासां सपत्नीनां वर्चः तेजः राधोधनंच आवृक्षं आसमन्तात् अवृक्षं अवृश्चिषं अच्छिदं व्रश्चतेर्लुङि ऊदित्वादिडभावे संयोगादिलोपे छान्दसं संप्रसारणं । तत्र दृष्टान्तः–अस्थेयसामिव अस्थिरतराणां शत्रूणां यथा धनं अप्रयत्नेन वृश्च्यते तथेत्यर्थः । स्थिरशब्दादीयसुनि प्रियस्थिरेत्यादिना स्थादेशः ॥ ५ ॥

अथ षष्ठी–

**समजैषमिमाअहंसपत्नीरभिभूवरी ।**
**यथाहमस्यवीरस्यविराजानिजनस्यच ॥ ६ ॥ १७ ॥**

सम् । अजैषम् । इमाः । अहम् । सऽपत्नीः । अभिऽभूवरी । यथा । अहम् । अस्य । वीरस्य । विऽराजानि । जनस्य । च ॥ ६ ॥ १७ ॥

अभिभूवरी अभिभवित्री अहं इमाः सपत्नीः समजैषं सम्यगभ्यभूवं यथायेन प्रकारेणाहं अस्य वीरस्येंद्रस्य तदीयपरिजनस्य च विराजानि विशेषेणराजमानाभवानि तथा समजैषमित्यर्थः ॥ ६ ॥

॥ इत्यष्टमस्याष्टमे सप्तदशोवर्गः ॥ १७ ॥

तीव्रस्येति पंचर्चं नवमं सूक्तं वैश्वामित्रस्य पूरणस्यार्षं त्रैष्टुभमैन्द्रं । तथाचानुक्रान्तं–तीव्रस्य पंचपूरणोवैश्वामित्रइति । तीव्रसोमाख्यस्य एकाहे इदं निष्केवल्यनिविद्धानं । सूत्रितंच–

क्तस्य वीरस्तीव्रस्याभिवयसइति मध्यंदिनइति । महाव्रतेपि माध्यन्दिनसवने ब्रह्मशस्त्रेपि एतत् सूक्तं । तथैव पंचमारण्यके सूत्रितं—तीव्रस्याभिवयसोअस्य पाहीति माध्मन्दिनइति ।

तत्र प्रथमा—

तीव्रस्याभिवयसोअस्यपाहिसर्वरथाविहरीइहमुञ्च ।
इन्द्रमात्वायजमानासोअन्येनिरीरमन्तुभ्यमिमेसुतासः ॥ १ ॥

तीव्रस्य । अभिऽवयसः । अस्य । पाहि । सर्वऽरथा । वि ।
हरी इति । इह । मुञ्च । इन्द्र । मा । त्वा । यजमानासः ।
अन्ये । नि । रीरमन् । तुभ्यम् । इमे । सुतासः ॥ १ ॥

तीव्रस्य तीक्ष्णस्य क्षिप्रं मदकरस्य अभिवयसः वयइत्यन्ननाम अभिगतं चरुपुरोडाशाद्यन्नं यस्य तादृशस्यास्य सोमस्य क्रियाग्रहणंकर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ईदृशं सोमं हेइन्द्र पाहि पिब । पिबतेश्छांदसः शपोलुक् तदर्थं सर्वरथा सरणशीलरथौ हरी अश्वौ इहास्मिन्यज्ञगृहे विमुंच रथाद्विसृज हेइन्द्र अस्मत्तोन्ये यजमानासो यजमानाः त्वा त्वां मानिरीरमन् नितरां मारमयन्तु वयमेव रमयामइत्यर्थः ततः तुभ्यं त्वदर्थमेव सुतासः सुताअभिषुताः इमे प्रत्यक्षेणोपलभ्यमानाः सोमावर्तन्ते ॥ १ ॥

अथ द्वितीया—

तुभ्यंसुतास्तुभ्यमुसोत्वासस्त्वांगिरःश्वात्र्याआह्वयन्ति ।
इन्द्रेदमद्यसवनंजुषाणोविश्वस्यविद्वाँइहपाहिसोमम् ॥ २ ॥

तुभ्यम् । सुताः । तुभ्यम् । ऊँ इति । सोत्वासः । त्वाम् । गिरः ।
श्वात्र्याः । आ । ह्वयन्ति । इन्द्र । इदम् । अद्य । सवनम् ।
जुषाणः । विश्वस्य । विद्वान् । इह । पाहि । सोमम् ॥ २ ॥

हेइन्द्र तुभ्यं त्वदर्थमेव सुताअभिषुताः सर्वे सोमाः सोत्वासः इतः परमभिषोतव्याश्च तुभ्यमु त्वदर्थमेव सुनोतेः कृत्यार्थे तवैकेनिति त्वन्प्रत्ययः श्वात्र्याः शुआशु शीघ्रं अतन्त्यः प्रवर्तमानाः गिरः स्तुतिरूपावाचश्च त्वामेवाह्वयन्ति आक्रोशयन्ति हेइन्द्र अद्यास्मिन्काले इदं

सवनं प्रातःसवनादिकं जुषाणः सेवमानः विश्वस्य सर्वस्य विद्वान् ज्ञाताल्वं इहास्मिन् यज्ञे सोमं पाहि पिब ॥ २ ॥

अथ तृतीया—

यउंशतामनसासोमंमस्मैसर्वंहृदादेवकामःसुनोति ।
नगाइन्द्रस्तस्यपरांददातिप्रशस्तमिच्चारुंमस्मैकृणोति ॥ ३ ॥

यः । उशता । मनसा । सोमम् । अस्मै । सर्वऽहृदा । देवऽकामः ।
सुनोति । न । गाः । इन्द्रः । तस्य । परा । ददाति ।
प्रऽशस्तम् । इत् । चारुम् । अस्मै । कृणोति ॥ ३ ॥

यः उशता कामयमानेन सर्वहृदा सर्वमविकलं हृदयं यस्य यद्वा सर्वेषां ऋत्विजां हृदयेन सामर्थ्यात् मत्वर्थोलक्ष्यते हृदयवता मनसा अस्माइन्द्राय देवकामः देवं इन्द्रं कामयमानो-यजमानः सोमं सुनोति अभिषुणोति इन्द्रः तस्य यजमानस्य गा न पराददाति परादानं विनाशः नविनाशयति अस्मै यजमानाय चारुं शोभनं अतएव प्रशस्तं इदित्यवधारणे प्रशंसनीयमेव धनं कृणोति करोति ॥ ३ ॥

अथ चतुर्थी—

अनुंस्पष्टोभवत्येषोअंस्ययोअस्मैरेवान्नसुनोतिसोमंम् ।
निरंरत्नौमघवातंदंधातिब्रह्मद्विषोंहन्त्यनांनुदिष्टः ॥ ४ ॥

अनुंऽस्पष्टः । भवति । एषः । अस्य । यः । अस्मै । रेवान् । न ।
सुनोति । सोमम् । निः । अरत्नौ । मघऽवा । तम् । दधाति ।
ब्रह्मऽद्विषः । हन्ति । अननुऽदिष्टः ॥ ४ ॥

अस्य यजमानस्य एषइन्द्रः अनुस्पष्टः दृष्टिगोचरोभवति योरेवान् धन वान् अस्माइन्द्राय सोमं सुनोत्यभिषुणोति मघवाधनोपेतइन्द्रः तं यजमानं अरत्नौ हस्ते निर्दधाति भयान्निष्कृष्य धारयति रक्षिता सन् धृत्वाच अननुदिष्टः तेनानुक्तः अप्रार्थितएवसन् ब्रह्मद्विषः ब्राह्मणद्वेष्टृन् शत्रून् हन्ति हिनस्ति ॥ ४ ॥

शुनासीरीये पर्वणि इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं इत्यस्य अश्वायन्तइ-त्येषा याज्या इन्द्रोदेवाशुनइति वैकल्पिकस्यापि हविषइयमेव याज्या । सूत्रितंच—अश्वाय-न्तोगव्यन्तोवाजयन्तः शुनंहुवेम मघवानमिन्द्रमिति ।

सैषा पंचमी—

अश्वायन्तोगव्यन्तोवाजयन्तोहवामहेत्वोपगन्तवाउ ।
आभूषन्तस्तेसुमतौनवायांवयमिन्द्रत्वाशुनंहुवेम ॥ ५ ॥ १८ ॥

अश्वऽयन्तः । गव्यन्तः । वाजयन्तः । हवामहे । त्वा । उपऽगन्तवै ।
ऊँ इति । आऽभूषन्तः । ते । सुऽमतौ । नवायाम् । वयम् ।
इन्द्र । त्वा । शुनम् । हुवेम ॥ ५ ॥ १८ ॥

अश्वायन्तः अश्वान् इच्छन्तः क्यचि अश्वाघस्यादित्यात्वं गव्यन्तोगाआत्मनइच्छन्तः वान्तोयिप्रत्यय इत्यवादेशः वाजयन्तः अग्नीन् वाजनेन शूर्पादिना प्रज्वलयन्तः वागतिगंधन-योः णिचि वोविधूनने इति जुगागमः अस्माच्छतरि अदुपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वे श-पश्च पित्वादनुदात्तत्वं ततोणिचएव स्वरः शिष्यते । अपरआह—वाजमन्नमात्मनइच्छन्तः इ-ति तदानीं अवग्रहाभावस्वरौ छान्दसौ द्रष्टव्यौ । एवंभूतावयं हेइन्द्र त्वां उपगन्तवै उपगन्तुं प्राप्तुं हवामहे आह्वयामहे गमेस्तुमर्थेसेसेनिति तवैप्रत्ययः गतिसमासे तवैचांतश्च युगपत् इति गतेः प्रकृतिस्वरत्वं उत्तरपदस्यान्तोदात्तत्वं उइतिपूरकः हेइन्द्र ते तव नवायां अभिनवायां प्र-शस्तायां सुमतौशोभनबुद्धौ आभूषन्तआसमन्ताद्भवंतोवर्तमानाः यद्वा आसमन्तात् भूषयन्तो-लंकुर्वंतः तवानुग्रहबुद्धौ वर्तमानावयं शुनं सुखकरं त्वां हुवेम आह्वयेम ॥ ५ ॥

॥ इत्यष्टमस्याष्टमेष्टादशोवर्गः ॥ १८ ॥

मुंचामीति पंचर्चं दशमं सूक्तं प्रजापतिपुत्रस्य यक्ष्मनाशनाख्यस्यार्षं अंत्यानुष्टुप् शिष्टा स्त्रिष्टुभः अनादेशेत्विन्द्रोवता तथाचानुक्रान्तं-मुंचामिप्राजापत्योयक्ष्मनाशनोराजयक्ष्मघ्नमंत्यानु ष्टुबिति हृदयरोगप्रमुखस्य व्याधिजातस्योपशमनार्थं अनेन सूक्तेन होतव्यं । सूत्र्यतेहि—व्या धितस्यातुरस्यक्ष्मगृहीतस्य वा षळाहुतिश्चरुर्मुंचामित्वाहविषाजीवनायकमित्येतेनेति ।

तत्र प्रथमा—

**मुञ्चामित्वाहविषाजीवनायकमज्ञातयक्ष्मादुतराजयक्ष्मात् ।**
**ग्राहिर्जग्राहयदिवैतदेनंतस्याइन्द्राग्नीप्रमुमुक्तमेनम् ॥ १ ॥**

मुञ्चामि । त्वा । हविषा । जीवनाय । कम् । अज्ञातऽयक्ष्मात् ।
उत । राजऽयक्ष्मात् । ग्राहिः । जग्राह । यदि । वा । एतत् । एनम् ।
तस्याः । इन्द्राग्नी इति । प्र । मुमुक्तम् । एनम् ॥ १ ॥

हेयक्ष्माभिभूत हविषा अनेन चरुणा साधनेन होमेन त्वा त्वां अज्ञातयक्ष्मात् अयमेतत्संज्ञइति अप्रज्ञातः शरीरगतोरोगोज्ञातयक्ष्मः तादृशात् रोगात् मुंचामि विश्लेषयामि किमर्थं जीवनाय कं जीवनार्थं इहलोके चिरकालावस्थानायेत्यर्थः कमितिपूरकः उतापिच राजयक्ष्मात् यक्ष्माणां राजा यक्ष्मरोगोराजयक्ष्मः राजदंतादित्वादुपसर्जनस्य परनिपातः तस्मादपि त्वां मुंचामि यदिवा यदिच एतत् एतस्मिन् समये एनं व्याधितं पुरुषं ग्राहिः ग्रहणशीलाग्रहरूपा देवता जग्राह गृहीतवती तस्यादेवतायाः सकाशात् हेइंद्राग्नी एनं प्रमुमुक्तं प्रमोचयतं ॥१॥

अथ द्वितीया—

**यदिक्षितायुर्यदिवापरेतोयदिमृत्योरन्तिकंनीतएव ।**
**तमाहरामिनिर्ऋतेरुपस्थादस्पार्षमेनंशतशारदाय ॥ २ ॥**

यदि । क्षितऽआयुः । यदि । वा । पराऽइतः । यदि । मृत्योः । अन्तिकम् ।
निऽइतः । एव । तम् । आ । हरामि । निःऽऋते । उपऽस्थात् ।
अस्पार्षम् । एनम् । शतऽशारदाय ॥ २ ॥

यदि सरोगग्रस्तः क्षितायुः क्षीणायुर्भवति यदिवा परेतः अस्माल्लोकात् परागतोभवति यदिच मृत्योर्वैवस्वतस्य अंतिकं निकटं नीतः नितरां प्राप्तएव भवति एवंभूतमपि तं पुरुषं निर्ऋतेः पापदेवतायाः आयुषःक्षयकारिण्याः उपस्थादुपस्थानात् आहरामि आनाययामि आवर्तयामि आहृत्य चैनं शतशारदाय शतसंवत्सरजीवनार्थं अस्पार्षं प्रबलं करोमि स्पृप्रीतिबलनयोः ॥ २ ॥

अथ तृतीया—

सहस्राक्षेणंशतशारदेनशतायुषाहविषाहार्षमेनम् ।
शतंयथेमंशरदोनयातीन्द्रोविश्वस्यदुरितस्यपारम् ॥ ३ ॥

सहस्रऽअक्षेणं । शतऽशारदेन । शतऽआयुषा । हविषां । आ ।
अहार्षम् । एनम् । शतम् । यथां । इमम् । शरदः । नयाति ।
इन्द्रः । विश्वस्य । दुःऽइतस्यं । पारम् ॥ ३ ॥

सहस्राक्षेण सहस्रमिति बहुनाम सहस्रमक्षीणि चक्षूंषि यस्य हविषः फलत्वेन विद्यन्ते तत्सहस्राक्षं बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् समासान्तः शरदः संबंधी शारदः संवत्सरः शतं शारदायस्य तत्तथोक्तं बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अतएव शतायुषा शतसंवत्सरपरिमितं आयुर्जीवनं फलभूतं यस्य तादृशेन हविषा यद्वा सहस्राक्षइन्द्रः तेन शतशारदेन शरदां संवत्सराणां शतस्य दातृत्वेन संबंधिना कर्त्रा शतायुषा हविषा करणभूतेन एनं यक्ष्मगृहीतं आहार्षं रोगादनैषं यथा येन प्रकारेण इमं पुरुषं शतं शरदः संवत्सरान् अत्यन्तसंयोगे द्वितीया एतावन्तं कालं इन्द्रोविश्वस्य सर्वस्य दुरितस्य दुःखस्य पारं अवसानं दुःखराहित्यं नयाति नयेत् तथा अहार्षमित्यर्थः ॥ ३ ॥

अथ चतुर्थी—

शतंजीवशरदोवर्धमानःशतंहेमन्ताञ्छतमुंवसन्तान् ।
शतमिन्द्राग्नीसंविताबृहस्पतिःशतायुषाहविषेमंपुनर्दुः ॥ ४ ॥

शतम् । जीव । शरदः । वर्धमानः । शतम् । हेमन्तान् । शतम् ।
ऊँ इति । वसन्तान् । शतम् । इन्द्राग्नी इति । सविता । बृहस्पतिः ।
शतऽआयुषा । हविषां । इमम् । पुनः । दुः ॥ ४ ॥

हेयक्ष्माद्विमुक्त वर्धमानः अहरहरभिवृद्धिं प्राप्नुवन् त्वं शतं शरदः शतसंख्याकान् शरदृतून् जीव प्राणान् धारय पूर्ववदत्यंतसंयोगे द्वितीया शतंहेमन्तान् हेमंतर्तूंश्च जीव शतं वसंतांश्च

उशब्दः समुच्चये अपिच इंद्राग्नी इन्द्रश्चाग्निश्च सविता प्रेरकोदेवश्च बृहस्पतिः बृहतां देवानां पालयिता देवश्च शतायुषा शतसंवत्सरपरिमितस्यायुषोहेतुभूतेन हविषा तर्प्यमाणाः सन्तः इमं जनं पुनर्दुः पुनरस्मभ्यं प्रादुः ॥ ४ ॥

अथ पंचमी—

आहार्षंत्वाविदंत्वापुनरागाःपुनर्नव ।
सर्वाङ्गसर्वंतेचक्षुःसर्वमायुश्चतेविदम् ॥ ५ ॥ १९ ॥

आ । अहार्षम् । त्वा । अविदम् । त्वा । पुनः । आ । अगाः ।
पुनःऽनव । सर्वऽअङ्ग । सर्वम् । ते । चक्षुः । सर्वम् ।
आयुः । च । ते । अविदम् ॥ ५ ॥ १९ ॥

हेव्याधिगृहीत त्वा त्वां आहार्षं मृत्योः सकाशादाहृतवानस्मि अतएव त्वा त्वां अविदं अलप्सि हेपुनर्नव पुनरभिनव पुनरागाः पुनरस्मत्समीपमागच्छ हेसर्वांग सर्वैरविकलैरंगैः उपेत ते तव सर्वं चक्षुः उपलक्षणमेतत् इन्द्रियवर्गं सकलं अविदं लब्धवानस्मि ते तवायुर्जीवनंचसर्वं संपूर्णमविदं ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे एकोनविंशोवर्गः ॥ १९ ॥

ब्रह्मणाग्निरिति षळृचमेकादशं सूक्तं आनुष्टुभं ब्रह्मपुत्रोरक्षोहानामऋषिः अपप्रसवस-माधानरूपस्य गर्भरक्षणस्य प्रतिपाद्यत्वात्तद्देवताकमिदं । अनुक्रान्तंच—ब्रह्मणाषड्ब्राह्मोरक्षोहा गर्भसंस्रावे प्रायश्चित्तमानुष्टुभं हीति । विनियोगोलिंगादवगन्तव्यः ।

तत्र प्रथमा—

ब्रह्मणाग्निःसंविदानोरक्षोहाबाधतामितः ।
अमीवायस्तेगर्भंदुर्णामायोनिमाशये ॥ १ ॥

ब्रह्मणा । अग्निः । सम्ऽविदानः । रक्षःऽहा । बाधताम् । इतः ।
अमीवा । यः । ते । गर्भम् । दुःऽनामा । योनिम् । आऽशये ॥ १ ॥

ब्रह्मणा मंत्रेण सह संविदानः ऐकमत्यं प्राप्तोरक्षोहा रक्षसां हन्ता अग्निः इतः अस्माव स्थानात् राक्षसादिकं बाधतां हिनस्तु योराक्षसः अमीवा रोगरूपः सन् ते तव गर्भमाशये आशेते लोपस्तआत्मनेपदेष्विति तल्लोपः हन्तुं प्राप्नोति दुर्नामार्शआख्योरोगः तद्रूपः सन् यश्चते तव योनिं रेतसआधानं गर्भस्थानं आशेते तं बाधतामित्यन्वयः ॥ १ ॥

अथ द्वितीया—

**यस्तेगर्भममीवादुर्णामायोनिमाशये ।**
**अग्निष्टंब्रह्मणासहनिष्क्रव्यादमनीनशत् ॥ २ ॥**

यः । ते । गर्भम् । अमीवा । दुःऽनामा । योनिम् । आऽशये ।
अग्निः । तम् । ब्रह्मणा । सह । निः । क्रव्यऽअदम् । अनीनशत् ॥२॥

गतः पूर्वोर्धर्चः तं क्रव्यादं मांसाशिनं राक्षसादिकं ब्रह्मणा सहितोग्निः निःशेषेण अनीनशत् नाशयतु ॥ २ ॥

अथ तृतीया—

**यस्तेहन्तिपतयन्तंनिषत्स्नुंयःसरीसृपम् ।**
**जातंयस्तेजिघांसतितमितोनाशयामसि ॥ ३ ॥**

यः । ते । हन्ति । पतयन्तम् । निऽसत्स्नुम् । यः । सरीसृपम् ।
जातम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ३ ॥

हेयोषित् ते तव गर्भाशये पतयन्तं पतन्तं रेतोरूपेण गच्छन्तं तदनन्तरं तत्र निषत्स्नुं निषीदन्तंच गर्भं योराक्षसादिर्हंति हिनस्ति ततोमासत्रयादूर्ध्वं प्राप्तसर्वावयवं सरीसृपं सर्पणशीलंच गर्भं योहन्ति जातं दशसु मासेषूत्पन्नं ते तव शिशुं योराक्षसादिर्जिघांसति हन्तुमिच्छति तमितः स्थानान्नाशयामसि नाशयामः ॥ ३ ॥

अथ चतुर्थी—

**यस्तऊरूविहरत्यन्तरादम्पतीशये ।**
**योनिंयोअन्तरारेह्लितमितोनाशयामसि ॥ ४ ॥**

यः । ते । ऊरू इति । विऽहरति । अन्तरा । दम्पती इति दम्ऽपती ।
शये । योनिम् । यः । अन्तः । आऽरेळ्हि । तम् ।
इतः । नाशयामसि ॥ ४ ॥

हेयोषित् ते तव ऊरू पादमूलौ योराक्षसादिर्विहरति गर्भघाताय विश्लिष्टौ करोति दंपती अन्तरा जायापत्योर्मध्ये गर्भहननार्थं यश्च शये शेते यश्च योनिमन्तः प्रविश्य आरेळ्हि निषिक्तं रेतोजिह्वया आस्वादयति भक्षयतीत्यर्थः । लिहआस्वादने आदादिकः कपिलकादित्वाल्लत्वविकल्पः तं सर्वमितोनाशयामः ॥ ४ ॥

अथ पंचमी—

यस्त्वाभ्रातापतिर्भूत्वाजारोभूत्वानिपद्यते ।
प्रजांयस्तेजिघांसतितमितोनाशयामसि ॥ ५ ॥

यः । त्वा । भ्राता । पतिः । भूत्वा । जारः । भूत्वा । निऽपद्यते ।
प्रऽजाम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ५ ॥

हेयोषित् योराक्षसोभ्राता भ्रातृरूपोभूत्वा पतिः भर्तृरूपोवा भूत्वा त्वां निपद्यते अभिगच्छति अथवा जारः उपपतिरूपोवा भूत्वाभिगच्छति एवंभूतोयोराक्षसादिः ते तव प्रजां जिघांसति हन्तुमिच्छति । स्पष्टमन्यत् ॥ ५ ॥

अथ षष्ठी—

यस्त्वास्वप्नेनतमसामोहयित्वानिपद्यते ।
प्रजांयस्तेजिघांसतितमितोनाशयामसि ॥ ६ ॥ २० ॥

यः । त्वा । स्वप्नेन । तमसा । मोहयित्वा । निऽपद्यते । प्रऽजाम् ।
यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ६ ॥ २० ॥

हेयोषित् योराक्षसादिः स्वप्नेन स्वप्नावस्थायां तमसा निद्रया त्वा त्वां मोहयित्वा मूढतां प्रापय्य निपद्यते गर्भघाताय गच्छति अन्यद्गतम् ॥ ६ ॥

॥ इत्यष्टमस्याष्टमे विंशोवर्गः ॥ २० ॥

अक्षीभ्यामिति षळृचं द्वादशं सूक्तं आनुष्टुभं कश्यपगोत्रोत्पन्नोविवृहानाम ऋषिः यक्ष्मनाशनप्रतिपाद्यत्वात्तद्देवताकं कृत्स्नं सूक्तं। अनुक्रान्तंच—अक्षीभ्यां विवृहाकाश्यपोयक्ष्मघ्नमिति। लैंगिकोविनियोगः।

तत्र प्रथमा—

अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि।
यक्ष्मंशीर्षण्यंमस्तिष्कांज्जिह्वायाविर्वृहामिते॥ १॥

अक्षीभ्याम्। ते। नासिकाभ्याम्। कर्णाभ्याम्। छुबुकात्।
अधि। यक्ष्मम्। शीर्षण्यम्। मस्तिष्कात्। जिह्वायाः।
वि। वृहामि। ते॥ १॥

हेयक्ष्मगृहीत ते तव अक्षीभ्यां चक्षुभ्यां यक्ष्मरोगं विवृहामि उद्धरयामि विश्लेषयामीत्यर्थः ईचद्विवचनइति अक्षशब्दस्य ईकारान्तादेशः सचोदात्तः तथा नासिकाभ्यां घ्राणेन्द्रियाच्च कर्णाभ्यां श्रोत्राभ्यां च छुबुकात् चुबुकात् ओष्ठस्याधःप्रदेशाच्च अधिर्निरर्थकः अपिच शीर्षण्यं शिरसिभवोरोगः शीर्षण्यः भवेछन्दसीति यत् येचतद्धिते इति शिरसः शीर्षन्नादेशः येचाभावकर्मणोरिति प्रकृतिभावः ईदृशं यक्ष्मं रोगं ते तव मस्तिष्कात् शिरसोन्तरवस्थितोमांसविशेषोमस्तिष्कः तस्मात् जिह्वाया रसनायाश्च सकाशात् विवृहामि उद्धरयामि पृथक्करोमीत्यर्थः। वृहू उद्यमनइति धातुः॥ १॥

अथ द्वितीया—

ग्रीवाभ्यंस्तउष्णिहाभ्यःकीकंसाभ्योअनूक्यात्।
यक्ष्मंदोषण्य१मंसाभ्यांबाहुभ्यांविर्वृहामिते॥ २॥

ग्रीवाभ्यः। ते। उष्णिहाभ्यः। कीकंसाभ्यः। अनूक्यात्।
यक्ष्मम्। दोषण्यम्। अंसाभ्याम्। बाहुऽभ्याम्।
वि। वृहामि। ते॥ २॥

हेव्याधिगृहीत उष्णिहाभ्यः ऊर्ध्वाभिमुखं स्निग्धाभ्यः उत्स्नाताभ्योवा स्नायुभ्यः ग्रीवाभ्यः गलगताभ्योधमनीभ्यः ते तव यक्ष्मं विवृहामि तथा कीकसाभ्यः अस्थिभ्यः अनूक्यात् अस्थिसंधेश्च यक्ष्मं विवृहामि उच समवाये अनुउच्यते समवेयते इति अस्थ्नोः संधिरनूक्यः ऋहलोर्ण्यत् चजोः कुघिण्ण्यतोरिति कुत्वं तित्स्वरितः। अपिच दोष्णोर्भवं दोषण्यं पूर्ववद्यति पद्न्नित्यादिना दोःशब्दस्य दोषन्नादेशः पूर्ववत्प्रकृतिभावः तमपि यक्ष्मं रोगं ते तव अंसाभ्यां बाहुभ्यांच विवृहामि हस्तयोरूर्ध्वभागावंसौ अधोभागौ बाहू ॥ २ ॥

अथ तृतीया—

आंत्रेभ्यंस्तेगुदाभ्योवनिष्ठोर्हृदयादधि ।
यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योविवृहामिते ॥ ३ ॥

आन्त्रेभ्यः । ते । गुदाभ्यः । वनिष्ठोः । हृदयात् । अधि । यक्ष्मम् ।
मतस्नाभ्याम् । यक्नः । प्लाशिऽभ्यः । वि । वृहामि । ते ॥ ३ ॥

हेयक्ष्माभिभूत ते तव आंत्रेभ्यः अत्रं पुरीतत् अन्नपानयोराधानभूतं तत्संधिभ्यः स्नायुभ्यः गुदाभ्यः याभिर्नाडीभिः अन्नरसः समानवायुना धातुषु नीयते ताभ्योनाडीभ्यश्च सकाशात् यक्ष्मं विवृहामि तथावनिष्ठोः स्थविरांत्रात् हृदयादधि हृत्पुंडरीकाच्च यक्ष्मं विवृहामि अपिच ते तव मतस्नाभ्यां मतस्नौ पार्श्वयोर्वर्तमानौ आम्रफलाकृती वृक्कौ ताभ्यां यक्नः हृदयसमीपे वर्तमानः कालमांसविशेषोयकृत् तस्माच्च पद्दन्नित्यादिना यकृच्छब्दस्य यकन्नादेशः प्लाशिभ्यः अन्येभ्योपि क्लोमप्लीहादिसंज्ञेभ्यश्च मांसेभ्यश्च यक्ष्मं रोगं विवृहामि उत्क्षिपामि ॥ ३ ॥

अथ चतुर्थी—

ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्याम् ।
यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते ॥ ४ ॥

ऊरुऽभ्याम् । ते । अष्ठीवत्ऽभ्याम् । पार्ष्णिऽभ्याम् । प्रऽपदाभ्याम् ।
यक्ष्मम् । श्रोणिऽभ्याम् । भासदात् । भंससः । वि । वृहामि । ते ॥ ४ ॥

हेरुग्ण ते तव ऊरुभ्यां अष्ठीवद्भ्यां जानुभ्यां च यक्ष्मं विवृहामि तथा पार्ष्णिभ्यां पादस्यापरभागाभ्यां प्रपदाभ्यां पादाग्राभ्यां च यक्ष्मं विवृहामि अपिच श्रोणिभ्यां जंघनाभ्यां च यक्ष्मं विवृहामि तथा भासदात् भसत् कटिप्रदेशः सत्संबंधात् भंससः भासमानात् पायोः ते तव यक्ष्मं विवृहामि ॥ ४ ॥

अथ पंचमी—

**मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ।**
**यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ ५ ॥**

**मेहनात् । वनम्ऽकरणात् । लोमऽभ्यः । ते । नखेभ्यः । यक्ष्मम् ।**
**सर्वस्मात् । आत्मनः । तम् । इदम् । वि । वृहामि । ते ॥ ५ ॥**

वनंकरणात् वनमुदकं शरीरं तत्क्रियते विसृज्यते येन तद्वनंकरणं तस्मात् मेहनात् मेढ्रात् ते तव लोमभ्योनखेभ्यश्च यक्ष्मं विवृहामि किंबहुना इदं इदानीं तं यक्ष्मं सर्वस्मादात्मनः कृत्स्नादेव ते तव शरीरात् विवृहामि ॥ ५ ॥

अथ षष्ठी—

**अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ।**
**यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ ६ ॥ २१ ॥**

**अङ्गात्ऽअङ्गात् । लोम्नःऽलोम्नः । जातम् । पर्वणिऽपर्वणि ।**
**यक्ष्मम् । सर्वस्मात् । आत्मनः । तम् । इदम् ।**
**वि । वृहामि । ते ॥ ६ ॥ २१ ॥**

अंगादंगात् सर्वेभ्योङ्गेभ्यः लोम्नोलोम्नः सर्वेभ्योलोमभ्यश्च पर्वणिपर्वणि अवयवानां संधौ जातं उत्पन्नं यक्ष्मं विवृहामि । अन्यद्गतम् ॥ ६ ॥

॥ इत्यष्टमस्याष्टमे एकविंशोवर्गः ॥ २१ ॥

अपेहीति पंचर्चं त्रयोदशं सूक्तं आंगिरसस्य प्रचेतसआर्षं तृतीयात्रिष्टुप् पंचमी पंक्तिः

दुःस्वमनाशनं देवता । तथाचानुक्रान्तम्—अपेहि पंचप्रचेतादुःस्वमघ्नं पंक्त्यन्तं त्रिष्टुम्मध्य-मिति । लैंगिकोविनियोगः ।

तत्र प्रथमा—

अपेहिमनसस्पतेपंक्रामपरश्चर ।
परोनिर्ऋत्याआचक्ष्वबहुधाजीवतोमनः ॥ १ ॥

अप । इहि । मनसः । पते । अप । क्राम । परः । चर । परः ।
निःऽऋत्यै । आ । चक्ष्व । बहुधा । जीवतः । मनः ॥ १ ॥

हेमनसस्पते स्वभावस्थस्य मनसः स्वामिन् दुःस्वमाधिदेव अपेहि अपगच्छ स्वभा-वस्थावतोमत्तोनिर्गच्छ निर्गत्यच अपक्रम देशान्तरं गन्तुं पादौ विक्षिप दूरदेशं गच्छेत्यर्थः अपक्रम्यच परः परस्तात् विप्रकृष्टेदेशे चर यथेच्छं वर्तस्व अपिच निर्ऋत्यै पापदेवतायै परः परस्तात् वर्तमानायै आचक्ष्व वयं नबाधनीयाइति प्रब्रूहि जीवतः मम मनः बहुधा बहुप्रकारं भवति भोक्तव्येषु बहुषु विषयेषु उत्सुकं सद्वर्तते अतः तद्विनाशकं दुःस्वमदर्शनं नश्यत्वि-त्यर्थः ॥ १ ॥

अथ द्वितीया—

भद्रंवैवरंवृणतेभद्रंयुंजन्तिदक्षिणम् ।
भद्रंवैवस्वतेचक्षुर्बहुत्राजीवतोमनः ॥ २ ॥

भद्रम् । वै । वरम् । वृणते । भद्रम् । युंजन्ति । दक्षिणम् । भद्रम् ।
वैवस्वते । चक्षुः । बहुऽत्रा । जीवतः । मनः ॥ २ ॥

भद्रंवै शोभनमेव वरं वरणीयं दुःस्वमविनाशरूपं फलं वृणते सर्वेजनाः प्रार्थयन्ते द-क्षिणं प्रवृद्धं भद्रं शोभनं तत्फलं युंजंति प्राप्नुवन्तिच वैवस्वते विवस्वतः पुत्रे यमे विषये भद्रं शोभनमेव चक्षुः दर्शनं अहं प्रार्थये दुःस्वमाधिदेवोवैस्वतोस्मान् माबाधतां भद्रमेव दर्शनं इ-हलोके अवस्थानलक्षणं करोत्वित्यर्थः । बहुत्रा बहुषुहि विषयेषु जीवतोममनोवर्तते ॥ २ ॥

अथ तृतीया—

**यदाशसानिःशसाभिशसोपारिमजाग्रतोयत्स्वपन्तः ।
अग्निर्विश्वान्यपदुष्कृतान्यजुष्टान्यारेअस्मद्दधातु ॥ ३ ॥**

यत् । आऽशसा । निःऽशसा । अभिऽशसा । उपऽआरिम ।
जाग्रतः । यत् । स्वपन्तः । अग्निः । विश्वानि । अप ।
दुःऽकृतानि । अजुष्टानि । आरे । अस्मत् । दधातु ॥ ३ ॥

यद्दुष्कृतं आशसा आशंसनेनाभिलाषेण जाग्रतोजागरणावस्थायां वर्तमानावयं उपारिम उपगतवन्तः स्म यच्च स्वपन्तः स्वप्नावस्थायां प्राप्ताः उपगतवन्तः स्म तथा निःशसा निःशंसनेन निर्गताभिलाषेण अभिशसाभिगताभिलाषेण च कारणेन अवस्थाद्वये यत् दुष्कृतं उपागच्छेम तानि विश्वानि सर्वाणि अजुष्टानि असेव्यानि अप्रियाणि वा दुष्कृतानि दुष्कर्माणि अग्निः अस्मदारे अस्मत्तोदूरदेशे अपदधातु अपकृष्य स्थापयतु ॥ ३ ॥

अथ चतुर्थी—

**यदिन्द्रब्रह्मणस्पतेभिद्रोहंचरामसि ।
प्रचेतानआङ्गिरसोद्विषतांपात्वंहसः ॥ ४ ॥**

यत् । इन्द्र । ब्रह्मणः । पते । अभिऽद्रोहम् । चरामसि । प्रऽचेताः ।
नः । आंगिरसः । द्विषताम् । पातु । अंहसः ॥ ४ ॥

हेइन्द्र हेब्रह्मणस्पते युवयोर्विषये यदभिद्रोहं अभितोद्रोहं पापं दुःस्वप्नकारणं चरामसि आचरामः कुर्मः तस्मादभिद्रोहादस्मान्रक्षतमिति शेषः ।अपिच आंगिरसः अंगिरोभिः स्तोतृभिः सबांधवः प्रचेताः प्रकृष्टज्ञानोवरुणश्च द्विषतां द्वेष्टॄणां अंहसः तत्कर्तृकात् अस्मद्विषयात् पापान्नोस्मान् पातु रक्षतु यद्वा विभक्तिव्यत्ययः आंगिरसं अंगिरोगोत्रं प्रचेतसमृषिं नः वचनव्यत्ययः मां द्विषतां अंहसः पातु प्रकृतत्वात् इन्द्रइति गम्यते ॥ ४ ॥

अथ पंचमी—

अजैष्माद्यासनाम चाभूमानागसो वयम् ।
जाग्रत्स्वप्नः संकल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥५॥२२

अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयम् ।
जाग्रत्ऽस्वप्नः । सम्ऽकल्पः । पापः । यम् । द्विष्मः । तम् । सः ।
ऋच्छतु । यः । नः । द्वेष्टि । तम् । ऋच्छतु ॥ ५ ॥ २२ ॥

अद्यास्मिन्काले अजैष्म जेतव्यानि सर्वाणि जितवंतोभूम दुःस्वप्नस्य नष्टत्वात् तदनन्तरं असनामच संभक्तव्यानिच समभजाम तथा वयं अनागसः अनपराधाश्चाभूम जाग्रत्स्वप्नावस्थयोः संबंधी पापः पापफलरूपः सः संकल्पोदुःस्वप्नाध्यवसायोयं शत्रुं वयं द्विष्मः तमृच्छतु प्राप्नोतु यश्च नोस्मान् द्वेष्टि तमृच्छतु प्राप्नोतु ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे द्वाविंशोवर्गः ॥ २२ ॥

देवाइति पंचर्चं चतुर्दशं सूक्तं निर्ऋतिपुत्रस्य कपोतस्यार्षं त्रैष्टुभं वैश्वदेवं । तथाचानुक्रान्तं—देवानैर्ऋतः कपोतः कपोतोपहतौ प्रायश्चित्तमिदं वैश्वदेवमिति । कपोतोयदि गृहं प्रविशेत्तदानेनसूक्तेन होतव्यं । सूत्र्यतेहि—कपोतश्चेदगारमुपहन्यादनुपतेद्वा देवाः कपोतइति प्रत्यृचं जुहुयात् जपेद्वेति ।

तत्र प्रथमा—

देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥१॥

देवाः । कपोतः । इषितः । यत् । इच्छन् । दूतः । निःऽऋत्याः ।
इदम् । आऽजगाम । तस्मै । अर्चाम । कृणवाम । निःऽकृतिम् ।
शम् । नः । अस्तु । द्विऽपदे । शम् । चतुःऽपदे ॥ १ ॥

हेदेवाः इषितः प्राप्तः निर्ऋत्याः पापदेवतायाः दूतोनुचरः कपोतः यद्बाधनमिच्छन् अभिलषन् इदमस्मदीयं गृहं आजगाम प्राप्नोत् तस्मै बाधनाय तद्बाधननिवृत्त्यर्थं अर्चाम यु-

ष्मान् हविषा पूजयाम ततोनिष्कृतिं कपोतप्रवेशजन्यस्य दोषस्य परिहृतिं कृणवाम अनेन हविर्दानेन करवाम अतोनोस्माकं द्विपदे पुत्राय शं सुखं अस्तु चतुष्पदे गवाश्वप्रभृतयेच शं सुखमस्तु ॥ १ ॥

अथ द्वितीया—

शिवःकपोतइषितोनोअस्त्वनागादेवाःशकुनोगृहेषु ।
अग्निर्हिविप्रोजुषतांहविर्नःपरिहेतिःपक्षिणीनोवृणक्तु ॥ २ ॥

शिवः । कपोतः । इषितः । नः । अस्तु । अनागाः । देवाः ।
शकुनः । गृहेषु । अग्निः । हि । विप्रः । जुषताम् । हविः ।
नः । परि । हेतिः । पक्षिणी । नः । वृणक्तु ॥ २ ॥

हेदेवाः नोस्माकं गृहेषु इषितः कपोताख्यः शकुनः पक्षी शिवः सुखकरः अनागाः अपापहेतुश्चास्तु हियस्मात् विप्रोमेधावी अग्निः नोस्माकं हविः युष्मभ्यं परिकल्पितं जुषतां जुषते अतोयुष्मत् प्रसादात् पक्षिणी पक्षोपेताहेतिः हननहेतुः कपोतः नोस्मान्परिवृणक्तु अस्मान् परित्यजतु माबाधतामित्यर्थः ॥ २ ॥

अथ तृतीया—

हेतिःपक्षिणीनदभात्यस्मानाष्ट्र्यांपदंकृणुतेअग्निधाने ।
शंनोगोभ्यश्चपुरुषेभ्यश्चास्तुमानोहिंसीदिहदेवाःकपोतः ॥ ३ ॥

हेतिः । पक्षिणी । न । दभाति । अस्मान् । आष्ट्र्याम् । पदम् ।
कृणुते । अग्निऽधाने । शम् । नः । गोभ्यः । च । पुरुषेभ्यः । च ।
अस्तु । मा । नः । हिंसीत् । इह । देवाः । कपोतः ॥ ३ ॥

पक्षिणी पक्षोपेता हेतिः हननहेतुः कपोतः अस्मान् नदभाति नहिनस्तु आष्ट्र्यां व्याप्तायां अरण्यान्यां अग्निधाने अग्निर्निधीयतेस्मिन्नित्यग्निसहिते प्रदेशे पदंस्थानं कृणुते करोति तत्रैव प्रदेशे निवसत्वित्यर्थः यद्वा अश्नन्त्यस्मिन्नित्याष्ट्री पचनशाला तस्यां अग्निधाने यत्र पचनाग्निर्निधीयते तस्मिन् प्रदेशे पदं पादनिधानं कृणुते करोति तद्धेतुकोबाधोनोस्माकं नभवत्वित्यर्थः

अपिच नोस्माकं गोभ्यश्च पुरुषेभ्यश्च शं सुखं शंसनीयानां दोषाणां शांतिर्वा अस्तु भवतु हे-देवाः इहास्मिन् गृहे कपोतः नोस्मान् माहिंसीत् युष्मदनुग्रहान्माबाधतां ॥ ३ ॥

अथ चतुर्थी–

यदुलूको वदति मोघमेतद्यत्कपोतः पदमग्नौ कृणोति ।
यस्य दूतः प्रहित एष एतत्तस्मै यमाय नमो अस्तु मृत्यवे ॥ ४ ॥

यत् । उलूकः । वदति । मोघम् । एतत् । यत् । कपोतः । पदम् । अग्नौ । कृणोति । यस्य । दूतः । प्रऽहितः । एषः । एतत् । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥ ४ ॥

उलूकः घूकसंज्ञः पक्षी यत् अशोभनं वदति ब्रवीति आत्मीयेन शब्देन सूचयति एतत् मोघं निष्फलं अस्तु कपोतश्च अग्नौ अग्निमति गृहमध्ये यत्पदं कृणोति करोति एतदपि मोघं निर्वीर्यं अस्तु प्रहितः प्रेषितः एषकपोतः यस्य स्वामिनोदूतोनुचरोभवति तस्मै नाम मृत्यवे मारयित्रे यमाय एतन्नमः प्रणामोस्तु भवतु ॥ ४ ॥

अथ पंचमी–

ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परि गां नयध्वम् ।
संयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्जं प्र पतात्पतिष्ठः ॥ ५ ॥ २३ ॥

ऋचा । कपोतम् । नुदत । प्रऽनोदम् । इषम् । मदन्तः । परि । गाम् । नयध्वम् । सम्ऽयोपयन्तः । दुःऽइतानि । विश्वा । हित्वा । नः । ऊर्जम् । प्र । पतात् । पतिष्ठः ॥ ५ ॥ २३ ॥

हेदेवाः ऋचा मंत्रेण स्तूयमानाः संतोयूयं प्रणोदं प्रकर्षेण नोदनीयं बहिःकर्तव्यं कपोतं पक्षिणं नुदत अस्माद्गृहात्प्रेरयत निर्गमयत तथा मदन्तोस्माभिर्दत्तैर्हविर्भिर्माद्यन्त इषमन्नं गांच परिणयध्वं परितोस्मभ्यं प्रापयत किंकुर्वन्तः विश्वा सर्वाणि दुरितानि कपोतोपहतिजन्यानि दोषजातानि संयोपयन्तः अदृश्यानि कुर्वन्तः अपिच पतिष्ठः अतिशयेन पतिता शीघ्रोत्पातकः कपोतः नोस्माकं ऊर्जमन्नं हित्वा परित्यज्य प्रपतात् प्रकर्षेण पततु पक्षाभ्यां उत्पततु ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे त्रयोविंशोवर्गः ॥ २३ ॥

ऋषभमिति पञ्चर्चं पञ्चदशं सूक्तं वैराजस्य शक्करस्य वा ऋषभाख्यस्यार्षं पञ्चमीषळ-ष्टका महापंक्तिः सपत्ननाशनरूपोर्थोदेवता । तथाचानुक्रान्तम्—ऋषभमृषभोवैराजः शाक्करोवा सपत्नघ्नमानुष्टुभं महापंक्त्यन्तमिति । प्रयाणसमये निर्गमनार्थमेतज्जपेत् । सूत्रितंच—ऋषभंमास-मानानामित्यभिक्रामन्निति ।

सैषा प्रथमा—

ऋषभंमांसमानानांसपत्नांनांविषासहिम् ।
हन्तारंशत्रूंणांकृधिविराजंगोपतिंगवाम् ॥ १ ॥

ऋषभम् । मा । समानानाम् । सऽपत्नानाम् । विऽससहिम् ।
हन्तारम् । शत्रूणाम् । कृधि । विऽराजम् । गोऽपतिम् । गवाम् ॥ १ ॥

हे सपत्ननाशनाभिमानिन्निन्द्र मा मां समानानां सदृशानां अस्मत्कुलीनानां मध्ये ऋष-भं ऋषभवत्प्रशस्तं कृधि कुरु तथा सपत्नानां शत्रूणां विषासहिं विशेषेणाभिभवितारं कुरु ये-स्मत्कुलएव जाताः अस्माकमेवानिष्टमाचरन्ति ते सपत्नाः । अपिच शत्रूणामन्येषामपि शातयि-तॄणां वैरिणां हंतारं हिंसितारं कृधि कुरु तथा विराजं विशेषेण राजमानं गोपतिं गोस्वामिनं च मां कुरु नकेवलं एकस्याएव गोः पतिं अपितु सर्वासामित्याह गवामिति ॥ १ ॥

अथ द्वितीया—

अहमंस्मिसपत्नहेन्द्रंइवारिष्टोअक्षंतः ।
अधःसपत्नांमेपदोरिमेसर्वेंअभिष्ठिताः ॥ २ ॥

अहम् । अस्मि । सपत्नऽहा । इन्द्रःऽइव । अरिष्टः । अक्षतः ।
अधः । सऽपत्नाः । मे । पदोः । इमे । सर्वे । अभिऽस्थिताः ॥ २ ॥

अहं सपत्नहा सपत्नानांशत्रूणां हन्तास्मि भवामि इन्द्रइव इन्द्रोयथा केनाप्यहिंसितो भवति तथा अहमपि अरिष्टः अहिंसितः अक्षतः अव्रणश्च भवामि इमे दृश्यमानाः सर्वे सप त्नाः मे मम पदोः पादयोरधोधस्तादधिष्ठिताः आक्रान्ताभवन्तु ॥ २ ॥

अथ तृतीया—

**अत्रैववोपिनह्याम्युभेआर्त्नीइवज्यया ।**
**वाचस्पतेनिषेधेमान्यथामदधरंवदान् ॥ ३ ॥**

अत्र । एव । वः । अपि । नह्यामि । उभे इति । आर्त्नी इवेत्यार्त्नीऽइव । ज्यया । वाचः । पते । नि । सेध । इमान् । यथा । मत् । अधरम् । वदान् ॥ ३ ॥

हेसपत्नाः यत्र देशे यूयं निवसथ अत्रैवास्मिन्नेव देशेवोयुष्मानपिनह्यामि अपिनद्धान् पाशैर्बद्धान् करोमि ज्यया मौर्व्या आर्त्नीइव यथा द्वेधनुषः कोटी दृढं बध्येते तथेत्यर्थः हेवाचस्पते वाचः शब्दस्य पालयितर्देव इमान् सपत्नान् निषेध प्रतिषेध यथा येन प्रकारेण मत् मत्तः अधरं निकृष्टतरं वदान् वदन्ति तथा निरुद्धवाचः कुर्वित्यर्थः ॥ ३ ॥

अथ चतुर्थी—

**अभिभूरहमागमंविश्वकर्मेणधाम्ना ।**
**आवश्चित्तमावोव्रतमावोहंसमितिंददे ॥ ४ ॥**

अभिऽभूः । अहम् । आ । अगमम् । विश्वऽकर्मेण । धाम्ना । आ । वः । चित्तम् । आ । वः । व्रतम् । आ । वः । अहम् । सम्ऽइतिम् । ददे ॥ ४ ॥

हेसपत्नाः अभिभूरभिभविताहं विश्वकर्मेण सर्वकर्मक्षमेण धाम्ना धारकेण तेजसा बलेन वा सार्धं आगमं आगतवानस्मि अतोवोयुष्माकं चित्तं मनः आददे गृह्णामि मनोगतं धैर्यं हरामीत्यर्थः वोयुष्माकं व्रतं कर्म चाहमाददे वोयुष्मदीयोयः समितिः संग्रामः तंचाहमाददे अपहरामि ॥ ४ ॥

अथ पंचमी—

**योगक्षेमंवआदायाहंभूयासमुत्तमआवोमूर्धानमक्रमीम् ।**
**अधस्पदान्मउद्वदतमण्डूकाइवोदकान्मण्डूकाउदकादिव ॥५॥२४॥**

योगऽक्षेमम् । वः । आऽदाय॑ । अ॒हम् । भू॒या॒स॒म् । उ॒त्ऽत॒मम् । आ । वः । मू॒र्धान॑म् । अ॒क्र॒मी॒म् । अ॒धः॒ऽप॒दात् । मे॒ । उत् । व॒द॒त॒ । म॒ण्डूकाः॑ऽइव । उ॒द॒कात् । म॒ण्डूकाः॑ । उ॒द॒कात्ऽइ॑व ॥ ५ ॥ २४ ॥

हेसपत्नाः वोयुष्माकं योगक्षेमं अप्राप्तस्य धनस्य प्राप्तिर्योगः प्राप्तस्यरक्षणं क्षेमः तदुभयमादाय युष्मत्तोगृहीत्वा अहं उत्तमः श्रेष्ठोभूयासं ततोवोयुष्माकं मूर्धानं शिरः आक्रमीं आक्रमिषं पादेनाधितिष्ठामि क्रमेर्लुङि अमोमश् इटईटीति सिचोलोपः अनन्तरं मे मम अधस्पदात् पादस्याधस्तात् वर्तमानायूयं उद्वदत उच्चैराक्रोशत उदकात् वृष्टिजलात् अधःप्रदेशे वर्तमानामंडूकाइव यथा ते भृशं आक्रोशन्ति तथा उद्वदतेत्यर्थः । मंडूकाउदकादिवेति पुनरुक्तिरादरार्था ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे चतुर्विंशोवर्गः ॥ २४ ॥

तुभ्येदमिति चतुर्ऋचं षोडशं सूक्तं विश्वामित्रजमदग्न्योरार्षं जागतमैन्द्रं सोमस्य राज्ञइत्येषा तृतीया वरुणविधात्रनुमतिधातृसोमबृहस्पतीति लिंगोक्तदेवताका । तथाचानुक्रान्तम्—तुभ्येदंचतुष्कं विश्वामित्रजमदग्नीजागतं तृतीयालिंगोक्तदेवतावेति । पक्षे इन्द्रएव देवता अन्येतु निपातभाजइति वाशब्दस्यार्थः । गतोविनियोगः ।

तत्र प्रथमा—

तुभ्ये॒दमि॑न्द्र॒ परि॑ षिच्यते॒ मधु॒ त्वं सु॒तस्य॑ क॒लश॑स्य राजसि ।
त्वं र॒यिं पु॑रु॒वीरा॑मु नस्कृधि॒ त्वं तपः॑ परि॒तप्या॑जयः॒ स्वः॑ ॥ १ ॥

तुभ्य॑ । इ॒दम् । इ॒न्द्र॒ । परि॑ । सि॒च्य॒ते॒ । मधु॑ । त्वम् । सु॒तस्य॑ । क॒लश॑स्य । रा॒ज॒सि॒ । त्वम् । र॒यिम् । पु॒रु॒ऽवीरा॑म् । ऊँ इति॑ । नः॒ । कृ॒धि॒ । त्वम् । तपः॑ । प॒रि॒ऽतप्य॑ । अ॒ज॒यः॒ । स्व१रिति॑ स्वः॑ ॥ १ ॥

हेइन्द्र इदं मधु सोमलक्षणं तुभ्यं त्वदर्थं परिषिच्यते आहवनीये प्रक्षिप्यते त्वमेव सुतस्याभिषुतस्य कलशस्य द्रोणकलशावस्थितस्य सोमस्य राजसि ईशिषे राजतिरैश्वर्यकर्मा सत्वं नोस्माकं पुरुवीरां बहुपुत्रां रयिं धनं कृधि कुरु उशब्दः पूरकः यद्वा अवधारणे बहुपु-

त्रोपेतमेव धनं कुरु नकेवलमित्यर्थः। तथा त्वं तपः शतसंख्याश्वमेधलक्षणं परितप्य अनुष्ठाय स्वः स्वर्गं अजयः जितवानसि ॥ १ ॥

अथ द्वितीया—

स्वर्जितंमहिमन्दानमन्धसोहवामहेपरिशक्रंसुताँउप।
इमंनोयज्ञमिहबोध्यागहिस्पृधोजयन्तंमघवानमीमहे ॥ २ ॥

स्वःऽजितम्। महि। मन्दानम्। अन्धसः। हवामहे। परि। शक्रम्। सुतान्। उप। इमम्। नः। यज्ञम्। इह। बोधि। आ। गहि। स्पृधः। जयन्तम्। मघऽवानम्। ईमहे ॥ २ ॥

स्वर्जितं उक्तप्रकारेण स्वर्गस्य जेतारं महि महान्तं अंधसः अन्नस्य सोमस्य पानेन मन्दानं मोदमानं हृष्यन्तं शक्रं सर्वकार्येषु शक्तं इन्द्रं सुतान् उप अभिषुतान् सोमान् प्रति परिहवामहे परितआह्वयामहे हेइन्द्र इत्थमाहूयमानस्त्वं नोस्माकं इमं यज्ञं इहास्मिन्देशे बोधि बुध्यस्व बुध्वाच आगहि आगच्छ स्पृधः स्पर्धमानाः शत्रुसेनाः जयन्तं अभि भवन्तं मघवानं धनवन्तं त्वां ईमहे अपेक्षितानि धनानि याचामहे ॥ २ ॥

अथ तृतीया—

सोमस्यराज्ञोवरुणस्यधर्मणिबृहस्पतेरनुमत्याउशर्मणि।
तवाहमद्यमघवन्नुपस्तुतौधातर्विधातःकलशाँअभक्षयम् ॥ ३ ॥

सोमस्य। राज्ञः। वरुणस्य। धर्मणि। बृहस्पतेः। अनुऽमत्याः। ऊँ इति। शर्मणि। तव। अहम्। अद्य। मघऽवन्। उपऽस्तुतौ। धातः। विधातरिति विऽधातः। कलशान्। अभक्षयम् ॥ ३ ॥

राज्ञः राजमानस्य सोमस्य वरुणस्य तत्संबन्धिनि कर्मणि धारके यज्ञे वर्तमानः तथाबृहस्पतेरनुमत्याः संबन्धिनि शर्मणि शरणे यज्ञगृहे वर्तमानोहं हेमघवन्निन्द्र तवोपस्तुतौस्तोत्रे अद्येदानीं प्रवृत्तोस्मि हेधातः एतत्संज्ञक देव हेविधातः एतत्संज्ञकदेव युवाभ्यामनुज्ञातः कलशान् कलशस्थान्हुतशिष्टान् सोमान् अभक्षयं भक्षितवानस्मि ॥ ३ ॥

अथ चतुर्थी—

प्रसूतोभक्षमंकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृंजे ।
सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमदग्नीदमे ॥ ४ ॥ २५ ॥

प्रऽसूंतः । भक्षम् । अकरम् । चरौ । अपिं । स्तोमंम् । च । इमम् ।
प्रथमः । सूरिः । उत् । मृजे । सुते । सातेनं । यदिं । आ । अगंमम् ।
वाम् । प्रतिं । विश्वामित्रजमदग्नी इतिं । दमे ॥ ४ ॥ २५ ॥

हेइन्द्र प्रसूतः त्वयाप्रेरितोहं चरौ चरणीये चरुणा वा युक्ते यज्ञे भक्षमपि भक्षणीयं चर्वादिहविश्च अकरं त्वदर्थंअकार्षं प्रथमोमुख्यः सूरिः स्तोताहमिमं स्तोमं स्तोत्रंच त्वदर्थमुन्मृजे उन्मार्ज्मि संस्करोमि उच्चारयामीत्यर्थः इदानीमिन्द्रः अन्तरात्मरूपः सन् सूक्तस्य द्रष्टारौ ऋषी संबोध्य ब्रूते हेविश्वामित्रजमदग्नी वां युवां प्रति दमे यज्ञगृहे सुते अभिषुते सोमे सति सातेन संभक्तव्येन धनेन सार्धं यदि यदा यस्मिन्काले अहमागमं आगच्छामि तदा युवां स्तोत्रं कुरुतमित्यर्थः ॥ ४ ॥

॥ इत्यष्टमस्याष्टमे पंचविंशोवर्गः॥२५ ॥

वातस्येति चतुर्ऋचं सप्तदशं सूक्तं वातगोत्रस्यानिलाख्यस्यार्षं त्रैष्टुभं वायुदेवताकं । तथा चानुक्रान्तम्—वातस्यानिलोवातायनोवायव्यमिति । गतोविनियोगः ।

तत्र प्रथमा—

वातंस्यनुमंहिमानंरथंस्यरुजन्नेंतिस्तनयंन्नस्यघोषंः ।
दिविस्पृग्यांत्यरुणानिंकृण्वन्नुतोएंतिपृथिव्यारेणुमस्यंन् ॥ १ ॥

वातंस्य । नु । महिमानंम् । रथंस्य । रुजन् । एति । स्तनयंन् ।
अस्य । घोषंः । दिविऽस्पृक् । याति । अरुणानिं । कृण्वन् ।
उतो इतिं । एति । पृथिव्या । रेणुम् । अस्यंन् ॥ १ ॥

वातस्य वायोः रथस्य रंहणशीलस्य महिमानं माहात्म्यं नु क्षिप्रं प्रब्रवीमि अस्य वायो र्घोषः शब्दः स्तनयन् गिरिगह्वरादिषु विविधं शब्दमुत्पादयन् रुजन् सर्वं स्थावरजंगमजातं भंजन् एति गच्छति सच वायुः दिविस्पृक् दिवमाकाशं स्पृशन् व्याप्नुवन् अरुणानि अरुणवर्णानि विकृतरूपाणि दिगन्तराणि कृण्वन् कुर्वन् याति प्राप्नोति । उतो अपिच पृथिव्याभूमेः रेणुं पांसुंअस्यन् गृहीत्वा सर्वत्र विक्षिपन् एति गच्छति अतएवारुणानि कृण्वन्नित्युक्तम् ॥ १ ॥

अथ द्वितीया–

**संप्रेरतेअनुवातस्यविष्ठाऐनंगच्छन्तिसमनंनयोषाः ।**
**ताभिःसयुक्सरथंदेवईयतेस्यविश्वस्यभुवनस्यराजा ॥ २ ॥**

**सम् । प्र । ईरते । अनु । वातस्य । विऽस्थाः । आ । एनम् ।**
**गच्छन्ति । समनम् । न । योषाः । ताभिः । सऽयुक् । सऽरथम् ।**
**देवः । ईयते । अस्य । विश्वस्य । भुवनस्य । राजा ॥ २ ॥**

विष्ठाः विशेषेणावस्थिताः पर्वताद्याः वातस्य वायोः अनुगुणं संप्रेरते संप्रगच्छंति यदभिमुखोवायुर्वर्तते तदभिमुखाः प्रकंपंतइत्यर्थः समनंन संग्राममिवैनं वायुं योषा अश्वयोषितो वडवा आगच्छन्ति । ताभिर्वडवाभिः सयुक् स्वयमेव युज्यमानं सरथं समानमेकं रथमारुह्य देवोदीप्यमानो वायुः ईयते गच्छति । ईङ्गतौ अस्य विश्वस्य सर्वस्य भुवनस्य द्वितीयविकारभाजोभूतजातस्य राजा स्वामी भवति यद्वा समनं धृष्टं पुरुषं योषाः कामिन्यइव एवं वायुं तरुगुल्मादिरूपाः स्त्रियः अभिगच्छन्ति ताभिः सरथं सह रथं देवईयतेइति ॥ २ ॥

अथ तृतीया–

**अन्तरिक्षेपथिभिरीयमानोननिविशतेकतमच्चनाहः ।**
**अपांसखाप्रथमजाऋतावाक्वस्विज्जातःकुतआबभूव ॥ ३ ॥**

**अन्तरिक्षे । पथिऽभिः । ईयमानः । न । नि । विशते । कतमत् ।**
**चन । अहः । अपाम् । सखा । प्रथमऽजाः । ऋतऽवा । क्व ।**
**स्वित् । जातः । कुतः । आ । बभूव ॥ ३ ॥**

अन्तरिक्षे नभसि विद्यमानैः पथिभिर्मार्गैः ईयमानोगच्छन्वायुः कतमच्चनाहः एकमपि दिनं ननिविशते नोपविशति किंतु सर्वदैवगच्छति नेर्विंशइत्यात्मनेपदं । अपिच अपामुदकानां सखा वायुर्वैवृष्ट्याईशतइतिश्रुतेः । प्रथमजाः सर्वेभ्यः प्राणिभ्यः पूर्वोत्पन्नएव ऋतावा सत्यवान् एवंभूतोवायुः क्स्वित् कुत्रचित् देशे जातउत्पन्नः कुतः कस्माच्च देशात् निष्क्रम्य आबभूव इमं सर्वं जगद्व्याप्नोत् सर्वदा सर्वत्र वर्तमानत्वात् अस्योत्पत्तिर्व्याप्तिप्रकारश्च नकेनापि ज्ञातुं शक्यतइत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

**आत्मादेवानांभुवनस्यगर्भोयथावशंचरतिदेवएषः ।**
**घोषाइदस्यशृण्विरेनरूपंतस्मैवातायहविषाविधेम ॥ ४ ॥ २६ ॥**

आत्मा । देवानाम् । भुवनस्य । गर्भः । यथाऽवशम् । चरति ।
देवः । एषः । घोषाः । इत् । अस्य । शृण्विरे । न । रूपम् ।
तस्मै । वाताय । हविषा । विधेम ॥ ४ ॥ २६ ॥

अयं वायुः देवानामिन्द्रादीनामपि आत्मा जीवरूपेण तेषु अवस्थानात् भुवनस्यापि भूतजातस्य गर्भः गर्भवत् प्राणरूपेण अन्तर्वर्तमानः एषईदृशोदेवः यथा वशं यथाकामं यथेच्छं चरति वर्तते अनिवारितगतिःसन् क्वचित् शीघ्रं गच्छति क्वचित् शनैर्गच्छति कुतश्चित् शरीरात् निष्क्रामति अन्यत्च शरीरं प्रविशतीत्येवं यथेच्छं वर्ततेइत्यर्थः । अस्य वायोरागच्छतः घोषाइत् शब्दाएव शृण्विरे श्रूयन्ते रूपं स्वरूपंतु नदृश्यते नीरूपत्वात् अदृग्विषयत्वेन शब्देनैवानुमीयतइत्यर्थः । तस्मै वाताय वायवे हविषा चरुपुरोडाशादिलक्षणेन विधेम परिचरेम ॥ ४॥

॥ इत्यष्टमस्याष्टमे षड्विंशोवर्गः ॥ २६ ॥

मयोभूरिति चतुर्ऋचं अष्टादशं सूक्तं कक्षीवद्गोत्रस्य शबरस्यार्षं त्रैष्टुभं गोदेवत्यं । अनुक्रान्तंच—मयोभूःशबरःकाक्षीवतोगव्यमिति घासाय वनं प्रतिष्ठमानागाः आदितोद्वाभ्यां अभिमंत्रणीयाः । सूत्रितंच—गाः प्रतिष्ठमानाअनुमंत्रयेतमयोभूर्वातोअभिवातूस्राइति द्वाभ्यामिति ।

तत्राद्या—

मयोभूर्वातोअभिवातूस्राऊर्जस्वतीरोषधीरारिशन्ताम् ।
पीवस्वतीर्जीवधन्याःपिबन्त्ववसायपद्वतेरुद्रमृळ ॥ १ ॥

मयःऽभूः । वातः । अभि । वातु । उस्राः । ऊर्जस्वतीः । ओषधीः । आ । रिशन्ताम् । पीवस्वतीः । जीवऽधन्याः । पिबन्तु । अवसाय । पद्ऽवते । रुद्र । मृळ ॥ १ ॥

वातोवायुर्मयोभूः सुखस्य भावयिता सन् उस्रागा अभिवातु अभिगच्छतु ताश्च गावः ऊर्जस्वतीः रसवतीः ओषधीः बलवन्ति तृणानि आरिशन्तां अभितः स्वादयन्तु तथा पीवस्वतीः प्रवृद्धाः जीवधन्याः जीवानां प्राणयित्रीरपश्च पिबन्तु हेरुद्र ज्वरादिरोगस्य प्रेक्षणेन संहर्तः देव पद्वते पादयुक्ताय अवसाय अन्नाय गोरूपाय मृळ उपदयां कुरु माबाधस्वेत्यर्थः ॥ १ ॥

अथ द्वितीया—

याःसरूपाविरूपाएकरूपायासामग्निरिष्ट्यानामानिवेद ।
याअङ्गिरसस्तपसेहचक्रुस्ताभ्यःपर्जन्यमहिशर्मयच्छ ॥ २ ॥

याः । सऽरूपाः । विऽरूपाः । एकऽरूपाः । यासाम् । अग्निः । इष्ट्या । नामानि । वेद । याः । अङ्गिरसः । तपसा । इह । चक्रुः । ताभ्यः । पर्जन्य । महि । शर्म । यच्छ ॥ २ ॥

यागावः सरूपाः समानरूपाः याश्च विरूपाः विभिन्नरूपाः याश्चैकरूपाः एकेनैव वर्णेनोपेताः यासांच गवां नामानि इंडेरंतेदितइत्यादीनि इष्ट्या यागेन हेतुना अग्निर्वेद जानाति याश्च गाः अंगिरसः ऋषयः तपसा पशुप्राप्तिसाधनेन चित्रा यागादिलक्षणेन इहास्मिन् लोके चक्रुः कृतवन्तः ताभ्यः सर्वाभ्योगोभ्यः हेपर्जन्य महि महत् शर्म सुखं यच्छ प्रदेहि ॥ २ ॥

यादेवेष्विति द्वाभ्यां सायं गृहमागच्छंतीर्गाः अनुमंत्रयितव्याः । सूत्र्यतेहि—यादेवेषु तन्वमैरयन्तेतिच सूक्तशेषं आगावीयमेकइति ।

तयोराद्या सूक्ते तृतीया—

**यादेवेषुतन्वं१मैरयन्तयासांसोमोविश्वारूपाणिवेद ।**
**ताअस्मभ्यंपयसापिन्वमानाःप्रजावतीरिन्द्रगोष्ठेरिरीहि ॥ ३ ॥**

याः । देवेषु । तन्वम् । ऐरयन्त । यासाम् । सोमः । विश्वा ।
रूपाणि । वेद । ताः । अस्मभ्यम् । पयसा । पिन्वमानाः ।
प्रजाऽवतीः । इन्द्र । गोऽस्थे । रिरीहि ॥ ३ ॥

यागावः देवेषु यष्टव्येषु तन्वं आत्मीयं शरीरं ऐरयन्त हवीरूपेण प्रेरयन्ति यासांच गवां विश्वा सर्वाणि रूपाणि रूप्यमाणानि क्षीरादीनि श्रयणद्रव्याणि सोमोवेद जानाति अस्मभ्यं अस्मदर्थं पयसा क्षीरेण पिन्वमानाः वर्धमानाः अतएव प्रजावतीः प्रजाभिः वत्सैरुपेतास्तागाः हेइन्द्र गोष्ठेस्मदीये रिरीहि गमय रीगतिरेषणयोः छान्दसोविकरणस्य श्लुः ॥ ३ ॥

अथ चतुर्थी—

**प्रजापतिर्मह्यमेतारराणोविश्वैर्देवैःपितृभिःसंविदानः ।**
**शिवाःसतीरुपनोगोष्ठमाकस्तासांवयंप्रजयासंसदेम ॥ ४ ॥ २७॥**

प्रजाऽपतिः । मह्यम् । एताः । रराणः । विश्वैः । देवैः । पितृऽभिः ।
सम्ऽविदानः । शिवाः । सतीः । उप । नः । गोऽस्थम् । आ ।
अकरित्यकः । तासाम् । वयम् । प्रऽजया । सम् । सदेम ॥ ४ ॥ २७ ॥

प्रजापतिर्विधाता मह्यं स्तोत्रे एतागाः रराणः प्रयच्छन् रातेर्व्यत्ययेन शानच् छान्दसः शपः श्लुः अभ्यस्तानामादिरित्याद्युदात्तत्वं विश्वैः सर्वैर्देवैः पितृभिश्च संविदानः ऐकमत्यं गतः सन् शिवाः सतीः कल्याणीर्भवन्तीर्गाः नोस्माकं गोष्ठं व्रजं उप गोष्ठसमीपे अकः करोतु । तासां गवां प्रजया संतानेन वयं संसदेम संगच्छेमहि । सदेराशिषिलिङि लिङ्याशिष्यङ् ॥ ४ ॥

॥ इत्यष्टमस्याष्टमे सप्तविंशोवर्गः ॥ २७ ॥

विभ्राळिति चतुर्ऋचं एकोनविंशं सूक्तं सूर्यपुत्रस्य विभ्राट्संज्ञकस्यार्षं सूर्यदेवत्यं आदौ तिस्रोजगत्यः द्व्यष्टकद्विद्वादशकवती आस्तारपंक्तिश्चतुर्थी । तथाचानुक्रान्तं—विभ्राड्विभ्राट्सौर्यः सौर्यं जागतमास्तारपंक्त्यन्तमिति । विषुवति निष्केवल्ये आद्यस्तृचः स्तोत्रियः । सूत्रितंच—विभ्राड्बृहत्पिबतुसोम्यंमधु नमोमित्रस्यवरुणस्यचक्षसइति स्तोत्रियानुरूपाविति । वाजपेये अतिरिक्तोक्थस्य विभ्राडित्येषा शस्त्रे याज्या । सूत्र्यतेहि—विभ्राट्बृहत्पिबतुसोम्यंमध्विति याज्या तस्य गवां शतानामिति ।

सैषाद्या—

**वि॒भ्राड्बृ॒हत्पि॑बतु सो॒म्यं मध्वायु॒र्दध॑द्य॒ज्ञप॑ता॒ववि॑ह्रुतम् ।**
**वात॑जूतो॒ यो अ॑भि॒रक्ष॑ति॒ त्मना॑ प्र॒जाः पु॑पोष पुरु॒धा वि रा॑जति ॥ १ ॥**

वि॒ऽभ्राट् । बृ॒हत् । पि॒ब॒तु॒ । सो॒म्यम् । मधु॑ । आयुः॑ । दध॑त् । य॒ज्ञऽप॑तौ । अवि॑ऽह्रुतम् । वात॑ऽजूतः । यः । अ॒भि॒ऽरक्ष॑ति । त्मना॑ । प्र॒ऽजाः । पु॒पो॒ष॒ । पु॒रु॒ऽधा । वि । रा॒ज॒ति॒ ॥ १ ॥

विभ्राट् विभ्राजमानः विशेषेण दीप्यमानः सूर्यः बृहन्महत् परिवृढं सोम्यं सोममयं मधु पिबतु किंकुर्वन् यज्ञपतौ यजमाने अविह्रुतं अकुटिलं आयुः दधत् कुर्वन् यः सूर्यः वातजूतः वातेन महावायुना प्रेर्यमाणः सन् त्मना आत्मना स्वयमेव अभिरक्षति सर्वं जगत् अभिपश्यन् पालयति राशिचक्रस्य वायुप्रेर्यत्वात् सूर्यस्यापि तत्प्रेर्यत्वं । ससूर्यः प्रजाः पुपोष वृष्ट्यादिप्रदानेन पोषयति पुरुधा बहुधा विराजति विशेषेण दीप्यते च ॥ १ ॥

अथ द्वितीया—

**वि॒भ्राड्बृ॒हत्सुभृ॑तं वाज॒सात॑मं॒ धर्म॑न्दि॒वो ध॒रुणे॑ स॒त्यमर्पि॑तम् ।**
**अ॒मि॒त्र॒हा वृ॑त्र॒हा द॑स्यु॒हन्त॑मं॒ ज्योति॑र्जज्ञे असुर॒हा स॑पत्न॒हा ॥ २ ॥**

वि॒ऽभ्राट् । बृ॒हत् । सुऽभृ॑तम् । वा॒ज॒ऽसात॑मम् । धर्म॑न् । दि॒वः । ध॒रुणे॑ । स॒त्यम् । अर्पि॑तम् । अ॒मि॒त्र॒ऽहा । वृ॒त्र॒ऽहा । द॒स्यु॒हन्ऽत॑मम् । ज्योतिः॑ । ज॒ज्ञे॒ । अ॒सु॒र॒ऽहा । स॒प॒त्न॒ऽहा ॥ २ ॥

विभ्राट् विभ्राजमानं बृहत् प्रौढं सुभृतं सुपुष्टं वाजसातमं वाजस्यान्नस्य बलस्य वा दातृतमं धर्मन् धर्मणि वायुना धारयितव्ये दिवोद्युलोकस्य धरुणे धारके सूर्यमंडले अर्पितं निक्षिप्तं सत्यं अविनश्वरं अमित्रहा अमित्राणां अप्रियाणां हंतृ वृत्रहा वृत्राणामावृण्वतां हन्तृ दस्युहन्तमं दस्यूनामुपक्षपयितॄणां हन्तृतमं असुरहा असुराणां क्षेप्तॄणां घातकं सपत्नहा सपत्नानां सहजशत्रूणामपि घातकं ईदृग्भूतं ज्योतिः सौरं तेजः जज्ञे प्रादुर्भवति ॥ २ ॥

अथ तृतीया—

इदंश्रेष्ठंज्योतिषांज्योतिरुत्तमंविश्वजिद्धनजिदुच्यतेबृहत् ।
विश्वभ्राड्भ्राजोमहिसूर्योदृशउरुपप्रथेसहओजोअच्युतम् ॥३॥

इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । उत्ऽतमम् । विश्वऽजित् । धनऽजित् । उच्यते । बृहत् । विश्वऽभ्राट् । भ्राजः । महि । सूर्यः । दृशे । उरु । पप्रथे । सहः । ओजः । अच्युतम् ॥ २ ॥

इदं सौरं तेजः श्रेष्ठं प्रशस्यतमं ज्योतिषां अन्येषां ग्रहनक्षत्रादीनां अपि ज्योतिः प्रकाशकं अतएवोत्तमं उत्कृष्टं विश्वजित् विश्वस्य सर्वस्य जेतृ धनजित् धनस्य च जेतृ बृहत् प्रभूतं उच्यते एवंगुणविशिष्टमिति सर्वैरभिधीयते । अपिच विश्वभ्राट् विश्वस्य प्रकाशयिता भ्राजः भ्राजमानः महि महान् सूर्यः दृशे दर्शनाय उरु विस्तीर्णं सहः तमसोभिभवितृ अच्युतं च्युतिरहितं अविनाशं ओजः तेजोरूपं बलं पप्रथे विस्तारयति ॥ ३ ॥

अथ चतुर्थी—

विभ्राजंज्योतिषास्व१रगच्छोरोचनंदिवः ।
येनेमाविश्वाभुवनान्याभृताविश्वकर्मणाविश्वदेव्यावता॥४॥२८॥

विऽभ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनम् । दिवः ।
येन । इमा । विश्वा । भुवनानि । आऽभृता । विश्वऽकर्मणा ।
विश्वदेव्यऽवता ॥ ४ ॥ २८ ॥

हे सूर्य ज्योतिषा तेजसा स्वः सर्वं जगत् विभ्राजन् विभ्राजयन् दिवः संबंधि रोचनं अगच्छः प्राप्नोः विश्वकर्मणा सर्वव्यापारहेतुना विश्वदेव्यावता विश्वेषां देवानां हितोयागादिर्विश्वदेव्यः तद्वता येन सौरेण तेजसा इमानि परिदृश्यमानानि विश्वा सर्वाणि भुवनान्युदकानि भौमानि आभृता घर्मकाले आभृतानि भवन्ति यद्वा सर्वाणि भूतजातानि आभृता आसमन्ताद्भृतानि पोषितानि भवन्ति तेन ज्योतिषेत्यन्वयः ॥ ४ ॥

॥ इत्यष्टमस्याष्टमेष्टाविंशोवर्गः ॥ २८ ॥

त्वंत्यमिति चतुर्ऋचं विंशं सूक्तं भृगुपुत्रस्येटस्यार्षं गायत्रं ऐन्द्रं । अनुक्रान्तंच—त्वंत्यमिटोभार्गवोगायत्रमिति । गतोविनियोगः ।

तत्राद्या—

**त्वंत्यमिटतोरथमिन्द्रप्रावःसुतावतः । अश्रृणोःसोमिनोहवम् ॥१॥**

**त्वम् । त्यम् । इटतः । रथम् । इन्द्र । प्र । आवः । सुतऽवतः ।**
**अश्रृणोः । सोमिनः । हवम् ॥ १ ॥**

हेइन्द्र सुतावतः सुतेनाभिषुतेन सोमेन युक्तस्य इटतः इटस्य सुपांसुलुगिति ङसस्तस् एतत्संज्ञस्य ऋषेः त्यं तं प्रसिद्धं रथं प्रावः प्रारक्षः सोमिनः सोमयुक्तस्य मम हवमाह्वानं अश्रृणोः शृणु ॥ १ ॥

अथ द्वितीया—

**त्वंमखस्यदोधतःशिरोवत्वचोभरः । अगच्छःसोमिनोगृहम् ॥ २॥**

**त्वम् । मखस्य । दोधतः । शिरः । अव । त्वचः । भरः ।**
**अगच्छः । सोमिनः । गृहम् ॥ २ ॥**

हेइन्द्र त्वं मखस्य यज्ञस्य दोधतः कंपमानस्य देवेभ्यः पलायमानस्य शिरः प्रवर्ग्यरूपं त्वचः त्वगुपलक्षितात् शरीरात् अवभरः अवयुत्यपृथक्कृत्य हृतवानसि देवेभ्योनिष्क्रांतस्य पुरुषाकारस्य धन्विनः यज्ञस्य शिरः इन्द्रोवम्रिरूपेण ज्याघातद्वारा पुरा चिच्छेद तदभिप्रायेणेदमुक्तं । श्रूयतेहि—तस्येन्द्रोवम्रिरूपेणधनुर्ज्यामच्छिनद्रुद्रस्यत्वेवधनुरार्त्निःशिरउत्पिपेष सप्रवर्ग्योभवदिति । सत्वं सोमिनः सोमवतोमम गृहं अगच्छः आगच्छ ॥ २ ॥

अथ तृतीया—

त्वंत्यमिन्द्रमर्त्यमास्त्रबुध्नायवेन्यम् । मुहुःश्रथ्नामनस्यवे ॥ ३ ॥

त्वम् । त्यम् । इन्द्र । मर्त्यम् । आस्त्रऽबुध्नाय । वेन्यम् ।
मुहुः । श्रथ्नाः । मनस्यवे ॥ ३ ॥

हेइन्द्र त्वं त्यं तं मर्त्यं मनुष्यं वेन्यं वेनस्य पुत्रं पृथुं आस्त्रबुध्नाय अस्त्रबुध्नोनाम कश्चित् तस्य पुत्रोयं मनस्यवे मननोयं स्तोत्रं इच्छते मुहुः शश्वत् श्रथ्नाः अहिंसीः वशमनय इत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

त्वंत्यमिन्द्रसूर्यंपश्चासन्तंपुरस्कृधि । देवानांचित्तिरोवशम् ॥४॥२९॥

त्वम् । त्यम् । इन्द्र । सूर्यम् । पश्चा । सन्तम् । पुरः । कृधि ।
देवानाम् । चित् । तिरः । वशम् ॥ ४ ॥ २९ ॥

हेइन्द्र त्वं त्यं सूर्यं अस्तसमये पश्चा पश्चात् सन्तं भवन्तं पुरः परेद्युः उदयकाले पुरस्तात् कृधि करोषि । लकारव्यत्ययः । कीदृशं देवानां चित् देवानामपि तिरः तिरोहितं तैरपि क्वगतइति दुर्विज्ञातं वशं कान्तं ॥ ४ ॥

॥ इत्यष्टमस्याष्टमे एकोनत्रिंशोवर्गः ॥ २९ ॥

आयाहीति चतुर्ऋचमेकविंशं सूक्तं आंगिरसस्य संवर्तस्यार्षं उषोदेवताकं चतस्रोपि विंशतिकाद्विपदाविराजः । तथाचानुक्रान्तं—आयाहि संवर्तउषस्यं द्वैपदमिति । प्रथमे छन्दोमे वैश्वदेवसूक्तात्पूर्वं इदं सूक्तं । सूत्रितंच—आयाहिवनसेमानुकं बभ्रुरेकइति द्विपदासूक्तानीति । महाव्रतेपि निष्केवल्ये एतत् । तथैव पंचमारण्यके सूत्रितं—आयाहिवनसासहेति नवसमाम्ना ।

तत्राद्या—

आयाहिवनंसासहगावःसचन्तवर्तनिंयदूधभिः ॥ १ ॥

आ । याहि । वनसा । सह । गावः । सचन्त । वर्तनिम् ।

यत् । ऊधःऽभिः ॥ १ ॥

हेउषः वनसा वननीयेन तेजसा धनेन सार्धं आयाहि आगच्छ गावः उषसोवाहनभूताः वर्तनिं रथं सचन्त सेवन्ते अतः तेन रथेनायाहीत्यर्थः । यत् यागावः ऊधभिः उपलक्षिताः प्रभूताः पीनाइत्यर्थः तागावइति संबंधः ॥ १ ॥

अथ द्वितीया—

आयाहिवस्व्याधियामंहिष्ठोजारयन्मखःसुदानुभिः ॥ २ ॥

आ । याहि । वस्व्या । धिया । मंहिष्ठः । जारयत्ऽमखः । सुदानुऽभिः॥२॥

हे उषः वस्व्या प्रशस्तया धिया अनुग्रहबुद्ध्या कर्मणा स्तुत्यावा सार्धमायाहि आगच्छ सचोषःकालः सुदानुभिः शोभनदानैः दातृभिः पुरुषैः मंहिष्ठोधनानां दातृतमः अतएव जारयन्मखः समापयद्यज्ञश्च भवति ॥ २ ॥

अथ तृतीया—

पितुभृतोनतन्तुमित्सुदानवःप्रतिदध्मोयजामसि ॥ ३ ॥

पितुऽभृतः । न । तन्तुम् । इत् । सुऽदानवः । प्रति ।

दध्मः । यजामसि ॥ ३ ॥

पितुभृतोन अन्नस्य भर्तारइव सुदानवः शोभनदानावयं तन्तुमित् तन्तुं विस्तीर्णमेव प्रतिदध्मः उषसं प्रति उपायनरूपेण धारयामः तेनच यज्ञेन तामुषसं यजामसि ॥ ३ ॥

दशमेहनि प्रातरनुवाके उषस्ये क्रतौ उषोभद्रेभिरित्यस्याः स्थाने उषाअपस्वसुरित्येषा । सूत्रितंच—उषाअपस्वसुस्तमइति पच्छोद्विपदां त्रिरुषस्यइति ।

सैषा चतुर्थी—

उषाअपस्वसुस्तमःसंवर्तयतिवर्तनिंसुजाततां ॥ ४ ॥ ३० ॥

उषाः । अप । स्वसुः । तमः । सम् । वर्तयति । वर्तनिम् ।

सुऽजातता ॥ ४ ॥ ३० ॥

इयं उषाः स्वसुः भगिन्याः रात्रेः संबंधि तमः अंधकारं अपसंवर्तयति आत्मीयेन तेजसापगमयति सुजातता सुजातत्वं आत्मनः सुप्रजातत्वंच वर्तनिरथं प्रापयति ॥ ४ ॥

॥ इत्यष्टमस्याष्टमे त्रिंशोवर्गः ॥ ३० ॥

आत्वेति षळृचं द्वाविंशं सूक्तं आंगिरसस्य ध्रुवस्यार्षं आनुष्टुभं अभिषिक्तस्य राज्ञः स्तुतिरूपोर्थोदेवता । तथाचानुक्रान्तं-आत्वाषड्ध्रुवोराज्ञःस्तुतिस्त्वानुष्टुभं त्विति । राज्ञोयुद्धाय सन्नहने अनेन सूक्तेनाभिमंत्रणं पुरोधसा कर्तव्यं । सूत्रितंच—आत्वाहार्षमन्तरेधीति पथ्याद्रथस्यावस्थायेति ।

तत्र प्रथमा—

आत्वा॑हार्षम॒न्तरे॑धि ध्रु॒वस्ति॒ष्ठावि॑चाचलिः ।
विश॑स्त्वा॒ सर्वा॑ वाञ्छन्तु॒ मा त्वद्रा॒ष्ट्रमधि॑ भ्रशत् ॥ १ ॥

आ । त्वा॒ । अ॒हा॒र्ष॒म् । अ॒न्तः । ए॒धि॒ । ध्रु॒वः । ति॒ष्ठ॒ । अवि॑ऽचाचलिः ।
विशः॑ । त्वा॒ । सर्वाः॑ । वा॒ञ्छ॒न्तु॒ । मा । त्वत् । रा॒ष्ट्रम् ।
अधि॑ । भ्र॒श॒त् ॥ १ ॥

हेराजन् त्वा त्वां आहार्षं अस्मद्राष्ट्रस्य स्वामित्वेनानैषं सत्वं अन्तः अस्मासु मध्ये एधि स्वामी भव ध्रुवः नित्यः सन् अविचाचलिः अतिशयेन चलनरहितएव सन् तिष्ठ राष्ट्रमधितिष्ठ सर्वाश्चविशः प्रजाः त्वां वांछंतु अयमेवास्माकं राजास्त्विति कामयन्तु । वाछिइच्छायां । त्वत् त्वत्तः सकाशात् राष्ट्रं राज्यं माधिभ्रशत् माभ्रश्यतु मावियुक्तं भवतु भ्रशुभ्रंशुअधःपतने ॥ १ ॥

अथ द्वितीया—

इ॒हैवैधि॒ माप॑च्योष्ठाः॒ पर्व॑तइ॒वावि॑चाचलिः ।
इन्द्र॑इवे॒ह ध्रु॒वस्ति॑ष्ठे॒ह रा॒ष्ट्रमु॑ धारय ॥ २ ॥

इ॒ह । ए॒व । ए॒धि॒ । मा । अप॑ । च्यो॒ष्ठा॒ः । पर्व॑तःऽइव ।
अवि॑ऽचाचलिः । इन्द्र॑ःऽइव । इ॒ह । ध्रु॒वः । ति॒ष्ठ॒ । इ॒ह । रा॒ष्ट्रम् ।
ऊँ इति॑ । धा॒र॒य॒ ॥ २ ॥

हेराजन् इहास्मिन् एव राज्ये एधि स्वामित्वेन सर्वदा वर्तमानोभव मापच्योष्ठाः अपच्युतोमाभूः मापगमः पर्वतइव यथा पर्वतोनैश्चल्येनावतिष्ठते एवं अविचाचलिः चलनरहितोभव इन्द्रइव यथा स्वर्गे इन्द्रः एवमिह लोके त्वं ध्रुवस्तिष्ठ स्थिरोभव राष्ट्रमु राष्ट्रंच इह लोके धारय स्वेस्वे कर्मण्यवस्थापय ॥ २ ॥

अथ तृतीया—

इममिन्द्रोअदीधरद्ध्रुवंध्रुवेणहविषा ।
तस्मैसोमोअधिब्रवत्तस्माउब्रह्मणस्पतिः ॥ ३ ॥

इमम् । इन्द्रः । अदीधरत् । ध्रुवम् । ध्रुवेण । हविषा । तस्मै ।
सोमः । अधि । ब्रवत् । तस्मै । ऊँ इति । ब्रह्मणः । पतिः ॥ ३ ॥

इममभिषिक्तं ध्रुवेण स्थिरेण हविषा तर्प्यमाणइन्द्रः ध्रुवं स्थिरं अदीधरत् धारयतु सोमश्च तस्मै राज्ञे अधिब्रवत् अधिब्रवीतु मदीयोयमिति पक्षपातवचनं करोतु तस्माउ तस्माएव ब्रह्मणस्पतिः मंत्रस्य पालकोदेवश्चाधिब्रवीतु ॥ ३ ॥

अथ चतुर्थी—

ध्रुवाद्यौर्ध्रुवापृथिवीध्रुवासःपर्वताइमे ।
ध्रुवंविश्वमिदंजगद्ध्रुवोराजाविशामयम् ॥ ४ ॥

ध्रुवा । द्यौः । ध्रुवा । पृथिवी । ध्रुवासः । पर्वताः । इमे । ध्रुवम् ।
विश्वम् । इदम् । जगत् । ध्रुवः । राजा । विशाम् । अयम् ॥ ४ ॥

द्यौः ध्रुवा स्थिरा भवति पृथिवीच ध्रुवा स्थिरा भवति इमे दृश्यमानाः पर्वतामहीधराश्च ध्रुवासः स्थिराः इदं विश्वं सर्वं जगत् ध्रुवं स्थिरं भवति एवमेवायं विशां प्रजानां राजा स्वामी सन् ध्रुवः स्थिरोभवतु ॥ ४ ॥

अथ पंचमी—

ध्रुवंतेराजावरुणोध्रुवंदेवोबृहस्पतिः ।
ध्रुवंतइन्द्रश्चाग्निश्चराष्ट्रंधारयतांध्रुवम् ॥ ५ ॥

ध्रुवम् । ते । राजा । वरुणः । ध्रुवम् । देवः । बृहस्पतिः । ध्रुवम् ।
ते । इन्द्रः । च । अग्निः । च । राष्ट्रम् । धारयताम् । ध्रुवम् ॥ ५ ॥

हेराजन् ते तव राष्ट्रं राजा राजमानोवरुणोध्रुवं स्थिरं धारयतु देवोदानादिगुणयुक्तोबृहस्पतिः ध्रुवं धारयतु इन्द्रश्चाग्निश्चोभावपि ते तव राष्ट्रं ध्रुवं स्थिरं धारयतां इंद्राग्न्योरुभयोरपेक्षया ध्रुवशब्दस्य द्विःप्रयोगः ॥ ५ ॥

अथ षष्ठी—

ध्रुवंध्रुवेणहविषाभिसोमंमृशामसि ।
अथोतइन्द्रःकेवलीर्विशोबलिहृतस्करत् ॥ ६ ॥ ३१ ॥

ध्रुवम् । ध्रुवेण । हविषा । अभि । सोमम् । मृशामसि । अथो इति ।
ते । इन्द्रः । केवलीः । विशः । बलिऽहृतः । करत् ॥ ६ ॥ ३१ ॥

ध्रुवेण स्थिरेण हविषा पुरोडाशादिनायुक्तं ध्रुवं स्थिरं सोमं अभिमृशामसि अभिमृशामः देवतामभिलक्ष्य यागार्थं वयमृत्विजः संस्पृशामः अथो अथानन्तरमेव इन्द्रोविशः प्रजाः ते तवैव केवलीः असाधारणाः सतीः बलिहृतः करस्य प्रदात्रीः करत् करोतु ॥ ६ ॥

॥ इत्यष्टमस्याष्टमे एकत्रिंशोवर्गः ॥ ३१ ॥

अभीवर्तेनेति पंचर्चं त्रयोविंशं सूक्तं आंगिरसस्य अभीवर्ताख्यस्यार्षं आनुष्टुभं पूर्ववद्राजस्तुतिर्देवता । तथाचानुक्रान्तं—अभीवर्तेनपंचाभीवर्तइति । पुरोहितइदं सूक्तं राजानं युद्धाय कृतसन्नाहं वाचयीत । सूत्र्यतेहि—अथैनं सारयमाणमुपारुह्याभीवर्तं वाचयतीति ।

तत्र प्रथमा—

अभीवर्तेनहविषायेनेन्द्रोअभिवावृते ।
तेनास्मान्ब्रह्मणस्पतेभिराष्ट्रायवर्तय ॥ १ ॥

अभिऽवर्तेन । हविषा । येन । इन्द्रः । अभिऽववृते । तेन ।
अस्मान् । ब्रह्मणः । पते । अभि । राष्ट्राय । वर्तय ॥ १ ॥

अभीवर्तेन अभिगच्छत्यनेनेत्यभीवर्तः करणे घञ् थाथादिस्वरेणोत्तरपदान्तोदात्तत्वं उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः ईदृशेन येन हविषा साधनेनेन्द्रः अभिववृते सर्वमभिजगाम तेन हविषा इष्टवतोस्मान्हेब्रह्मणस्पतेराष्ट्राय राज्यं प्राप्तुं अभिवर्तय अभिगमय॥ १ ॥

अथ द्वितीया—

अभिवृत्य॑सपत्ना॑नभियानो॑अरा॑तयः ।
अभिपृ॑तन्यन्तं॑तिष्ठाभियोनं॑इरस्यति॑ ॥ २ ॥

अभिऽवृत्य॑ । सऽपत्ना॑न् । अभि । याः । नः । अरा॑तयः ।
अभि । पृतन्यन्तम् । तिष्ठ । अभि । यः । नः । इरस्यति॑ ॥ २ ॥

हेराजन् सपत्नान् शत्रून् अभिवृत्य अभितोगमयित्वा नोस्माकं याअरातयः अदानशीलाः प्रजाः सन्ति ताअपि अभितिष्ठ अभिभव पृतन्यन्तं पृतनाःसेनाआत्मानमिच्छन्तं युयुत्सुंच अभितिष्ठ पृतनाशब्दात्क्यचि कव्यध्वरपृतनस्येत्यन्तलोपः यश्च नोस्मभ्यमिरस्यति ईर्ष्यति इरस्इर्ष्यायां कंड्वादिः तमप्यधितिष्ठ यद्वा प्रकृतोब्रह्मणस्पतिरेवात्रापि संबोध्यः॥ २ ॥

अथ तृतीया—

अभित्वा॑दे॒वःस॑वि॒ताभिसोमो॑अवीवृतत् ।
अभित्वाविश्वा॑भूतान्य॑भीवर्तो॑यथास॑सि ॥ ३ ॥

अभि । त्वा । देवः । सविता । अभि । सोमः॑ । अवीवृतत् । अभि ।
त्वा । विश्वा॑ । भूतानि॑ । अभिऽवर्तः॑ । यथा॑ । अस॑सि ॥ ३ ॥

हेराजन् देवोदानादिगुणयुक्तः सविता त्वा त्वां अभ्यवीवृतत् अभिवर्तयतु अभिगमयतु राष्ट्रंसोमश्चाभिवर्तयतु विश्वा विश्वानि सर्वाण्यपि भूतानि पृथिव्यादीनि त्वां अभिवर्तयन्तु यथा येन प्रकारेण त्वं अभीवर्तोससि अभितः सर्वत्र वर्तमानोभवसि अस्तेश्छान्दसः शपोलुगभावः॥ ३ ॥

अथ चतुर्थी—

**येनेन्द्रोहविषांकृत्व्यभवद्युम्म्युत्तमः ।**
**इदंतदक्रिदेवाअसपत्नःकिलांभुवम् ॥ ४ ॥**

येन । इन्द्रः । हविषा । कृत्वी । अभवत् । द्युम्नी । उत्ऽतमः । इदम् । तत् । अक्रि । देवाः । असपत्नः । किल । अभुवम् ॥ ४ ॥

येन हविषा अस्माभिर्दत्तेन माद्यन्निन्द्रः कृत्वी वृत्रवधादेः कर्मणः कर्ता अभवत् द्युम्नी द्युम्नं द्योततेर्यशोवा अन्नंवा तद्वान् अतएव उत्तमः उत्कृष्टतमश्चाभवत् तदिदं हविः हेदेवा अक्रि अकारि यद्वा अहमकार्षं अतएवाहमसपत्नः किलाभुवं शत्रुरहितोप्यभवं खलु ॥ ४ ॥

अथ पञ्चमी—

**असपत्नःसपत्नहाभिराष्ट्रोविषासहिः ।**
**यथाहमेषांभूतानांविराजानिजनस्यच ॥ ५ ॥ ३२ ॥**

असपत्नः । सपत्नऽहा । अभिऽराष्ट्रः । विऽससहिः । यथा । अहम् । एषाम् । भूतानाम् । विऽराजानि । जनस्य । च ॥ ५ ॥ ३२ ॥

सपत्नहा सपत्नानां शत्रूणां हन्ता अतएवासपत्नः शत्रुरहितोहमभुवं अभिराष्ट्रः अभिगतराष्ट्रः प्राप्तराज्यः सन् विषासहिः शत्रूणां विशेषेणाभिभविताचाभुवं यथा येन प्रकारेणाहं एषां दृश्यमानानां सर्वेषां भूतानां प्राणिनां जनस्यच सेवकस्यामात्यादेश्च विराजानि यथा ईश्वरोभवानि तथा सपत्नहा विषासहिश्चाभूवमित्यर्थः ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे द्वात्रिंशोवर्गः ॥ ३२ ॥

प्रवइति चतुर्ऋचं चतुर्विंशं सूक्तं गायत्रं अर्बुदस्य सर्पर्षेः पुत्रऊर्ध्वग्रावानाम ऋषिः सोमाभिषवार्थाग्रावाणोदेवता । तथाचानुक्रान्तं—प्रवश्चतुष्कमूर्ध्वग्रावार्बुदिर्ग्राव्णोस्तौत् गायत्रमिति । ग्रावस्तोत्रे एतत्सूक्तं । सूत्रितंच—आवऋंजसे प्रवोग्रावाणइति सूक्तयोरिति । यद्वा इदमेकमेवसूक्तं ग्रावस्तोत्रे । सूत्र्यतेहि—प्रवोग्रावाणइत्येकउक्तं सर्पणमिति ।

तत्र प्रथमा—

प्रवो॑ग्रावाणःसवि॒तादे॒वःसु॑वतु॒धर्म॑णा ।
धू॒र्षु॑यु॒ज्यध्वं॑सुनु॒त ॥ १ ॥

प्र । व॒ः । ग्रा॒वा॒ण॒ः । स॒वि॒ता । दे॒वः । सु॒व॒तु॒ ।
धर्म॑णा । धूः॒ऽसु । यु॒ज्य॒ध्व॒म् । सु॒नु॒त ॥ १ ॥

हेग्रावाणः सोमाभिषवार्थाः पाषाणाः वोयुष्मान् सवितापेरकोदेवः धर्मणआत्मीयेन धारणेन कर्मणा प्रसुवतु अभिषवार्थं प्रेरयतु षूप्रेरणेतौदादिकः यूयंच धूर्षु अभिषवस्थानेषु प्राच्यादिमहादिक्षु युज्यध्वं युक्ताभवत अनन्तरं सुनुत अभिषुणुत सोमं ॥ १ ॥

अथ द्वितीया—

ग्रावा॑णो॒अप॑दु॒च्छुना॒मप॑सेधतदु॒र्म॒तिम् । उ॒स्राःक॑र्तनभे॒ष॒जम् ॥२॥

ग्रावा॑णः । अप॑ । दु॒च्छुना॑म् । अप॑ । से॒ध॒त॒ । दुः॒ऽम॒तिम् ।
उ॒स्राः । क॒र्त॒न॒ । भे॒ष॒जम् ॥ २ ॥

हेग्रावाणः दुच्छुनां दुःखकारिणीं शत्रुभूतां प्रजां अपसेधत अस्मत्तोपगमयत । षिधुगत्यां तथा दुर्मतिं दुष्टाभिसंधिंच अपसेधत भेषजं सुखं अस्माकं यथा भवति तथा उस्रागाः कर्तन कुरुत करोतेश्छान्दसोविकरणस्य लुक् तप्तनप्तनथनाश्चेति तनबादेशः ॥ २ ॥

अथ तृतीया—

ग्रावा॑ण॒उप॑रे॒ष्वाम॑ही॒यन्ते॑स॒जोष॑सः । वृष्णो॑दध॑तो॒वृष्ण्य॑म् ॥ ३ ॥

ग्रावा॑णः । उप॑रेषु । आ । म॒ही॒यन्ते॑ । स॒ऽजोष॑सः ।
वृष्णे॑ । दध॑तः । वृष्ण्य॑म् ॥ ३ ॥

ग्रावाणोदिक्ष्ववस्थिताः पाषाणाः सजोषसः सह प्रीयमाणाः संगताः सन्तोवा उपरेषु उपरोनामाभिषवाय चतुर्णां ग्राव्णां मध्ये स्थापितोविस्तृतः पाषाणः प्रदेशापेक्षं बहुवचनं उपरस्य प्रान्तेषु महीयन्ते प्रकाशन्ते आकारः पूरणः । किंकुर्वन्तः वृष्णे वर्षित्रे सोमाय वृष्ण्यं वीर्यं दधतः प्रयच्छन्तः ॥ ३ ॥

अथ चतुर्थी—

ग्रावाणःसवितानुवोंदेवःसुवतुधर्मणा ।
यजमानायसुन्वते॥ ४ ॥ ३३ ॥

ग्रावाणः । सविता । नु । वः । देवः । सुवतु । धर्मणा ।
यजमानाय । सुन्वते ॥ ४ ॥ ३३ ॥

देवोदानादिगुणयुक्तः सविता हेग्रावाणोवोयुष्मान् धर्मणा आत्मीयेन धारणेन नु क्षिप्रं सुवतु अभिषवे प्रेरयतु किमर्थं सुन्वते सोमाभिषवं कुर्वते यजमानाय यजमानार्थं तस्य यागनिष्पत्तये इत्यर्थः॥ ४ ॥

॥ इत्यष्टमस्याष्टमे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

प्रसूनवइति चतुर्ऋचं पञ्चविंशं सूक्तं ऋभुपुत्रः सूनुर्नाम ऋषिः द्वितीया गायत्री शिष्टास्तिस्रोनुष्टुभः आद्याऋभुदेवत्या शिष्टाआग्नेय्यः । तथाचानुक्रान्तम्—प्रसूनवः सूनुरार्भवआग्नेयमानुष्टुभं द्वितीया गायत्र्याद्यार्भवीति । गतोविनियोगः ।

तत्र प्रथमा—

प्रसूनवऋभूणांबृहन्नवन्तवृजना ।
क्षामायेविश्वधायसोश्नन्धेनुंनमातरम् ॥ १ ॥

प्र । सूनवः । ऋभूणाम् । बृहत् । नवन्त । वृजना । क्षाम ।
ये । विश्वऽधायसः । अश्नन् । धेनुम् । न । मातरम् ॥ १ ॥

सूनवःएतत्संज्ञा ऋभूणां ऋभुर्विभ्वावाजइति त्रयाणामपि प्रथमेन व्यपदेशः तेषांपुत्राः बृहत् प्रभूतं वृजना संग्रामनामैतत् वृजनं संग्रामं प्रनवन्त नवतिर्गतिकर्मा प्रगच्छंति प्रकर्षेणगच्छंति प्रकृष्टगमनेन जयोलक्ष्यते तत्र शत्रून् जयन्तीत्यर्थः।सूनुर्नाम ऋषिःआत्मानमेव परोक्षेण निरदिशत् एकस्मिन्नपि पूजार्थं बहुवचनं ये ऋभवः विश्वधायसः विश्वस्य धारकाः क्षाम भूमिं अश्नन् व्याप्नुवन् अशूव्याप्तौ व्यत्ययेन श्ना धेनुंन धेनुः प्रीणयित्री गौः तामिव तेषामृभूणामित्यन्वयः

यद्वा सूर्यरश्मयोप्यृभवउच्यन्ते ये उरुभासमानाः सूर्यरश्मयः विश्वधायसः विश्वं सर्वं रसं धयन्तः पिबन्तः यद्वा वृष्ट्यादिप्रदानेन सर्वस्य धारकाः एवं भूताः सन्तः क्षाम भूमिं अश्नन् अभुंजत तदीयं सर्वं रसं अपिबन् । तत्र दृष्टान्तः—मातरं जननीं धेनुं पयस्विनीं गां यथा वत्सः पिबति तथा ये ऋभवोश्नन्ति तेषामृभूणामित्यन्वयः ॥ १ ॥

अग्निप्रणयने प्रदेवमिति तृचोनुवक्तव्यः । सूत्रितंच—प्रेषितोग्निप्रणयनीयाः प्रतिपद्यते प्रदेवंदेव्याधियेति तिस्रइति ।

तृचे आद्या सूक्ते द्वितीया—

**प्रदेवंदेव्याधियाभरताजातवेदसम् । हव्यानोवक्षदानुषक् ॥ २ ॥**

**प्र । देवम् । देव्या । धिया । भरत । जातऽवेदसम् ।**
**हव्या । नः । वक्षत् । आनुषक् ॥ २ ॥**

हेऋत्विग्यजमानाः देवं दानादिगुणयुक्तं जातवेदसं जातानां वेदितारं जातप्रज्ञं जातधनं वा इममग्निं प्रभरत प्रकर्षेण हरत यद्वा प्रांचं नयत केन साधनेनेति तदाह—देव्या दीप्तया धिया प्रज्ञया कर्मणावा यद्वा एषा सहयोगे तृतीया देव्याधिया युक्तं किंप्रयोजनमिति चेत् नोस्माकं हव्या हव्यानि हवींषि आनुषक् आनुपूर्व्यादनुक्रमेण वक्षत् अयमग्निः वहेत् देवान् प्रापयेत् वहेर्लेटि सिब्बहुलमिति सिप् ॥ २ ॥

अथ तृतीया—

**अयमुष्यप्रदेवयुर्होतायज्ञायनीयते । रथोनयोरभीवृतोघृणीवाञ्चेततित्मना ॥ ३ ॥**

**अयम् । ऊँ इति । स्यः । प्र । देवऽयुः । होता । यज्ञाय । नीयते ।**
**रथः । न । योः । अभिऽवृतः । घृणिऽवान् । चेतति । त्मना ॥ ३ ॥**

अयमु अयमेव स्यः सोग्निः योदेवयुः देवान्यष्टुमिच्छन् भवति देवशब्दात्क्यचि नछंदस्यपुत्रस्येतीत्वदीर्घयोः प्रतिषेधः अयमेव होता देवानामाह्वाता अयमेव यज्ञाय यागार्थं प्रणीयते आहवनीयदेशं प्रकर्षेण नीयते अपिच रथोरंहणशीलः सूर्यः रथवान्वा छांदसोमत्वर्थी-

यस्य लोपः सयथा घृणीवान् दीप्तिमान् तद्वद्दीप्तः योः मिश्रयिता हविषां देवैः संगमयिता यौतेरन्येभ्योपि दृश्यन्तइति विच् अभीवृतः ऋत्विग्यजमानैर्वेष्टितः वृणोतेः कर्मणि अन्येषामपीति पूर्वपदस्यदीर्घः गतिरनंतरइति गतेः प्रकृतिस्वरत्वं । एवंभूतोग्निः त्मना आत्मना स्वयमेव चेतति सम्यक्देवान्यष्टुं जानाति मंत्रेष्वाङ्यादेरात्मनइति आकारलोपः ॥ ३ ॥

अथ चतुर्थी—

अ॒यम॒ग्निरु॑रुष्यत्य॒मृता॑दिव॒जन्म॑नः ।
सह॑सश्चि॒त्सही॑यान्दे॒वोजी॒वात॑वेकृ॒तः ॥ ४ ॥ ३४ ॥

अ॒यम् । अ॒ग्निः । उ॒रु॒ष्य॒ति॒ । अ॒मृता॑त्ऽइव । जन्म॑नः । सह॑सः । चि॒त् । सही॑यान् । दे॒वः । जी॒वात॑वे । कृ॒तः ॥ ४ ॥ ३४ ॥

अयमग्निः अमृतादमरणात् देवाद्देवनिमित्तात् भयादिव जन्मनः जायमानान्मनुष्यनिमित्ताद्भयादपि उरुष्यति तस्माद्रक्षति।उरुष्यतीरक्षाकर्मेतियास्कः। भाववाचिनोमृतशब्दस्य नञाबहुव्रीहौ नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वं भीत्रार्थानामित्यपादानसंज्ञा । अपिचायं देवः सहसश्चित् सहइति बलनाम तस्मादुत्तरस्य मत्वर्थीयस्य बहुलं छन्दसीति लुक् चिच्छब्दोप्यर्थे सहस्वतोबलवतोपि सहीयान् बलवत्तरः सहस्विशब्दादीयसुनि विन्मतोरिति विनोलुक् टेरिति टेर्लोपः एवंभूतोदेवः जीवातवे जीवनहेतवे यागाय कृतः ब्रह्मणा सृष्टः ॥ ४ ॥

॥ इत्यष्टमस्याष्टमे चतुस्त्रिंशोवर्गः ॥ ३४ ॥

पतंगमिति तृचं षट्त्रिंशं सूक्तं प्रजापतिपुत्रस्य पतंगस्यार्षं आद्या जगती नतस्त्रिष्टुभौ मायाभेदस्य प्रतिपाद्यत्वात् तद्देवत्यमिदं सूक्तं । अनुक्रान्तंच—पतंगं तृचं पतंगः प्राजापत्योमायाभेदं जगत्यादीति ।प्रवर्ग्येभिष्टवे आद्येऋचौ । सूत्रितंच—पतंगमक्तमसुरस्यमाययायोनःसनुत्यइति ।

तत्र प्रथमा—

प॒त॒ङ्गम॒क्तमसु॑रस्यमा॒यया॑हृ॒दाप॑श्यन्ति॒मन॑साविप॒श्चित॑ः ।
स॒मु॒द्रेअ॒न्तःक॒वयो॒विच॑क्षते॒मरी॑चीनांप॒दमि॑च्छन्तिवे॒धस॑ः ॥ १ ॥

पतङ्गम् । अक्तम् । असुरस्य । मायया । हृदा । पश्यन्ति ।
मनसा । विपःऽचितः । समुद्रे । अन्तरिति । कवयः । वि ।
चक्षते । मरीचीनाम् । पदम् । इच्छन्ति । वेधसः ॥ १ ॥

असुरस्यासनकुशलस्य सर्वोपाधिविहीनस्य परब्रह्मणः संबंधिन्या मायया त्रिगुणात्मिकया अक्तं व्यक्तं अभिव्यक्तं यद्वा मायेति प्रज्ञानाम प्रज्ञया संबद्धं सर्वज्ञं पतंगं पतति गच्छतीति पतंगः सूर्यः तं विपश्चितः विद्वांसः हृदा हृत्स्थेन तात्स्थ्यात्ताच्छब्द्यं हृदि निरुद्धेन मनसा पश्यन्ति जानन्ति कवयः क्रान्तदर्शिनः ते समुद्रे समुद्रवन्त्यस्माद्रश्मयइति समुद्रं सूर्यमंडलं तस्मिन्नन्तर्मध्ये विचक्षते विपश्यन्ति मंडलान्तर्वर्तिनं हिरण्मयं पुरुषमपि जानन्तीत्यर्थः। ये एवं वेधसोविधातारः उक्तप्रकारेण सूर्योपासनस्य कर्तारः ते मरीचीनां रश्मीनां पदं स्थानं सूर्यमंडलं इच्छन्ति अभिलषन्ति तदुपासनया प्राप्नुवन्तीत्यर्थः। यद्वा मायया अक्तं जीवरूपेणाभिव्यक्तमात्मानं विपश्चितोवेदान्ताभिज्ञाः हृत्स्थेन अन्तर्मुखेन मनसा पतंगं पतति व्याप्नोतीति पतंगः परमात्मा तं पश्यन्ति उपाधिपरित्यागेन जीवात्मनः परमात्मना तादात्म्यं साक्षात्कुर्वन्तीत्यर्थः । अपिच ते कवयः क्रान्तदर्शिनोवेदान्ताभिज्ञाः समुद्रे समुद्रवंत्यस्माद्भूतानीति समुद्रः परमात्मा तस्मिन्नधिष्ठानभूतेन्तर्मध्ये सर्वं दृश्यजातं अध्यस्तत्वेन विचक्षते विपश्यन्तीति अतोदृग्व्यतिरिक्तस्य सर्वस्य मिथ्यात्वात् वेधसः विधातारस्ते मरीचीनां वृत्तिज्ञानानां पदमधिष्ठानभूतं सच्चित्सुखात्मकं यत्परंब्रह्म तदेवेच्छन्ति तद्भावप्राप्तिमेव कामयन्ते ॥ १ ॥

वाग्देवत्ये पशौ पतंगोवाचमिति पुरोडाशस्यानुवाक्या। सूत्रितंच—यद्वाग्वदंत्यविचेतनानि पतंगोवाचं मनसा बिभर्तीति ।

सैषा द्वितीया—

पतङ्गोवाचंमनसाबिभर्तितांगन्धर्वोवदद्गर्भेअन्तः ।
तांद्योतमानांस्वर्यंमनीषामृतस्यंपदेकवयोनिपान्ति ॥ २ ॥

पतङ्गः । वाचम् । मनसा । बिभर्ति । ताम् । गन्धर्वः । अवदत् ।
गर्भे । अन्तरिति । ताम् । द्योतमानाम् । स्वर्यम् । मनीषाम् ।
ऋतस्य । पदे । कवयः । नि । पान्ति ॥ २ ॥

पतंगः सूर्यः वाचं त्रयीरूपां मनसा प्रज्ञया बिभर्ति धारयति । श्रूयतेहि-ऋग्भिः पूर्वाह्णे दिविदेवईयते यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य इति । तामेव वाचं गर्भे शरीरस्य मध्ये वर्तमानो गंधर्वः गाः शब्दान् धारयतीति गंधर्वः प्राण-वायुः अन्तर्मध्ये अवदत् वदति प्रेरयति । मारुतस्तूरसि चरन्मंद्रं जनयति स्वरं इति स्मरणात् । द्योतमानां स्वर्यं स्वर्गमयित्रीं स्वर्गाय हितां वा मनीषां मनसईशित्रीं तां त्रयीरूपां वाचं ऋतस्य यज्ञस्य सत्यभूतस्य सूर्यस्य वा पदे स्थाने कवयोमेधाविनऋषयः निपान्ति अध्यापनेन नितरां रक्षंति यद्वा पतंगः सर्वोपाधिशून्यो व्याप्तः परमात्मा ससृष्ट्यादौ वाचं मनसा बिभर्ति कानि कानि स्रष्टव्यानीति पर्यालोचनेन मनसा सकलार्थप्रतिपादकं वेदं परामृष्टवानित्यर्थः । स्मर्यतेहि-वेदशब्देभ्यएवादौ निर्ममे समहेश्वरइति । गर्भे हिरण्मये ब्रह्मांडे अन्तर्वर्तमानोगंधर्वोहिरण्यगर्भः तां वाचमवदत् प्रथममुच्चारितवान् द्योतमानत्वादिगुणविशिष्टां तां वाचं कवयः क्रान्तदर्शिनोदेवाः ऋतस्य सत्यस्य ब्रह्मणः पदे स्थाने निपान्ति निभृतं रक्षंति ॥२॥

प्रवर्ग्येभिष्टवे अपश्यंगोपामित्येषा । सूत्रितं—अपश्यंगोपामनिपद्यमानं स्रक्वेद्रप्सस्येति ।

सैषा तृतीया—

**अपश्यंगोपामनिपद्यमानमाचपराचपथिभिश्चरन्तम् ।**
**ससध्रीचीःसविषूचीर्वसानआवरीवर्तिभुवनेष्वन्तः ॥ ३ ॥ ३५ ॥**

**अपश्यम् । गोपाम् । अनिऽपद्यमानम् । आ । च । परा ।**
**च । पथिऽभिः । चरन्तम् । सः । सध्रीचीः । सः । विषूचीः ।**
**वसानः । आ । वरीवर्ति । भुवनेषु । अन्तरिति ॥ ३ ॥ ३५ ॥**

व्याख्यातेयमस्यवामीयसूक्ते । गोपां गोपायितारमादित्यं अपश्यं अज्ञासिषं एषहि सर्वाणि भूतजातानि उदयास्तमयादिकर्मणा गोपायति । कीदृशं अनिपद्यमानं उच्चैर्गतवंतं नह्यसौ कदाचिन्नीचैः पद्यते पथिभिराकाशमार्गैः पूर्वाह्णे आचरन्तं अस्मानभिलक्ष्य गच्छन्तं सायंसमये पराचरंतं पराङ्मुखं गच्छन्तं प्रकारद्वयसमुच्चयार्थौ चशब्दौ । ससूर्यः सध्रीचीः सहांचंतीः विषूचीः विविधं पृथक्पृथक् अंचंतीः स्वस्वव्यापारायगच्छन्तीः प्राच्याद्याः महादिशः सध्रीच्यः विषूच्यः कोणदिशः वसानः स्वभासा आच्छादयन् प्रकाशयन् भुवनेषु लोकेष्वन्तर्मध्ये आ-

वरीवर्ति पुनःपुनः उद्यन्नस्तं गच्छन् आवर्तते यद्वा गोपां शरीरस्यगोपायितारं अनिपद्यमानं अविनाशिनं अविपन्नं आचपराच अभिमुखेनच पराङ्मुखेनच पथिभिः नाडीलक्षणैः मार्गैश्चरन्तं शरीरे वर्तमानं प्राणं अपश्यं अहमदर्शम् ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे पंचत्रिंशोवर्गः ॥ ३५ ॥

त्यमूष्विति तृचं सप्तविंशं सूक्तं तार्क्ष्यपुत्रस्य अरिष्टनेमेरार्षं त्रैष्टुभं तार्क्ष्यदेवताकं । तथाचानुक्रान्तं—त्यमूष्वरिष्टनेमिस्तार्क्ष्यस्तार्क्ष्यमिति । अहर्गणेषु द्वितीयादिष्वहस्सु निष्केवल्यसूक्तानां पुरस्तादिदं सूक्तं शंसनीयं । सूत्रितंच—त्यमूषुवाजिनंदेवजूतमिति तार्क्ष्यमग्रेनिष्केवल्यसूक्तानामिति । विषुवतितु निष्केवल्यसूक्तानामंते एव तत्सूक्तं । सूत्र्यतेहि—त्यमूष्वितीहतार्क्ष्यमन्ततइति । महाव्रतेपि निष्केवल्ये एतत् । तथैव पंचमारण्यके सूत्रितम् ।

तत्र प्रथमा—

**त्यमूषुवाजिनंदेवजूतंसहावानंतरुतारंरथानाम् ।**
**अरिष्टनेमिंपृतनाजमाशुंस्वस्तयेतार्क्ष्यमिहाहुवेम ॥ १ ॥**

त्यम् । ऊँ इति । सु । वाजिनम् । देवऽजूतम् । सहऽवानम् ।
तरुतारम् । रथानाम् । अरिष्टऽनेमिम् । पृतनाजम् । आशुम् ।
स्वस्तये । तार्क्ष्यम् । इह । हुवेम ॥ १ ॥

त्यमु तं प्रसिद्धमेव तार्क्ष्यं तृक्षपुत्रं सुपर्णं तृक्षाद्यन् गर्गादिः स्वस्तये क्षेमाय इहास्मिन्कर्मणि हुवेम भृशमाह्वयेमहि बहुलं छन्दसीति ह्वयतेः संप्रसारणं लिङ्याशिष्यङ् यद्वा प्रार्थनायां लिङि व्यत्ययेन शः कीदृशं वाजिनं बलवन्तं अन्नवन्तंवा देवजूतं देवैः सोमाहरणाय प्रेरितं जुइति गत्यर्थः सौत्रोधातुः अस्मात्कर्मणिनिष्ठा तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरत्वं । यद्वा देवैः प्रीयमाणं तर्प्यमाणं । तदाहयास्कः—जूतिर्गतिः प्रीतिर्वा देवजूतं देवगतं देवप्रीतं वेति । सहावानं सहस्वन्तं बलवन्तं अभिभवनवन्तं वा अतएव रथानां अन्यदीयानां तरुतारं संग्रामेजेतारं यद्वा रंहणशीलाइमे लोकारथाः तान् सोमाहरणसमये शीघ्रं तरीतारं ।

---

१ नि० १०. २८ ।

श्रूयतेहि—एषहीमान् लोकान् सद्यस्तरतीति[1] ।तरतेस्तृचि ग्रसितस्कभितेत्यादौ उडागमोनिपात्यते । अरिष्टनेमिं अहिंसितरथं यद्वा नेमिर्नमनशीलमायुधं अहिंसितायुधं अथवा उपचाराज्जनके जन्यशब्दः अरिष्टनेमेर्मम जनकं पृतनाजं पृतनानां शत्रुसेनानां प्राजितारं प्रगमयितारं जेतारंवा अजगतिक्षेपणयोः अस्मात्क्विप् वलादावार्धधातुके विकल्पइष्यते इतिवचनात् वीभावाभावः जयतेर्वाडप्रत्ययः आशुं शीघ्रगामिनं ॥ १ ॥

अथ द्वितीया—

इन्द्र॑स्येव रा॒तिमा॒जोहु॑वानाः स्व॒स्तये॒ नाव॑मि॒वा रु॑हेम ।
उ॒र्वी न पृथ्वी॒ बहु॑ले॒ गभी॑रे॒ मा वा॒मेतौ॒ मा परे॑तौ रिषाम ॥ २ ॥

इन्द्र॑स्यऽइव । रा॒तिम् । आ॒ऽजोहु॑वानाः । स्व॒स्तये॑ । नाव॑म्ऽइव । आ । रु॒हे॒म॒ । उ॒र्वी इति॑ । न । पृथ्वी॒ इति॑ । बहु॑ले॒ इति॑ । गभी॑रे॒ इति॑ । मा । वा॒म् । आ॒ऽइ॑तौ । मा । परा॑ऽइतौ । रि॒षा॒म॒ ॥ २ ॥

इन्द्रस्येव तार्क्ष्यस्य रातिंदानं आजोहुवानाः पुनःपुनः आह्वयन्तोवयं स्वस्तये अविनाशाय नावमिव नौर्यथा दुरवगाहं समुद्रं तारयति तथा दुःखस्य तारयित्रीं तां आरुहेम आरूढा भूयास्म रुहेराशीर्लिङि लिङ्याशिष्यङ् हेउर्वी उर्व्यौ विस्तीर्णे हेपृथ्वी पृथिवी प्रथिते प्रख्याते हेबहुले अनंते गभीरे गांभीर्योपेते ईदृश्यौ हेद्यावापृथिव्यौ नशब्दः संप्रत्यर्थे संप्रति वांयुवयोः संबंधि एतौ तार्क्ष्यस्यागमे परेतौ परागमनेच वयं मारिषाम हिंसितामाभूम । आङ्पराभ्यामुत्तरस्येणोभावेक्तिन् तादौचनितीति गतेः प्रकृतिस्वरत्वं ॥ २ ॥

अथ तृतीया—

स॒द्यश्चि॒द्यः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑ इव॒ ज्योति॑षा॒पस्त॒तान॑ ।
स॒ह॒स्र॒साः श॑त॒सा अ॑स्य॒ रंहि॒र्न स्मा॑ वरन्ते युव॒तिं न शर्या॑म् ॥ ३ ॥ ३६ ॥

स॒द्यः । चि॒त् । यः । शव॑सा । पञ्च॑ । कृ॒ष्टीः । सूर्यः॑ऽइव । ज्योति॑षा । अ॒पः । त॒तान॑ । स॒ह॒स्र॒ऽसाः । श॒त॒ऽसाः । अ॒स्य॒ । रंहिः॑ । न । स्म॒ । व॒र॒न्ते॒ । यु॒व॒तिम् । न । शर्या॑म् ॥ ३ ॥ ३६ ॥

---

1 ऐ० ब्रा० ४. २०.

यश्चित् योपि ताक्ष्यः सद्यः शीघ्रं शवसा आत्मीयेन बलेन अपउदकानि अमृतलक्षणानि ततान विस्तारितवान् सूर्यइव यथा सूर्यः सर्वस्य प्रेरकआदित्यः ज्योतिषा आत्मीयेन तेजसा वर्षतावपोविस्तारयति तद्वत् कृष्टयोमनुष्याः पंचकृष्टीः पंचविधान् कृष्टीन् मनुष्यान् प्रति निषादपंचमांश्चत्वारोवर्णानित्यर्थः। अस्य ताक्ष्यस्य रंहिर्गतिः सहस्रसाः सहस्रसंख्यस्य धनस्य दात्री संभक्तीवा भवति तथा शतसाः शतस्य च दात्री संभक्ती वा भवति। सनतेः सनोतेर्वा जनसनखनेति विट् विड्वनोरनुनासिकस्येति आत्वं नस्म नखलु ईदृशीं ताक्ष्यस्य ते गतिं वरंते केच न वारयंति। तत्र दृष्टान्तः—शर्यां शरकांडमयीं इषुं धनुषोमुक्तां युवतिंन लक्ष्येण मिश्रीभवन्तीमिव सा यथा दुर्निवारा तथैषा कैश्चिदपि वारयितुमशक्येत्यर्थः। अत्र निरुक्तं—सद्योपियः शवसा बलेन तनोत्यपः सूर्यइव ज्योतिषा पंचमनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्नस्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुमिति[1] ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे षट्त्रिंशोवर्गः ॥ ३६ ॥

उत्तिष्ठतेति तृचमष्टाविंशं सूक्तं ऐंद्रं आद्या अनुष्टुप् शिष्टेत्रिष्टुभौ उशीनरपुत्रः शिबिर्नामराजा प्रथमायाः ऋषिः काशीनामधिपतिः प्रतर्दनोनाम द्वितीयायाः रोहिदश्वपुत्रोवसुमनानाम तृतीयायाः। तथाचानुक्रान्तं—उत्तिष्ठतैकर्चाः शिबिरौशीनरः काशिराजः प्रतर्दनोरौहिदश्वोवसुमनाआद्यानुष्टुबिति। दधिघर्म्ये आद्या वक्तव्या। सूत्रितंच—होतर्वदस्वेत्युक्तउत्तिष्ठतावपश्यतेत्याहेति।

सैषा प्रथमा—

उत्तिष्ठतावपश्यतेन्द्रस्यभागमृत्वियम्।
यदिश्रातोजुहोतनयद्यश्रांतोममत्तन ॥ १ ॥

उत्। तिष्ठत। अव। पश्यत। इन्द्रस्य। भागम्। ऋत्वियम्।
यदि। श्रातः। जुहोतन। यदि। अश्रांतः। ममत्तन ॥ १ ॥

---

[1] नि० १०. २९।

हेऋत्विजः उत्तिष्ठत आसमंतादूर्ध्वमुत्तिष्ठत नोपविशत ऊर्ध्वकर्मत्वादात्मनेपदाभावः उत्थाय ऋत्वियं ऋतौ वसंतादिकाले भवं इंद्रस्य भागं भजनीयं दधिघर्मं पच्यमानं अवपश्यत निरीक्षध्वं ऋतुशब्दात्भवार्थे छन्दसि घस् सितिचेति पदसंज्ञायां भसंज्ञायाबाधात् ओर्गुणाभावः भजेः कर्मणि घञंतोभागशब्दः कर्षात्वतइत्यन्तोदात्तत्वं यदि सभागः श्रातः पक्वः तर्हि जुहोतनइन्द्रार्थं अग्नौ जुहुत तप्तनप्तनथनाश्चेति तस्य तनबादेशः भीह्रीइत्यादिना पिति प्रत्ययात्पूर्वस्योदात्तत्वं यदि अश्रातः अपक्वः तर्हि ममत्तन माद्यत यद्वा स्तुतिभिर्मादयत अत्र तेनैव सूत्रेण तनबादेशः ॥ १ ॥

तस्यैव दधिघर्मस्य श्रातं हविरित्येषानुवाक्या । सूत्रितंच—श्रातं हविरित्युक्तः श्रातं हविरित्यन्वाहेति ।

सैषा द्वितीया—

**श्रा॒तंह॒विरो॒ष्विंन्द्र॒प्रया॑हिज॒गाम॒सूरो॒अध्व॑नो॒विम॑ध्यम् ।**
**परि॑त्वासते॒नि॒धिभि॒ःसखा॑यःकुल॒पान॒व्रा॒जप॑तिं॒चर॑न्तम् ॥ २ ॥**

श्रा॒तम् । ह॒विः । ओ इति॑ । सु । इन्द्र॒ । प्र । या॒हि॒ । ज॒गाम॑ ।
सूर॑ः । अध्व॑नः । वि॒ऽम॑ध्यम् । परि॑ । त्वा॒ । आ॒स॒ते॒ । नि॒धि॒ऽभि॑ः ।
सखा॑यः । कु॒ल॒ऽपाः । न । व्रा॒ज॒ऽप॑तिम् । चर॑न्तम् ॥ २ ॥

हेइन्द्र हविर्दधिघर्माख्यं तदीयं श्रातं पक्वं श्रीञ्पाके इत्यस्मात् निष्ठायां अपस्पृधेथामित्यादौ श्राभावोनिपात्यते ओ आउ सुसुष्ठु प्रयाहि प्रकर्षेण शीघ्रं आगच्छ सूरः सूर्यः अध्वनः गन्तव्यस्य मार्गस्य विमध्यं विकलमध्यं ईषदूनं मध्यभागं जगाम गतवान् तव यागार्थं मध्याह्नोजातइत्यर्थः सखायः समानख्यानाऋत्विजश्च निधिभिः निहितैः अभिन्यासादितैः सोमैः सार्धं त्वा त्वां पर्यासते पर्युपासते । तत्र दृष्टान्तः—कुलपान कुलस्य वंशस्य रक्षकाः पुत्रा यथा व्राजपतिं व्राजागन्तव्यागृहाः तेषां पतिं चरंतं गच्छन्तं उपासते तथेत्यर्थः । व्रजगतौ अस्मात्कर्मणि घञ् अजिव्रज्योश्चेति कुत्वनिषेधः कर्षात्वतइत्यन्तोदात्तत्वे पत्यावैश्वर्यइति पूर्वपदप्रकृतिस्वरत्वं ॥ २ ॥

तस्यैव दधिघर्मस्य श्रातंमन्यइत्येषा याज्या। सूत्र्यतेहि—श्रातंमन्यऊधनि श्रातमग्नाविति यजतीति।

सैषा तृतीया—

श्रातंमन्यऊधनिश्रातमग्नौसुश्रातंमन्येतदृतंनवीयः।
माध्यंन्दिनस्यसवनस्यदध्नःपिबेन्द्रवज्रिन्पुरुकृज्जुषाणः॥३॥३७॥

श्रातम्। मन्ये। ऊधनि। श्रातम्। अग्नौ। सुऽश्रातम्। मन्ये।
तत्। ऋतम्। नवीयः। माध्यंन्दिनस्य। सवनस्य। दध्नः।
पिब। इन्द्र। वज्रिन्। पुरुऽकृत्। जुषाणः॥ ३ ॥ ३७ ॥

ऊधनि गोरूधसि एतत् दधिघर्माख्यं हविः पयोरूपेण श्रातं पक्वं इतिमन्ये जाने पुनश्च दुग्धं पयोग्नावपि श्रातं पक्वं इदानीं दध्यवस्थमप्यग्नौ पच्यते अतः सुश्रातं सुपक्वं इति मन्ये जाने अतएतद्धविः ऋतं सत्यभूतं नवीयः नवतरं प्रत्यग्रतरं भवति हेवज्रिन् वज्रवन् हेपुरुकृत् बहुकर्मकृत् इन्द्र जुषाणः प्रीयमाणस्त्वं माध्यंदिनस्य माध्यंदिने भवस्य सवनस्य सोमस्य संबंधिनोदध्नः कर्मणि षष्ठी दधिघर्माख्यं हविः पिब ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे सप्तत्रिंशोवर्गः ॥ ३७ ॥

प्रससाहिषइति तृचं एकोनत्रिंशं सूक्तं इन्द्रपुत्रस्य जयस्यार्षं त्रैष्टुभमैन्द्रं। तथाचानुक्रान्तं—प्रससाहिषेजयऐन्द्रइति। गतः सूक्तविनियोगः। दर्शे इन्द्रस्य हविषः प्रससाहिषइत्येषा याज्या। सूत्रितंच—प्रससाहिषेपुरुहूतशत्रून् महांइन्द्रोयओजसेति। एकादशिनऐन्द्रपशौ पुरोडाशस्येयमेव याज्या।सूत्रितंच—प्रससाहिषेपुरुहूतशत्रून् स्वस्तयेवाजिभिश्चप्रणेतरिति। देवसुवां हविषि इन्द्रस्येयमेवानुवाक्या। सूत्रितंच—प्रससाहिषेपुरुहूतशत्रून् भुवस्त्वमिन्द्रब्रह्मणामहानिति।

सैषा प्रथमा—

प्रससाहिषेपुरुहूतशत्रूञ्ज्येष्ठस्तेशुष्मइहरातिरस्तु।
इन्द्राभरदक्षिणेनावसूनिपतिःसिन्धूनामसिरेवतीनाम्॥ १ ॥

प्र । सुसहिषे । पुरुऽहूत । शत्रून् । ज्येष्ठः । ते । शुष्मः ।
इह । रातिः । अस्तु । इन्द्र । आ । भर । दक्षिणेन । वसूनि ।
पतिः । सिन्धूनाम् । असि । रेवतीनाम् ॥ १ ॥

हेपुरुहूत बहुभिराहूतेन्द्र शत्रून् वैरिणः प्रससाहिषे प्रकर्षेणाभिभवसि ते तव शुष्मः शोषकं बलं ज्येष्ठः प्रशस्यतमं वृद्धतमं वा भवति इहास्मिन् कर्मणि रातिः तव दानं अस्तु अस्मभ्यं भवतु तदर्थं हेइन्द्र दक्षिणेन हस्तेन वसूनि धनानि आभराहर आनय त्वं रेवतीनां रयिमतीनां बहुधनानां सिंधूनां स्यन्दनशीलानां नदीनां पतिरसि स्वामीभवसि रयिशब्दान्मतुपि रयेर्मतौ बहुलमिति संप्रसारणं छन्दसीरः इति मतुपोवत्वं रैशब्दाच्चेति तस्योदात्तत्वम् ॥ १ ॥

वैमृधस्य हविषः मृगोनेत्येषा याज्या । सूत्रितंच—विनइन्द्रमृधोजहि मृगोनभीमः कुचरोगिरिष्ठाइति ।

सैषा द्वितीया—

मृगोनभीमःकुचरोगिरिष्ठाःपरावतआजगन्थापरस्याः ।
सृकंसंशायपविमिन्द्रतिग्मंविशत्रून्ताढिविमृधोनुदस्व ॥ २ ॥

मृगः । न । भीमः । कुचरः । गिरिऽस्थाः । पराऽवतः । आ ।
जगन्थ । परस्याः । सृकम् । सम्ऽशाय । पविम् । इन्द्र ।
तिग्मम् । वि । शत्रून् । ताढि । वि । मृधः । नुदस्व ॥ २ ॥

कुचरः कुत्सितचरणः गिरिष्ठाः पर्वतनिवासी मृगोन सिंहइव हेइन्द्र त्वं भीमः भयंकरोसि सत्वं परस्याः परावतः अतिशयेन दूरात् द्युलोकात् आजगंथ आगच्छ । गमेश्छान्दसे लिटि क्रादिनियमप्राप्तस्येटः उपदेशेत्वतइति प्रतिषेधः । आगत्यच सृकं सरणशीलं तिग्मं तिक्ष्णं पविं वज्रं संशाय सम्यक् तीक्ष्णीकृत्य शत्रून् अस्मदीयान् वैरिणः हेइन्द्र तेन वज्रेण विताढि विशेषेण ताडय विनाशयेत्यर्थः । तडआघाते अस्माल्लोटि ण्यन्ताद्रूपमेतत् । तथा मृधः संग्रामोद्युक्तान् युयुत्सून् अन्यानपि विनुदस्व विशेषेण तिरस्कुरु ॥ २ ॥

अथ तृतीया—

इन्द्रं क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् ।
अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥ ३ ॥३८॥

इन्द्र । क्षत्रम् । अभि । वामम् । ओजः । अजायथाः । वृषभ ।
चर्षणीनाम् । अप । अनुदः । जनम् । अमित्रऽयन्तम् ।
उरुम् । देवेभ्यः । अकृणोत् । ऊँ इति । लोकम् ॥ ३ ॥ ३८ ॥

हेइन्द्र क्षत्रं क्षतात्त्रायकं वामं वननीयं ओजोबलमभिलक्ष्य अजायथाः उत्पन्नोसि हेवृषभ कामानां वर्षितः चर्षणीनां मनुष्याणां अस्माकं नामन्यतरस्यामिति नामउदात्तत्वं अमित्रयन्तं अमित्रः शत्रुः सइवाचरंतं जनं अपानुदः अपागमयः देवेभ्यश्च उरुं विस्तीर्णं लोकं स्वर्गाख्यं अकृणोः अकार्षीः उशब्दः समुच्चये ॥ ३ ॥

॥ इत्यष्टमस्याष्टमेष्टत्रिंशोवर्गः ॥ ३८ ॥

प्रथइति तृचं त्रिंशं सूक्तं वैश्वदेवं त्रैष्टुभं वासिष्ठः प्रथसंज्ञऋषिः प्रथमायाः । भारद्वाजः सप्रथाख्यऋषिः द्वितीयायाः । सूर्यपुत्रोघर्मऋषिः तृतीयायाः । तथाचानुक्रान्तं—प्रथश्चैकर्चाः प्रथोवासिष्ठः सप्रथोभारद्वाजोघर्मः सौर्योवैश्वदेवमिति । प्रवर्ग्येभिष्टएवतत् सूक्तं । सूत्रितंच—गणानांत्वाप्रथश्चयस्येति ।

तत्र प्रथमा—

प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् ।
धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥ १ ॥

प्रथः । च । यस्य । सऽप्रथः । च । नाम । आनुऽस्तुभस्य ।
हविषः । हविः । यत् । धातुः । द्युतानात् । सवितुः । च ।
विष्णोः । रथम्ऽतरम् । आ । जभार । वसिष्ठः ॥ १ ॥

यस्य वसिष्ठस्य प्रथोनाम पुत्रः यस्य भरद्वाजस्य सप्रथोनामपुत्रः तयोर्मध्ये वसिष्ठः आनुष्टुभस्य अनुष्टुप् छंदसा युक्तस्य हविषोघर्माख्यस्य यद्धविः हविष्टापादकं रथंतरं रथरं हःसाधनं साम तद्रथंतरं धातुर्धातृसंज्ञाद्देवात् द्युतानात् द्योतमानात् सवितुश्च विष्णोश्च आजभाराजहाराहृतवान् । हग्रहोर्भइति भत्वं रथशब्दोपपदात्तरतेः संज्ञायां भृतॄवृजीति खच् अरुर्द्विषदजन्तस्येति मुमागमः ॥ १ ॥

अथ द्वितीया—

**अविन्दन्तेअतिहितंयदासींद्यज्ञस्यधामपरमंगुहायत् ।**
**धातुर्द्युतानात्सवितुश्चविष्णोर्भरद्वाजोबृहदाचक्रेअग्नेः ॥ २ ॥**

**अविन्दन् । ते । अतिऽहितम् । यत् । आसीत् । यज्ञस्य । धाम । परमम् । गुहा । यत् । धातुः । द्युतानात् । सवितुः । च । विष्णोः । भरत्ऽवाजः । बृहत् । आ । चक्रे । अग्नेः ॥ २ ॥**

ते धात्रादयः तत् अविंदन् अलभन्त यद्बृहत्सामाख्यं घर्मस्य हविषः संस्कारकं अतिहितं तिरोहितमासीत् यच्च बृहत्सामयज्ञस्य ज्योतिष्टोमादेः परममुत्कृष्टं धाम धारकं शरीरभूतं वा गुहा गुहायामस्मदादिविषये निहितमासीत् । तत्ते धात्रादयः अलभंत तेभ्योग्नेश्च सकाशात् बृहत्साम भरद्वाजऋषिः आचक्रे आभिमुख्येन कृतवान् आहृतवानित्यर्थः ॥ २ ॥

अथ तृतीया—

**तेविन्दन्मनसादीध्यानायजुष्कन्नंप्रथमंदेवयानम् ।**
**धातुर्द्युतानात्सवितुश्चविष्णोरासूर्यादभरन्घर्ममेते ॥ ३ ॥ ३९ ॥**

**ते । अविन्दन् । मनसा । दीध्यानाः । यजुः । स्कन्नम् । प्रथमम् । देवऽयानम् । धातुः । द्युतानात् । सवितुः । च । विष्णोः । आ । सूर्यात् । अभरन् । घर्मम् । एते ॥ ३ ॥ ३९ ॥**

ते धात्रादयः दीध्यानादीप्यमानाः सन्तः मनसा बुद्ध्या अविन्दन् अलभन्त किंतत् यजुः यागसाधनं स्कन्नं स्कंदनीयमासेचनीयं प्रवृंजनसाधनं प्रथमं मुख्यं देवयानं देवानां

प्राप्तिसाधनं घर्मं एवं धात्रादिभिः प्रथममुपलब्धं तं घर्मं धातुः द्योतमानात्सवितुः विष्णोः सूर्याच्च एते ऋत्विजः आभरन् आहरन् आनीतवन्तइत्यर्थः ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे एकोनचत्वारिंशोवर्गः ॥ ३९ ॥

बृहस्पतिरिति तृचं एकत्रिंशं सूक्तं बृहस्पतिदेवत्यंत्रैष्टुभं बृहस्पतिपुत्रस्तपुर्मूर्धानामऋषिः। तथाचानुक्रान्तं—बृहस्पतिस्तपुर्मूर्धाबार्हस्पत्यमिति । गतोविनियोगः ।

तत्र प्रथमा—

**बृहस्पतिर्नयतुदुर्गहातिरःपुनर्नेषदघशंसायमन्म ।**
**क्षिपदशस्तिमपदुर्मतिंहन्नथाकरद्यजमानायशंयोः ॥ १ ॥**

**बृहस्पतिः । नयतु । दुःऽगहा । तिरः । पुनः । नेषत् । अघऽशंसाय । मन्म । क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः ॥ १ ॥**

बृहस्पतिः बृहतां देवानां पतिः पालयिता तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चेति सुडागमः तलोपश्च उभेवनस्पत्यादिषु इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं । दुर्गहा दुर्गमनानांहन्ता सदेवः तिरोनयतु तिरस्कर्तव्यानि पापानि अपसारयतु अघशंसाय अस्माकमनर्थमाशंसमानाय पुरुषाय मन्म मन्यतेर्दीप्तिकर्मणोमन्मदीप्तमायुधं पुनः नेषत् नयतु नयतेर्लेटच्चडागमः सिब्बहुलमिति सिप् । अपिच अशस्तिं अयशस्विनं शत्रुं क्षिपतु अस्मत्तः प्रेरयतु दुर्मतिं दुर्बुद्धिंच अपहन् अपहंतुअथानंतरं शंरोगाणांशमनंयोः भयानां यावनंच करत् ॥ १॥

अथ द्वितीया—

**नराशंसोनोवतुप्रयाजेशन्नोअस्त्वनुयाजोहवेषु ।**
**क्षिपदशस्तिमपदुर्मतिंहन्नथाकरद्यजमानायशंयोः ॥ २ ॥**

**नराशंसः । नः । अवतु । प्रऽयाजे । शम् । नः । अस्तु । अनुऽयाजः । हवेषु । क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः ॥ २ ॥**

पंचसु प्रयाजेषु द्वितीयः प्रयाजोनराशंसदेवताकः तस्मिन्प्रयाजे देवताभूतोनराशंसः नरैः शंसनीयोग्निः नोस्मानवतु रक्षतु हवेषु आह्वानेषु सत्सु अनुयाजः त्रयोनुयाजाः द्वितीयोनुयाजोनराशंसः तस्यानुयाजस्यदेवताभूतोनराशंसोग्निश्च नोस्माकं शंसुखकरोस्तु बृहस्पतिश्च अशस्तिं क्षिपत् इत्यादि पूर्ववत् ॥ २ ॥

अथ तृतीया—

तपुर्मूर्धातपतुरक्षसोयेब्रह्मद्विषःशरवेहन्तवाउं ।
क्षिपदशस्तिमपदुर्मतिंहन्नथांकरद्यजमानायशंयोः ॥ ३ ॥ ४०॥

तपुःऽमूर्धा । तपतु । रक्षसः । ये । ब्रह्मऽद्विषः । शरवे । हन्तवै ।
ऊँ इति । क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् ।
अथ । करत् । यजमानाय । शम् । योः ॥ ३ ॥ ४०॥

तपुर्मूर्धा तापकशिरस्कोबृहस्पतिः रक्षसोये ब्रह्मद्विषोब्राह्मणद्वेष्टारोराक्षसाः तान् राक्षसान् तपतु तापयतु दहत्वित्यर्थः । किमर्थं शरवे शरुं हिंसकं रक्षसामधिपतिं हन्तवै हन्तुं अनुचरान्पूर्वं नाशयतु पश्चादेनमपि नाशयत्वित्यर्थः । शॄहिंसायामित्यस्मात् शॄस्वृस्निहीत्यादिना उप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वं क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी हन्तेस्तुमर्थे सेसेनिति तवैप्रत्ययः अन्तश्चतवैयुगपदिति आद्यन्तयोर्युगपदुदात्तत्वं उशब्दः पूरकः॥३॥

॥ इत्यष्टमस्याष्टमे चत्वारिंशोवर्गः ॥ ४० ॥

अपश्यमिति तृचं द्वात्रिंशं सूक्तं त्रैष्टुभं प्रजापतिपुत्रः प्रजावान् नामऋषिः ऋचः क्रमेण यजमानपत्नीहोतॄणामाशिषः प्रतिपादिकाः अतस्तद्देवताकाः। तथाचानुक्रान्तं—अपश्यं प्रजावान् प्राजापत्योन्वृचं यजमानपत्नीहोत्राशिषइति । प्रवर्ग्येभिष्टवएतत्सूक्तं । सूत्र्यतेहि—अपश्यंत्वेत्येतस्याद्ययायजमानमीक्षते द्वितीयया पत्नीं तृतीययात्मानमिति ।

तत्र प्रथमा—

अपश्यन्त्वामनसाचेकितानंतपसोजातंतपसोविभूतम् ।
इहप्रजामिहरयिंरराणःप्रजायस्वप्रजयापुत्रकाम ॥ १ ॥

अपश्यम् । त्वा । मनसा । चेकितानम् । तपसः । जातम् ।
तपसः । विऽभूतम् । इह । प्रऽजाम् । इह । रयिम् । रराणः ।
प्र । जायस्व । प्रऽजया । पुत्रऽकाम ॥ १ ॥

हेयजमान त्वा त्वां मनसा बुद्ध्या अपश्यं अदर्शं कीदृशं चेकितानं कर्माणि भृशं जानन्तं तपसः दीक्षारूपाद्व्रताज्जातं पुनरुत्पन्नं यद्वा जन्मान्तरानुष्ठितात्सुकृतादुत्पन्नं तपसः अनुष्ठीयमानाद्यज्ञाद्धेतोः विभूतं व्याप्तं सर्वत्र प्रख्यातं हेपुत्रकाम पुत्रान् कामयमान सत्वं इहास्मिँल्लोके प्रजां पुत्रपौत्रादिरूपां रराणः रमयन् रयिं धनं इहास्मिँल्लोके रमयन् प्रजया प्रजननेन प्रजायस्व पुत्रादिरूपेणोत्पद्यस्व प्रजाउत्पादयेत्यर्थः ॥ १ ॥

अथ द्वितीया—

अपश्यन्त्वामनसादीध्यानांस्वायांतनूऋत्व्येनाधमानाम् ।
उपमामुच्चायुवतिर्बभूयाःप्रजायस्वप्रजयापुत्रकामे ॥ २ ॥

अपश्यम् । त्वा । मनसा । दीध्यानाम् । स्वायाम् । तनू इति ।
ऋत्व्ये । नाधमानाम् । उप । माम् । उच्चा । युवतिः ।
बभूयाः । प्र । जायस्व । प्रऽजया । पुत्रऽकामे ॥ २ ॥

हेपत्नि दीध्यानां दीप्यमानां स्वायां आत्मीयायां तनू तन्वां शरीरे ऋत्व्ये ऋतुकाले भवं गर्भधारणरूपं कर्म ऋत्वियं तस्मिन्निमित्तभूते नाधमानां भर्तुरुपगमनं याचमानां त्वा त्वां मनसा अपश्यं अद्राक्षं हेपुत्रकामे पुत्रान् कामयमाने मामुप मत्समीपं प्राप्य सा त्वं उच्चा उच्चैः भृशं युवतिः तरुणी बभूयाः भूयाः छन्दस्युभयथेति आशीर्लिङः सार्वधातुकत्वात् शप् तस्य छान्दसः श्लुः अलिट्यपि व्यत्ययेन भवतेरइत्यभ्यासस्यात्वं युवतिर्भूत्वाच प्रजया प्रजननेन प्रजायस्व पुत्रान् प्रसूष्व जनीप्रादुर्भावे श्यनि ज्ञाजनोर्जेति जादेशः ॥ २ ॥

अथ तृतीया—

अहंगर्भमदधामोषधीष्वहंविश्वेषुभुवनेष्वन्तः ।
अहंप्रजाअंजनयंपृथिव्यामहंजनिभ्योअपरीषुपुत्रान् ॥ ३ ॥ ४ १ ॥

अहम् । गर्भम् । अदधाम् । ओषधीषु । अहम् । विश्वेषु ।
भुवनेषु । अन्तरिति । अहम् । प्रऽजाः । अजनयम् । पृथिव्याम् ।
अहम् । जनिऽभ्यः । अपरीषु । पुत्रान् ॥ ३ ॥ ४१ ॥

अहं होता ओषधीषु शाल्यादिषु फलार्थं गर्भमदधां धारयामि विश्वेषु सर्वेषु अन्येष्वपि भुवनेषु भूतजातेष्वन्तर्मध्ये अहमेव गर्भं धारयामि तथा पृथिव्यां भूम्यां प्रजाः सर्वान्मनुष्यान् अहमजनयं जनयामि जनिभ्यः जायाभ्यः अपरीषु अन्यास्वपि स्त्रीषु पुत्रानहमजनयं जनयामि मत्साध्येन यागेन सर्वस्योत्पत्तेः अहं सर्वजनहेतुर्भवामीत्यर्थः ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे एकचत्वारिंशोवर्गः ॥ ४१ ॥

विष्णुरिति तृचं त्रयस्त्रिंशं सूक्तं आनुष्टुभं गर्भाणां त्वष्टानाम ऋषिः प्रजापतिपुत्रोविष्णुर्वा लिंगोक्ताविष्णुत्वष्टृप्रजापतिसिनीवालीसरस्वत्यश्विनइति देवताः । तथाचानुक्रान्तं—विष्णुस्त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्योगर्भार्थाशीर्लिंगोक्तदैवतमानुष्टुभमिति । लैंगिकोविनियोगः ।

तत्र प्रथमा—

विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ।
आसिंचतुप्रजापतिर्धातागर्भंदधातुते ॥ १ ॥

विष्णुः । योनिम् । कल्पयतु । त्वष्टा । रूपाणि । पिंशतु । आ ।
सिञ्चतु । प्रजाऽपतिः । धाता । गर्भम् । दधातु । ते ॥ १ ॥

विष्णुः व्यापकोदेवः योनिं गर्भाधानस्थानं कल्पयतु करोतु त्वष्टातनुकर्ता एतत्संज्ञकोदेवश्च रूपाणि निरूपकाणि स्त्रीत्वपुंस्त्वाभिव्यंजकानि चिह्नानि पिंशतु अवयवीकरोतु पिशअवयवे मुचादित्वान्नुम् एवं प्रकॢप्तायां योन्यां प्रजापतिः रेतआसिंचतु निषिंचतु विसृजत्वित्यर्थः धाता धारकोदेवः हेजाये ते तव गर्भं गर्भरूपेण परिणतं तद्रेतः दधातु तत्रैव धारयतु गर्भपातापप्रसवामाभूवन्नित्यर्थः ॥ १ ॥

अथ द्वितीया—

**गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति ।**
**गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजा ॥ २ ॥**

गर्भम् । धेहि । सिनीवालि । गर्भम् । धेहि । सरस्वति । गर्भम् । ते । अश्विनौ । देवौ । आ । धत्ताम् । पुष्करऽस्रजा ॥ २ ॥

हेसिनीवालि एतत्संज्ञे देवि गर्भं धेहि निषिक्तं गर्भं धारय हेसरस्वति त्वं च निषिक्तं गर्भं धारय हे जाये पुष्करस्रजा पुष्करमालिनौ स्वर्णकमलाभरणावश्विनौदेवौ ते तव गर्भं आधत्तां प्रक्षिपतां कुरुतामित्यर्थः ॥ २ ॥

अथ तृतीया—

**हिरण्ययीअरणीयंनिर्मन्थतोअश्विना ।**
**तंतेगर्भंहवामहेदशमेमासिसूतवे ॥ ३ ॥ ४२ ॥**

हिरण्ययी इति । अरणी इति । यम् । निःऽमन्थतः । अश्विना । तम् । ते । गर्भम् । हवामहे । दशमे । मासि । सूतवे ॥ ३ ॥ ४२ ॥

हिरण्ययी हिरणमय्यौ अरणी यं गर्भमुद्दिश्य अश्विनावश्विनौ देवौ निर्मंथतः निर्मथितवन्तौ हे जाये ते तुभ्यं त्वदर्थं तं गर्भं हवामहे आह्वयामहे दशमे मासि सूतवे प्रसोतुं पद्दन्नित्यादिना मासशब्दस्य मासूभावः सूतेस्तुमर्थेसेसेनिति तवेन्प्रत्ययः ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे द्विचत्वारिंशोवर्गः ॥ ४२॥

महीति तृचं चतुस्त्रिंशं सूक्तं वरुणपुत्रस्य सत्यधृतेरार्षं गायत्रमादित्यदेवताकं । तथाचानुक्रान्तं—महिसत्यधृतिर्वारुणिरादित्यं स्वस्त्ययनं गायत्रं वाइति । धनलिप्सया प्रवसन्तं शिष्यंआचार्योनेन सूक्तेनाभिमंत्रयते । सूत्र्यतेहि—महित्रीणामित्यनुमंत्र्यैवमतिसृष्टस्य नकुतश्चिद्भयं भवतीतिविज्ञायतइति ।

तत्र प्रथमा—

महित्रीणामवोस्तुद्युक्षंमित्रस्यार्यम्णः । दुराधर्षंवरुणस्य ॥ १ ॥

महि । त्रीणाम् । अवः । अस्तु । द्युक्षम् । मित्रस्य ।
अर्यम्णः । दुःऽआधर्षम् । वरुणस्य ॥ १ ॥

त्रीणां त्रयाणां मित्रस्यार्यम्णोवरुणस्यच द्युक्षं दीप्तं अतएव दुराधर्षं अन्यैर्धर्षितुं बाधितुमशक्यं महि महदवोरक्षणमस्माकमस्तु त्रीणामित्यपि छंदसि दृश्यतइति वचनात् त्रयादेशाभावः नामन्यतरस्यामिति नामउदात्तत्वम् ॥ १ ॥

अथ द्वितीया—

नहितेषाममाचननाध्वंसुवारणेषु । ईशेरिपुरघशंसः ॥ २ ॥

नहि । तेषाम् । अमा । चन । न । अध्वंऽसु । वारणेषु ।
ईशे । रिपुः । अघऽशंसः ॥ २ ॥

अमेति गृहनाम अमाचन गृहेष्वपि तेषां वरुणमित्रार्यम्णां तदनुगृहीतानां स्तोतॄणांवा अघशंसः अघमनर्थं आशंसमानोरिपुः शत्रुः नहीशे नखलु हिंसितुमीष्टे लोपस्तआत्मनेपदेष्विति तलोपः अनुदात्तेत्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते । तथा अध्वसु मार्गेषु वारणेषु यत्र पुरुषानिवार्यंते तेषुच स्थानेषु शत्रुर्निवारयितुं नेष्टे ॥ २ ॥

अथ तृतीया—

यस्मैपुत्रासोअदितेःप्रजीवसेमर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥ ३ ॥ ४३ ॥

यस्मै । पुत्रासः । अदितेः । प्र । जीवसे । मर्त्याय ।
ज्योतिः । यच्छन्ति । अजस्रम् ॥ ३ ॥ ४३ ॥

अदितेरदीनायाः देवमातुः पुत्रासः पुत्रामित्रादयः यस्मै मर्त्याय मनुष्याय स्तोत्रे अजस्रं अविच्छिन्नं ज्योतिः तेजः जीवसे जीवितुं प्रयच्छंति तस्य शत्रुः नेश्वरइत्यर्थः ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे त्रिचत्वारिंशोवर्गः ॥४३॥

वातइति तृचं पंचत्रिंशं सूक्तं वातगोत्रस्योलस्यार्षं गायत्रं वायुदेवताकं । तथाचानुक्रान्तं—वातोवातायनउलोवायव्यमिति । गतोविनियोगः ।

तत्र प्रथमा—

**वातआवातुभेषजंशंभुमयोभुनोहृदे । प्रणआयूंषितारिषत् ॥१॥**

वातः । आ । वातु । भेषजम् । शम्ऽभु । मयःऽभु ।
नः । हृदे । प्र । नः । आयूंषि । तारिषत् ॥ १ ॥

वातोवायुः नोस्माकं हृदे हृदयाय भेषजमौषधं उदकं वा आवातु आगमयतु ईदृग्भूतं शंभु रोगशमनस्य भावयितृ मयोभु सुखस्यच भावयितृ अपिच नोस्माकमायूंषि प्रतारिषत् प्रवर्धयतु ॥ १ ॥

अथ द्वितीया—

**उतवातपितासिनउतभ्रातोतनःसखा । सनोजीवातवेकृधि ॥ २ ॥**

उत । वात । पिता । असि । नः । उत । भ्राता । उत ।
नः । सखा । सः । नः । जीवातवे । कृधि ॥ २ ॥

उतापिच हे वात त्वं नोस्माकं पितासि उत्पादकोभवसि उतापिच भ्राता भवसि उतापिच नोस्माकं सखा समानख्यानोमित्रभूतश्च भवसि सत्वं नोस्मान् जीवातवे जीवनहेतवे यागाय कृधि कुरु । करोतेश्छान्दसोविकरणस्य लुक् श्रुशृणुपॄकृवृभ्यइति हेर्धिः ॥ २ ॥

अथ तृतीया—

**यद्दोवाततेगृहे३मृतस्यनिधिर्हितः । ततोनोदेहिजीवसे॥३॥४४॥**

यत् । अदः । वात । ते । गृहे । अमृतस्य । निऽधिः ।
हितः । ततः । नः । देहि । जीवसे ॥ ३ ॥ ४४ ॥

हेवात वायो ते तव गृहे स्थाने यददः योसौ अमृतस्यामरणस्य निधिः निक्षेपः हितः स्थापितोवर्तते ततः तस्मान्निधेराहृत्य अमृतत्वं जीवसे नोस्माकं जीवनाय देहि प्रयच्छ ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे चतुश्चत्वारिंशोवर्गः ॥ ४४ ॥

प्राग्नयइति पंचर्चं षट्त्रिंशं सूक्तं अग्नेः पुत्रस्य वत्सस्यार्षं गायत्रमाग्नेयं तथाचानुक्रान्तं—प्राग्नये पंचाग्नेयोवत्सआग्नेयं त्विति । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसीदमादिके द्वेसूक्ते । सूत्र्यतेहि—प्राग्नयेवाचमिति सूक्ते इमां मेअग्ने समिधमिति । दशरात्रस्य नवमेहनि आग्निमारुते इदं जातवेदसं निविद्धानं । सूत्रितंच—मरुतोयस्यहि प्राग्नयेवाचमित्याग्निमारुतमिति ।

तत्र प्रथमा—

प्राग्नये॒वाचं॑मीरयवृष॒भाय॑क्षिती॒नाम् । सनः॑पर्ष॒दति॒द्विषः॑ ॥ १ ॥

प्र । अ॒ग्नये॑ । वाच॑म् । ई॒र॒य॒ । वृ॒ष॒भाय॑ । क्षि॒ती॒नाम् ।

सः । न॒ः । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥ १ ॥

हेस्तोतरग्नये स्तुतिरूपां वाचं प्रेरय उच्चारय कथंभूताय क्षितीनां मनुष्याणां यजमानानां वृषभाय कामानां वर्षित्रे किंप्रयोजनमिति चेत् सोग्निर्नोस्मान् द्विषोद्वेष्टॄन् अतिपर्षत् अतिपारयेत् ॥ १ ॥

अथ द्वितीया—

यः॒पर॑स्याः॒परा॒वत॑स्ति॒रोधन्वा॑ति॒रोच॑ते । सनः॑पर्ष॒दति॒द्विषः॑ ॥ २ ॥

यः । पर॑स्याः । प॒रा॒ऽवतः॑ । ति॒रः । धन्व॑ । अ॒ति॒ऽरोच॑ते ।

सः । न॒ः । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥ २ ॥

योग्निः परस्याः परावतः अतिशयितादूरदेशात् तिरः प्राप्तनामैतत् प्राप्तसंबंधं धन्व मरुभूमिं जलवर्जितं देशं अतिरोचते अतिक्रम्य प्रज्वलति यद्वा धन्वान्तरिक्षं तिरः तिर्यक् अतिरोचते भृशं प्रकाशयते । गतमन्यत् ॥ २ ॥

अथ तृतीया—

**योरक्षांसिनिजूर्वंत्यग्निस्तिग्मेनशोचिषा । सनःपर्षदतिद्विषः ॥ ३॥**

यः । रक्षांसि । निःजूर्वंति । वृषा । शुक्रेण । शोचिषा ।
सः । नः । पर्षत् । अति । द्विषः ॥ ३ ॥

वृषा वर्षिता योग्निः शुक्रेण निर्मलेन शुभ्रवर्णेन वा शोचिषा तेजसा रक्षांसि यज्ञस्य द्वेष्टॄणि निजूर्वति निहिनस्ति जूर्वी हिंसार्थः । गतमन्यत् ॥ ३ ॥

अथ चतुर्थी—

**योविश्वाभिविपश्यंतिभुवनासंचपश्यंति । सनःपर्षदतिद्विषः॥४॥**

यः । विश्वा । अभि । विःपश्यंति । भुवना । सम् । च ।
पश्यंति । सः । नः । पर्षत् । अति । द्विषः ॥ ४ ॥

योग्निः सूर्यरूपेण विश्वा विश्वानि सर्वाणि भूतजातानि अभिमुखं विपश्यति विशेषेण तेजसा प्रेक्षते प्रकाशयतीत्यर्थः भुवना भुवनानि भूतजातानि संपश्यतिच सम्यक्जानातिच । अन्यत् सिद्धम् ॥ ४ ॥

अथ पंचमी—

**योअस्यपारेरजंसःशुक्रोअग्निरजायत । सनःपर्षदतिद्विषः ॥५॥४५॥**

यः । अस्य । पारे । रजसः । शुक्रः । अग्निः । अजायत ।
सः । नः । पर्षत् । अति । द्विषः ॥ ५ ॥ ४५ ॥

अस्य रजसोलोकस्य अन्तरिक्षस्य पारे उपरि देशे शुक्रः शुभ्रवर्णोयोग्निः वैद्युतात्मना सूर्यात्मनावा अजायत प्रादुर्भवति सनोस्मान् द्विषः द्वेष्टॄन् अतिपर्षत् अतिपारयतु ॥ ५ ॥

॥ इत्यष्टमस्याष्टमे पंचचत्वारिंशोवर्गः ॥ ४५ ॥

प्रनूनमिति तृचं सप्तत्रिंशं सूक्तं अग्निपुत्रस्य श्येनस्यार्षं गायत्रं जातवेदोगुणकोग्निर्देवता। तथाचानुक्रान्तं—प्रनूनं तृचमाग्नेयं श्येनोजातवेदस्यमिति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

तत्र प्रथमा—

प्रनूनंजातवेदसमश्वंहिनोतवाजिनम्। इदंनोबर्हिरासदे॥ १॥

प्र। नूनम्। जातऽवेदसम्। अश्वम्। हिनोत। वाजिनम्।
इदम्। नः। बर्हिः। आऽसदे॥ १॥

जातवेदसं जातानां वेदितारं जातधनादिकंवा अश्वं कर्मभिर्व्याप्नुवन्तं वाजिनं अन्नवन्तं हेऋत्विग्यजमानाः नूनमवश्यं प्रहिनोत प्रवर्धयत। यद्वा अश्वमिव स्तुतिभिः प्रेरयत। हिगतौ वृद्धौच अस्माल्लोटि तशब्दस्य तप्तनप्तनथनाश्चेति तबादेशः। किमर्थं नोस्माकं इदं बर्हिरास्तीर्णं आसदे आसत्तुं प्राप्तुं बर्हिरासदत्वित्यर्थः सदेः कृत्यार्थेतवैकेनिति केन्प्रत्ययः॥१॥

अथ द्वितीया—

अस्यप्रजातवेदसोविप्रवीरस्यमीळ्हुषः। महीमियर्मिसुष्टुतिम्॥२॥

अस्य। प्र। जातऽवेदसः। विप्रऽवीरस्य। मीळ्हुषः।
महीम्। इयर्मि। सुऽस्तुतिम्॥ २॥

जातवेदसो जातानां वेदितुः विप्रवीरस्य विप्रामेधाविनो यजमानावीराः पुत्रायस्य तादृशस्य मीळ्हुषः सेक्तुरस्याग्नेः महीं महतीं सुष्टुतिं शोभनां स्तुतिं प्रेयर्मि प्रेरयामि ऋगतौ जौहोत्यादिकः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम्॥ २॥

अथ तृतीया—

यारुचोजातवेदसोदेवत्राहव्यवाहनीः। ताभिर्नोयज्ञमिन्वतु॥३॥४६॥

याः। रुचः। जातऽवेदसः। देवऽत्रा। हव्यऽवाहनीः।
ताभिः। नः। यज्ञम्। इन्वतु॥ ३॥ ४६॥

जातवेदसोग्नेः यारुचोरोचमानाः कालीकरालीप्रभृतयः सप्तजिह्वाः देवत्रा देवान् प्रति देवमनुष्यपुरुषपुरुमर्त्येभ्य इत्यादिना द्वितीयार्थे त्राप्रत्ययः हव्यवाहनीः हव्यानां हविषां वोढ्र्यः प्रापयित्र्योभवंति वाछन्दसीति जसि पूर्वसवर्णदीर्घः ताभिर्जिह्वाभिर्नोस्माकं यज्ञं यागसाधनं हविः इन्वतु देवान् प्रापयतु इविव्याप्तौ इदित्वान्नुम् ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे षट्चत्वारिंशोवर्गः ॥४६॥

आयंगौरिति तृचमष्टात्रिंशं सूक्तं गायत्रं सार्पराज्ञीनामऋषिका सैव देवता सूर्योवेति। तथाचानुक्रान्तं—आयंगौःसार्पराज्ञ्यात्मदैवतं सौर्यं वेति। अविवाक्येहनि मानसग्रहे एतत्सूक्तं शंसनीयं। सूत्रितंच—आयंगौःपृश्निरक्रमीदित्युपांशुतिस्रः पराचीः शस्त्वेति।

तत्र प्रथमा—

**आयंगौःपृश्निरक्रमीदसंदन्मातरंपुरः। पितरंचप्रयन्त्स्वः ॥ १ ॥**

**आ। अयम्। गौः। पृश्निः। अक्रमीत्। असंदत्। मातरम्। पुरः। पितरम्। च। प्रऽयन्। स्वः१रिति स्वः ॥ १ ॥**

गौर्गमनशीलः पृश्निः प्राप्तवर्णः प्राप्ततेजाः अयं सूर्यः आक्रमीत् आक्रांतवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्यच पुरः पुरस्तात् पूर्वस्यां दिशि मातरं सर्वस्य भूतजातस्य निर्मात्रीं पृथिवीमसदत् आसीदति प्राप्नोति सदेश्छान्दसोलुङ् लृदित्वाच्लेरङादेशः ततः पितरं पालकं द्युलोकं चशब्दादन्तरिक्षंच प्रयन् प्रकर्षेण शीघ्रं गच्छन् स्वः सुअरणः शोभमानोभवति यद्वा पितरं स्वर्गलोकं प्रयन्वर्तते ॥ १ ॥

अथ द्वितीया—

**अन्तश्चरतिरोचनास्यप्राणादपानती। व्यख्यन्महिषोदिवम् ॥ २॥**

**अन्तरिति। चरति। रोचना। अस्य। प्राणात्। अपऽअनती। वि। अख्यत्। महिषः। दिवम् ॥ २ ॥**

अस्य सूर्यस्य रोचनारोचमानादीप्तिः अन्तः शरीरमध्ये मुख्यप्राणात्मना चरति वर्तते किंकुर्वती प्राणादपानती मुख्यप्राणस्य प्राणाद्याः पंचवृत्तयः तत्र प्राणनं नाडीभिरूर्ध्वं वायोर्निर्गमनं तथा विधात् प्राणात् प्राणनादनन्तरं अपानती अपाननं नाडीभिरवाङ्मुखं वायोर्नयनं तत्कुर्वती अपपूर्वादनितेः लटः शतृ अदादित्वाच्छपोलुक् उगितश्चेति ङीप् शतुरनुमइति नद्याउदात्तत्वं यद्वा अन्तर्द्यावापृथिव्योर्मध्ये अस्य सूर्यस्य रोचना रोचमाना दीप्तिश्चरति गच्छति । रुचदीप्तौ अनुदात्तेतश्चहलादेरिति युच् । किंकुर्वती प्राणात् प्राणनात् उदयानंतरं अपानती सायंसमयेस्तंगच्छंती ईदृश्या दीप्त्या युक्तः अतएव महिषोमहान्सूर्यः दिवमन्तरिक्षं उदयास्तमययोर्मध्ये व्यख्यत् विचष्टे प्रकाशयति महेरविमह्योष्टिषजित्यौणादिकष्टिषच् प्रत्ययः चक्षिङःख्यात्र् छान्दसेलुङि अस्यतिवक्तीत्यादिना च्लेरङादेशः ॥ २ ॥

अथ तृतीया—

त्रिंशद्धाम॒विरा॑जति॒वाक्प॑त॒ङ्गाय॑धीयते । प्रति॒वस्तो॒रह॒द्युभिः॑॥३॥४७॥

त्रिंश॑त् । धाम॑ । वि । रा॒ज॒ति॒ । वाक् । प॒त॒ङ्गाय॑ । धी॒य॒ते॒ ।
प्रति॑ । वस्तोः॑ । अह॑ । द्यु॒ऽभिः॑ ॥ ३ ॥ ४७ ॥

त्रिंशत् धाम धामानि स्थानानि वचनव्यत्ययः वस्तोः वासरस्याहोरात्रस्यावयवीभूतानि अहःशब्दोवधारणे द्युभिः सूर्यस्य दीप्तिभिरेव विराजति विराजन्ते विशेषेणदीप्यन्ते । व्यत्ययेन एकवचनं मुहूर्तान्यत्र धामान्युच्यन्ते पंचदशरात्रेः पंचदशाह्नः । पतंगाय पतति गच्छतीति पतंगःसूर्यः तस्मै श्रुतिरूपा वाक् प्रतिधीयते प्रतिमुखं स्तोतृभिः क्रियते । यद्वा वस्तोरहनि त्रिंशद्धामानि घटिकाभिप्रायमेतत् त्रिंशद्घटिकाः अत्यन्तसंयोगेद्वितीया एतावन्तंकालं द्युभिः दीप्तिभिः असौ सूर्योविराजति विशेषेणदीप्यते तस्मिंश्च समये वाक् त्रयीरूपा तस्मै सूर्यरूपाय पतंगाय प्रतिधीयते प्रतिमुखंधार्यते स्तूयते सूर्यः सर्वतइत्यर्थः। श्रूयतेहि—ऋग्भिः पूर्वाह्ने दिवि देवईयते यजुर्वेदे तिष्ठति मध्येअह्नइत्यादि । यदात्विदंसूक्तं सार्पराज्या आत्मस्तुतिः तदा सूर्यात्मना स्तूयतइत्यवगन्तव्यं ॥ ३ ॥

॥ इत्यष्टमस्याष्टमे सप्तचत्वारिंशोवर्गः ॥ ४७ ॥

ऋतमिति तृचमेकोनचत्वारिंशंसूक्तं मधुच्छन्दसःपुत्रस्याघमर्षणस्यार्षमानुष्टुभं रात्र्यादीनां भावानां सृष्ट्यादिप्रतिपादकत्वात्तद्रूपएवार्थोदेवता । तथाचानुक्रान्तं—ऋतं माधुच्छन्दसोघमर्षणोभाववृत्तमानुष्टुभंत्विति । लिंगात्विनियोगोवगन्तव्यः ।

तत्र प्रथमा—

ऋतंचसत्यंचाभीद्धात्तपसोध्यंजायत ।
ततोरात्र्यंजायततत्तःसमुद्रोअर्णवः ॥ १ ॥

ऋतंचसत्यंचाभीद्धात्तपसोध्यंजायत ।
ततोरात्र्यंजायततत्तःसमुद्रोअर्णवः ॥ १ ॥

ऋतमितिसत्यनाम ऋतं मानसं यथार्थसंकल्पनं सत्यं वाचिकं यथार्थभाषणं चकाराभ्यामन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते । तत्सर्वमभीद्धात् अभितप्तात् ब्रह्मणा पुरासृष्ट्यर्थं कृतात् तपसोधि अधिउपर्यर्थे उपर्यजायत उदपद्यत तपस्तप्त्वा इदंसर्वमसृजतेति श्रुतेः । तपश्चात्रस्रष्टव्यपर्यालोचनलक्षणं यस्यज्ञानमयंतपइतिश्रुत्यंतरात् । अभिपूर्वादिंधेःकर्मणिनिष्ठा श्वीदितोनिष्ठायामितीट्प्रतिषेधः गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वं स्वरितोवानुदात्तेपदादावित्येकादेशः स्वर्यते यद्वा अभीद्धात् अभितः प्रकाशमानात् परमात्मनोमायाधिष्ठानरूपादुपादानभूतात् ऋतं सत्यं चाजायत जनिकर्तुः प्रकृतिरिति प्रकृतेरपादानसंज्ञा ततस्तस्मादेवेश्वरात् रात्री उपलक्षणमेतत् अह्नोपि अहश्चरात्रिश्चाजायत रात्रेश्चाजसाविति ङीप् ततः तस्मादेवेश्वरादर्णवः अर्णसोदकेनयुक्तः समुद्रश्चाजायत समुद्रशब्दोन्तरिक्षोदध्योःसाधारणइति अभिमतार्थस्य प्रकाशनाय अर्णवशब्देन विशेष्यते अर्णसः सलोपश्चेति मत्वर्थीयोवप्रत्ययः सलोपश्च ॥ १ ॥

अथ द्वितीया—

समुद्रादर्णवादधिसंवत्सरोअजायत ।
अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ २ ॥

समुद्रादर्णवादधिसंवत्सरोअजायत ।
अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ २ ॥

अर्णवात् समुद्रात् उदकात् अधि उपरि संवत्सरः संवत्सरोपलक्षितः सर्वःकालः अजायत । श्रूयते हि—सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधि कला मुहूर्ताःकाष्ठाश्चेति । सचेश्वरः अहोरात्राणि एतदुपलक्षितानि सर्वाणि भूतजातानि विदधत् कुर्वन् सृजन् । अभ्यस्तानामादिरित्याद्युदात्तत्वं ततः समासेकृदुत्तरपदप्रकृतिस्वरत्वं निमिषतो निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते ॥ २ ॥

अथ तृतीया—

सूर्याचन्द्रमसौधातायथापूर्वमकल्पयत् ।
दिवंचपृथिवींचान्तरिक्षमथोस्वः ॥ ३ ॥ ४८ ॥

सूर्याचन्द्रमसौधातायथापूर्वमकल्पयत् ।
दिवंचपृथिवींचान्तरिक्षमथोस्वः ॥ ३ ॥ ४८ ॥

सूर्याचन्द्रमसौ कालस्य ध्वजभूतौ दिवंच पृथिवीं चान्तरिक्षंच इत्थं त्रिभुवनं स्वः स्वः-शब्दः सुखवाची दिवोविशेषणं सुखरूपां दिवं तदेतत्सर्वं धाता विधाता यथापूर्वं पूर्वस्मिन्काले अकल्पयत् सृष्टवान् तथैवास्मिन्नपिकल्पे कल्पयिष्यतीत्यर्थः ॥ ३ ॥

॥ इत्यष्टमस्याष्टमेष्टाचत्वारिंशोवर्गः ॥ ४८ ॥

संसमिति चतुर्ऋचं चत्वारिंशंसूक्तं संवननस्यार्षं समानोमन्त्रइति तृतीयात्रिष्टुप् शिष्टा-स्तिस्रोनुष्टुभः प्रथमायाअग्निर्देवता शिष्टानां संज्ञानं । अनुक्रम्यतेच—संसंचतुष्कं संवननः सं-ज्ञानमाद्याग्नेयी तृतीयात्रिष्टुप् तृतीयात्रिष्टुबिति । आनुष्टुभंत्विति । पूर्वमुक्तत्वात् अवशिष्टाना-मनुष्टुप्त्वं । सूक्तविनियोगोलैंगिकः ।

तत्र प्रथमा—

संसमिद्युवसेवृषन्नग्नेविश्वान्यर्यआ ।
इळस्पदेसमिध्यसेसनोवसून्याभर ॥ १ ॥

समऽसम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ।
इळः । पदे । सम् । इध्यसे । सः । नः । वसूनि । आ । भर ॥ १ ॥

हेवृषन् कामानां वर्षितरग्ने अर्यईश्वरस्त्वं अर्यःस्वामिवैश्ययोरिति यत्प्रत्ययान्तोनिपातितः अर्यः स्वाम्याख्यायामित्यन्तोदात्तत्वं सत्वं विश्वानि सर्वाणि भूतजातानि संसं प्रसमुपोदःपादपूरणइति समोद्विर्वचनं इच्छब्दोवधारणे आसमन्तात् संयुवसे मिश्रयसि । देवेषुमध्ये त्वमेवसर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि नान्यइत्यर्थः । किंच इळः इडायाः पृथिव्याः पदे स्थाने उत्तरवेदिलक्षणे एतद्वाइळायास्पदं यदुत्तरवेदीनाभिरितिब्राह्मणं । तत्र त्वं समिध्यसे ऋत्विग्भिः संदीप्यसे स तादृशस्त्वं नोस्माकं वसूनि धनानि आभराहर ॥ १॥

अथ द्वितीया—

संगच्छध्वंसंवदध्वंसंवोमनांसिजानताम् ।
देवाभागंयथापूर्वेसंजानानाउपासते ॥ २ ॥

सम् । गच्छध्वम् । सम् । वदध्वम् । सम् । वः । मनांसि । जानताम् ।
देवाः । भागम् । यथा । पूर्वे । सम्ऽजानानाः । उपऽआसते ॥ २ ॥

हेस्तोतारोयूयं संगच्छध्वं संगताः संभूताः भवत समोगम्यृच्छीत्यादिनागमेरात्मनेपदं तथा संवदध्वं सहवदत परस्परं विरोधंपरित्यज्य एकविधमेववाक्यंब्रूतेतियावत् व्यक्तवाचांसमुच्चारणेइति वदेरात्मनेपदं वोयुष्माकं मनांसि संजानतां समानमेकरूपमेवार्थं अवगच्छन्तु संप्रतिभ्यामनाध्यानइति जानातेरात्मनेपदं यथा पूर्वे पुरातनाः देवाः संजानानाः ऐकमत्यंप्राप्ताः हविर्भागं उपासते यथास्वं स्वीकुर्वंति तथा यूयमपि वैमत्यंपरित्यज्य धनं स्वीकुरुतेतिशेषः ॥ २ ॥

अथ तृतीया—

समानोमन्त्रःसमितिःसमानीसमानंमनःसहचित्तमेषाम् ।
समानंमन्त्रमभिमंत्रयेवःसमानेनवोहविषाजुहोमि ॥ ३ ॥

१ ऐ० ब्रा० १. २८ ।



समानः । मन्त्रः । सम्ऽइतिः । समानी । समानम् । मनः ।
सह । चित्तम् । एषाम् । समानम् । मन्त्रम् । अभि । मन्त्रये ।
वः । समानेन । वः । हविषा । जुहोमि ॥ ३ ॥

पूर्वार्धर्चः परोक्षकृतः उत्तरःप्रत्यक्षकृतः एषां एकस्मिन्कर्मणि सहप्रवृत्तानां ऋत्विजां स्तोतॄणांवा मंत्रः स्तुतिः शस्त्रात्मिका गुप्तभाषणंवा समानएकविधोऽस्तु तथा समितिः प्राप्तिरपि समानी एकरूपास्तु केवलमामकेत्यादिना समानशब्दाद्ङीप् उदात्तनिवृत्तिस्वरेणङीप उदात्तत्वं तथा मनः मननसाधनमन्तःकरणं चैषांसमानमेकविधमप्यस्तु चित्तं विचारजं ज्ञानं तथा सह सहितं परस्परस्यैकार्थेनैकीभूतमस्तु अहं चवोयुष्माकंसमानमेकविधं मंत्रं अभिमंत्रये एकविध्याय संस्करोमि तथा वोयुष्माकं स्वभूतेन सहमानेन साधारणेन हविषा चरुपुरोडाशादिनाहं जुहोमि तृतीयाचहोश्छन्दसीति कर्मणिकारकेतृतीया वषट्कारेण हविः प्रक्षेपयामीत्यर्थः ॥ ३ ॥

अथ चतुर्थी—

समानीवआकूतिःसमानाहृदयानिवः ।
समानमस्तुवोमनोयथावःसुसहासति ॥ ४ ॥ ४९ ॥

समानी । वः । आऽकूतिः । समाना । हृदयानि । वः । समानम् ।
अस्तु । वः । मनः । यथा । वः । सुऽसह । असति ॥ ४ ॥ ४९ ॥

हे ऋत्विग्यजमानाः वोयुष्माकं आकूतिःसंकल्पोऽध्यवसायः समाना एकविधोऽस्तु तथा वोयुष्माकं हृदयानि समानानि एकविधानि संतु तथा वोयुष्माकं मनः अन्तःकरणं प्रत्येकापेक्षयैकवचनं तदपि समानमस्तु तथा वोयुष्माकं सुसह शोभनसाहित्यं असति भवति तथा समानमस्त्वित्यन्वयः अस्तेर्लेटि बहुलंछन्दसीति शपोलुगभावः ॥ ४ ॥

॥ इत्यष्टमस्याष्टमे एकोनपंचाशोवर्गः ॥ ४९ ॥

॥ इति दशमे मण्डले द्वादशोऽनुवाकः ॥ १२ ॥

वेदार्थस्यप्रकाशेन तमोहार्दं निवारयन् ।

पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येष्टमाष्टकेष्टमोध्यायः ॥ ८ ॥

॥ इति दशमं मण्डलं समाप्तम् ॥

॥ अष्टमाष्टकः समाप्तः ॥

## ॥ समाप्तेयमृक्संहिता ॥

